बन्धनकरणम् । वर्गणाप्ररूपणा.

दग्रहणप्रायोग्याः काश्चिद् ग्रहणप्रायोग्याः। तत्र केवलैकैकपरमाणुवर्गणाः परमाणुवर्गणाः, ताश्चानन्ताः सकललोकव्यापिन्यश्च। परमाणुद्वय-
समुदायरूपा द्विपरमाणुवर्गणाः, ता अप्यनन्ताः सकललोकव्यापिन्यश्च। एवं सर्वा अपि वर्गणाः प्रत्येकमनन्ताः सकललोकव्यापिन्यश्चावग-
न्तव्याः। त्रिपरमाणुसमुदायरूपास्त्रिपरमाणुवर्गणाः, एवं चतुष्परमाणुवर्गणाः, एवं संख्येयपरमाण्वात्मकाः सङ्ख्येया वर्गणा वाच्याः, अस-
ङ्ख्येयपरमाण्वात्मका असङ्ख्येया वर्गणाः, असङ्ख्यातस्याऽसङ्ख्यातभेदात्मकत्वात्। अनन्तपरमाण्वात्मका अनन्ताः, अनन्तस्याऽनन्तभेदात्म-
कत्वात्। एताश्च मूलत आरभ्य सर्वा अपि जीवस्याल्पपरमाणुतया स्थूलपरिणामत्वेन चाऽग्रहणप्रायोग्याः, अनन्तानन्तपरमाण्वात्मका अप्यर्वा-
क्तन्यो ग्रहणप्रायोग्या न भवन्ति। यास्त्वभव्यानन्तगुणसिद्धानन्तभागकल्पपरमाण्वात्मकास्ता औदारिकशरीरनिष्पादनाय ग्रहणप्रायो-
ग्या भवन्ति, ताश्च जघन्याः, तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया ग्रहणप्रायोग्या वर्गणा, द्विपरमाण्वधिकस्कन्धरूपा तृतीया
ग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टा औदारिकशरीरग्रहणप्रायोग्या वर्गणा। जघन्या-
याश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा विशेषाधिका, विशेषश्च तस्या एवानन्ततमो भागः। औदारिकशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया
च एकपरमाण्वधिकस्कन्धरूपा वर्गणा अग्रहणप्रायोग्या, सा च जघन्या, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया अग्रहणप्रायोग्या
वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या भवन्ति। जघन्यायाश्च वर्गणायाः सकाशा- ॥ १२ ॥
दुत्कृष्टा वर्गणा अनन्तगुणाः। गुणकारश्चाऽभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। एतासां चाग्रहणप्रायोग्यता औदारिकं
प्रति अधिकपरमाणुत्वात् सूक्ष्मपरिणामत्वाच्चावसेया, वैक्रियं प्रति पुनः स्वल्पपरमाण्वात्मकत्वात्स्थूरपरिणामत्वाच्चावगन्तव्या, एवमु-
त्तरत्रापि भावना कार्या। अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया च एकपरमाण्वधिकस्कन्धरूपा वर्गणा वैक्रियशरीरप्रायोग्या जघन्या वर्गणा,

ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया वैक्रियशरीरस्य ग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणा वैक्रियशरीरविषये ग्रहणप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति, जघन्यायाश्च उत्कृष्टा विशेषाधिका, विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। वैक्रियशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया च एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या अग्रहणप्रायोग्या वर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया अग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा। जघन्यायाश्च उत्कृष्टा वर्गणा अनन्तगुणा, गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। तत उत्कृष्टाग्रहणप्रायोग्यवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा वर्गणा आहारकशरीरप्रायोग्या जघन्या वर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया आहारकशरीरविषये ग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा आहारकशरीरविषये ग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा ग्रहणप्रायोग्या भवति। जघन्यायाश्च उत्कृष्टा विशेषाधिका, विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। आहारकशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया च एकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या जघन्या वर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया अग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा अनन्तगुणा, गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। तत श्चोत्कृष्टाऽग्रहणप्रायोग्यवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा वर्गणा तैजसशरीरप्रायोग्या जघन्या वर्गणा भवति, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तैजसशरीरप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपास्तैजसशरीरविषये ग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका,

विशेषश्च तस्या एव जघन्याया अनन्ततमो भागः । तैजसशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया च एकपरमाण्वधिकस्कन्धरूपा जघन्या अग्रहणप्रायोग्या वर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया अग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा। जघन्यायाश्चोत्कृष्टा अनन्तगुणा, गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया च एकपरमाण्वधिकस्कन्धरूपा जघन्या भाषाप्रायोग्या वर्गणा, यानि पुद्गलद्रव्याणि जन्तवः सत्यादिभाषारूपतया परिणमय्याऽऽलम्ब्य च निसृजन्ति तानि भाषाप्रायोग्या वर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया भाषाप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा भाषाविषये ग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा भाषाप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका, विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। उत्कृष्टभाषाप्रायोग्यवर्गणापेक्षया च एकपरमाण्वधिकस्कन्धरूपा जघन्या अग्रहणप्रायोग्या वर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया अग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा। जघन्यायाश्चोत्कृष्टा अनन्तगुणा, गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया च एकपरमाण्वधिकस्कन्धरूपा जघन्या प्राणापानयोग्या वर्गणा। यानि पुद्गलद्रव्याणि गृहीत्वा जन्तवः प्राणापानरूपतया परिणमय्य आलम्ब्य च निसृजन्ति तानि प्राणापानयोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया प्राणापानयोग्या वर्गणा, एवमेकैकपरमाण्वधिककस्कन्धरूपाः प्राणापानयोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा प्राणापानयोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका, विशेषश्च तस्या एव जघन्याया अनन्ततमो भागः । प्राणापानप्रायोग्योत्कृष्टवर्गणापेक्षया च एकपरमा-

ण्वधिकस्कन्धरूपा जघन्या अग्रहणप्रायोग्या वर्गणा, ततोऽपि द्विपरमाण्वधिकस्कन्धरूपा द्वितीया अग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा अनन्तगुणा, गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। ततोऽग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा मनःप्रायोग्या जघन्या वर्गणा। इह यानि पुद्गलद्रव्याणि जन्तवः सत्यादिमनोरूपतया परिणमय्याऽऽलम्ब्य च निसृजन्ति तानि मनःप्रायोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया मनःप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा मनःप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा मनःप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका, विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। तत उत्कृष्टमनःप्रायोग्यवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया अग्रहणप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा। जघन्यायाश्चोत्कृष्टा अनन्तगुणा, गुणकारश्चाभव्याऽनन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। ततोऽग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा कर्मप्रायोग्या जघन्या वर्गणा। यानि पुद्गलद्रव्याणि जन्तवो ज्ञानावरणीयादिरूपतया परिणमयन्ति तानि कर्मप्रायोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया कर्मप्रायोग्या वर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपाः कर्मप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा कर्मप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका, विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। सम्प्रत्यक्षरार्थो विभाव्यते—'अग्गेगे'त्यादि औदारिकप्रायोग्याभ्यो वर्गणाभ्यः परतोऽ'योग्यान्तरिताः'—अग्रहणप्रायोग्यान्तरिता वर्गणा अनन्ता ज्ञातव्याः ॥ १४ ॥

वर्गणानां परिपाटिदर्शनार्थमाह—

**ओरालविउव्वाहारतेयभासाणुपाणमणकम्मे । अह दव्ववग्गणाणं कमो विवज्जासओ खेत्ते ॥१५॥**

बन्धनकरणम् । वर्गणाप्ररूपणा.

(स्वो०)—अनन्ता अग्रहणयोग्या उल्लङ्घ्य तत औदारिकशरीरार्थमौदारिकवर्गणा ग्रहणप्रायोग्या भवन्ति, आभ्यः प्रदेशोत्तरा ग्रहणायोग्याः, द्विप्रदेशोत्तरा ग्रहणायोग्याः, त्रिप्रदेशोत्तरा ग्रहणायोग्या, एवं चतुःपञ्चसंख्येयासंख्येयानन्तपुद्गलोत्तरा अपि ग्रहणायोग्याः, अनन्तानन्तपुद्गलोत्तरा अपि ग्रहणायोग्याः। जघन्याया अग्रहणयोग्याया उत्कृष्टा कियद्गुणा ?—अभव्यजीवानन्तगुणा सिद्धानन्तभागतुल्या वा भवति। ताभ्यः पुनरयोग्याभ्यः प्रदेशोत्तराः, द्विप्रदेशोत्तराः, एव त्रिचतुःपञ्चसंख्येयाऽसङ्ख्येयानन्तपुद्गलोत्तरा वैक्रियशरीरार्थं ग्रहणयोग्या भवन्ति । ताभ्यः परतः प्राग्वदग्रहणयोग्याः । अग्रहणयोग्याभ्यः परतो रूपोत्तरा, द्विरूपोत्तराः, एवं सङ्ख्येयाऽसङ्ख्येयानन्तानन्तपुद्गलोत्तरा अप्याहारकशरीरार्थं जीवस्य ग्रहणयोग्या भवन्ति । ताभ्योऽपि परतो भवन्त्यग्रहणयोग्यास्ताश्च प्राग्वद्वक्तव्याः । ताभ्यः अग्रहणयोग्याभ्यः परतो रूपोत्तरा, एवं द्वित्रिचतुःपञ्चसङ्ख्येयाऽसङ्ख्येयानन्तानन्तपुद्गलोत्तरा अपि तैजसशरीरार्थं ग्रहणप्रायोग्या जीवस्य भवन्ति, या गृहीत्वा तैजसशरीरं निर्वर्त्तयति। ताभ्यः परतो भूयोऽप्ययोग्याः, रूपद्वित्रिचतुःपञ्चसंख्येया यावदनन्तानन्तपुद्गलोत्तरा अनन्ता ग्रहणायोग्याः वर्गणा भवन्ति। ताभ्यः परतो रूपोत्तरा, द्विरूपोत्तरा, एवं त्रिचतुःपञ्चसंख्येया यावदनन्तानन्तपुद्गलोत्तरा अनन्ता वर्गणा भवन्ति, या भाषार्थं जीवोऽवलम्बयति, या गृहीत्वा चतुर्विधभाषात्वेन परिणमय्य विसृजति। ताभ्यः परतोऽग्रहणयोग्याः प्राग्वद्वक्तव्याः । ताभ्यः परतो रूपोत्तरा, यावदनन्तानन्तरूपोत्तरा आनापानार्थं जीवस्य ग्रहणयोग्या वर्गणा भवन्ति, या गृहीत्वानापानभावं नयति । ताभ्यः परतो जीवस्य भूयोऽप्यग्रहणयोग्या भवन्ति, ताश्च प्राग्वद्वक्तव्याः। ताभ्योऽग्रहणयोग्याभ्यः परतो

रूपोत्तरा, यावदनन्तानन्तरूपोत्तरा वर्गणा मनोऽर्थं जीवस्य ग्रहणयोग्या भवन्ति, या गृहीत्वा जीवाः सत्यासत्यादिचतुर्विधमनोभावेन परिणमय्य चिन्तयन्ति। ताभ्यः परतो ग्रहणायोग्या अनन्तानन्ता वर्गणा भवन्ति, ताश्च प्रागवद्वक्तव्याः। ताभ्यः परतो रूपोत्तरा, यावदनन्तानन्तरूपोत्तराः कार्मणशरीरार्थं जीवस्य ग्रहणयोग्या भवन्ति। एवं स्वस्थाने स्वस्थाने एकैकस्यैकावनन्ता अनन्ता वर्गणाः। किमुक्तं भवति?—औदारिकजघन्याया वर्गणाया रूपोत्तरा अनन्तानन्ताः सर्वलोकापन्नाश्च, एवं सर्वाः प्रत्येकं वर्गणा वक्तव्याः। ग्रहणप्रायोग्याश्च वक्तव्याः। या अनन्तरोक्ताः, ता गृहीत्वा कार्मणशरीरत्वेन नयति, किमुक्तं भवति?—कार्मणशरीरं सर्वकर्मप्रकृतीनां मूलोत्तरमेवमिन्नानां बीजीभूतं—योनिभूतं यतोऽस्ताः कार्मणशरीरवर्गणा गृहीत्वा स्वहेत्वभ्यासात्सत्प्रकृतिभावं नयति, यथा पृथिवी चित्रत्वहेतुसद्भावान्मेघजलं, यथा जाठराग्निस्तीव्रमन्दत्वहेतोराहारं, यथा सूपकारो गोधूमपुद्गलादिद्रव्यं गुडघृतपाकवैचित्र्यात्रिकटुकहिङ्ग्वजाजीधान्यकादिद्रव्यहेतोरनेकरूपं विसदृशानुभावं करोति, एवं जीवोऽपि कार्मणशरीरवर्गणाद्रव्यमिति। एवमभिहिते आह चोदकः—यद्येवं ततः कार्मणशरीरस्य बन्धाभावे हास्यरतिभयजुगुप्सापुरुषवेदसंज्वलनज्ञानान्तरायदर्शनदर्शनचतुष्कयशःकीर्तिसातोच्चैर्गोत्राणां प्रादुर्भावो न घटते, बीजविनाशेऽङ्कुरस्येव। अत्रोच्यते—औदारिकवर्गणा यद्यप्यौदारिकशरीरार्थमभिहितास्तथापि तदङ्गोपाङ्गबन्धनसङ्घातनानां ता एव ग्राह्याः, तेषां तदन्तर्गतत्वात्। एवं वैक्रियाहारकवर्गणा अपि स्वस्थाने। तैजसवर्गणाः पुनरौदारिकवैक्रियाहारकभावमपि भजन्ते, कथमेतदवसीयते?—औदारिकतैजसबन्धनादीनां प्ररूपणात्। कार्मणवर्गणास्तु सर्वप्रकृतिभावं भजन्ते, कार्मणशरीरस्य प्राधान्यमत्र शरीराधिकारत्वात्, न पुनः कार्मणहेतुभिरेव तदर्थं तासां ग्रहणम्, सर्वकर्मयोग्यत्वात् सर्वहेतुभिस्ता गृह्यन्ते, बध्यमानप्रकृतिभावेन च परिणमन्ति, यथा गोत्रसाधारणं क्षेत्रं गोत्रप्रधानस्यैवोपभोग्यं भवति, अन्येषामपि तद्विभागदानात्, तस्मिंश्च मृते तत्कालोप-

स्थितगोत्रस्य तत्कालस्वामित्वभावात्, कथमयमुपनयो घटते ?–प्रदेशबन्धेऽस्यार्थस्य पूर्वाचार्यैः ख्यापितत्वात्, कार्मणबन्धेऽप्यासां बन्धभणनाच्च, कार्मणस्य सर्वबन्धनेष्वपि योजितत्वात्, न ता वर्गणा कार्मणार्थमेवोक्ताः, एतद्भाव्यते कार्मणस्य प्राधान्यमेव केवलमतो न दोष इति अलं विस्तरेण । प्रकृतमुच्यते–औदारिकाद्या वर्गणा ग्रहणयोग्या याः तदन्तरेऽग्रहणयोग्यास्ताः सर्वाः स्वस्थानेऽनन्तानन्ता वक्तव्याः, सिद्धानामनन्तभागतुल्या अभव्यजीवानामनन्तगुणा वा, जघन्याया उत्कृष्टा विशेषाधिका–तद्वर्गणानन्तभागाधिका इत्यर्थः, अयोग्यजघन्याया उत्कृष्टा अनन्तगुणा, सिद्धानामनन्तभागगुणेति वक्तव्या । अथैवं द्रव्यवर्गणानां–पुद्गलवर्गणानां क्रमः–परिपाटी क्षेत्रमाश्रित्य 'विपर्यासो'–व्यत्यासः, किमुक्तं भवति ?–औदारिकवर्गणाः प्रदेशार्थतया सर्वस्तोकाः, ताभ्यो वैक्रियवर्गणा असंख्येयगुणाः, वैक्रियवर्गणाभ्य आहारकवर्गणाः प्रदेशार्थतया असंख्येयगुणाः, ताभ्योऽपि तैजसवर्गणा अनन्तगुणा, एवं भाषानप्राणमनःकार्मणवर्गणा यथोत्तरमनन्तगुणाः, सूक्ष्मत्वात् प्रदेशानां, क्षेत्रं प्रति यद्यप्यङ्गुलासंख्येयभागमात्रावगाहनाः सर्वा अप्युक्तास्तथापि औदारिकवर्गणाक्षेत्रादसंख्यभागे वैक्रियवर्गणा व्यवस्थिताः, एवं यथोत्तरं शेषवर्गणा अपि नेतव्याः, क्षेत्रस्य सर्वस्यैवासंख्येयभेदभिन्नत्वादनन्तभागो न सम्भवतीति गाथार्थः ॥ १५ ॥

(मलय०)–ताः किं विषयाः ? अत आह—'औदारिकवैक्रियाहारकतैजसभाषाप्राणापानमनःकर्मणि'–औदारिकवैक्रियादिविषया इत्यर्थः । अयमत्र भावार्थः–औदारिकप्रायोग्यवर्गणाभ्यः परतोऽग्रहणप्रायोग्या वर्गणाः, ततो वैक्रियप्रायोग्याः, ततो भूयोऽप्यग्रहणप्रायोग्याः, एवं तावद्वाच्यं यावत्कर्मप्रायोग्या वर्गणाः । अथ एवमनयैव परिपाट्या वर्गणानामौदारिकादिप्रायोग्याणां द्रव्यदलिकमधिकृत्य क्रमो यथोत्तरवृद्धिरूपो वेदितव्यः, तद्यथा–औदारिकवर्गणाः प्रदेशार्थतया सर्वस्तोकाः, ताभ्यो वैक्रियवर्गणा अनन्तगुणाः, ताभ्य ॥ १५ ॥

आहारकशरीरप्रायोग्या वर्गणा अनन्तगुणाः, ताभ्योऽपि तैजसशरीरप्रायोग्या वर्गणा अनन्तगुणाः, एवं भाषाप्राणापानमनःकर्मप्रायोग्या अपि वर्गणा यथोत्तरमनन्तगुणा वक्तव्याः। तथा क्षेत्रे–क्षेत्रविषये पुनः क्रमो यथोत्तरवृद्धिरूपो विपर्यासतः–वैपरीत्येन वेदितव्यः, तद्यथा–सर्वस्तोकं कर्मवर्गणावगाहक्षेत्रं, ततो मनःप्रायोग्यवर्गणावगाहक्षेत्रं प्रदेशतोऽसंख्येयगुणं, ततोऽपि प्राणापानवर्गणावगाहक्षेत्रं प्रदेशतो-ऽसङ्ख्येयगुणं, एवमधोऽधः क्रमेणावगाहक्षेत्रमसङ्ख्येयगुणं तावद्वक्तव्यं यावद्वैक्रियवर्गणावगाहक्षेत्रादौदारिकवर्गणावगाहक्षेत्रमसङ्ख्येय-गुणम्। एतच्च वर्गणावगाहक्षेत्रपरिमाणमेकैकवर्गणाव्यक्त्यपेक्षया द्रष्टव्यम्, अन्यथा सर्वा अप्येता वर्गणाव्यक्तयः–औदारिकप्रायोग्याः प्रथमा वर्गणा, औदारिकप्रायोग्याः द्वितीया वर्गणा, इत्येवंरूपाः प्रत्येकमनन्तानन्ताः सर्वा लोकापन्नाश्च वेदितव्याः ॥ १५ ॥

कम्मोवरिं धुवेयरसुण्णा पत्तेयसुण्णबायरिया। सुण्णा सुहुमा सुण्णा महखंधो सगुणनामाओ ॥१६॥

(स्वो०)—कार्मणशरीरवर्गणा उत्कृष्टा रूपाधिका सती ध्रुववर्गणा जघन्या भवति। ध्रुवेति कोऽर्थः?–तद्विधपरिणामपरिणतैः पुद्गलद्रव्यैरशून्यः सर्वदा लोकः, यतस्तद्विधा–अन्ये भवन्ति, अन्ये विनश्यन्ति। ता अपि यथोत्तराः प्राग्वदनन्ताः, जघन्यवर्गणाया उत्कृष्टा कियद्गुणा?–सर्वजीवानामनन्तगुणा। ततस्ताभ्यः प्रदेशोत्तरा इतरा अध्रुववर्गणा अनन्ता भवन्ति। अध्रुवा इति किं?–ताः कदाचित्सन्ति कदाचिन्नेति। जघन्याया उत्कृष्टा कियद्गुणा?–सर्वजीवानन्तगुणा। ताभ्यो रूपोत्तराः शून्यवर्गणा अनन्ताः। किमुक्तं भवति?–तद्विधपुद्गलपरिणताः स्कन्धा लोके न सन्ति, केवलं प्ररूपणा क्रियते, उपरितनवर्गणानां परिज्ञानार्थम्, जघन्यवर्गणाया उत्कृष्टा कियद्गुणा?–सर्वजीवानन्तगुणा। ताभ्यः परतो रूपोत्तराः प्रत्येकशरीरयोग्याः अनन्ता वर्गणा भवन्ति। प्रत्येकवर्गणा नाम औदारिकादीनां पञ्चानां शरीराणामेकैकप्रदेशे विस्रसापरिणामपरिणता उपचिताः सर्वजीवानन्तगुणाः

पुद्गला ये ते प्रत्येकशरीरवर्गणा उच्यन्ते । यत्रौदारिकादिशरीराणां प्रभूतसूक्ष्माणुनिष्पन्नकर्मप्रदेशो भवति तत्र प्रत्येकशरीरपुद्गला अपि विस्रसापरिणामेन बहव उपचयं यान्ति, तत्र स्वल्पसूक्ष्माणुनिष्पन्नः कर्मप्रदेशो भवति तत्र तेऽपि विस्रसापरिणामेन स्तोकाः परिणमन्ति । तेनात्रापि जघन्याद्या वर्गणाः प्ररूप्यन्ते । तस्याः प्रदेशोत्तरा अनन्ता यावदुत्कृष्टेति । जघन्यायाः उत्कृष्टा असङ्ख्येयगुणा, क्षेत्रपल्योपमस्यासङ्ख्येयभागगुणा, यतो जघन्यशरीरकर्मप्रदेशेभ्य उत्कृष्टशरीरकर्मप्रदेशाः पल्योपमासङ्ख्येयभागगुणाः, ताभ्यो रूपोत्तराः शून्यवर्गणा अनन्ताः प्राग्वद्वक्तव्याः जघन्याया उत्कृष्टा कियद्गुणा ?–असङ्ख्येयलोकाकाशासङ्ख्येयभागगुणा, सोऽप्यसङ्ख्येयभागोऽसङ्ख्येयलोकात्मक इति । ताभ्यो रूपोत्तरा बादरनिगोदद्रव्यवर्गणा अनन्ता भवन्ति । बादरवर्गणा नाम बादरनिगोदजीवा मौदारिकतैजसकार्मणशरीरपुद्गलेषु प्रत्येकं सर्वजीवानन्तगुणा विस्रसापरिणामेनोपचिताः ये पुद्गलास्ते बादरवर्गणा उच्यन्ते, यत्र बादरनिगोदजीवानां सर्वस्तोकाः शरीरप्रदेशास्तस्मिन् जघन्या बादरवर्गणा विस्रसाप्रयोगेण परिणमति, ततः प्रदेशोत्तरा यावदुत्कृष्टा, जघन्याया उत्कृष्टा असंख्येयगुणा, क्षेत्रपल्योपमस्यासंख्येयभागगुणा, कारणं प्रागेवाभिहितम् । ताभ्यो भूयोऽपि रूपोत्तरा अनन्ताः शून्यवर्गणाः तृतीयवारा भवन्ति, शेषं प्राग्वद्वक्तव्यम्, जघन्याया उत्कृष्टाऽसंख्येयगुणा, अङ्गुलासंख्येयभागमात्रक्षेत्रादावलिकाया असंख्येयभागसमयतुल्यानि वर्गमूलानि गृह्यन्ते, चरमवर्गमूलस्यासंख्येयभागस्य योऽसंख्येयो भागः सोऽत्र गुणकार इति । ताभ्यो रूपोत्तरा यावदनन्तरूपोत्तराः सूक्ष्मनिगोदद्रव्यवर्गणा, बादरनिगोदवर्गणावत् वक्तव्याः । जघन्याया उत्कृष्टा कियद्गुणा ? आवलिकाऽसंख्येयभागमात्रगुणा, ताभ्यः परतः चतुर्थी शून्यवर्गणा, ता अपि रूपोत्तरा यावदनन्तरूपोत्तरा, अनन्ता एताः प्ररूपणामात्रा एव, जघन्याया उत्कृष्टाऽसंख्येयगुणा, असंख्येयश्रे-

मिगुणा,प्रतरस्यासंख्येयभागगुणा वा । तास्य' परतो रूपे प्रक्षिप्ते महास्कन्धवर्गणा जघन्या भवति, महास्कन्ध- वर्गणा नाम पर्वतट-ङ्कस्याभिताः पुद्गलस्कन्धवर्गणा उत्पद्यन्ते, जघन्याया उत्कृष्टा असंख्येयगुणा पल्योपमासंख्येयभागगुणा, यस्मात्त्रसकायबाहुल्येनासा-मल्पत्वं त्रसकायाल्पत्वे आसां वर्गणानां बाहुल्यम् । एताः वर्गणा 'गौणनामानः' नाम्न एव गुणा अवगन्तव्या इति गाथार्थः ॥१६॥

(मलय०)—कर्मवर्गणानामुपरि 'धुवेयर' त्ति—ध्रुवाचित्तद्रव्यवर्गणाः, तदनन्तरं च इतरा अध्रुवाचित्तद्रव्यवर्गणाः, ततः शून्यवर्गणाः, ततः प्रत्येकशरीरवर्गणाः, ततो द्वितीयाः शून्यवर्गणाः, ततो बादरगा—बादरनिगोदगता वर्गणाः, ततस्तृतीयाः शून्यवर्गणा', तत सूक्ष्मे—सूक्ष्मनिगोदविषया वर्गणा', ततश्चतुर्थ्यः शून्यवर्गणाः, ततो महास्कन्धे—महास्कन्धविषया वर्गणा. । तत्र कर्मप्रायोग्योत्कृष्टवर्गणानन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या ध्रुवाचित्तद्रव्यवर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया ध्रुवाचित्तवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा ध्रुवाचित्तद्रव्यवर्गणास्तावद्वक्तव्याः यावदुत्कृष्टा ध्रुवाचित्तद्रव्यवर्गणा। ध्रुवाचित्तद्रव्यवर्गणा नाम याः सर्वदैव लोके प्राप्यन्ते, तथाहि—एतासां मध्ये अन्या उत्पद्यन्ते अन्या विनश्यन्ति न पुनरेतासामन्यतमयापि कदाचनापि लोको विरहितो भवति । अचित्तत्वं चासां जीवेन कदाचिदप्यग्रहणादवसेयं, जीवसंबन्धादि सचित्तत्वमपि कथञ्चित्स्यात्, यथौदारिकादिशरीराणामिति । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा अनन्तगुणा, गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या अध्रुवाचित्तद्रव्यवर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽध्रुवाचित्तद्रव्यवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा अध्रुवाचित्तद्रव्यवर्गणास्तावद्वक्तव्याः यावदुत्कृष्टा अध्रुवाचित्तद्रव्यवर्गणा। अध्रुवाचित्तद्रव्यवर्गणा नाम यासांकाश्चिद्वर्गणाः कदाचिल्लोके भवन्ति, कदाचिच्च न भवन्ति, अत एवैताः सान्तरनिरन्तरा अप्युच्यन्ते । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा

वर्गणा अनन्तगुणा, गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्रथमा ध्रुवशून्यवर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया प्रथमध्रुवशून्यवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्रथमा ध्रुवशून्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा प्रथमध्रुवशून्यवर्गणा भवति। ध्रुवशून्यवर्गणा नाम याः कदाचनापि लोके न भवन्ति, केवलमुपरितनवर्गणानां बाहुल्यपरिज्ञानार्थं प्ररूपणामात्रमेव क्रियते। जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा अनन्तगुणा। गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्रत्येकशरीरिद्रव्यवर्गणा। अथ केयं प्रत्येकशरीरिद्रव्यवर्गणा नाम? उच्यते—प्रत्येकशरीरिणां यथासंभवमौदारिकवैक्रियाहारकतैजसकार्मणेषु शरीरनामकर्मसु प्रत्येकं विस्रसापरिणामेनोपचयमापन्नाः सर्वजीवानन्तगुणाः पुद्गलाः, ते प्रत्येकशरीरिद्रव्यवर्गणाः, उक्तं च शतकचूर्णौ—"पत्तेयवग्गणा इह पत्तेगाणं तु उरलमाईणं। पंचण्हसरीराणं तणुकम्मपएसगा जे उ ॥ १ ॥ तत्थेक्केक्कपएसे वीससपरिणामउवचिया होंति। सव्वजियणंतगुणा, पत्तेया वग्गणा नाओ ॥ २ ॥" तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया प्रत्येकशरीरिद्रव्यवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्रत्येकशरीरिद्रव्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा प्रत्येकशरीरिद्रव्यवर्गणा। जघन्यायाश्चोत्कृष्टा असंख्येयगुणा; गुणकारश्च सूक्ष्मक्षेत्रपल्योपमासंख्येयभागलक्षणः। कथमेतदवसीयते? इति चेदुच्यते—इह सर्वोऽपि कर्मप्रदेशोपचयो योगाद्भवति, 'जोगा पयडी पएसं' इति वचनात्, ततो जघन्ययोगे सति जघन्यः कर्मप्रदेशोपचयो भवति, उत्कृष्टे चोत्कृष्टः, जघन्याच्च योगस्थानादुत्कृष्टं योगस्थानं सूक्ष्मक्षेत्रपल्योपमाऽसंख्येयभागगुणितमेव प्राप्यते नाधिकं, ततः कर्मप्रदेशोपचयादपि जघन्यादुत्कृष्टः कर्मप्रदेशोपचयः सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणित एव प्राप्यते नाधिकः, तदाश्रिता च प्रत्येकशरीरिद्रव्यवर्गणा, जघन्ये च कर्मप्रदेशोपचये जघन्या प्रत्येकशरीरिद्रव्यवर्गणा, उत्कृष्टे चोत्कृष्टा, ततः प्रत्येकशरीरिद्रव्यवर्गणाप्यु-

त्कृष्टा जघन्यमत्येकशरीरिद्रव्यवर्गणापेक्षया सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणितैव भवति। ततोऽनन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या द्वितीया ध्रुवशून्यवर्गणा, द्विपरमाण्वधिकस्कन्धरूपा द्वितीया द्वितीयध्रुवशून्यवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा द्वितीया ध्रुवशून्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा द्वितीयध्रुवशून्यवर्गणा। जघन्यायाश्चोत्कृष्टा असंख्येयगुणा, गुणकारश्चासंख्येयलोकाकाशप्रदेशराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्या बादरनिगोदद्रव्यवर्गणा। अथ केयं बादरनिगोदवर्गणा नाम? उच्यते–बादरनिगोदजीवानामौदारिकतैजसकार्मणेषु शरीरनामकर्मसु प्रत्येकं ये सर्वजीवानन्तगुणाः पुद्गला विस्रसापरिणामेनोपचयमायान्ति, ते बादरनिगोदद्रव्यवर्गणा। तत्र बादरनिगोदजीवानां यद्यपि केषाञ्चित्कियत्कालं वैक्रियाहारकशरीरनामकर्मणी अपि संभवतः तथापि ते प्रथमसमयादेव निरन्तरमुद्वल्यमानत्वादत्यन्तमसारे इति न विवक्ष्येते। ततो द्विपरमाण्वधिकस्कन्धरूपवर्गणा द्वितीया बादरनिगोदद्रव्यवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा द्वितीयादिवर्गणास्तावद्वक्तव्याः, यावदुत्कृष्टा बादरनिगोदद्रव्यवर्गणा। जघन्यायाश्चोत्कृष्टा असंख्येयगुणा, गुणकारश्च क्षेत्रपल्योपमासंख्येयभागलक्षणः। अत्र युक्तिः प्रत्येकशरीरिद्रव्यवर्गणायामिव परिभावनीया। तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया तृतीयध्रुवशून्यवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टा तृतीयध्रुवशून्यवर्गणा भवति। जघन्यायाश्चोत्कृष्टा असंख्येयगुणा, गुणकारश्च अङ्गुलमात्रे क्षेत्रे आवलिकाया असंख्येयतमे भागे यावन्तः समयास्तावन्ति वर्गमूलानि गृह्यन्ते, गृहीत्वा च चरमस्य वर्गमूलस्याऽसंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्यसूक्ष्मनिगोदवर्गणा, सा च सूक्ष्मनिगोदवर्गणा बादरनिगोदवर्गणावदविशेषेणावगन्तव्या यावदुत्कृष्टा। जघन्यायाश्च उत्कृष्टा असंख्येयगुणा, गुणकारश्चावलिकाया असंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणो

द्रष्टव्यः, यतः सूक्ष्मनिगोदजीवानां जघन्याद्योगस्थानादुत्कृष्टं योगस्थानं आवलिकाया असंख्येयभागगुणितमेव प्राप्यते नाधिकं, योगाधीना च कर्मप्रदेशोपचयप्रवृत्तिरिति। तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या तुरीयध्रुवशून्यवर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तुरीयध्रुवशून्यवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा तुरियध्रुवशून्यवर्गणा। जघन्यायाश्चोत्कृष्टा तुरीयध्रुवशून्यवर्गणा असंख्येयगुणा, गुणकारश्च प्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या महास्कन्धवर्गणा। महास्कन्धवर्गणा नाम ये पुद्गलस्कन्धा विश्रसापरिणामेन टङ्ककूटपर्वतादिसमाश्रिताः। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया महास्कन्धवर्गणा, एवमेकैकपरमाण्वधिकस्कन्धरूपा महास्कन्धवर्गणास्तावद्वाच्याः, यावदुत्कृष्टा महास्कन्धवर्गणा भवति। जघन्यायाश्चोत्कृष्टा असंख्येयगुणा, गुणकारश्च पल्योपमाऽसंख्येयभागलक्षणो द्रष्टव्यः। इमाश्च महास्कन्धवर्गणा यदा भूयान् त्रसकायो भवति तदा स्तोकाः प्राप्यन्ते, यदा तु स्वल्पस्तदा प्रभूता इति वस्तुस्वभाव एषः। उक्तं च शतकबृहच्चूर्णौ—महाखंधवग्गणा टंक—कूड तह पव्वयाइठाणेसु। जे पोग्गला समसिया, महाखंधा ते उ वुच्चंति ॥ १ ॥ तत्थ तसकायरासी, जंमि य कालंमि होइ बहुगो य। महखंधवग्गणाओ, तंमि य काले भवे थोवा ॥ २ ॥ जंमि पुण होइ काले, रासी तसकाइयाण थोवा उ। महाखंधवग्गणाउ, तहिं काले होंति बहुगाओ ॥ ३ ॥ एताश्च परमाणुवर्गणाद्या महास्कंधवर्गणापर्यवसानाः 'सगुणनामाओ' त्ति सगुणं—गुणैर्युक्तं सान्वयमित्यर्थो नाम यासां ताः सगुणनामानः। तथाहि—एकैकपरमाणुरूपा वर्गणा परमाणुवर्गणा, द्वयोः परमाण्वोर्वर्गणा द्विपरमाणुवर्गणा, इत्येवं नाम्नां यथार्थता विद्यते एव। तथा एताः सर्वा अपि वर्गणा महास्कन्धवर्गणापर्यवसानाः प्रदेशापेक्षया यथोत्तरं महत्यो महत्तरा अपि भवन्त्यः प्रत्येकमेकैकाः सत्योऽङ्गुलमात्रक्षेत्रासंख्येयभागावगाहा

ग्रहण्याः । तदुक्तं कर्मप्रकृतौ—"भर्सखमागरष्गुलवगाहो"त्ति ॥ १६ ॥

पूर्विकाराऽभिहितमर्थं सूत्रकारः सूत्रेणाभिदधाति—

**सिद्धअणंतंसेण अहव अभव्वेहऽणतगुणिएर्हिं । जुत्ता जहण्णजोग्गा उरलाईण भवे जेट्ठा ॥ १७ ॥**

(स्वो०)—सिद्धानामनन्तभागेनाथवा अभव्यजीवैरनन्तगुणैर्युक्ता योजिता जघन्या वर्गणा, औदारिकवैक्रियाहारकतैजसभाषाप्राणापानमनःकार्मणशरीराणां ग्रहणप्रायोग्या या (चरमा) सैवोत्कृष्टा भवतीति गाथार्थः ॥ १७॥

(मलय०)—पूर्वमुपदर्शितमेवार्थं लेशतः सूत्रकारोऽप्यनुवदति—सिद्धानामनन्तेनांशेन-भागेन, अथवा अभव्येभ्योऽनन्तगुणैः परमाणुभिर्युक्ता, उपलक्षणमेतत्, गुणिता वा, औदारिकादीनाम्—औदारिकवैक्रियाहारकतैजसभाषाप्राणापानमनःकर्मणां योग्या-ग्रहणप्रायोग्या जघन्या वर्गणा भवति । ततः सैव रूपोत्तरवृद्धया परिवर्द्धमाना ज्येष्ठा—उत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति । इयमत्र भावना—सिद्धानामनन्तभागकल्पैरथवा अभव्येभ्योऽनन्तगुणैः परमाणुभिर्युक्ता वर्गणा, एतावत्परमाण्वात्मका इत्यर्थः, जघन्या औदारिकशरीरस्य ग्रहणप्रायोग्या भवति, ततः सैव रूपोत्तरवृद्धया क्रमेण परिवर्द्धमाना उत्कृष्टा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । उत्कृष्टायाश्चोपरि या वर्गणा सिद्धानन्तभागकल्पैरथवा अभव्येभ्योऽनन्तगुणैरूपैर्गुणिता प्राप्यते सा वैक्रियशरीरस्य ग्रहणप्रायोग्या जघन्या वर्गणा । अपान्तरालवर्तिन्यस्त्वग्रहणप्रायोग्याः । ततः सैव जघन्या रूपोत्तरवृद्धया क्रमेण परिवर्द्धमाना उत्कृष्टा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । तत उत्कृष्टाया उपरि भूयोऽपि अभव्यानन्तगुणैरथवा सिद्धानामनन्तभागकल्पैरूपैर्गुणिता प्राप्यते, साऽऽहारकशरीरस्य जघन्या ग्रहणप्रायोग्या वर्गणा । अत्राप्यपान्तरालवर्तिन्यः सर्वा अप्यग्रहणप्रायोग्याः । ततः सैव जघन्या रूपोत्तरवृद्धया

क्रमेण परिवर्द्धमाना उत्कृष्टा भवति । एवं तैजसभाषाप्राणापानमनःकर्मणामपि वाच्यम् ॥ १७ ॥

पञ्चसंग्रहे ॥ १९ ॥ ग्रहणप्रायोग्यानां द्रव्यवर्गणानां वर्णादिविभागार्थमाह— बन्धनकरणम् । वर्गणाप्ररूपणा.

**पंचरसपंचवण्णेहिं, परिणया अट्ठफासदोगंधा । जीवाहारगजोग्गा चउफासविसेसिया उवरिं ॥१८॥**

(स्वो०)—पञ्चभिः रसैः—मधुराम्लतिक्तकटुककषायैः, पञ्चभिर्वर्णैः—कृष्णनीलरक्तपीतशुक्लैः, परिणताः—तद्भावमुपगताः, अष्टस्पर्शाः —गुरुलघुमृदुकठिनस्निग्धरूक्षशीतोष्णाः, शुभाशुभगन्धाः, औदारिकवैक्रियाहारकशरीरयोग्या यावत्तावद् भवन्ति, तदुपरितनाः तैजसाद्या या जीवस्य ग्रहणप्रायोग्यास्ताः सर्वा अप्येवमेव, किन्तु चतुःस्पर्शा भवन्तीति गाथार्थः ॥ १८ ॥

(मलय०)—सम्प्रति वर्गणानां वर्णादिनिरूपणार्थमाह—औदारिकशरीरयोग्याया वर्गणाया आरभ्य यावदाहारकशरीरप्रायोग्या वर्गणाः—एताः सर्वा अपि पञ्चभी रसैः पञ्चभिर्वर्णैः परिणताः, पञ्चरसपञ्चवर्णसहिता ज्ञातव्या इत्यर्थः । तथा अष्टस्पर्शाः—गुरुलघुमृदुकठिनस्निग्धरूक्षशीतोष्णस्पर्शयुक्ताः, तथा द्विगन्धाः—सुरभिदुरभिगन्धसहिता ज्ञातव्याः । इह एकस्य परमाणोरेक एव वर्णो गन्धो रसो वा भवति स्पर्शौ तु द्वावविरुद्धौ । तदुक्तं—"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः । एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥ १ ॥" समुदाये तु कोऽपि परमाणुः केनापि वर्णादिना युक्तो भवति, ततः समुदायस्य पञ्चवर्णादित्वं प्रतिपाद्यमानं न विरुध्यते । तथा 'उवरिं'ति—उपरितन्यस्तैजसप्रायोग्याद्या अपि वर्गणाः पञ्चवर्णाः पञ्चरसा द्विगन्धाश्च ज्ञातव्याः । केवलं स्पर्शचिन्तायां चतुःस्पर्शविशेषिताः—चतुःस्पर्शसहिता ज्ञातव्याः । तत्र मृदुलघुरूपौ द्वौ स्पर्शाववस्थितौ, अन्यौ द्वौ स्पर्शौ स्निग्धोष्णौ स्निग्धशीतौ रूक्षोष्णौ रूक्षशीतौ वा । तदेवं कृता ग्रहणाग्रहणप्रायोग्यवर्गणानां प्ररूपणा ॥ १८ ॥ ॥ १९ ॥

## पुद्गलवर्गणानां यन्त्रम्

| संख्या क्रमः | वर्गणानां नामानि | उत्तरवर्गणानाम-नन्तरपूर्वापेक्षया | पूर्वस्मिन्नुत्तरवर्गणायां प्रदेशाः | उत्तरवर्गणाया एकस्या अवगाहना | स्वजघन्यवर्गणागतप्रदेशा-पेक्षया स्वोत्कृष्टवर्गणा-गतप्रदेशाः |
|---|---|---|---|---|---|
| १ | एकाणुकादिः | असंख्यातनंतगुणाः | एकस्मादनन्तात् | अंगुलाऽसंख्येयभागप्रमाणा | असंख्यानन्तगुणाः |
| २ | औदारिकग्र० | ,, | असंख्यातनन्तगुणाः | ,, | स्वजघन्यादनन्तभागो अधिक |
| ३ | अग्राह्या | ,, | औदारिकाद्येकाद्यनन्तपर्यन्ताधिकाः | ततोऽगुलासंख्येय भागहीना | असंख्यानन्तगुणाः |
| ४ | वैक्रियग्र० | ,, | औदारिकादनन्तगुणाः | ,, | अनन्तभागाधिका |
| ५ | अग्राह्या | ,, | वैक्रियाद्येकाद्यनन्तपर्यन्ताधिकाः | ,, | असंख्यानन्तगुणाः |
| ६ | आहारकग्र० | ,, | वैक्रियादनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| ७ | अग्राह्या | ,, | आहारकाद्येकाद्यनन्तपर्यन्ताधिकाः | ,, | असंख्यानन्तगुणाः |
| ८ | तैजसग्र० | ,, | आहारकादनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| ९ | अग्राह्या | ,, | तैजसाद्येकाद्यनन्तपर्यन्ताधिकाः | ,, | असंख्यानन्तगुणाः |

| | | | | | |
|---|---|---|---|---|---|
| १० | भाषाव० | ,, | तैजसादनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| ११ | अग्राह्या | ,, | भाषाया एकाद्यनन्तपर्यन्ताधिकाः | ,, | अभव्यानन्तगुणाः |
| १२ | उच्छ्वासव० | ,, | भाषाया अनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| १३ | अग्राह्या | ,, | उच्छ्वासादेकाद्यनन्तपर्यन्ताधिकाः | ,, | अभव्यानन्तगुणाः |
| १४ | मनोव० | ,, | उच्छ्वासादनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| १५ | अग्राह्या | ,, | मनस एकाद्यनन्तपर्यन्ताधिकाः | ,, | अभव्यानन्तगुणाः |
| १६ | कार्मणव० | ,, | मनसोऽनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| १७ | ध्रुवाचितद्रव्यव० | सर्वजीवादनंतगु० | कार्मणादेकाद्यधिकासर्वजीवानन्तगुणाधिकाश्च | अंगुलाऽसंख्येयभागप्रमाणा | सर्वजीवानन्तगुणाः |
| १८ | अध्रुवाचितद्रव्यव० | ,, | ध्रुवाचित्तादेकाद्यधिका शेषं पूर्ववत् | ,, | ,, |
| १९ | प्रथम ध्रुवशून्यव० | ,, | पूर्वादेकाद्यधिका शेषं पूर्ववत् | ,, | ,, |
| २० | प्रत्येकशरीरिव० | ,, | ,, अनन्ताधिकाश्च | ,, | असङ्ख्येयगुणाः |

॥ २० ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| २१ | द्वितीय ध्रुवशून्यव० | " | " | " | " | " |
| २२ | बादरनिगोदव० | " | " | " | " | " |
| २३ | तृतीया ध्रुवशून्यव० | " | " | " | " | " |
| २४ | सूक्ष्मनिगोदव० | " | " | " | " | " |
| २५ | चतुर्थं ध्रुवशून्यव० | " | " | " | " | " |
| २६ | अचित्त महास्कन्धव० | " | " | " | " | " |

जघन्ययोगिनो जीवा जघन्यवर्गणारूपं दलं परिणामयन्ति–अवलम्बयन्ति, उत्कृष्टयोगिन उत्कृष्टवर्गणारूपं यस्मात् तस्मा- द्योगस्थाने द्रव्यवर्गणा प्ररूपणा कृता। अधुना तेषामेव पुद्गलद्रव्याणां तथाविधसम्बन्धः स्नेहतो भवति, अतः स्नेहप्ररूपणा क्रि- यते। स्नेहोऽनुभागो रस इत्येकोऽर्थः, तत्रापि त्रिविधा प्ररूपणा–स्नेहस्पर्द्धकप्ररूपणा, नामस्पर्द्धकप्ररूपणा, प्रयोगस्पर्द्धकप्ररूपणा। स्नेहवैचित्र्यात् स्पर्द्धकानां वैचित्र्यकथनम्, तत्रैकद्वित्रिचतुष्पञ्चयावत्सर्वजीवानन्तगुणस्नेहाविभागयुक्तलोकव्यवस्थितपुद्गलानां प्ररूपणा स्नेहस्पर्द्धकप्ररूपणा। शरीरकर्मोदयाच्छरीरस्कन्धानां परस्परसम्बन्धजनकपरमाणुस्नेहप्ररूपणा नामस्पर्द्धकप्ररूपणेतिभावः। वैसदृश्या- ज्जीवप्रदेशानां स्ववीर्यहेतुगृहीतकर्मपुद्गलानां स्नेहप्ररूपणा प्रयोगस्पर्द्धकप्ररूपणा, प्रकृष्टो वा योगो व्यापारः, तद्धेतुगृहीतपुद्गलस्ने-

पञ्चसंग्रहे ॥ २१ ॥

हस्य प्ररूपणा प्रयोगस्पर्द्धकप्ररूपणेति । स्नेहस्पर्द्धकमादावाह—

अविभागाईनेहेणं जुत्ता ताव पोग्गला अत्थि । सव्वजियाणंतगुणेण जाव नेहेण संजुत्ता ॥ १९ ॥

बन्धनकरणम् । स्नेहप्रत्ययप्ररूपणा.

(स्वो०)—यथा जीवप्रदेशवीर्यं बुद्धयाऽविभागीकृतं तथा स्नेहोऽप्यविभागतया परिकल्प्यते । एकेन स्नेहाविभागेन युक्ताः पुद्गला लोके सन्ति, तेऽतिजघन्यानुभागाः, आदिशब्दादन्ये द्विस्नेहाविभागयुक्ताः, अन्ये त्रिस्नेहाविभागयुक्ताः, एवं रूपोत्तरा यावत्सर्वजीवानन्तगुणस्नेहाविभागयुक्ताः तावत् पुद्गलाः सन्तीति गाथार्थः ॥ १९ ॥

(मलय०)—सम्प्रति पुद्गलानां संबन्धः स्नेहतो भवतीति स्नेहप्ररूपणा कर्त्तव्या । सा च त्रिधा, तद्यथा—स्नेहप्रत्ययस्पर्द्धकप्ररूपणा, नामप्रत्ययस्पर्द्धकप्ररूपणा, प्रयोगप्रत्ययस्पर्द्धकप्ररूपणा च । तत्र स्नेहप्रत्ययस्य—स्नेहनिमित्तस्य स्पर्द्धकस्य प्ररूपणा स्नेहप्रत्ययस्पर्द्धकप्ररूपणा । तथा नामप्रत्ययस्य—बन्धननामनिमित्तस्य शरीरप्रदेशस्पर्द्धकस्य प्ररूपणा नामप्रत्ययस्पर्द्धकप्ररूपणा । अयमर्थः—शरीरबन्धननामकर्मोदयतः परस्परं बद्धानां शरीरपुद्गलानां स्नेहमधिकृत्य या स्पर्द्धकप्ररूपणा सा नामप्रत्ययस्पर्द्धकप्ररूपणा । तथा प्रकृष्टो योगः प्रयोगः, तेन प्रत्ययभूतेन—कारणभूतेन ये गृहीताः कर्मपुद्गलास्तेषां स्नेहमधिकृत्य स्पर्द्धकप्ररूपणा प्रयोगप्रत्ययस्पर्द्धकप्ररूपणा । तत्र प्रथमतः स्नेहप्रत्ययस्पर्द्धकप्ररूपणा क्रियते—इह यः सर्वोत्कृष्टः स्नेहः स केवलिप्रज्ञाच्छेदनकेन छिद्यते, छित्त्वा छित्त्वा च निर्विभागा भागाः पृथग् व्यवस्थाप्यन्ते, तत्र जगति केचित्परमाणव एकेन स्नेहाविभागेन युक्ताः सन्ति, केचिद् द्वाभ्यां, केचित् त्रिभिः, एवं यावत्केचित्सर्वजीवानन्तगुणैः । तथा चाह—अविभागादिना स्नेहेन युक्तास्तावत्पुद्गलाः सन्ति, किमुक्तं भवति?—एकेन स्नेहाऽविभागेन युक्ताः पुद्गलाः सन्ति, आदिशब्दाद् द्वाभ्यां त्रिभिरेवं यावत्सर्वजीवानन्तगुणेन स्नेहेन संयुक्ताः ॥ १९ ॥ ॥ २१ ॥

कृता स्नेहाविभागप्ररूपणा, वर्गणाप्ररूपणोच्यते—

जे एगनेह जुत्ता ते बहवे तेहिं वग्गणा पढमा। जे दुगनेहाइ जुया असंखभागूण ते कमसो ॥ २० ॥

(स्वो०)—ये एकस्नेहाविभागेन युक्ताः पुद्गलास्ते बहवः, तैर्वर्गणा प्रथमा, ये द्वाभ्यां स्नेहाविभागाभ्यां युक्ताः पुद्गलाः तैर्द्वितीया वर्गणा, प्रथमवर्गणातो द्वितीयवर्गणायामसङ्ख्येयभागोनाः पुद्गला भवन्ति, आदिशब्दात् त्रिचतुष्पञ्चसङ्ख्येयासङ्ख्येयानन्तस्नेहाविभागयुक्ताः, एवं रूपोत्तरा अनन्ता वर्गणा यथापरमसङ्ख्येयभागोनाः प्रदेशतया भवन्तीति गाथार्थः ॥ २० ॥

(मलय०)—तत्र ये एकेन स्नेहेन—स्नेहाविभागेन युक्ताः पुद्गलास्ते बहवः, तेषां वर्गणा प्रथमा—तेषां समुदायः प्रथमा वर्गणा इत्यर्थः। ततो द्वाभ्यां स्नेहाविभागाभ्यां युक्तानां समुदायो द्वितीया वर्गणा, त्रिभिः स्नेहाविभागैर्युक्तानां समुदायस्तृतीया, एवं संख्येयैः स्नेहाविभागैर्युक्तानां संख्येया वर्गणाः, असंख्येयैः स्नेहाविभागैर्युक्तानां पुनरसङ्ख्येयाः, अनन्तैः स्नेहाविभागैर्युक्तानां त्वनन्ताः। द्विधा चात्र प्ररूपणा, तद्यथा—अनन्तरोपनिधया परम्परोपनिधया च। तत्र तावत्प्रथमतोऽनन्तरोपनिधया प्ररूपणा क्रियते—प्रथमायां वर्गणायां यावन्तः पुद्गलास्तदपेक्षया द्वितीयस्यां वर्गणायां असंख्येयभागहीनाः, ततोऽपि तृतीयस्यामसंख्येयभागहीनाः, एवं प्रतिवर्गणमसंख्येयभागहान्या पुद्गलास्तावद्वाच्या यावदनन्ता वर्गणा गता भवन्ति। तथा चाह—ये पुद्गला द्विकेन स्नेहेन—द्वाभ्यां स्नेहाविभागाभ्यामादिशब्दात्त्रिभिः स्नेहाविभागैश्चतुर्भिर्यावदनन्तैर्युक्ताः पुद्गलास्ते क्रमशः—क्रमेण असंख्येयभागेन ऊना द्रष्टव्या इति॥

इय एरिसहाणीए जंति अणंता उ वग्गणा कमसो। संखसूणा तत्तो संखगुणूणा तओ कमसो ॥ २१ ॥

॥ २२ ॥

बन्धन-
करणम् ।
स्नेहप्रत्यय
प्ररूपणा.

(स्वो०)—इतीदृक्षया हान्याऽसङ्ख्येयभागमात्रया अनन्ता वर्गणा रूपोत्तराः यान्ति क्रमशः, ततोऽन्या नास्त्यसङ्ख्येयभागहान्या। तदुपरि स्नेहाविभागोत्तराः सङ्ख्येयभागहान्या यथोत्तरमनन्ता वर्गणा भूयो यान्ति। एवमनया सङ्ख्येयभागहान्याऽनन्ता वर्गणा गताः। भूयः पुनः सङ्ख्येयगुणहीनाः प्रदेशार्थतया क्रमात् परिपाट्या अनन्ता वर्गणा यान्तीति गाथार्थः ॥ २१ ॥

(मलय०)—एवमुक्तेन प्रकारेण ईदृक्षया हान्या—असंख्येयभागहान्या इत्यर्थः, अनन्ता वर्गणाः क्रमशः—क्रमेण यान्ति—गच्छन्ति। द्वितीयवर्गणात आरभ्य अनन्तासु वर्गणासु प्रतिवर्गणमसंख्येयभागहीनाः पुद्गला भवन्तीत्यर्थः। ततः परं किमित्याह—तत उक्तरूपाभ्यो वर्गणाभ्यः परतोऽनन्तासु वर्गणासु पुद्गलाः संख्येयांशोनाः—संख्येयेन भागेन हीना भवन्ति। तद्यथा—असंख्येयभागहानिगतचरमवर्गणापेक्षया अनन्तरायां वर्गणायां पुद्गलाः संख्येयभागहीनाः, ततोऽप्यग्रेतन्यां वर्गणायां संख्येयभागहीनाः, एवं तावद्वाच्यं यावदनन्ता वर्गणा गच्छन्ति। ततः क्रमशः—क्रमेण संख्येयगुणोनाः—संख्येयगुणोना भवन्ति। तद्यथा—संख्येयभागहानिगतचरमवर्गणापेक्षया अनन्तरायां वर्गणायां पुद्गलाः संख्येयगुणहीनाः, ततोऽप्यग्रेतन्यां वर्गणायां संख्येयगुणहीनाः, एवं तावद्वाच्यं यावदनन्ता वर्गणा गच्छन्ति ॥२१॥

**तत्तोऽसंखगुणूणा अणंतगुणऊणिया वि तत्तो वि। गंतुमसंखा लोया अद्धद्धा पोग्गला भूय ॥ २२ ॥** ॥ २२ ॥

(स्वो०)—ततस्ताभ्यः संख्येयगुणहीनाभ्यः परतः स्नेहाविभागोत्तरा वर्गणाः स्थिताः, ता असंख्येयगुणहीना यान्त्यनन्ताः प्रदेशार्थतया, ताभ्योऽपि परतोऽनन्तगुणहीना यथोत्तरमनन्ताः वर्गणा यान्ति प्रदेशार्थतया। एताः पञ्चापि हान्योऽनन्तरोपनिधायां भवन्ति। परम्परोपनिधायां तु प्रथमवर्गणाया असंख्येयलोकाकाशप्रमाणा वर्गणा उल्लङ्घ्य या अन्या भवति तस्यां प्रथमवर्गणा-

तोऽर्द्धाः पुद्गलाः स्युः, एवं भूयो भूयो नेतव्यमिति गाथार्थः ॥ २२ ॥

(मलय०)—ततोऽनन्तासु वर्गणासु असंख्येयगुणोना—असंख्येयगुणोनाः पुद्गला भवन्ति। तद्यथा—संख्येयगुणहानिगतचरमवर्गणापेक्षया अनन्तरायां वर्गणायां पुद्गला असंख्येयगुणहीनाः, ततोऽप्यग्रेतन्यां वर्गणायामसंख्येयगुणहीनाः, एवं तावद्वाच्यं यावदनन्ता वर्गणा गच्छन्ति। ताभ्योऽपि परासु अनन्तासु वर्गणासु अनन्तगुणोना—अनन्तगुणोनाः पुद्गलाः। तद्यथा—असंख्येयगुणहानिगतचरमवर्गणापेक्षया अनन्तरायां वर्गणायां पुद्गला अनन्तगुणहीनाः, ततोऽप्यग्रेतन्यां वर्गणायामनन्तगुणहीनाः, एवं तावद्वाच्यं यावत्सर्वोत्कृष्टा वर्गणा। तदेवं कृता अनन्तरोपनिधया प्ररूपणा। सम्प्रति परम्परोपनिधया तां चिकीर्षुराह—असंख्येयान् लोकान्—असंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा भूयो—वारंवारं गत्वा—अतिक्रम्य अर्द्धा—अर्द्धाः पुद्गला वक्तव्याः। तद्यथा—प्रथमवर्गणायाः परतोऽसंख्येयलोकाकाशप्रमाणा वर्गणा अतिक्रम्य या परा अन्या वर्गणा तस्यां पुद्गलाः प्रथमवर्गणागतपुद्गलापेक्षया अर्द्धा भवन्ति—द्विगुणहीना भवन्तीत्यर्थः। ततः पुनरप्यसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्य या परा अनन्तरा वर्गणा तस्यां पुद्गला अर्द्धा भवन्ति। एवं भूयोभूयस्तावदवगन्तव्यं यावदसंख्येयभागहानिगता चरमवर्गणा ॥ २२ ॥

पढमहाणीए एवं बीआए संखवग्गणा गतुं। अद्ध उवरिल्लाओ हाणीओ होंति जा जीए ॥ २३ ॥

(स्वो०)—प्रथमहानावेव परम्परोपनिधा। द्वितीयायां संख्येयभागहानौ तत्प्रथमवर्गणायाः संख्येया वर्गणा गत्वा या वर्गणा तस्यां तत्प्रथमवर्गणातोऽर्द्धाः पुद्गलाः स्युः, एवं भूयो भूयोऽस्यां द्वितीयहानौ नेतव्यम्। एवं या यस्या ईयद् दूरे व्यवस्थितास्तस्यामर्द्धाः पुद्गला भवन्ति। उपरितनासु त्रिषु हानिष्विव परम्परोपनिधा न सम्भवति, तस्मादन्यथा प्ररूप्यते। असंख्येयभागहानौ प्रथमान्त्यव-

॥ २३ ॥

गणयोरन्तरालेऽस्त्यसंख्येयभागहीना प्रथमवर्गणातः, अस्ति संख्येयभागहीना, अस्ति संख्येयगुणहीना, अस्त्यसंख्येयगुणहीना, काचिदनन्तगुणहीना वर्गणा। एवं प्रथमहानौ पञ्चापि हानयः सम्भवन्ति। द्वितीयहानौ चतस्रो हानयः, यतोऽसंख्येयभागहानिरपि नास्ति। तृतीयहानौ तिस्रो हानयः सम्भवन्ति। चतुर्थहानौ द्वे हानी, असंख्येयगुणहीना अनन्तगुणहीना चेति। अनन्तगुणहानौ इयमेवैकेति गाथार्थः ॥ २३ ॥

(मलय०)-तथा चाह—प्रथमहानौ–असंख्येयभागहानौ एवमसंख्येयलोकाकाशप्रदेशप्रमाणवर्गणातिक्रमेण अर्द्धा अर्द्धा पुद्गला वेदितव्याः। द्वितीयस्यां–संख्येयभागहानौ पुनस्तत्प्रथमवर्गणायाः परतः संख्येया वर्गणा गत्वा–अतिक्रम्यानन्तरायां वर्गणायां पुद्गलानामर्द्धमवसेयम्। ततः संख्येयभागहानावेव या उपरिस्थाः–उपरितन्यो हानयो–द्विगुणहानयः ता या या वर्गणायाः परत इयद्दूरे व्यवस्थिता तस्यां तस्यां वेदितव्याः। तद्यथा–सङ्ख्येयभागहानौ प्रथमवर्गणात आरभ्य सङ्ख्येया वर्गणा अतिक्रम्य अनन्तरायां वर्गणायां पुद्गला असङ्ख्येयभागहानिगतचरमवर्गणासत्कपुद्गलापेक्षया अर्द्धा भवन्ति, ततः पुनरपि सङ्ख्येया वर्गणा अतिक्रम्य अनन्तरायां वर्गणायां पुद्गला अर्द्धा भवन्ति। एवं भूयोभूयस्तावद्वक्तव्यं यावत्सङ्ख्येयभागहानौ चरमा वर्गणा। उपरितनीषु च तिसृषु हानिषु इयं द्विगुणहानिमार्गणलक्षणा परम्परोपनिधा न संभवति। यतः प्रथमायामपि सङ्ख्येयगुणहानिवर्गणायां पुद्गलाः सङ्ख्येयभागहानिसत्कचरमवर्गणागतपुद्गलापेक्षया सङ्ख्येयगुणहीना प्राप्यन्ते, संख्येयगुणहीनाश्च जघन्यतोऽपि त्रिगुणहीनाश्चतुर्गुणहीना वा गृह्यन्ते, न तु द्विगुणहीनाः, यतः सङ्ख्येयं प्रायः सर्वत्राप्यजघन्योत्कृष्टं त्रिप्रभृत्येव गृह्यते, न तु द्वौ, नापि सर्वोत्कृष्टम्। तदुक्तमनुयोगद्वारचूर्णौ—"सिद्धंते य जत्थ जत्थ संखेज्जगहणं, तत्थ तत्थ अजहन्नमणुक्कोसयं दट्ठव्व"ति, तत इत ऊर्ध्वं द्विगुणहीनाः

॥ २३ ॥

पुद्गला न प्राप्यन्ते, तस्मान्मूलत आरम्य अन्यया परम्परोपनिधया प्ररूपणा क्रियते । असङ्ख्येयभागहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिदसङ्ख्येयभागहीनाः, काश्चित्सङ्ख्येयभागहीनाः, काश्चित्सङ्ख्येयगुणहीनाः, काश्चिदसङ्ख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । एवमसङ्ख्येयभागहानौ प्रथमवर्गणापेक्षया पञ्चापि हानयः संभवन्ति । सङ्ख्येयभागहानौ असङ्ख्येयभागहानिवर्जाः शेषाश्चतस्रो हानयः संभवन्ति । तद्यथा—सङ्ख्येयभागहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः सङ्ख्येयभागहीनाः, काश्चित्संख्येयगुणहीनाः, काश्चिदसङ्ख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । सङ्ख्येयगुणहानौ पुनरसङ्ख्येयभागहानिसङ्ख्येयभागहानिवर्जाः शेषास्तिस्रो हानयः संभवन्ति । तद्यथा—सङ्ख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । असङ्ख्येयगुणहानौ पुनर्द्वे एव हानी, तद्यथा—असङ्ख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणा असंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । अनन्तगुणहानौ त्वनन्तगुणहानिरेवैका ॥ २३ ॥

उक्ता परम्परोपनिधा, अल्पबहुत्वमाह—

**थोवाओ वग्गणाओ, पढमहाणीएँ उवरिमासु कमा । होंति अणंतगुणाओ, अणंतभागो पएसाणं ॥ २४ ॥**

(स्तो०)—असङ्ख्येयभागहीनहान्यां प्रथमायां स्तोका वर्गणाः, सङ्ख्येयभागहीनहान्यां द्वितीयायां प्रथमतोऽनन्तगुणाः, एवं त्रिचतुःपञ्चमहानिष्वपि अनन्तगुणाः क्रमेण वक्तव्याः । प्रथमहानिवर्गणाप्रदेशेभ्यो द्वितीयहानिवर्गणास्वनन्तभागमात्राः प्रदेशाः, एवं द्वित्रिचतुःपञ्चमहानिष्वपि यथोत्तरमनन्तभागमात्रा भवन्ति । अनन्तगुणहानौ स्तोकानि द्रव्याणि वक्तव्यानीति गाथार्थः ॥ २४ ॥

बन्धन-करणम् । स्नेहप्रत्यय प्ररूपणा.

(मलय०)–तदेवं कृता परम्परोपनिधया परूपणा सम्प्रत्यल्पबहुत्वमाह—प्रथमहानौ–असंख्येयभागहानौ वर्गणाः सर्वस्तोकाः,तत उपरिमासु–उपरितनीषु हानिषु क्रमात्–क्रमेणानन्तगुणा वर्गणा भवन्ति । तद्यथा–असंख्येयभागहानिगतवर्गणापेक्षया संख्येयभागहानौ वर्गणा अनन्तगुणाः, ताभ्योऽपि संख्येयगुणहानौ वर्गणा अनन्तगुणाः, ताभ्योऽप्यसंख्येयगुणहानौ वर्गणा अनन्तगुणाः, ताभ्योऽप्यनन्तगुणहानौ वर्गणा अनन्तगुणाः । 'अणंतभागो पएसाणं'ति–प्रथमहानेः परासु शेषहानिषु क्रमेण पदेशानामनन्ततमोऽनन्ततमो भागो वक्तव्यः । तद्यथा—असंख्येयभागहानौ सर्वबहवः पुद्गलाः, तेभ्यः संख्येयभागहानौ पुद्गला अनन्ततमभागमात्राः, तेभ्योऽपि संख्येयगुणहानौ अनन्ततमभागमात्राः, तेभ्योऽप्यसंख्येयगुणहानौ अनन्ततमभागमात्राः, तेभ्योऽप्यनन्तगुणहानौ अनन्ततमभागमात्राः । यतो यथा यथा च रसो वर्द्धते, तथा तथा पुद्गलाः स्तोकाः स्तोकतराः प्राप्यन्त इति कृत्वा । तदेवमुक्तं सप्रपञ्चं स्नेहप्रत्ययस्पर्द्धकम् । इदं च जगत्येकमेव भवति, अपान्तराले एकैकाविभागवृद्धिव्यवच्छेदाभावात् । एकैकाविभागवृद्धिव्यवच्छेदो हि स्पर्द्धकपर्यवसानम्, तदुक्तं–'रूवोत्तरवुड्ढीए वोच्छेओ फड्डुनिठ्ठाणंति' ततोऽपान्तराले एकैकाविभागवृद्धिव्यवच्छेदाभावात्स्पर्ध्धकबाहुल्यं नोपपद्यते, इत्येकमेव स्नेहप्रत्ययं स्पर्द्धकम् ॥ २४ ॥ ॥ २४ ॥

उक्तं स्नेहस्पर्द्धकं, नामस्पर्द्धकमाह—

**पंचण्ह सरीराणं, परमाणूणं मईए अविभागो । कप्पियगाणेगंसो गुणाणु भावाणु वा होंति ॥२५॥**

(स्वो०)—पञ्चानामौदारिकाद्यानां षष्ठीनिर्देशाद्यानि वन्धनानि तद्योग्यपरमाणूनां 'कप्पियगाणं'ति–मत्या खण्डितानां चूर्णीकृतानां योऽविभागः, एकोंऽशः स गुणाणुः भावाणुर्वा भवतीति गाथार्थः ॥ २५ ॥

(मलय०)—सम्प्रति नामप्रत्ययस्पर्द्धकं वक्तव्यम्, तत्र चाष्टावनुयोगद्वाराणि, तद्यथा—अविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, वर्गणापुद्‌गलगतस्नेहाविभागसकलसमुदायप्ररूपणा, स्थानप्ररूपणा, कण्डकप्ररूपणा, षट्स्थानप्ररूपणा चेति। तत्र प्रथमतोऽविभागप्ररूपणार्थमाह—पञ्चानां शरीराणां संबन्धिनां परमाणूनां यथायोगं पञ्चदशबन्धनयोग्यानां संबन्धिनो ये रसाः—तेषां मत्या केवलिप्रज्ञारूपया कल्पितकानाम्—चूर्णीकृतानां एकोंऽशः सोऽविभागः, स च गुणाणु"—गुणपरमाणुर्भवेद् भावपरमाणुर्वा। एतदुक्तं भवति—औदारिकादिशरीरपञ्चकयोग्यानां परमाणूनां यो रसः स केवलिप्रज्ञाछेदनकेन छिद्यते, छित्त्वा च छित्त्वा च निर्विभागा भागाः क्रियन्ते, ते च निर्विभागा भागा गुणपरमाणवो वा भावपरमाणवो वा प्रोच्यन्ते। एषा अविभागप्ररूपणा ॥ २५ ॥

उक्ताऽविभागप्ररूपणा—

जे सव्वजहण्णगुणा जोग्गा तणुबन्धणस्स परमाणू। ते वि उ संखासखा गुणपलिभागे अइक्कता ॥२६॥

(स्वो०)—ये सर्वजघन्यगुणाः—सर्वस्तोकस्नेहाः—योग्याः—अनुरूपास्तनुबन्धनस्य, जात्याख्यायामेकवचनं, परमाणवः, तेऽपि संख्येयासंख्येयान् गुणविभागान् तुशब्दादनन्तानपि अतिक्रान्ताः—उल्लङ्घ्य परतो गताः बहुतरस्नेहा इति गाथार्थः ॥२६॥

(मलय०)—सम्प्रति वर्गणाप्ररूपणार्थमाह—ये परमाणवस्तनुबन्धनस्य—शरीरबन्धननामकर्मणः पञ्चदशप्रकारस्य योग्याः सर्वजघन्यगुणा"—सर्वजघन्यरसास्तेऽपि, आस्तां मध्यमोत्कृष्टरसा इत्यपिशब्दार्थः, संख्येयानसंख्येयांश्च गुणपरिभागान् तुशब्दस्याधिकार्थसंसूचनतो'नन्तांश्चातिक्रान्ताः—उल्लङ्घ्य परतो गता", ततोऽपि प्रभूततरस्नेहा इत्यर्थः। किमुक्तं भवति ? एकेन स्नेहाविभागेन युक्ताः पुद्‌गलाः शरीरयोग्या न भवन्ति, औदारिकौदारिकादीनां पञ्चदशानां बन्धनानामन्यतमस्यापि बन्धनस्य विषया न भवन्तीत्यर्थः। नापि

द्वाभ्यां स्नेहाविभागाभ्यां, नापि त्रिभिः, यावन्नापि संख्येयैर्नाप्यसंख्येयैर्नाप्यनन्तैः, किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः ॥२६॥

**सव्वजियाणंतगुणेण जे उ नेहेण पोग्गला जुत्ता। सा वग्गणा उ पढमा बंधणनामस्स जोग्गाओ ॥२७॥**

(स्वो०)—सर्वजीवेभ्योऽनन्तगुणेन स्नेहेन पुगद्‌ला ये युक्ताः ते तुशब्दात् सशरीरवर्गणाभ्यः उद्‌धृत्य प्रथमवर्गणा जीवस्य बन्धननाम्नो योग्या भवन्तीति गाथार्थः ॥ २७ ॥

(मलय०)—तथा चाह—ये सर्वजीवेभ्योऽनन्तगुणस्नेहेन स्नेहाविभागसमुदायेन युक्ताः पुद्‌गलाः ते समुदिताः प्रथमा वर्गणा, सा च बन्धननाम्नः सामर्थ्यादौदारिकौदारिकबन्धननाम्नो योग्या–प्रायोग्या वेदितव्या। तत एकेन स्नेहाविभागेनाधिकानां समुदायो द्वितीया वर्गणा, द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा, एवमेकैकाविभागवृद्ध्या निरतरं तावद्वर्गणा वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति ॥२७॥

**अविभागुत्तरियाओ सिद्धाण अणंतभागतुल्लाओ। ताओ फड्डगमेगं अणंतविवराइ इय भूय ॥२८॥**

(स्वो०)—ततः प्रथमवर्गणायाः 'अविभागोत्तरा'–भावाणूत्तराः सिद्धानामनन्तभागतुल्या निरन्तरा वर्गणा गच्छन्ति। उक्ता वर्गणा प्ररूपणा। ततो रूपोत्तरा वर्गणा नास्ति, या निरन्तरास्ताः सर्वा अपि वर्गणाः समुदिताः स्पर्द्धकमुच्यते। तस्याः स्पर्द्धकान्त्यवर्गणाया रूपोत्तरा वर्गणा नास्ति, तद्धि रूपोत्तरा यावत्सर्वजीवानन्तगुणरूपोत्तरा नास्ति। इयतो भावाणूनुल्लङ्घ्य द्वितीयस्पर्द्धकस्याद्यवर्गणा भवति। कियन्तस्तस्यां भावाणवः? प्रथमस्पर्द्धकप्रथमवर्गणाया द्विगुणाः। उक्ता अन्तरप्ररूपणा। तस्याः रूपोत्तरा निरन्तरा अनन्ता वर्गणा भवन्ति, ताः सर्वा अपि समुदिता द्वितीयं स्पर्द्धकम्। भूयोऽप्यन्तरं प्राग्वद्वक्तव्यम्, एवमनन्तशून्यवर्गणात्मकानि अनन्तवर्गणाव्य-

वरिवानि भूयः—पुनः पुनः स्पर्द्धकानि भवन्तीति गाथार्थः ॥ २८ ॥

(मलय०)—तथा चाह—अविभागोत्तराः—एकैकाविभागवृद्ध्या वर्गणास्तावद्वाच्या यावत्सिद्धानामनन्तभागकल्पा भवन्ति । कृता वर्गणाप्ररूपणा । सम्प्रति स्पर्द्धकप्ररूपणार्थमाह—इत ऊर्ध्वमेकैकाविभागवृद्ध्या वर्गणा न प्राप्यन्ते, ततस्ता एतानन्तरोक्ता वर्गणाः समुदिता एकं स्पर्द्धकम् । कृता स्पर्द्धकप्ररूपणा । साम्प्रतमन्तरप्ररूपणार्थमाह—अनन्तानि सर्वजीवेभ्योऽनन्तगुणानि विवराणि अपान्तरालानि येषां तानि अनन्तविवराणि स्पर्द्धकानि, इत्युक्तेन प्रकारेण भूयो भूयो वक्तव्यानि । इयमत्र भावना—प्रथमस्पर्द्धकचरमवर्गणायाः परत एकेन स्नेहाऽविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किन्त्वनन्तानन्तैरेव, सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते, ततस्तेषां समुदायो द्वितीयस्य स्पर्द्धकस्य प्रथमा वर्गणा । तस्यां कियन्तः स्नेहाविभागाः ? इति चेत्, उच्यते—यावन्तः प्रथमस्पर्द्धकप्रथमवर्गणायां तावन्तो द्विगुणाः । तत एकेन स्नेहाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा, द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा, एवमेकैकस्नेहाऽविभागवृद्ध्या निरन्तरं वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति, ततस्तासां समुदायो द्वितीयं स्पर्द्धकम् । ततः पुनरप्यत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिर्यावन्नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किन्त्वनन्तानन्तैरेव—सर्वजीवेभ्योऽनन्तगुणैः, ततस्तेषां परमाणूनां समुदायस्तृतीयस्य स्पर्द्धकस्य प्रथमा वर्गणा । तस्यां कियन्तः स्नेहाविभागाः ? इति चेत्, उच्यते—यावन्तः प्रथमस्पर्द्धकप्रथमवर्गणायां तावन्तस्त्रिगुणाः । तत एकेन स्नेहाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा, द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा, एवमेकैकस्नेहाविभागवृद्ध्या निरन्तरं वर्गणा

स्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति, ततस्तासां समुदायस्तृतीयं स्पर्द्धकम्। ततः पुनरप्यत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते,नापि द्वाभ्यां,नापि त्रिभिः,यावन्नापि संख्येयैः,नाप्यसंख्येयैः,नाप्यनन्तैः,किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते,ततस्तेषां समुदायश्चतुर्थस्य स्पर्द्धकस्य प्रथमा वर्गणा। तस्यां कियन्तः स्नेहाविभागाः? इति चेत्, उच्यते—यावन्तः प्रथमस्पर्द्धकप्रथमवर्गणायां तावन्तश्चतुर्गुणाः। एवं यतिसंख्यं यतिसंख्यं स्पर्द्धकं चिन्तयितुमारभ्यते, तद्यथा—पञ्चमं दशमं विंशतितमं सहस्रतमं लक्षतमं वा तत्संख्यागुणिताः प्रथमस्पर्द्धकसत्कप्रथमवर्गणागताः स्नेहाविभागाः ततिसंख्यस्य ततिसंख्यस्य स्पर्द्धकस्यादिवर्गणायां द्रष्टव्याः ॥ २८ ॥

जइमं इच्छसि फड्डं तत्तिय संखाए वग्गणा पढमा। गुणिया तस्साइल्ला रूवुत्तरियाओ अण्णाओ ॥२९॥

(स्वो०)—प्रथमस्पर्द्धकाद्यतिमं स्पर्द्धकमीहसे तत्स्पर्द्धकसंख्यया प्रथमवर्गणा गुणिता सती तस्यैवेष्टस्पर्द्धकस्याद्यवर्गणाया भावाणवो भवन्ति। ततस्तस्या वर्गणाया रूपोत्तराः परतो वर्गणा भवन्ति, किमुक्तं भवति? सर्वेषां स्पर्द्धकानां तुल्यान्यन्तराणि सर्वजीवानन्तगुणानि, प्रदेशानामल्पत्वात्, भावाणूनां प्रभूतत्वात्, शरीरस्पर्द्धकसञ्ज्ञेति गाथार्थः ॥ २९ ॥

(मलय०)—तथा चाह—यतिमं—यतिसंख्यं स्पर्द्धकमिच्छसि—तद्गतप्रथमवर्गणास्नेहाविभागसंख्यापरिज्ञानार्थमिच्छसि तत्संख्यया—तत्स्पर्द्धकसंख्यया प्रथमा वर्गणा—प्रथमवर्गणागताः स्नेहाविभागा गुणिताः सन्तो यावन्तो भवन्ति, तावन्तस्तस्य विवक्षितस्य स्पर्द्धकस्य 'आइल्ल'त्ति—आदिमा आदिवर्गणागताः स्नेहाविभागा भवन्ति। ततस्तस्या वर्गणायाः परतोऽन्यान्यरूपोत्तरा एकैकाविभागवृद्ध्या वर्गणा अनन्ता भवन्ति, यावत्स्पर्द्धकपरिसमाप्तिः। एतावता च सर्वेषां स्पर्द्धकानामन्तराणि तुल्यान्येव प्रतिपादितानि द्रष्टव्यानि। काऽत्र

भावना ? इति चेत्, उच्यते—इह प्रथमस्पर्द्धकप्रथमवर्गणायामनन्ता अपि स्नेहाविभागाः किलासत्कल्पनया दश प्रत्येया, ततो द्वितीयस्यां वर्गणायामेकादश, तृतीयस्यां द्वादश, चतुर्थ्यां त्रयोदश, एताश्च समुदिताः किलैकं स्पर्द्धकम् । इत ऊर्ध्वं एकोत्तरवृद्ध्या स्नेहाविभागा न प्राप्यन्ते, किन्तु सर्वजीवेभ्योऽनन्तगुणैरधिकाः, ते च किलासत्कल्पनया विंशतिः, सा च द्वितीयस्य स्पर्द्धकस्य प्रथमवर्गणायाम्, ततो द्वितीयस्यां वर्गणायामेकविंशतिः, तृतीयस्यां द्वाविंशतिः, चतुर्थ्यां त्रयोविंशतिः, एता अपि समुदिताः किल द्वितीयं स्पर्द्धकम् । इत ऊर्ध्वं पुनरप्येकोत्तरवृद्ध्या स्नेहाऽविभागा न प्राप्यन्ते, किंतु सर्वजीवेभ्योऽनन्तगुणैरधिकाः, ते चाऽसत्कल्पनया त्रिंशत्, सा च तृतीयस्य स्पर्द्धकस्य प्रथमवर्गणायाम् । तदेवं ततिसंख्यस्य ततिसंख्यस्य च स्पर्द्धकस्यादिवर्गणायां स्नेहाविभागाः प्रथमस्पर्द्धकादिवर्गणागतस्नेहाविभागापेक्षया ततिसंख्यागुणिता भवन्ति, तुल्यानि च सर्वत्राप्यन्तराणि ॥ २९ ॥

उक्ता स्पर्द्धकप्ररूपणा, स्पर्द्धकानां संख्यानमाह—

अभवाणंतगुणाइं फड्डाइं अंतरा उ रूवूणा । दोण्णंतरवुड्ढीओ परंपरा होंति सव्वाओ ॥३०॥

(स्वो०)—अभव्यजीवानामनन्तगुणानि स्पर्द्धकानि भवन्ति, तुशब्दात्सिद्धानामनन्तभागतुल्यानि वा स्पर्द्धकानि। अन्तराणि रूपोनस्पर्द्धकसंख्यया तुल्यानि। वर्गणास्वनन्तरवृद्धी द्वे भवतः—रूपवृद्धिः, अनन्तरूपवृद्धिर्वा। परम्परतः पुनः सर्वा अपि वृद्धयो भवन्ति—अनन्तभागवृद्धिः, असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः, अनन्तगुणवृद्धिरिति। तुशब्दस्यानेकार्थत्वात् प्रथमशरीरस्थानस्य प्रथमवर्गणायां निचिताः प्रदेशगुणा माषाणवः स्तोकाः, द्वितीयस्थानस्य प्रथमवर्गणायामनन्तगुणाः, एवमनन्तगुणया श्रेण्या स्थानानि नेतव्यानि। औदारिकबन्धनयोग्याः पुद्गलाः स्तोकाः, औदारिकतैजसबन्धनयोग्या अनन्तगुणाः, औदारिककार्मणब-

न्धनयोग्या अनन्तगुणाः, औदारिकतैजसकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः। एवं वैक्रियाहारकयोरपि चत्वारो भङ्गा वक्तव्याः। तैजसतैजसबन्धनयोग्याः पुद्गला अनन्तगुणाः, तैजसकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः, कार्मणकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणा भवन्तीति गाथार्थः ॥ ३० ॥

(मलय०)–स्यादेतत् कियन्ति पुनरेवं स्पर्द्धकानि भवन्ति? कियन्ति चान्तराणि? तत्राह—अभव्येभ्योऽनन्तगुणानि सिद्धानामनन्ततमभागकल्पानि स्पर्द्धकानि भवन्ति। अन्तराणि पुनः स्पर्द्धकापेक्षया एकरूपहीनानि। तथाहि–चतुर्णामन्तराणि त्रीण्येव भवन्ति, एवमत्रापि भावनीयम्। तथा वर्गणासु आनन्तर्येण द्वे वृद्धी भवतः। तद्यथा–एकैकाविभागवृद्धिरनन्तानन्ताविभागवृद्धिश्च। तत्रैकैकाविभागवृद्धिः स्पर्द्धकगतानां वर्गणानां यथोत्तरं द्रष्टव्या, अनन्ताऽनन्ताऽविभागवृद्धिः पाश्चात्यस्पर्द्धकगतचरमवर्गणापेक्षया उत्तरस्पर्द्धकस्यादिवर्गणायाम्। परम्परया–पारम्पर्येण पुनः प्रथमस्पर्द्धकसत्कप्रथमवर्गणापेक्षया षडपि वृद्धयोऽवगन्तव्याः। तद्यथा–अनन्तभागवृद्धिः, असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः, अनन्तगुणवृद्धिश्चेति। तदेवं कृता अन्तरप्ररूपणा। सम्प्रति वर्गणागतपुद्गलस्नेहाविभागसकलसमुदायप्ररूपणा क्रियते–तत्र प्रथमस्य शरीरस्थानस्य प्रथमायां वर्गणायां स्तोकाः स्नेहाविभागाः, ततो द्वितीयस्य शरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः, तेभ्योऽपि तृतीयशरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः, एवमनन्तगुणया श्रेण्या सर्वाण्यपि शरीरस्थानानि नेतव्यानि ॥३०॥

॥ २७ ॥

साम्प्रतं स्थानप्ररूपणा क्रियते—

**पढमाउ अणंतेहिं सरीरठाणं तु होइ फड्डेहिं। तयणंतभागवुड्ढी कंडगमित्ता भवे ठाणा ॥३१॥**

(स्वो०)—प्रथमस्पर्द्धकमादौ कृत्वाऽनन्तस्पर्द्धकैरेकं प्रथमशरीरप्रायोग्यं स्थानं भवति। तस्यैव स्थानस्यानन्तभागवृद्धानि तदनन्तभागवृद्धानि-तदनन्तभागोत्तराणि कण्डकमात्राणि स्थानानि भवन्ति। कण्डकमङ्गुलासंख्येयभागस्याभिधानमत्रेति गाथार्थः ॥ ३१ ॥

(मलय०)—सम्प्रति शरीरस्थानप्ररूपणार्थमिदमाह—प्रथमात्स्पर्द्धकादारभ्य तदादि कृत्वेत्यर्थः, अनन्तैः स्पर्द्धकैः प्रथमं शरीरप्रायोग्यं स्थानं भवति। ततस्तैरेव स्पर्द्धकैरनन्तभागवृद्धैर्द्वितीयं शरीरस्थानम्। पुनस्तैरेव स्पर्द्धकैरनन्तभागवृद्धैस्तृतीयं शरीरस्थानम्। एवं निरन्तरं पूर्वस्मात्पूर्वस्मादुत्तरोत्तराणि अनन्ततमेनाऽनन्ततमेन भागेन वृद्धानि शरीरस्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति। कण्डकं च नाम समयपरिभाषया अङ्गुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणा संख्याऽभिधीयते। एषा कण्डकप्ररूपणा॥३१॥

एक्कं असखभागुत्तरेण पुणणंतभागवुड्ढीए। कंडगमेत्ता ठाणा असखभागुत्तर भूया ॥३२॥

(स्वो०)—तस्मात्कण्डकादुपरि यत्स्थानं तदेकमसंख्येयभागोत्तरं भवति, शेषाणि अनन्तभागोत्तराणि कण्डकमात्राणि भूयः स्थानानि भवन्ति, ततोऽसंख्येयभागवृद्धद्वितीयस्थानं भवति, भूयोऽनन्तभागोत्तरं कण्डम्, ततस्तृतीयमसंख्येयभागोत्तरं स्थानम्, भूयोऽनन्तभागोत्तरं कण्डम्, एवमसंख्येयभागान्तरितान्यनन्तभागोत्तराणि कण्डानि नेतव्यानि, यावदसंख्येयभागोत्तराणामपि स्थानानां कण्डं जातमिति गाथार्थः ॥ ३२ ॥

(मलय०)—सम्प्रति षट्स्थानकप्ररूपणामाह—तस्मात्कण्डकात्परं यदन्यत् शरीरस्थानमेकं भवति तदसंख्येयेन भागेनोत्तरेण-अभ्यधिकेन विशिष्टं भवति। प्रथमकण्डकगते चरमशरीरस्थाने यावन्ति स्पर्द्धकानि तावद्भ्योऽसंख्येयभागाधिकान्यस्मिन् स्थाने स्पर्द्धकानि भवन्तीत्यर्थः। ततः पराणि पुनरपि कण्डकमात्राणि स्थानानि अनन्तभागवृद्ध्या यथोत्तरमनन्तभागवृद्धानि भवन्ति। ततो भूयोऽप्ये-

कमसंख्येयभागोत्तरम्-असंख्येयभागाधिकं शरीरस्थानं भवति ॥ ३२ ॥

**एवं असंखभागुत्तराणि ठाणाणि कंडमेत्ताणि । संखेज्जभागवुड्ढं पुण अण्णं उट्ठए ठाणं ॥३३॥**

(स्वो०)—एवमनेन विधिनाऽनन्तभागोत्तरकण्डकव्यवहितान्यसंख्येयभागोत्तराणि स्थानानि कण्डकमात्राणि गच्छन्ति, ततः संख्येयभागोत्तरं पुनरन्यदुद्भवति स्थानमिति। किमुक्तं भवति ?—एकं संख्येयभागोत्तरं स्थानम्, पुनरनन्तभागोत्तराणि कण्डकमात्राणि, एवं भूयो भूयस्तावन्नेतव्यानि यावदसंख्येयभागोत्तराणामपि कण्डकं पूर्णम्। ततः संख्येयभागवृद्धं स्थानमन्यदुद्भवतीति गाथार्थः॥३३॥

(मलय०)—एवमनन्तभागाधिकैः कण्डकप्रमाणैः शरीरस्थानैर्व्यवहितानि असंख्येयभागाधिकानि शरीरस्थानानि तावद्वक्तव्यानि यावत्तान्यपि कण्डकमात्राणि भवन्ति । ततश्चरमादसंख्येयभागाधिकात्स्थानात्पराणि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि स्थानानि वाच्यानि । ततः संख्येयभागाधिकमन्यत्स्थानं भवति, तथा चाह—'संखेज्जभागवुड्ढं'ति सुगमम्, ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तावन्ति पुनरपि तथैवाभिधाय पुनरप्येकं संख्येयभागाधिकं स्थानं वक्तव्यम् । अमूनि चैवं संख्येयभागाधिकानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति ॥ ३३ ॥

**अमुयंतो तह पुव्वुत्तराइ एयंपि णेसु जा कंडं । इय एय विहाणेणं छव्विहवुड्ढी उ ठाणेसु ॥ ३४ ॥**

(स्वो०)—अमुञ्चन् पूर्वाण्यनन्तभागोत्तरकण्डकानि उत्तराण्यसंख्येयभागोत्तरकण्डकानि एतदपि संख्येयभागोत्तरं स्थानं नेयं यावत्कण्डकमिति । इत्यनेन विधानेन षड्विधा वृद्धिः स्थानेषु भवति। तथापि प्रस्तारमुच्चार्यते—संख्येयभागोत्तरमेकं स्थानं कृत्वा, ततोऽनन्तभागोत्तरकण्डकव्यवहितानामसंख्येयभागोत्तरस्थानानां कण्डकं नेतव्यम्, पुनः संख्येयभागोत्तरं स्थानम्, एवं भूयो भूयो यावत्संख्येय- ॥ २८ ॥

भागोत्तराणामपि कण्डकं पूर्णम्। ततः संख्येयगुणमन्यत् स्थानमुद्भवति। पुनरनन्तभागवृद्धं कण्डकम्, तदन्तरितमसंख्येयभागोत्तरं कण्डकम्, द्वाभ्यामपि व्यवहितं संख्येयभागोत्तरं कण्डकम्, ततः संख्येयगुणस्थानमिति। अनेन विधिना संख्येयगुणानामपि कण्डकं नेतव्यम्। पुनरन्यदसंख्येयगुणस्थानं भवति। पुनरनन्तभागोत्तरकण्डकान्तरितान्यसंख्येयभागोत्तराणि, उभाभ्यामन्तरितानि संख्येयभागवृद्धस्थानानि, त्रिभिरप्यन्तरितानि संख्येयगुणस्थानानि, चतुष्प्रकारकण्डकान्तरितानि असंख्येयगुणस्थानानि नेतव्यानि, यावत्तेषामपि कण्डं पूर्णम्। पुनरनन्तगुणस्थानं प्रादुर्भवति, पुनरनन्तभागोत्तरकण्डकान्तरितान्यसंख्येयभागोत्तरस्थानानि, अनन्तासंख्येयभागोत्तरकण्डकाभ्यामन्तरितानि संख्येयभागोत्तरस्थानानि, अनन्तासंख्येयसंख्येयभागोत्तरैः कण्डकैरन्तरितानि संख्येयगुणस्थानानि भवन्ति, अनन्तासंख्येयसंख्येयभागोत्तरसंख्येयगुणकण्डकैरन्तरितान्यसंख्येयगुणस्थानानि भवन्ति, अनन्तासंख्येयसंख्येयभागवृद्धकण्डकसंख्येयासंख्येयगुणकण्डकान्तरितानि अनन्तगुणस्थानानि भवन्ति यावत्तेषामपि कण्डकं पूर्णमिति गाथार्थः ॥ ३४ ॥

(मलय०)–आह च—तथा पूर्वोक्तेन प्रकारेण पूर्वाणि अनन्तभागवृद्धानि स्थानानि उत्तराण्यसंख्येयभागवृद्धान्यभूवन् एवदपि संख्येयभागाऽधिकं स्थानं तावज्ज्ञेयं यावदेषामपि संख्येयभागाधिकानां स्थानानां कण्डकं परिपूर्णं भवति। तत उक्तक्रमेण भूयोऽपि संख्येयभागाधिकस्थानप्रसङ्गे संख्येयगुणाधिकं स्थानमेकं वक्तव्यम्। ततः पुनरपि मूलादारभ्य यावन्ति शरीरस्थानानि प्रागतिक्रान्तानि तावन्ति तथैव वाच्यानि, ततः पुनरप्येकं संख्येयगुणाधिकं स्थानं वक्तव्यम्। ततो भूयोऽपि मूलादारभ्य तावन्ति शरीरस्थानानि वक्तव्यानि, ततः पुनरप्येकं संख्येयगुणाधिकं स्थानं वक्तव्यम्। अमून्यप्येवं संख्येयगुणाधिकानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति। ततः पूर्वपरिपाट्या संख्येयगुणाधिकस्थानप्रसङ्गे असंख्येयगुणाधिकं स्थानं वक्तव्यम्। ततः पुनरपि मूलादारभ्य यावन्ति शरीरस्थानानि प्रागतिक्रान्तानि

तावन्ति तथैव पुनरपि वाच्यानि । ततः पुनरप्येकं असंख्येयगुणाधिकं स्थानं वक्तव्यम् । ततो भूयोऽपि मूलादारभ्य तावन्ति शरीरस्थानानि तथैव वक्तव्यानि, ततः पुनरप्येकमसंख्येयगुणाधिकं स्थानं वक्तव्यम् । अमूनि चैवमसंख्येयगुणाधिकानि स्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति । ततः पूर्वपरिपाट्या पुनरप्यसंख्येयगुणाधिकस्थानप्रसङ्गे अनन्तगुणाधिकं स्थानं वक्तव्यम् । ततः पुनरपि मूलादारभ्य यावन्ति शरीरस्थानानि प्रागभिहितानि तावन्ति पुनरपि तथैव वाच्यानि । ततो भूयोऽप्येकमनन्तगुणाधिकं स्थानं वक्तव्यम् । ततो भूयोऽपि मूलादारभ्य तावन्ति स्थानानि तथैव वक्तव्यानि, ततः पुनरप्येकमनन्तगुणाधिकं स्थानं वक्तव्यम् । एवमनन्तगुणाधिकानि स्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति । तेषामुपरि पञ्चवृद्ध्यात्मकानि स्थानानि भूयोऽपि तथैव वक्तव्यानि । यच्चानन्तगुणवृद्धं स्थानं तन्न प्राप्यते, षट्स्थानकस्य परिसमाप्तत्वात् । इति–उपप्रदर्शने–उपप्रदर्शितेन एतद्विधानेन–प्रकारेण षड्विधा अनन्तभागाऽसंख्येयभागसंख्येयभागसंख्येयगुणाऽसंख्येयगुणाऽनन्तगुणरूपा वृद्धिः स्थानेषु–शरीरस्थानेषु द्रष्टव्या । असंख्येयानि चोक्तप्रकारेण षट्स्थानकानि शरीरस्थानेषु भवन्ति । सर्वाण्यपि च शरीरस्थानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति ।

**अस्संखलोगतुल्ला अणंतगुणरसजुया य इयठाणा । कंडंति एत्थ भण्णति अंगुलभागो असंखेज्जो ॥३५॥**

(स्वो०)—असंख्येयलोकाकाशप्रदेशतुल्यानि अनन्तगुणरसवृद्ध्या यानि शरीरस्थानानि इति, एवं शेषवृद्धिष्वपि भवन्ति । कण्डकमत्राङ्गुलासंख्येयभागो भण्यते । इतिः समाप्ताविति गाथार्थः ॥ ३५ ॥

(मलय०)—तथा चाह—अनन्तगुणरसयुक्तानि स्थानानि सर्वाण्यप्यसंख्येयलोकतुल्यानि–असंख्येयलोकाकाशप्रदेशराशिप्रमाणानि भवन्ति । चशब्दस्याऽनुक्तार्थसमुच्चायकत्वादसंख्येयगुणरसयुक्तादीन्यपि स्थानानि प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणानि द्रष्टव्यानि ।

तथा अत्र स्थानविचारे कण्डकमिति भण्यते अंगुलभागोऽसंख्येयतमः—अंगुलमात्रक्षेत्राऽसंख्येयभागगतप्रदेशराशिप्रमाणा सख्या कण्डकमित्यर्थः। सम्प्रति शरीरपरमाणूनामेव तत्तद्बन्धनयोग्यानामल्पबहुत्वमुच्यते—तत्रौदारिकौदारिकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः, तेभ्य औदारिकतैजसबन्धनयोग्याः पुद्गला अनन्तगुणाः, तेभ्योऽप्यौदारिककार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः, तेभ्योऽप्यौदारिकतैजसकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः। तथा वैक्रियवैक्रियबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः, तेभ्योपि वैक्रियतैजसबन्धनयोग्याः पुद्गला अनन्तगुणाः, तेभ्योऽपि वैक्रियकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः, तेभ्योऽपि वैक्रियतैजसकार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः। तथा आहारकाहारकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः,तेभ्य आहारकतैजसबन्धनयोग्याः पुद्गला अनन्तगुणाः, तेभ्योऽप्याहारककार्मणबन्धनयोग्याः पुद्गला अनन्तगुणाः, तेभ्योऽप्याहारकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि तैजसतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि तैजसकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि कार्मणकार्मणबन्धनयोग्या अनन्तगुणाः।॥३५॥

उक्तं नामस्पर्द्धकं, प्रयोगस्पर्द्धकमाह—

होति पओगो जोगो तट्ठाणविवड्ढणाएँ जो उ रसो। परिवड्ढेई जीवो पओगफड्डं तयं बेंति ॥ ३६ ॥

(स्वो०)—भवति-उत्पद्यते प्रयोगो व्यापारः, तस्य योगस्य स्थानवृद्ध्या यो रसोऽनुभागस्तं परिवर्द्धयति जीवः सोऽनुभागो विभज्यमानो योगात् स्पर्द्धकं प्रयोगस्पर्द्धकमुच्यते इति गाथार्थः॥ ३६ ॥

(मलय०)—सदेवमुक्तं नामप्रत्ययं स्पर्द्धकम्। सम्प्रति प्रयोगप्रत्ययमभिधातव्यम्। तत्र चाष्टावनुयोगद्वाराणि, तद्यथा—अविभागप्ररू-

पणा, वर्गणाप्ररूपणा, स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा, कण्डकप्ररूपणा, पट्स्थानकप्ररूपणा, वर्गणागतस्नेहाविभागसकलसमुदायप्ररूपणा च। तत्र प्रथमतः प्रयोगप्रत्ययशब्दार्थमेवाह—भवति प्रयोगो–योगः,प्रकृष्टो योगः प्रयोग इति व्युत्पत्तेः। तस्य योगस्य स्थानवृद्ध्या यो रसः कर्मपरमाणुषु बध्यमानेषु स्पर्द्धकरूपतया परिवर्धते जीवे तत्प्रयोगप्रत्ययं स्पर्द्धकम् ॥२६॥

**अविभागवग्गफड्डगअंतरठाणाइ एत्थ जह पुव्विं। ठाणाइवग्गणाओ अणंतगुणणाएँ गच्छंति ॥ ३७ ॥**

(स्वो०)—अत्राविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, निचितप्रदेशगुणस्थानप्ररूपणा, यथा पूर्वं नामस्पर्द्धके तथा कार्या, किन्त्वत्र स्थानानां या आद्या वर्गणा साऽनन्तगुणवृद्धा गच्छति, एतदेव दर्शयति–प्रथमस्थाने प्रथमवर्गणायां स्तोकाः स्नेहाविभागाः, द्वितीयस्थानाद्यवर्गणायामनन्तगुणाः, तस्मात्तृतीयस्थानाद्यवर्गणायामनन्तगुणाः,एवं यावदन्तिमं स्थानमिति गाथार्थः ॥ ३७ ॥

(मलय०)–अविभागादिप्ररूपणार्थमाह—अविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा, आदिशब्दात्कण्डकप्ररूपणा, पट्स्थानकप्ररूपणा च, यथा पूर्वं नामस्पर्द्धके कृता तथा अत्रापि प्रयोगप्रत्यये स्पर्द्धके कर्तव्या। सम्प्रति वर्गणागतस्नेहाविभागसकलसमुदायप्ररूपणार्थमाह–'ठाणाइ' इत्यादि–स्थानानामाद्या वर्गणा अनन्तगुणतया–अनन्तगुणवृद्ध्या गच्छन्ति, तद्यथा–प्रथमस्थानसत्कप्रथमवर्गणायां सकलपुद्गलगताः स्नेहाविभागाः सर्वस्तोकाः, ततो द्वितीयस्थानगतप्रथमवर्गणायामनन्तगुणाः, ततोऽपि तृतीयस्थानसत्कप्रथमवर्गणायामनन्तगुणाः, एवं तावन्नेयं यावदन्तिमस्थानम् ॥३७॥ ॥ ३० ॥

अल्पबहुत्वमाह—

तिण्हपि फड्डगाणं जहण्णउक्कोसगा कमा ठविउं । नेयाणतगुणाओ, वग्गणा णेहफड्डाओ ॥ ३८ ॥

(स्वो०)—त्रयाणामपि स्पर्द्धकानां–स्नेहनामप्रयोगाख्यानां जघन्योत्कृष्टा वर्गणा व्यवस्थाप्य यथोत्तरमनन्तगुणा नेया–नेतव्या, ज्ञेया, मन्तव्या वा । किमुक्तं भवति ? स्नेहस्पर्द्धकजघन्यवर्गणा स्तोकानुभावा, तस्यैव–स्नेहस्पर्द्धकस्योत्कृष्टवर्गणाऽनन्तगुणा, तस्याः नामस्पर्द्धकजघन्यवर्गणा अनन्तगुणानुभावा, तस्यैवोत्कृष्टा अनन्तगुणा, तस्याः प्रयोगस्पर्द्धकवर्गणा जघन्या अनन्तगुणा, तस्याः प्रयोगस्पर्द्धकोत्कृष्टा वर्गणा अनन्तगुणरसेति गाथार्थः ॥ ३८ ॥

(मलय०)—संप्रत्यल्पबहुत्वमुच्यते—त्रयाणामपि स्पर्द्धकानां स्नेहप्रत्ययनामप्रत्ययप्रयोगप्रत्ययाख्यानां जघन्या उत्कृष्टाश्च वर्गणाः क्रमात्–क्रमेण स्थापयित्वा, स्नेहप्रत्ययादीनां प्रत्येकं जघन्यामुत्कृष्टां च क्रमेण स्थापयित्वेत्यर्थः, स्नेहप्रत्ययात्स्नेहप्रत्ययसत्कजघन्यवर्गणात आरभ्य अनन्तगुणा ज्ञेया ज्ञातव्याः । तद्यथा–स्नेहप्रत्ययस्पर्द्धकस्य जघन्यवर्गणायां सकलपुद्गलगताः स्नेहाविभागाः सर्वस्तोकाः, ततस्तस्यैव स्नेहप्रत्ययस्पर्द्धकस्योत्कृष्टायां वर्गणायामनन्तगुणाः, तेभ्योऽपि नामप्रत्ययस्पर्द्धकस्य जघन्यवर्गणायामनन्तगुणाः, तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः, तेभ्योऽपि प्रयोगस्पर्द्धकस्य जघन्यवर्गणायामनन्तगुणाः, तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः ॥ ३८ ॥

## स्नेहस्पर्द्धकचित्रम् ।

प्रति वर्गणमनंताः
पुद्गलपरमाणवः
क्रमेण हीना हीनतराश्च

असं० लोका० वर्गणा
अतिक्रम्य द्विगुणहीनाः
परमाणवः

संख्येयवर्गणा अतिक्रम्य द्विगुणहीनाः
परमाणवः

स्नेहाणवः
(प्रतिपरमाणुगताः) असंख्येय -भागहीनाः

संख्येयभाग- हीनाः

संख्येयगुणहीनाः

असंख्येयगुणहीनाः

अनंतगुणहीनाः

परमाणवः प्रति- वर्गणम्

प्रकृतिबन्धे मूलप्रकृतिनां साद्यादिबन्धयन्त्रकम् ।

| मूलप्रकृतिः | सादिः कथं वा कस्य ? | अध्रुवः कथं वा कस्य ? | अनादिः कथं वा कस्य ? | ध्रुवः कथं वा कस्य ? |
|---|---|---|---|---|
| आयुषः | अध्रुवत्वात् | अध्रुवत्वात् | — | — |
| वेदनीयस्य | — | भव्यानाम् | सार्वदिकत्वात् | अभव्यानाम् |
| ज्ञानावरणीयस्य | उपशान्तात् पतितस्य | भव्यानाम् | सादिस्थानाप्राप्तस्य | " |
| दर्शनावरणीयस्य | " | " | " | " |
| मोहनीयस्य | " | " | " | " |
| नाम्नः | " | " | " | " |
| गोत्रस्य | " | " | " | " |
| विघ्नस्य | " | " | " | " |

प्रकृतिबन्धे उत्तरप्रकृतीनां साद्यादिबन्धयन्त्रकम् ।

| उत्तरप्रकृतिः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
| --- | --- | --- | --- | --- |
| मिथ्यात्वस्य | मिथ्यात्वप्रारंभे | भव्यानाम् | स्वाबंधस्थानाप्राप्तानाम् | अभव्यानाम् |
| स्त्यानर्द्धित्रिकस्य | सास्वादनप्रारंभे | ,, | ,, | ,, |
| अनंता० चतुष्कस्य | ,, | ,, | ,, | ,, |
| अप्रत्या० ,, | अविरतसम्यग्दृष्टीनाम् | ,, | ,, | ,, |
| प्रत्या० ,, | देशविरतानाम् | ,, | ,, | ,, |
| निद्रा-प्रच०-अगु० निर्मा० तैजस० | अपूर्वगुणस्थानाम् | ,, | ,, | ,, |
| उप० वर्णादि ४ | ,, | ,, | ,, | ,, |
| कार्मणस्य | ,, | ,, | ,, | ,, |
| भयस्य | ,, | ,, | ,, | ,, |

| | | | | |
|---|---|---|---|---|
| कुत्सायाः | ,, | ,, | ,, | ,, |
| संज्व० चतुष्कस्य | अनिवृत्तिगुणस्थानाम् | ,, | ,, | ,, |
| ज्ञाना० ५ | सूक्ष्मसंपरायानाम् | ,, | ,, | ,, |
| विघ्न० ५ | ,, | ,, | ,, | ,, |
| दर्शना० ४ | ,, | ,, | ,, | ,, |
| अध्रुवबंधिनीनाम् ७३ | अध्रुवबंधत्वात् | अध्रुवबंधत्वात् | — | — |

उक्ता स्पर्द्धकत्रिकस्यापि प्ररूपणा, उक्ता बन्धनरसप्ररूपणा । साम्प्रतं मूलोत्तरप्रकृतित्रिभागार्थमाह—

**अणुभागविसेसाओ मूलुत्तरपगइभेयकरणं तु । तुल्लस्सावि दलस्सा पयईओ गोणनामाओ ॥ ३९ ॥**

(स्वो०)—अनुभागो–रसस्तद्विशेषात्–अल्पबहुत्वात् शुभाशुभत्वाद्वा तुल्येऽपि कर्मदले मूलप्रकृतीनामुत्तरप्रकृतीनां च पृथग्भावो विशिष्टवीर्यता, यथैकजीवोद्भवानामपि दुग्धदधिघृतमस्तुतक्राणां पृथक् पृथक् नामवर्णास्वादवीर्यता, एवं कर्म्मदलस्य मूलप्रकृतिविभागस्तस्याप्युत्तरप्रकृतिविभागोऽनुभागभेदादवसेयः । ताश्च प्रकृतयो गौणनामानः–ज्ञानमावृणोतीति ज्ञानावरणं, एवमुत्तरप्रकृतिष्वपि मतिज्ञानमावृणोतीति मतिज्ञानावरणमिति गाथार्थः ॥ ३९ ॥

(मलय०)—तदेव कृता सप्रपञ्च स्नेहप्ररूपणा। सम्प्रति बन्धनकरणसामर्थ्यतो बध्यमानानां मूलप्रकृतीनामुत्तरप्रकृतीनां च विभागकरणोपदर्शनार्थमाह—इह यावज्जीवेनाध्यवसायविशेषतः कर्मदलिकमुपादीयते। तस्य ग्रहणसमये एव ज्ञानावरणकत्वादिलक्षणा विचित्रस्वभावता स्वसामर्थ्यादापाद्यते, स्वभावभेदाच्च वस्तुभेदः, यथा घटपटयोरिति। ततो दलिकस्य—कर्मदलिकस्य कर्मरूपतया तुल्यस्यापि सतो अनुभागविशेषात्स्वभावभेदान्मूलोत्तरप्रकृतिभेदोपदर्शने क्रियमाणे न विरुध्यते। इहानुभागशब्दः स्वभाववाची, तदुक्तं कर्मप्रकृतिचूर्णौ—"अणुभागोत्ति सहावो" इति। तथा प्रकृतयो—मूलप्रकृतय उत्तरप्रकृतयश्च गौणनामानः—अन्वर्थनामानो वेदितव्याः, तद्यथा—ज्ञानमाव्रियते येन तद् ज्ञानावरणमित्यादि, तथा मतिज्ञानमाव्रियते येन तन्मतिज्ञानावरणमित्यादि। सर्वासां च मूलप्रकृतीनामुत्तरप्रकृतीनां च नाम्नां यथार्थता प्रागेव सप्रपञ्चं भावितेति नेह भूयो भाव्यते ॥ ३९ ॥

प्रकृतिस्थित्यादिबन्धानां विभागार्थमाह—

**ठितिबन्धो दलस्स ठिइ पएसबंधो पएसगहणं जं । ताण रसो अणुभागो तस्समुदाओ पगतिबंधो ॥४०॥**

(चू०)—अध्यवसायविशेषगृहीतस्य कर्मदलस्य यत् स्थितिकालनियमनं स स्थितिबन्धोऽभिधीयते। प्रदेशबन्धः प्रदेशानां कर्मपुद्गलानां यद् ग्रहणं स्थितिरसनिरपेक्षं तत्तस्याप्राधान्येनैव करोति। तेषां कर्मपुद्गलानां शुभोऽशुभो वा घातिरघातिर्वा यो रसः सोऽनुभाग इति। तेषां त्रयाणामपि स्थित्यनुभागप्रदेशबन्धानां यः समुदायः स प्रकृतिबन्ध इति गाथार्थः ॥ ४० ॥

(मलय०)—इह बन्धनकरणे प्रकृतिबन्धादयः सप्रपञ्चं वक्तव्या इति तेषां लक्षणमाह—अध्यवसायविशेषेण कर्मदलिके बध्यमाने तस्य दलस्य कर्मदलिकस्य या स्थितिर्बध्यते स स्थितिबन्धः, यत्प्रदेशग्रहणं स प्रदेशबन्धः, तथा तेषां कर्मपरमाणूनां यो रसः शुभोऽशुभो

घाती अघाती वा बध्यते सोऽनुभागबन्धः, यः पुनस्तत्समुदायः—स्थित्यनुभागप्रदेशसमुदायः स प्रकृतिबन्धः। इदं च प्रकृतिबन्धलक्षणं कषायवशाद् यद् बध्यते कर्म तत्प्रतीत्य द्रष्टव्यं, न पुनरुपशान्तमोहादौ केवलयोगवशाद् यद् बध्यते कर्म तदपि प्रतीत्य, तस्य तथाविधस्थित्यनुभागाऽभावात्, यद्वा तस्यापि द्विसामयिकी स्थितिरस्ति, अनुभागोऽपि यो वा स वा कश्चन विद्यते, ततस्तत्रापीदं प्रकृतिबन्धलक्षणमनुसरणीयम्। अन्ये त्वाहुः—ज्ञानावारकत्वादिलक्षणस्वभावभेदः प्रकृतिः, तद्बन्धः प्रकृतिबन्ध इति ॥४०॥

दलविभागातिदेशार्थमाह—

मूलुत्तरपगईणं पुव्वं दलभागसंभवो वुत्तो। रसभेएणं इत्तो मोहावरणाण निसुणेह ॥ ४१ ॥

(स्वो०)—मूलप्रकृतीनामुत्तरप्रकृतीनां च पूर्वमादौ प्रदेशबन्धे कर्मदलस्यैकरूपस्य गृहीतस्य विभागसम्भवो भागप्रमाणमुक्तं, रसभेदतः। अत्र मोहनीयावरणानां घातिकर्मणां वक्ष्येऽहमिति। (तं च वक्ष्यमाणं शृणुत। तत्र यद्यपि मूलोत्तरप्रकृतीनां दलभागप्रमाणमुक्तं) तथापि स्थानाशून्यार्थमुच्यते—आयुषः सर्वस्तोकः कर्मदलविभागो, नामगोत्रयोर्विशेषाधिकः तुल्यश्च, ज्ञानदर्शनावरणान्तरायाणां विशेषाधिकस्तुल्यश्च, मोहनीयस्य विशेषाधिकः, वेदनीयस्य विशेषाधिकः। ज्ञानान्तराययोः मूलविभागः पञ्चविभागीक्रियते। वेदनीयायुर्गोत्राणां मूलविभागो बध्यमानप्रकृतेरेकस्या एव भवति। दर्शनावरणमूलविभागस्तत्कालबध्यमानप्रकृतिप्रमाणैर्नवभिः षड्भिर्वा चतुर्भिर्वा विभागैः क्रियत। मोहनीयविभागो द्विधा क्रियते—अर्द्धं दर्शनमोहनीये, अर्द्धं चारित्रमोहनीये। नामविभागोऽपि तत्कालबध्यमानप्रकृतिप्रमाणैर्विभागैः क्रियते इति। उत्तरप्रकृतीनामुत्कृष्टजघन्यदलविभागविशेष उच्यते—उत्कृष्टविभागे केवलज्ञानावरणे सर्वस्तोको भागः, मनोज्ञानावरणेऽनन्तगुणः, अवधिश्रुतमत्यावरणेषु यथोत्तरं विशेषाधिकः प्रदेशार्थतया, एवं जघन्यविभागेऽपि। उत्कृ-

दृविभागे सर्वस्तोको विभागो निद्रायाः, तस्मात्प्रचला–प्रचलाप्रचला–निद्रानिद्रा–स्त्यानर्द्धि–केवलदर्शनावरणानां यथोत्तरं विशेषाधिको भागः, अवधिदर्शनावरणस्यानन्तगुणः, अचक्षुश्चक्षुषोर्विशेषाधिको, जघन्येऽप्येवमेव । उत्कृष्टपदे सर्वस्तोकः अप्रत्याख्यानमानस्य, तस्मात् क्रोधमायालोभानां, प्रत्याख्यानावरणमानक्रोधमायालोभानामनन्तानुबन्धिमानक्रोधमायालोभमिथ्यात्वानां यथोत्तरं विशेषाधिको भागः, तस्माज्जुगुप्सायामनन्तगुणः, भयस्य विशेषाधिकः, हास्यशोकयोस्तुल्यो विशेषाधिकश्च, रत्यरत्योः एवमेव, स्त्रीनपुंसकयोरेवमेव, सञ्ज्वलनक्रोधमानपुरुषवेदमायानां क्रमाद्विशेषाधिकः, लोभस्यासंख्येयगुणो, जघन्यपदे विभागप्रदेशा एवमेव किन्त्वन्यतरवेदस्य विशेषाधिकः, तस्मात् सञ्ज्वलनमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकश्च भागः, अयं विशेष इति । उत्कृष्टपदे भागप्रदेशाश्च आयुषां तुल्य, जघन्यपदे तिर्यग्मनुष्ययोस्तुल्य स्तोकं च, देवनारकायुषोरसंख्येयगुणं तुल्यं च । दानलाभभोगोपभोगवीर्यान्तरायाणामुभयत्र कर्मदलं यथोत्तरं विशेषाधिकम् । असातस्य स्तोको भागः, सातस्य विशेषाधिकः उत्कृष्टपदे, जघन्ये तुल्यः । नीचोच्चगोत्रयोरपि एवमेव । उत्कृष्टपदे चतसृणां जातीनां प्रदेशाग्रं स्तोकं तुल्यं च, एकेन्द्रियजातौ विशेषाधिकम् । देवनारकमनुष्यतिर्यगानुपूर्वीणां यथोत्तरं विशेषाधिकम् । चतुर्णां संस्थानानां स्तोकं तुल्यं च, समचतुरस्रहुण्डयोः क्रमाद्विशेषाधिकम् । संहननपञ्चकस्य तुल्यं स्तोकं च प्रदेशाग्रं, प्रथमसंहननस्य विशेषाधिकम् । कृष्णनीलरक्तहारिद्रशुक्लानां, कटुतिक्तकषायाम्लमधुराणां, दुरभिसुरभिगन्धयोः स्वस्थाने यथोत्तरं यथाशुभं विशेषाधिको भागः, कर्कशगुर्वोः स्तोकः तुल्यश्च, मृदुलघ्वोः शीतरूक्षयोः स्निग्धोष्णयोः यथोत्तरं तुल्यो विशेषाधिकश्च दलविभागः । त्रसादिपट्कसुभगादेयानां स्तोको भागः, सप्रतिपक्षाणां स्वप्रकृतेर्विशेषाधिकः, आतपोद्योतयोः, सुस्वरदुःस्वरयोः, विहायोगत्योस्तुल्यो भागः। निर्माणोच्छ्वासोपघातपराघातागुरुलघुतीर्थङ्कराणां विशेषो नास्ति विपक्षाभावादुत्कृष्टजघन्यपदयोरिति। उत्कृ

ष्टपदे शरीरपिण्डप्रकृतौ स्तोकं प्रदेशाग्रमाहारकस्य, वैक्रियौदारिकतैजसकार्मणानां यथोत्तरं विशेषाधिकम्, एवं [संघाताङ्गोपाङ्गानामपि बन्धनक्रमेण, बन्धनानामपि जघन्यपदे प्रदेशाग्रमौदारिकस्य स्तोकं, तैजसस्य विशेषाधिकं, कार्मणस्य विशेषाधिकम्, वैक्रियस्य असंख्येयगुणं, आहारकस्यासंख्येयगुणं ] शरीरवदङ्गोपाङ्गसंघातबन्धनानाम्। तिर्यग्गतौ जघन्यं प्रदेशाग्रं स्तोकं, मनुजगतौ विशेषाधिकं, देवगतावसंख्येयगुणं, नरकगतावसंख्येयगुणं । देवगतिनरकगत्योरुत्कृष्टं प्रदेशाग्रं स्तोकं तुल्यं च, मनुजगतौ विशेषाधिकं, तिर्यग्गतौ विशेषाधिकं । अयशःकीर्त्यामुत्कृष्टं प्रदेशाग्रं स्तोकं, यशःकीर्त्यां संख्येयगुणं, सप्तबन्धके अयशःकीर्त्तेः नाम्नः त्रयोविंशतिबन्धकस्य बृहद्भागात् उत्कृष्टः प्रदेशबन्धः, षड्बन्धको यदा यश एव बध्नाति तदा तस्या उत्कृष्टप्रदेशबन्धः, अतः संख्येयगुणः, अष्टबन्धको यदा नाम्नः त्रिंशद्बन्धको भवति तदा तयोर्जघन्यः प्रदेशबन्धः, स च तुल्यः, अनया दिशा भावना कार्या। साद्यनादिप्ररूपणा स्वामित्वं च प्रदेशबन्धेऽधोऽभिहितं इति गाथार्थः ॥ ४१ ॥

(मलय०)—सम्प्रति मूलोत्तरप्रकृतीनां दलविभागोपदर्शनार्थमाह—मूलप्रकृतीनामुत्तरप्रकृतीनां च मूलप्रदेशबन्धे 'कमसो बुड्ढ ठिईणं भागो दलियस्स होइ' इत्यादिना ग्रन्थेन दलस्य—कर्मदलिकस्य भागसंभवो—भागप्रमाणमुक्तम्। तत इत ऊर्ध्वं मोहनीयावरणानां—मोहनीयज्ञानावरणदर्शनावरणनाम्नां घातिकर्मणां रसभेदेन घात्यघातिरसविभागतो दलभागसंभवं वक्ष्ये, तं च वक्ष्यमाणं शृणुत। तत्र यद्यपि मूलोत्तरप्रकृतीनां दलभागप्रमाणं प्रागुक्तं, तथापीह स्थानाऽशून्यार्थं यथागमं किंचिद्विशेषतो भाव्यते—इह कर्मणां स्थित्यनुसारतो भाग आभजति, यस्य बृहती स्थितिस्तस्य बृहद् भागः, यस्य स्तोका तस्य स्तोक इति। तत्रायुषो भागः सर्वस्तोकः, तस्य सर्वेभ्योऽप्यन्येभ्यः स्तोकस्थितिकत्वात्, तत्स्थितेरुत्कर्षतोऽपि त्रयस्त्रिंशत्सागरोपमप्रमाणत्वात्। ततो नामगोत्रयोर्भागो बृहत्तरः, तयोः ॥ ३५ ॥

स्थितेर्विंशतिसागरोपमकोटाकोटीप्रमाणत्वात्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यं, समानस्थितिकत्वात्। ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणां बृहत्तमः, तेषां स्थितेस्त्रिंशत्सागरोपमकोटाकोटीप्रमाणत्वात्, तेषां पुनः परस्परं तुल्य एव, तुल्यस्थितिकत्वात्। ततोऽपि मोहनीयस्य बृहत्तमस्तस्य स्थितेः सप्ततिसागरोपमकोटाकोटीप्रमाणत्वात्। वेदनीये यद्यपि ज्ञानावरणीयादिभिः सह समानस्थितिकम् तथापि तस्य भागः सर्वोत्कृष्ट एव वेदितव्यः, अन्यथा स्पष्टतरस्वफलसुखदुःखोपदर्शकत्वाऽनुपपत्तेः। इदानीं स्वस्वोत्तरप्रकृतीनामुत्कृष्टपदे जघन्यपदे वाऽल्पबहुत्वमुच्यते—तत्रोत्कृष्टपदे सर्वस्तोकं केवलज्ञानावरणस्य प्रदेशाग्रम्, ततो मनःपर्यवज्ञानावरणस्यानन्तगुणम्, ततोऽवधिज्ञानावरणस्य विशेषाधिकम्, ततः श्रुतज्ञानावरणस्य विशेषाधिकम्, ततोऽपि मतिज्ञानावरणस्य विशेषाधिकम्। तथा दर्शनावरणे उत्कृष्टपदे सर्वस्तोकं प्रचलायाः प्रदेशाग्रम्, ततोऽपि निद्राया विशेषाधिकम्, ततोऽपि प्रचलाप्रचलाया विशेषाधिकम्, ततोऽपि निद्रानिद्राया विशेषाधिकम्, ततः स्त्यानर्द्धेर्विशेषाधिकम्, ततः केवलदर्शनावरणस्य विशेषाधिकम्, ततोऽवधिदर्शनावरणस्यानन्तगुणम्, ततोऽचक्षुर्दर्शनावरणस्य विशेषाधिकम्, ततोऽपि चक्षुर्दर्शनावरणस्य विशेषाधिकम्। तथा वेदनीये तु सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमसातवेदनीयस्य, ततो विशेषाधिकं सातवेदनीयस्य। तथा मोहनीये सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमप्रत्याख्यानावरणमानस्य, ततोऽप्रत्याख्यानावरणक्रोधस्य विशेषाधिकम्, ततोऽप्रत्याख्यानावरणमायाया विशेषाधिकम्, ततोऽप्रत्याख्यानावरणलोभस्य विशेषाधिकम्, ततः प्रत्याख्यानावरणमानस्य विशेषाधिकम्, ततः प्रत्याख्यानावरणक्रोधस्य विशेषाधिकम्, ततः प्रत्याख्यानावरणमायाया विशेषाधिकम्, ततः प्रत्याख्यानावरणलोभस्य विशेषाधिकम्, ततोऽनन्तानुबन्धिमानस्य विशेषाधिकम्, ततोऽनन्तानुबन्धिक्रोधस्य विशेषाधिकम्, ततोऽनन्तानुबन्धिमायाया विशेषाधिकम्, ततोऽनन्तानुबन्धिलोभस्य विशेषाधिकम्, ततो मिथ्यात्वस्य विशेषाधिकम्, ततो जुगुप्साया

अनन्तगुणम्, ततो भयस्य विशेषाधिकम्, ततो हास्यशोकयोर्विशेषाधिकम् स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततो रत्यरत्योर्विशेषाधिकम्, तयोः पुनः स्वस्थाने परस्परं तुल्यम्, ततः स्त्रीवेदनपुंसकवेदयोर्विशेषाधिकम्, स्वस्थाने तु द्वयोरपि तुल्यम्, ततः संज्वलनक्रोधस्य विशेषाधिकम्, ततः संज्वलनमानस्य विशेषाधिकम्, ततः पुरुषवेदस्य विशेषाधिकम्, ततः संज्वलनमायाया विशेषाधिकम्, ततः संज्वलनलोभस्याऽसंख्येयगुणम्। तथा चतुर्णामप्यायुषामुत्कृष्टपदे प्रदेशाग्रं परस्परं तुल्यम्। तथा नामकर्मण्युत्कृष्टपदे प्रदेशाग्रं गतौ देवगतिनरकगत्योः सर्वस्तोकम्, ततो मनुजगतौ विशेषाधिकम्, ततस्तिर्यग्गतौ विशेषाधिकम्। तथा जातौ चतुर्णां द्वीन्द्रियादिजातिनाम्नामुत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकम्, स्वस्थाने तु तेषां परस्परं तुल्यम्, तत एकेन्द्रियजातेर्विशेषाधिकम्। तथा शरीरनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकशरीरनाम्नः, ततो वैक्रियशरीरनाम्नो विशेषाधिकम्, तत औदारिकशरीरनाम्नो विशेषाधिकम्, ततस्तैजसशरीरनाम्नो विशेषाधिकम्, ततोऽपि कार्मणशरीरनाम्नो विशेषाधिकम्। एवं सङ्घातनाम्नोऽपि द्रष्टव्यम्। तथा बन्धनाम्नः सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकाहारकबन्धननाम्नः, तत आहारकतैजसबन्धननाम्नो विशेषाधिकम्, ततोऽप्याहारककार्मणबन्धननाम्नो विशेषाधिकम्, तत आहारकतैजसकार्मणबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियवैक्रियबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियतैजसबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियकार्मणबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियतैजसकार्मणबन्धननाम्नो विशेषाधिकम्, तत औदारिकौदारिकबन्धननाम्नो विशेषाधिकम्, तत औदारिकतैजसबन्धननाम्नो विशेषाधिकम्, तत औदारिककार्मणबन्धननाम्नो विशेषाधिकम्, ततोऽप्यौदारिकतैजसकार्मणबन्धननाम्नो विशेषाधिकम्, ततस्तैजसतैजसबन्धननाम्नो विशेषाधिकम्, ततस्तैजसकार्मणबन्धननाम्नो विशेषाधिकम्, ततः कार्मणकार्मणबन्धननाम्नो विशेषाधिकम्। तथा संस्थाननाम्नि संस्थानानामाद्यन्तवर्जानां चतुर्णामुत्कृष्टपदे

प्रदेशाग्रं सर्वस्तोकम्, स्वस्थाने तु परस्परं तुल्यम्, ततः समचतुरस्रसंस्थानस्य विशेषाधिकम्, ततोऽपि हुण्डसंस्थानस्य विशेषाधिकम्। तथाङ्गोपाङ्गनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकाङ्गोपाङ्गनाम्नः, ततो वैक्रियाङ्गोपाङ्गनाम्नो विशेषाधिकम्, ततोऽप्यौदारिकाङ्गोपाङ्गनाम्नो विशेषाधिकम्। तथा संहनननाम्नि सर्वस्तोकमाद्यानां पञ्चानां संहनननामुत्कृष्टपदे प्रदेशाग्रम्, स्वस्थाने तु तेषां परस्परं तुल्यम्, ततः सेवार्त्तसंहननस्य विशेषाधिकम्। तथा वर्णनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं कृष्णवर्णनाम्नः, ततो नीलवर्णनाम्नो विशेषाधिकम्, ततो लोहितवर्णनाम्नो विशेषाधिकम्, ततो हारिद्रवर्णनाम्नो विशेषाधिकम्, ततोऽपि शुक्लवर्णनाम्नो विशेषाधिकम्। तथा गन्धनाम्नि सर्वस्तोकं सुरभिगन्धनाम्नः, ततो दुरभिगन्धनाम्नो विशेषाधिकम्। तथा रसनाम्नि सर्वस्तोकं कटुरसनाम्नः, ततस्तिक्तरसनाम्नो विशेषाधिकम्, ततः कषायरसनाम्नो विशेषाधिकम्, तत अम्लरसनाम्नो विशेषाधिकम्, ततोऽपि मधुररसनाम्नो विशेषाधिकम्। तथा स्पर्शनाम्नि सर्वस्तोकमुत्कृष्टपदे कर्कशगुरुस्पर्शनाम्नोः प्रदेशाग्रं, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततो मृदुलघुस्पर्शनाम्नोर्विशेषाधिकम्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततो रूक्षशीतस्पर्शनाम्नोर्विशेषाधिकम्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततः स्निग्धोष्णस्पर्शनाम्नोर्विशेषाधिकम्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्। तथानुपूर्वीनाम्नि सर्वस्तोकं प्रदेशाग्रं देवगतिनरकगत्यानुपूर्व्योः स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततो मनुजानुपूर्व्या विशेषाधिकम्, ततोऽपि तिर्यगानुपूर्व्या विशेषाधिकम्। तथा सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं त्रसनाम्नः, ततो विशेषाधिकं स्थावरनाम्नः। तथा सर्वस्तोकं प्रदेशाग्रं पर्याप्तनाम्नः, ततो विशेषाधिकमपर्याप्तनाम्नः। एवं स्थिरास्थिरयोः, शुभाशुभयोः, सुभगदुर्भगयोः, आदेयानादेययोः, सूक्ष्मबादरयोः, प्रत्येकसाधारणयोर्वाच्यम्। तथा सर्वस्तोकमयशःकीर्तिनाम्नः प्रदेशाग्रम्, ततो यशःकीर्तिनाम्नः संख्येयगुणम्। शेषाणामातपोद्योतप्रशस्ताप्रशस्तविहा-

योगतिसुस्वरदुःस्वराणां परस्परं तुल्यमुत्कृष्टपदे प्रदेशाग्रम्। निर्माणोच्छ्वासोपघातपराघाताऽगुरुलघुतीर्थंकराणां त्वल्पबहुत्वं नास्ति। यत इदमल्पबहुत्वं स्वजातीयप्रकृत्यपेक्षया वा चिन्त्यते, यथा कृष्णादिवर्णनाम्नः शेषवर्णापेक्षया, प्रतिपक्षप्रकृत्यपेक्षया वा, यथा सुभगदुर्भगयोः, न चैताः परस्परं सजातीयाः, अभिन्नैकमूलपिण्डप्रकृत्यभावात्, नापि विरुद्धाः, युगपदपि बन्धसंभवात्। तथा गोत्रे सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं नीचैर्गोत्रस्य, ततो विशेषाधिकमुच्चैर्गोत्रस्य। तथान्तराये सर्वस्तोकं दानान्तरायस्य, ततो लाभान्तरायस्य विशेषाधिकम्, ततो भोगान्तरायस्य विशेषाधिकम्, तत उपभोगान्तरायस्य विशेषाधिकम्, ततो वीर्यान्तरायस्य विशेषाधिकम्। तदेवमुक्तमुत्तरप्रकृतीनामुत्कृष्टप्रदेशाग्राल्पबहुत्वम्। संप्रति जघन्यपदे तदभिधीयते—तत्र ज्ञानावरणदर्शनावरणप्रकृतीनां यथोत्कृष्टपदे तथैवावगन्तव्यम्। मोहनीये सर्वस्तोकं जघन्यपदे प्रदेशाग्रमप्रत्याख्यानावरणमानस्य, ततोऽप्रत्याख्यानावरणक्रोधस्य विशेषाधिकम्, ततः अप्रत्याख्यानावरणमायाया विशेषाधिकम्, ततोऽप्रत्याख्यानावरणलोभस्य विशेषाधिकम्, ततः प्रत्याख्यानावरणमानक्रोधमायालोभानामनन्तानुबन्धिमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकं वक्तव्यम्, ततो मिथ्यात्वस्य विशेषाधिकम्, ततो जुगुप्साया अनन्तगुणम्, ततो भयस्य विशेषाधिकम्, ततो हास्यशोकयोर्विशेषाधिकम्, स्वस्थाने तु तयोः परस्परं तुल्यम्, ततो रत्यरत्योर्विशेषाधिकम्, स्वस्थाने तु तयोरपि परस्परं तुल्यम्, ततोऽन्यतरवेदस्य विशेषाधिकम्, ततः संज्वलनमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकम्। तथायुषि सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्मनुष्यायुषोः, ततो देवनरकायुषोरसंख्येयगुणम्। तथा नाम्नि गतौ सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्गतेः, ततो विशेषाधिकं मनुजगतेः, ततो देवगतेरसंख्येयगुणं, ततो निरयगतेरसंख्येयगुणम्। ॥ ३७ ॥
तथा जातौ सर्वस्तोकं चतुर्णां द्वीन्द्रियादिजातिनाम्नां, तत एकेन्द्रियजातेर्विशेषाधिकम्। तथा शरीरनाम्नि सर्वस्तोकमौदारिकशरी-

रनाम्नः प्रदेशाग्रं, ततस्तैजसशरीरनाम्नो विशेषाधिकम्, ततः कार्मणशरीरनाम्नो विशेषाधिकम्, ततो वैक्रियशरीरनाम्नोऽसंख्येयगुणम्, ततोऽप्याहारकशरीरनाम्नोऽसंख्येयगुणम्। एव संघातनाम्न्यपि भाव्यम्। अङ्गोपाङ्गनाम्नि सर्वस्तोकं जघन्यपदे प्रदेशाग्रमौदारिकाङ्गोपाङ्गनाम्नः, ततो वैक्रियाङ्गोपाङ्गनाम्नोऽसंख्येयगुणं, ततोऽप्याहारकाङ्गोपाङ्गनाम्नोऽसंख्येयगुणम्। तथा सर्वस्तोकं जघन्यपदे देवनरकानुपूर्व्योः प्रदेशाग्रम्, ततो मनुजानुपूर्व्या विशेषाधिकम्, ततोऽपि तिर्यगानुपूर्व्या विशेषाधिकम्। तथा सर्वस्तोकं त्रसनाम्नः, ततो विशेषाधिकं स्थावरनाम्नः। एवं बादरसूक्ष्मयोः, पर्याप्तापर्याप्तयोः, प्रत्येकसाधारणयोश्च। शेषाणां तु नामप्रकृतीनामल्पबहुत्वं न विद्यते, तथा सातासातवेदनीययोरुच्चैर्गोत्रनीचैर्गोत्रयोरपि। अन्तराये पुनर्यथोत्कृष्टपदे तथैवावगन्तव्यम्। इह यदा जन्तुरुत्कृष्टे योगस्थाने वर्तते, यदा च मूलप्रकृतीनामुत्तरप्रकृतीनां च स्तोकतराणां बन्धकः, तथा यदा संक्रमकाले प्रकृत्यन्तरदलिकानामुत्कृष्टप्रदेशसंक्रमः, तदा उत्कृष्टप्रदेशाग्रसंभवः। तथाहि—उत्कृष्टयोगे वर्तमान उत्कृष्टं प्रदेशग्रहणं करोति तथा स्तोकतराणां मूलप्रकृतीनामुत्तरप्रकृतीनां वा यदा बन्धकस्तदा शेषाऽबध्यमानप्रकृतिलभ्योऽपि भागस्तासां बध्यमानानामामजति, तथा प्रकृत्यन्तरदलिकानामुत्कृष्टप्रदेशसंक्रमकाले विवक्षितासु प्रकृतिषु बध्यमानासु प्रभूताः कर्मपुद्गलाः प्रविशन्ति, तत एतेषु कारणेषु सत्सु उत्कृष्टः प्रदेशाग्रसंभवो भवति। विपर्यासे तु जघन्यप्रदेशाग्रसंभवः॥ ४१॥

रसविशेषतो भागविशेषार्थमाह—

सव्वुक्कोसरसो जो मूलविभागस्सऽणंतिमो भागो। सव्वघाइण दिज्जइ सो इयरो देसघाईणं॥ ४२॥

(स्वो०)—तत्कालबध्यमानमूलप्रकृतीनांलब्धिम् भागस्य योऽनन्तभागः उत्कृष्टानुभावः स सर्वघातिनीनां दीयते, इतरः—तदन्यः

देशघातिप्रकृतीनामिति गाथार्थः ॥ ४२ ॥

(मलय०)—तदेवं मूलोत्तरप्रकृतीनां भागविभागोपदर्शनं कृतम् । संप्रति यत्प्रतिज्ञातं 'रसभेएणं इत्तो मोहावरणाण निसुणेह' इति, तत्सूत्रकृन्निर्वाहयति–इह यः स्थित्यनुसारेण ज्ञानावरणदर्शनावरणमोहनीयानां प्रत्येकं मूलविभाग आभजति, तस्य प्रत्येकं योऽनन्ततमो भागः सर्वोत्कृष्टरसो भवति स सर्वघातिनीभ्यः प्रकृतिभ्यस्तत्कालबध्यमानाभ्यो यथायोगं विभज्य दीयते । इतरोऽनुत्कृष्टरसः सर्वोऽपि देशघातिनीभ्यः प्रकृतिभ्यो यथायोगं विभज्य विभज्य दीयते । इयमत्र भावना–ज्ञानावरणीयस्य स्थित्यनुसारेण यो मूलभाग आभजति तस्याऽनन्ततमो भागः केवलज्ञानावरणाय दीयते, शेषस्य चत्वारो भागाः क्रियन्ते, ते च मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यवज्ञानावरणेभ्यो दीयन्ते । दर्शनावरणीयस्यापि यो मूलभाग आभजति तस्यानन्ततमं भागं षोढा कृत्वा निद्रापञ्चककेवलदर्शनावरणाभ्यां सर्वघातिभ्यां प्रयच्छति, शेषस्य य त्रयो भागाः क्रियन्ते, ते च चक्षुरचक्षुरवधिदर्शनावरणेभ्यो दीयन्ते । मोहनीयस्य पुनर्यो मूलभाग आभजति तस्यानन्ततमो भागः सर्वघातिप्रकृतियोग्यो द्विधा क्रियते, अर्द्धं दर्शनमोहनीयस्य, अर्द्धं तु चारित्रमोहनीयस्य, तत्रार्द्धं दर्शनमोहनीयस्य सत्कं समग्रमपि मिथ्यात्वमोहनीयस्य ढौकते, चारित्रमोहनीयस्य तु सत्कमर्द्धं द्वादशधा क्रियते, ते च द्वादशभागा आद्येभ्यो द्वादशकषायेभ्यो दीयन्ते ॥ ४२ ॥

**उक्कोसरसस्सर्द्धं मिच्छे अद्धं तु इयरघाईणं । संजलणनोकसाया सेसं अद्धद्धयं लेंति ॥ ४३ ॥**

(स्वो०)—तस्योत्कृष्टसर्वघातिरसस्य मोहनीयभागानन्तभागसम्भवस्यार्द्धं मिथ्यात्वे भवति, अर्द्धं द्वादशानां सर्वघातिकषायाणां प्राग्वद् द्वादशभागीकृतं भवति, शेषस्यार्द्धं सञ्ज्वलनाश्चतुर्भागीकृतं गृह्णन्ति, अर्द्धं नोकषायाः पञ्चभागीकृतं गृह्णन्ति, यतो वेदान्यतरस्य

बन्ध इति, युग्मान्यतरस्यं च बन्ध इति। तुशब्दात् ज्ञानावरणमूलविभागस्य सर्वोत्कृष्टरसः केवलज्ञानावरणस्य, शेषं मतिज्ञानावरणादिषु चतुर्विभागीक्रियते। दर्शनावरणभागस्यानन्तमागं चरकृष्टरसः षड्भागीक्रियते, यतः षट् सर्वघातिप्रकृतयः, शेषं त्रिभागीक्रियते। अन्तरायभागः पञ्चभागीक्रियते। नाम्नः पिण्डप्रकृतीनां यो भागः स बध्यमानाया भवति। वर्णादीनां तु पञ्चद्विपञ्चाष्टभागीक्रियते, सङ्घातशरीरपिण्डप्रकृतिविभागस्त्रिधा चतुर्धा वा भवति। औदारिकतैजसकार्मणबन्धे त्रयो भागाः, वैक्रियेण वा तृतीयेन, वैक्रियाहारकतैजसकार्मणबन्धे चत्वारो भागाः, त्रिशरीरबन्धे सप्तबन्धनभागाः, चतुःशरीरबन्धे एकादश बन्धनभागाः, शरीरवदङ्गोपाङ्गानीति गाथार्थः॥

(मलय०)–आह च—सुगमम्। शेषस्य च मूलभागस्य द्वौ भागौ क्रियेते, एकः कषायमोहनीयस्य, अपरो नोकषायमोहनीयस्य। तत्र कषायमोहनीयस्य भागः पुनश्चतुर्धा क्रियते, ते च चत्वारोऽपि भागाः संज्वलनक्रोधमानमायालोभेभ्यो दीयन्ते, नोकषायमोहनीयस्य तु भागः पञ्चधा क्रियते, ते च पञ्चापि भागा यथाक्रमं त्रयाणां वेदानामन्यतमस्मै बध्यमानाय वेदाय, हास्यरतियुगलारतिशोकयुगलयोरन्यतरस्मै युगलाय, भयजुगुप्साभ्यां च दीयन्ते, नान्येभ्यो बन्धाऽभावात्, न हि नवापि नोकषाया युगपद्बन्धमायान्ति किन्तु यथोक्ताः पञ्चैव। एतदेवाह–शेषं अनुत्कृष्टरसं दलिकं संज्वलनाः क्रोधमानमायालोभरूपाः, नोकषायाश्च यथोक्तस्वरूपाः पञ्च अर्द्धार्द्धकं अर्द्धार्द्धीकृतं गृह्णन्ति। अर्द्धं संज्वलना गृह्णन्ति, अर्द्धं तु नोकषाया इत्यर्थः। शेषभावना त्वनन्तरमेव कृता। नामकर्मणः पुनः स्थित्यनुसारेण यो मूलभाग आभजति स सर्वोऽपि बध्यमानानामन्यतमगतिजातिशरीरबन्धनसङ्घातसंहननसंस्थानाङ्गोपाङ्गवर्णगन्धरसस्पर्शानुपूर्वीणामगुरुलघुपराघातोपघातोच्छ्वासातपोद्योतनिर्माणतीर्थकराणां प्रशस्ताप्रशस्तविहायोगतित्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तप्रत्येकसाधारणस्थिरास्थिरशुभाशुभसुस्वरदुःस्वरसुभगदुर्भगादेयाऽनादेययशःकीर्त्ययशःकीर्त्यन्यतराणां च विभज्य विभज्य स-

मर्पयति । तत्रापि वर्णनाम्नो यद्विभागलब्धदलिकं तत्पञ्चधा कृत्वा शुक्लादिभ्योऽवान्तरभेदेभ्यः पञ्चभ्यो विभज्य दीयते, गन्धनाम्नो द्वाभ्यां सुरभिदुरभिगन्धाभ्यां, रसनाम्नः पञ्चभ्यस्तिक्तकटुकषायाम्लमधुररससञ्ज्ञेभ्यः,स्पर्शनाम्नस्त्वष्टभ्यः कर्कशादिभ्यः । तथा सङ्घातनाम्नः शरीरनाम्नश्च यद्भागलब्धं दलिकमायाति तत्त्रिधा चतुर्द्धा वा कृत्वा त्रिभ्यश्चतुर्भ्यो वा दीयते, तच्चौदारिकतैजसकार्मणानि, वक्रियतैजसकार्मणानि त्रीणि शरीराणि सङ्घातानि वा युगपद्बध्नता त्रिधा क्रियते, वक्रियाहारकतैजसकार्मणरूपाणि चत्वारि शरीराणि सङ्घातानि वा बध्नता चतुर्धा । बन्धननाम्नः पुनर्यद्भागलब्धं दलिकमायाति तत्सप्तधा एकादशधा वा कृत्वा सप्तभ्य एकादशभ्यो वा दीयते, तत्रौदारिकौदारिकौदारिकतैजसौदारिकतैजसकार्मणतैजसतैजसतैजसकार्मणकार्मणकार्मणरूपाणि वैक्रियचतुष्कतैजसत्रिकरूपाणि वा सप्तबन्धनानि बध्नता सप्तधा क्रियते, वैक्रियचतुष्काहारकचतुष्कतैजसत्रिकलक्षणान्येकादशबन्धनानि बध्नता एकादशधा क्रियते । तथा अन्तरायस्य स्थित्यनुसारेण यो मूलभाग आभजति स पञ्चधा कृत्वा दानान्तरायादिभ्यो दीयते । वेदनीयायुर्गोत्रेषु पुनर्यो मूलभाग आभजति स एतेषामेव एकैकस्याः प्रकृतेर्बध्यमानाया आभजति, द्विप्रभृतीनाममीषां युगपद्बन्धाऽभावात् ॥ ४३ ॥

साम्प्रतमस्यैवानुभागस्य [स्थान]प्ररूपणायाह—

**जीवस्सज्झवसाया सुभासुभासंखलोगपरिमाणा । सव्वजियाणंतगुणा एक्केक्के होंति भावाणू ॥ ४४ ॥**

(स्वो०)—तस्यानुभागस्य कारणं निमित्तमध्यवसायाः—कषायोदयविशेषा भवन्ति—ते च द्विधा—शुभा अशुभा वा, शुभः क्षीरखण्डोपमं कर्मपुद्गलानामनुभूयमानानामाह्लादजननमनुभागं करोति, व्यस्त(विपरीत)मशुभः । कियन्तस्ते शुभाः? असंख्येयलोकाकाशप्रदेशतुल्या अध्यवसायाः, अशुभा अपि तावन्त एव । कृता अध्यवसायप्ररूपणा । एकैकेनाध्यवसायेन गृहीतकर्मपुद्गलानां कियन्तो

भावाणवो भवन्ति ? सर्वजीवानामनन्तगुणा रसाविभागा एकैकाध्यवसायगृहीतकर्मपुद्गलानां शुभा अशुभा वा प्रत्येकं भवन्तीति गाथार्थः, उक्ताऽविभागप्ररूपणा ॥ ४४ ॥

(मलय०)—तदेतावता प्रदेशबन्धस्य प्ररूपणा कृता, प्रकृतिबन्धस्य च प्ररूपणा प्रागेव बन्धविधौ व्यधायि । संप्रति स्थित्यनुभागबन्धप्ररूपणावसरः, तत्र बहुवक्तव्यत्वात्प्रथमतोऽनुभागबन्धस्यैव प्ररूपणा क्रियते, तत्र च पञ्चदश अनुयोगद्वाराणि, तद्यथा—अध्यवसायप्ररूपणा, अविभागप्ररूणा, वर्गणाप्ररूपणा, स्पर्द्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा, कण्डकप्ररूपणा, षट्स्थानकप्ररूपणा, अधस्तनस्थानप्ररूपणा, वृद्धिप्ररूपणा, समयप्ररूपणा, यवमध्यप्ररूपणा, ओजोयुग्मप्ररूपणा, पर्यवसानप्ररूपणा, अल्पबहुत्वप्ररूपणा चेति । तत्राध्यवसायप्ररूपणार्थमाह—'जीवस्याध्यवसाया',—अनुभागस्य कारणभूताः काषायिकाः परिणामविशेषा द्विधा भवन्ति, तद्यथा—शुभा अशुभाश्च । तत्र शुभैः क्षीरखण्डरसोपमाह्लादनमनुभागं कर्मपुद्गलानामाधत्ते, निम्बघोषातकीरसोपमं चाऽशुभैः । ते च शुभा अशुभाश्च काषायिकाध्यवसायाः प्रत्येकमसंख्येयलोकपरिमाणाः—असंख्यलोकाकाशप्रदेशप्रमाणाः, केवलं शुभा विशेषाधिका द्रष्टव्याः । तथाहि—यानेवाशुभानुबन्धाध्यवसायान् क्रमशः स्थापितान् संक्लिश्यमानः क्रमेण अधोऽध आस्कन्दति तानेव विशुध्यमानः क्रमेणोर्ध्वोर्ध्वमारोहति, ततो यथा प्रासादादवतरतो यावन्ति सोपानस्थानानि भवन्ति तावन्त्यारोहतोऽपि, तथा अत्रापि यावन्त एव संक्लिश्यमानस्याऽशुभाध्यवसायास्तावन्त एव विशुध्यमानस्यापि शुभा अध्यवसाया, उक्तं च—"भवनस्थितासु काषायिकीषु जीवस्य भावपरिणतिषु । भवपतनोत्पतनाभ्यां, संक्लेशावाप्तिशोध्यन्ते" ॥ केवलं क्षपको येष्वध्यवसायेषु वर्तमानः क्षपकश्रेणिमारोहति तेभ्यः पुनर्न निवर्त्तते, तस्य प्रतिपाताऽभावात्, अतस्ते अधिका इति तदपेक्षया विशेषाधिकाः शुभाध्यवसायाः । तदेवं कृता अध्यवसायप्ररूपणा ।

संप्रत्यविभागप्ररूपणार्थमाह—कर्मदलिके गृह्यमाणे एकैकस्मिन् परमाणौ काषायिकाध्यवसायवशाद्भावपरमाणवो गुणपरमाणवो रसाविभागा इत्यर्थः, जघन्यतोऽपि सर्वजीवानन्तगुणाः—सर्वजीवेभ्योऽनन्तगुणा भवन्ति। इयमत्र भावना—इह पूर्वं कर्मप्रायोग्यवर्गणान्तःपातिनः सन्तः कर्मपरमाणवो न तथाविधविशिष्टरसोपेता आसीरन् किंतु प्रायो नीरसा एकस्वरूपाश्च, यदा तु जीवेन गृह्यन्ते तदानीं ग्रहणसमये एव तेषां काषायिकेनाध्यवसायेन सर्वजीवेभ्योऽप्यनन्तगुणा रसाविभागा आपाद्यन्ते, ज्ञानावारकत्वादिविचित्रस्वभावता च, अचिन्त्यत्वाज्जीवानां पुद्गलानां च शक्तेः। न चैतदनुपपन्नं, तथादर्शनात्, तथाहि—शुष्कतृणादिपरमाणवोऽत्यन्तनीरसा अपि गवादिभिर्गृहीत्वा विशिष्टक्षीरादिरसरूपतया सप्तधातुरूपतया च परिणम्यन्त इति ॥ ४४ ॥

वर्गणाप्ररूपणोच्यते—

एक्कज्झवसायसमज्जियस्स दलियस्स किं रसो तुल्लो। न हु होंतिऽणंतभेया साहिज्जंते निसामेह ॥ ४५॥

(स्वो०)—एकाध्यवसायेन गृहीतस्य दलिकस्य—कर्मपुद्गलानां तेषां किमनुभावस्तुल्यो न वा इति? न हु—नैवं, भवन्त्यनन्ता भेदाः—अनन्ता विकल्पाः, तांश्च साध्यमानान्निशमयत यूयमिति गाथार्थः ॥ ४५ ॥

(मलय०)—कृता अविभागप्ररूपणा। अत्र पर आह—एकेनाध्यवसायेन समर्जितस्य—गृहीतस्य दलिकस्य—कर्मदलिकस्य परमाणुषु किं सर्वेष्वपि रसः—अनुभागस्तुल्यः किं वा नेति? अत्राह—'न हु' नैव तुल्यो भवति, किंत्वनन्ता भेदाः, तांश्चानन्तान् भेदान् साध्यमानान्—कथ्यमानान् निशमयत—आकर्णयत यूयमिति ॥ ४५ ॥

अनुभागस्थानचित्रम् ।

प्रथमस्पर्द्ध० द्वितीयस्पर्द्ध० तृतीयस्प० चतुर्थस्प०

कर्मपुद्गला

अन्तरं अन्तरं अन्तरं

अविभागपुद्गलाः

सव्वप्परसे गेण्हइ जे बहुये तेहि वग्गणा पढमा । अविभागुत्तरिएहिं अण्णाउ विसेसहीणेहिं ॥४६॥

(स्वो०)—सर्वाल्परसान् यान् कर्मपुद्गलान् बहून् गृह्णाति तैर्वर्गणा प्रथमा भवति, रसाविभागोत्तरैरन्यैः कर्मपुद्गलद्रव्यैर्विशेषहीनैरन्या वर्गणा, एवं भूयो भूयो भवन्तीति गाथार्थः । उक्ता वर्गणा प्ररूपणा ॥४६॥

(मलय०)—यान् पुद्गलान् सर्वाल्परसान्—अन्यपरमाण्वपेक्षया समापादितसर्वस्तोकरसाविभागान् जीवो गृह्णाति, कथंभूतानित्याह—बहून्, अल्परसा हि परमाणवो बहवो भवन्ति, अत उक्तं बहूनिति, तैर्वर्गणा प्रथमा भवति—तेषां समुदायः प्रथमा वर्गणेत्यर्थः। ततोऽविभागोत्तरैरेकैकाविभागवृद्धैर्द्रव्यैः परमाणुभिः पूर्वस्मात्पूर्वस्माद्विशेषहीनैरन्या द्वितीयाद्या वर्गणा भवन्ति। ताश्चैवं वर्गणास्तावद्वक्तव्या यावत्सिद्धानामनन्तभागतुल्या भवन्ति। एतदुक्तं भवति—प्रथमवर्गणागतपरमाण्वपेक्षया ये परमाणव एकेन रसाविभागेन वृद्धाः तेषां समुदायो द्वितीया वर्गणा, ते च प्रथमवर्गणागतपरमाण्वपेक्षया विशेषहीनाः। तेभ्योऽप्येकेन रसाविभागेनाभ्यधिकानां समुदायस्तृतीया वर्गणा, तेऽपि च द्वितीयवर्गणागतपरमाण्वपेक्षया विशेषहीनाः। एवमेकैकाविभागवृद्धानां पूर्वस्मात्पूर्वस्माद्विशेषहीनानां वर्गणास्तावद्वक्तव्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति। कृता वर्गणाप्ररूपणा ॥ ४६ ॥

**दव्वेहिं वग्गणाओ सिद्धाणमणंतभागतुल्लाओ। एयं पढमं फड्डं अओ परं नत्थि रूवहिया ॥४७॥**

**सव्वजियाणंतगुणा पलिभागा लंघिउं पुणो अण्णा। एवं भवति फड्डा सिद्धाणमणंतभागसमा ॥ ४८॥**

(स्वो०)—प्रथमपादः प्राक्तनगाथायां व्याख्यातः, सिद्धानामनन्तभागतुल्यास्ता वर्गणाः समुदिताः प्रथममनुभागस्पर्द्धकं भवति, तस्मात्परतो नास्ति रूपाधिकवर्गणा—अनुभागाविभागोत्तरा इति गाथार्थः। उक्ता स्पर्द्धकप्ररूपणा। सर्वजीवानन्तगुणान् रसाविभागान् उल्लङ्घ्य प्रथमस्पर्द्धकान्त्यवर्गणायास्ततो भूयोऽपि वर्गणा भवन्ति। एवम्—अनेन विधिना सिद्धानामनन्तभागतुल्यान्यनुभागस्पर्द्धकानि भवन्तीति गाथार्थः। उक्ता अन्तरप्ररूपणा ॥ ४७-४८ ॥

(मलय०)—संप्रति स्पर्द्धकप्ररूपणार्थमाह—या अभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागतुल्या वर्गणा अनन्तरमुक्तास्ताः समुदिताः स्पर्द्धकम्, तच्चैतत्स्पर्द्धकं प्रथमम्। कृता स्पर्द्धकप्ररूपणा। संप्रत्यन्तरप्ररूपणार्थमाह—अतः प्रथमात्स्पर्द्धकात्परं रूपाधिका—एकैकरसाविभागवृद्धाः परमाणवो न सन्ति किंतु सर्वजीवानन्तगुणान् परिभागानुल्लङ्घ्य—अतिक्रम्य परैरसाविभागैरभ्यधिकाः सन्ति। ततः पुनरपि तेषां प्रागुक्तक्रमेणान्या वर्गणास्तावद्वाच्या यावत्सिद्धानामनन्तभागतुल्या भवन्ति, ततस्तासां समुदायो द्वितीयं स्पर्द्धकम्। एवं स्पर्द्धकानि तावद्वाच्यानि यावत्सिद्धानामनन्तभागसमानि भवन्ति। इयमत्र भावना—प्रथमस्पर्द्धकादूर्ध्वमेकेन रसाविभागेनाभ्यधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिर्नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽप्यनन्तगुणैरभ्यधिकाः प्राप्यन्ते, ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य प्रथमा वर्गणा। तत एकेन रसाविभागेनाभ्यधिकानां परमाणूनां समुदायो द्वितीया वर्गणा। द्वाभ्यां रसाविभागाभ्यामधिकानां परमाणूनां समुदायस्तृतीया वर्गणा। एवमेकैकरसाविभागवृद्धया वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति, ततस्तासां समुदायो द्वितीयं स्पर्द्धकम्। ततः पुनरप्यत ऊर्ध्वमेकेन रसाविभागेनाभ्यधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि संख्येयैः, नाप्यसंख्येयैः, किंत्वनन्तानन्तैरेव, सर्वजीवेभ्योऽनन्तगुणैः, ततस्तेषां समुदायस्तृतीयस्य स्पर्द्धकस्य प्रथमा वर्गणा। ततः पुनरप्यत ऊर्ध्वं यथोत्तरमेकैकरसाविभागवृद्धया द्वितीयादिका वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति, ततस्तासां समुदायस्तृतीयं स्पर्द्धकम्। एवं स्पर्द्धकानि तावद्वाच्यानि यावदभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागतुल्यानि भवन्ति ॥ ४७–४८ ॥

**एयं एग ठाणं एवमसंखेज्जलोगठाणाण। समवग्गणाणि फड्डाणि तेसि तुल्लाणि विवराणि ॥ ४९॥**

(स्वो०)—इयद्भिः सिद्धानन्तभागतुल्यैरेकमनुभागबन्धाध्यवसायस्थानं भवति, एवमनन्तरोक्तविधिनाऽसंख्येयलोका अनुभागबन्धाध्यवसायस्थानानां भवन्ति, अनुभागबन्धविषयेऽध्यवसायैः स्थानानीति समासः, अनुभागबन्धस्याध्यवसायानां स्थानानीति वा समासः। अनुभागबन्धस्याध्यवसायानां स्थानानीति कारणं कार्यत्वेन गृहीत्वा समासः क्रियते। सर्वाण्यपि स्पर्द्धकानि तुल्यवर्गणानि, तेषामन्तराण्यपि सर्वाणि तुल्यानीति गाथार्थः। उक्तानुभागबन्धाध्यवसायस्थानप्ररूपणा ॥ ४९ ॥

(मलय०)—कृता अन्तरप्ररूपणा, संप्रति स्थानप्ररूपणार्थमाह—अभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानि स्पर्द्धकानि स्थानमनुभागबन्धस्थानं भवति। तच्चैतदनुभागबन्धस्थानं प्रथममवगन्तव्यम्। अनुभागबन्धस्थानं नाम एकेन काषायिकेणाध्यवसायेन गृहीतानां परमाणूनां रसस्पर्द्धकसमुदायपरिमाणम्। कृता स्थानप्ररूपणा, कण्डकप्ररूपणां षट्स्थानकप्ररूपणां चातिदेशेन कर्तुकामः स्थानानां संख्यादिकमाह—एवमनन्तरोक्तस्थानगतेन प्रकारेण स्थानानां असंख्येया लोका भवन्ति, असंख्येयलोकाकाशप्रदेशप्रमाणानि स्थानानि भवन्तीत्यर्थः। एतेषु च स्थानेषु प्रत्येकं स्पर्द्धकानि समवर्गणानि भवन्ति, अभव्यानन्तगुणसिद्धानन्तभागकल्पवर्गणानि सर्वेषामपि स्थानानां स्पर्द्धकानि भवन्तीत्यर्थः। तथा तेषां स्थानानामथवा स्पर्द्धकानां विवराणि च—अन्तराणि च तुल्यानि भवन्ति, सर्वेषामपि स्थानानां स्पर्द्धकानां वा परस्परमन्तरं सर्वजीवानन्तगुणं द्रष्टव्यमित्यर्थः। तथाहि—यथा प्रथमस्पर्द्धकचरमवर्गणाया द्वितीयस्पर्द्धकादिवर्गणायाश्चान्तरं सर्वजीवेभ्योऽनन्तगुणं प्रागुपदिष्टमेवं सर्वेषामपि स्पर्द्धकानां द्रष्टव्यं स्थानानां च। तथा स्थानानां सर्वेषां परिवृद्धिः पूर्वस्मात्पूर्वस्मादुत्तरस्योत्तरस्य स्थानस्य वृद्धिः षट्स्थानकक्रमेण भावनीया। तद्यथा—प्रथमात्स्थानाद् द्वितीयं स्थानं स्पर्द्धकापेक्षया अनन्तभागवृद्धं, यावन्ति प्रथमे स्थाने स्पर्द्धकानि तावद्भ्योऽनन्तभागाधिकानि द्वितीये स्थाने स्पर्द्धकानि भवन्तीत्यर्थः।

ततोऽपि तृतीय स्थानमनन्तभागवृद्धम्। एवमुपदर्शितेन प्रकारेण यथोत्तरमनन्तभागवृद्धानि स्थानानि तावद्वाच्यानि यावदङ्गुलासंख्येयभागगतप्रदेशराशिप्रमाणानि भवन्ति, तेषां च समुदाय एकं कण्डकम्। एषा कण्डकप्ररूपणा। अस्माच्च प्रथमात्कण्डकात्परं यदनुभागबन्धस्थानं भवति, तत्स्पर्द्धकापेक्षया असंख्येयभागाधिकम्। तस्मात्पराणि तु कण्डकमात्राणि स्थानानि यथोत्तरमनन्तभागवृद्धानि, ततः परं पुनरप्येकमन्यदनुभागबन्धस्थानमसंख्येयभागाधिकं भवति ॥ ४९ ॥

ठाणाण परिवुड्ढी छट्ठाणकमेण तं गयं पुव्विं। भागो गुणो य कीरति जहुत्तरं एत्थ ठाणाणं ॥५०॥

(स्वो०)—अनुभागबन्धाध्यवसायस्थानानां परिशुद्धिः यथोत्तरास्थितानां भवति, सा च षट्स्थानक्रमेण, तच्च प्रागेव नामस्पर्द्धकाधिकारे षट्स्थानमभिहितं नात्राभिधीयते, षट्स्थानप्ररूपणा कण्डकप्ररूपणा च तदनुसारतो वक्तव्या, तथापि लेशतः किञ्चिदुच्यते—त्रीणि भागोत्तराणि स्थानानि, तद्यथा—अनन्तभागोत्तरमसंख्येयभागोत्तरं संख्येयभागोत्तरं च। त्रीणि गुणोत्तराणि, तद्यथा—संख्येयगुणमसंख्येयगुणमनन्तगुणम्। एवमत्रापि यथोत्तरमनुभागबन्धाध्यवसायस्थानविधौ तदवस्थमेव वक्तव्यमिति गाथार्थः ॥५०॥

(मलय०)—एवं प्रागुक्तषट्स्थानानां परिवृद्धिरवसेया। तथा चाह—'तं गयं पुव्विं'—तत् षट्स्थानकं पूर्वं नामप्रत्ययस्पर्द्धकप्ररूपणावसरे गतं प्रतिपादितमिति न भूयः प्रतिपाद्यते, तथापि किंचिदुच्यते—अत्र षट्स्थानकक्रमेण वृद्धौ स्थानानां यथोत्तरमधिको भागो गुणश्च क्रियते। इयमत्र भावना—इह षट्स्थानके त्रीणि भागवृद्धानि स्थानानि, तद्यथा—अनन्तभागवृद्धानि, असंख्येयभागवृद्धानि, संख्येयभागवृद्धानि। त्रीणिगुणवृद्धानि, तद्यथा—संख्येयगुणवृद्धानि, असंख्येयगुणवृद्धानि, अनन्तगुणवृद्धानि। तत्रानन्तभागवृद्धान्येवं—प्रथमस्यानुभागबन्धस्थानस्य सर्वजीवसंख्याप्रमाणेन राशिना भागे हृते सति यल्लब्धं सोऽनन्तभागः, तेनाभ्यधिकं द्वितीयमनुभागब-

न्धस्थानम् । तस्यापि सर्वजीवसंख्याप्रमाणेन राशिना भागे हृते सति यल्लब्धं तेनाभ्यधिकं तृतीयमनुभागबन्धस्थानम् । एवं यत् यत् अनुभागबन्धस्थानमनन्तभागवृद्धमुपलभ्यते तत्तत्पाश्चात्यस्य पाश्चात्यस्यानुभागबन्धस्थानस्य सर्वजीवसंख्याप्रमाणेन राशिना भागे हृते सति यद् यद् लभ्यते तेन तेनानन्तेन भागेनाभ्यधिकमवगन्तव्यम् । असंख्येयभागाधिकानि पुनरेवं–पाश्चात्यस्यानुभागबन्धस्थानस्य असंख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते सति यद् यल्लभ्यते, स सोऽसंख्येयतमो भागः, ततस्तेन तेनाऽसंख्येयतमेन भागेनाभ्यधिकानि स्थानानि असंख्येयभागाधिकानि । संख्येयभागाधिकानि त्वेवं–पाश्चात्यस्य पाश्चात्यस्यानुभागबन्धस्थानस्य उत्कृष्टेन संख्येयेन भागे हृते सति यद् यल्लभ्यते स स संख्येयतमो भागः, ततस्तेन तेन संख्येयतमेन भागेनाधिकानि स्थानानि संख्येयभागाधिकानि द्रष्टव्यानि । संख्येयगुणवृद्धानि नाम पाश्चात्यं पाश्चात्यमनुभागबन्धस्थानमुत्कृष्टसंख्येयप्रमाणेन राशिना गुण्यते, गुणिते सति यावान् राशिर्भवति, एतावत्प्रमाणानि द्रष्टव्यानि । एवमसंख्येयगुणवृद्धानि अनन्तगुणवृद्धानि च भावनीयानि । नवरमसंख्येयगुणवृद्धौ पाश्चात्यं पाश्चात्यमनुभागबन्धस्थानमसंख्येयलोकाकाशप्रदेशप्रमाणेनासंख्येयेन गुण्यते, अनन्तगुणवृद्धौ तु सर्वजीवप्रमाणेनानन्तेनैवेति ॥ ५० ॥

छट्ठाणगअवसाणे अण्णं छट्ठाणयं पुणो अण्णं । एवमसंखा लोगा छट्ठाणाणं मुणेयव्वा ॥ ५१ ॥

(स्वो०)—अस्य षट्स्थानकस्यावसाने समासावन्यत् षट्स्थानकमारभ्यते, तस्याप्यन्यत्, एवं षट्स्थानकानामसंख्येया लोकाः परिपाट्या यथोत्तरेणायं विशेषो मन्तव्य इति गाथार्थः । प्रस्तारविधिना स्थानाशून्यार्थं षट्स्थानकं लिख्यते—

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૩૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૩૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૩૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૩૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૪૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૩૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૩૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૪૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| ४०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ४०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |
| ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૨૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ | ૧૦૦૦૦ |

૪૦૦૦૦

एवं चतुर्भिश्चतुष्ककैर्द्वितीयपञ्चकः पातनीयः, ततस्तृतीयः चतुर्थश्च पञ्चकः पातनीयः, ततो मूलादारभ्य तावत्तदेव पातनीयं, यावत्पञ्चकाधस्तनकण्डकमिति। एवं चतुर्भिर्विन्दुभिः समुत्थितैरेकैक उत्तिष्ठति, चतुर्भिरेककैः समुच्छ्रितैर्द्विक उत्तिष्ठति, चतुर्भिर्द्विकैः समुत्थितैस्त्रिक उत्तिष्ठति, चतुर्भिस्त्रिकैः समुत्थितैः चतुष्कः पुनरुत्तिष्ठति, चतुर्भिः चतुष्कैः समुत्थितैः पञ्चक उत्तिष्ठति, एवं भूयो भूयश्चतुर्भिः पञ्चकैरुत्थितैः षट्स्थानं समाभिमुपयाति। तस्मादन्तिमादनन्तगुणवृद्धिस्थानादन्यद्भूयः तेनैव क्रमेण षट्स्थानमारभ्यते यावदसंख्येया लोकाः षट्स्थानानाम्। शून्याद्यङ्कानां क्रमात् वृद्धानामभिधानानि चतुःस्थानस्य कण्डकाभिधानपरिकल्पना एवं भाव्या॥५१॥

(मलय०)—अस्य षट्स्थानकस्य अवसाने–सामाप्तावन्यत् षट्स्थानकमवगन्तव्यं, तस्यापि समाप्तावन्यत्, एवं षट्स्थानकानामसंख्येया लोका मन्तव्याः, असंख्येयलोकाकाशप्रदेशप्रमाणानि षट्स्थानकानि मन्तव्यानीत्यर्थः ॥ ५१ ॥

सव्वासिं वुड्ढीणं कंडगमेत्ता अणंतरा वुड्ढी। एगंतराउ वुड्ढी वग्गं कंडस्स कंडं च ॥ ५२ ॥

(स्वो०)—सर्वासां षट्स्थानकवृद्धीनां कण्डकमात्रा अनन्तरा वृद्धिर्भवति। किमुक्तं भवति? प्रथमादसङ्ख्येयभागवृद्धिस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि? कण्डकमात्राणि। प्रथमात् सङ्ख्येयभागवृद्धिस्थानादधः कियन्त्यसङ्ख्येयभागवृद्धिस्थानानि? कण्डकमात्राणि। प्रथमात् सङ्ख्येयगुणस्थानादधः कियन्ति सङ्ख्येयभागवृद्धिस्थानानि? कण्डकमात्राणि। प्रथमादसङ्ख्येयगुणस्थानादधः कियन्ति सङ्ख्येयगुणस्थानानि? कण्डकमात्राणि। प्रथमादनन्तगुणस्थानादधः कियन्त्यसङ्ख्येयगुणस्थानानि? कण्डकमात्राणि। उक्तमनन्तरस्थानप्रमाणम्। एकान्तरा पुनर्वृद्धिः कण्डकाधिककण्डकवर्गप्रमाणा भवति। प्रथमात् सङ्ख्येयभागवृद्धिस्थानादधः कियन्त्यनन्तभागवृद्धानि? कण्डकाधिककण्डकवर्गप्रमाणानि। प्रथमात् सङ्ख्येयगुणस्थानादधः कियन्त्यसङ्ख्येयभागोत्तराणि? कण्ड- ॥ ४५ ॥

ध्राधिककण्डककवर्गमात्राणि। प्रथमादसङ्ख्येयगुणस्थानादध' कियन्ति संख्येयभागोत्तराणि ? कण्डकाधिककण्डककवर्गप्रमाणानि। प्रथमाद-नन्तगुणस्थानादधः कियन्ति संख्येयगुणस्थानानि ? कण्डकाधिककण्डककवर्गप्रमाणानि। उक्तमेकान्तरस्थानप्रमाणम्। सर्वजीवानन्तकेन यद्भागलब्ध तदनन्तभागोत्तरम्, स्वस्थानोपरितनस्थानस्यासङ्ख्येयलोकाकाशप्रदेशभागलब्धोत्तराणि असंख्येयभागोत्तरस्थानानि स्वाधःस्थानात्, रूपोनजघन्यासंख्येयभागलब्धोत्तराणि संख्येयभागाधिकस्थानानि स्वाध'स्थितस्थानात्। एवं गुणा अपि कर्तव्या इति गाथार्थः ॥ ५२ ॥

(मलय०)—कृता षट्स्थानप्ररूपणा, साम्प्रतमधस्तनस्थानप्ररूपणार्थमाह—सर्वासां वृद्धीनामसङ्ख्येयभागवृद्ध्यादीनामधोऽधोऽनन्तरानन्तभागवृद्ध्यादिका वृद्धिः कण्डकमात्रा भवति, नाधिका, कण्डकादूर्ध्वमवश्यमन्यस्यानुयायिनः स्थानस्योत्थानात्। एतदुक्तं भवति–सर्वा अपि वृद्धयो येन क्रमेणोत्थितास्तेनैव क्रमेण निरन्तरं प्रवर्तमानाः कण्डकमात्रा एव प्राप्यन्ते, नाधिकाः। तेनोत्तरस्या उत्तरस्या वृद्धेरर्वाक् अनन्तरा वृद्धिः कण्डकमात्रा वेदितव्या। तद्यथा–प्रथमादसङ्ख्येयभागवृद्धिस्थानादधो अनन्तभागवृद्धानि स्थानानि कण्डकमात्राणि, प्रथमात्संख्येयभागवृद्धात्स्थानादधोऽसङ्ख्येयभागवृद्धानि स्थानानि कण्डकमात्राणि, प्रथमात्संख्येयगुणवृद्धात्स्थानादधः संख्येयभागवृद्धानि स्थानानि कण्डकमात्राणि, प्रथमादसङ्ख्येयगुणवृद्धात्स्थानादधः संख्येयगुणवृद्धानि स्थानानि कण्डकमात्राणि, प्रथमादनन्तगुणवृद्धात्स्थानादधोऽसंख्येयगुणवृद्धानि स्थानानि कण्डकमात्राणि। इयमुत्तरोत्तरस्थानादधोऽध आनन्तर्येण मार्गणा। इदानीमेकान्तरिता मार्गणा क्रियते–प्रथमात्सङ्ख्येयभागवृद्धात्स्थानादधोऽधः कियन्त्यनन्तभागवृद्धानि स्थानानि ? उच्यते–कण्डकवर्गः कण्डकं च। तथा प्रथमात्सङ्ख्येयगुणवृद्धादधः कियन्त्यसङ्ख्येयभागवृद्धानि स्थानानि ? उच्यते–कण्डकवर्गः कण्डकं च। तथा प्रथमाद-

संख्येयगुणवृद्धात्स्थानादधः कियन्ति संख्येयभागवृद्धानि स्थानानि ? उच्यते—कण्डकवर्गः कण्डकं च। तथा प्रथमादनन्तगुणवृद्धात्स्थानादधः कियन्ति संख्येयगुणवृद्धानि स्थानानि ? उच्यते—कण्डकवर्गः कण्डकं च। कथमेतदवसीयते ? इति चेद्, उच्यते—प्रथमात्संख्येयभागवृद्धात्स्थानादध एकैकस्याऽसंख्येयभागवृद्धस्य स्थानस्याधः प्रत्येकमनन्तभागवृद्धानि कण्डकमात्राणि प्राप्यन्ते, असंख्येयभागवृद्धानि स्थानानि कण्डकमात्राणि, ततः कण्डकं कण्डकेन गुणितं प्राप्यत इति कण्डकवर्गः, असंख्येयभागवृद्धकण्डकस्योपरि अनन्तभागवृद्धानि स्थानानि कण्डकमात्राणि प्राप्यते, इत्येककण्डकप्रक्षेपः। एवमसंख्येयभागवृद्धादीनामप्येकान्तरितमार्गणायां भावनीयम्। तथा चाह—एकान्तरा पुनर्वृद्धिः कण्डकस्य वर्गः कण्डकं च॥ ५२॥

कंडं कंडस्स घणो वग्गो दुगुणो दुगंतराए उ। कंडस्स वग्गवग्गो घणवग्गा तिगुणिया कंडं ॥ ५३॥

(स्वो०)—द्व्यन्तरवृद्धौ स्थानानि कण्डकघनसङ्ख्यानि कण्डकवर्गाद्विगुणसङ्ख्यानि कण्डकं च स्थानानां स्युः। किमुक्तं भवति ? प्रथमसङ्ख्येयगुणवृद्धिस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि ? कण्डकघनः कण्डकवर्गो द्विगुणः कण्डकमात्राणि च भवन्ति। प्रथमासङ्ख्येयगुणस्थानादधः कियन्त्यसंख्येयभागवृद्धिस्थानानि ? कण्डकघनः कण्डकवर्गो द्विगुणः कण्डकमात्राणि च भवन्ति। प्रथमादनन्तगुणवृद्धिस्थानादधः कियन्ति संख्येयभागवृद्धानि ? कण्डकघनः कण्डकवर्गो द्विगुणः कण्डकमात्राणि भवन्ति। गता द्व्यन्तरा वृद्धिः। 'कण्डकस्स वग्गवग्गो' त्ति—कण्डकस्य वर्गवर्गः, कण्डकघनो वर्गश्च त्रिगुणः, कण्डकं च स्थानानां त्र्यन्तरवृद्धौ स्युः। किमुक्तं भवति ? प्रथमादसंख्येयगुणस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि ? कण्डकस्य वर्गवर्गसंख्यानि कण्डकघनवर्गौ त्रिगुणौ कण्डकमात्राणि च। प्रथमादनन्तगुणस्थानादधः कियन्त्यसंख्येयभागवृद्धिस्थानानि ? कण्डकस्य वर्गवर्गः, त्रिगुणघनः, त्रिगुणवर्गः, कण्डकमात्राणि, तुशब्दा- ॥ ४६ ॥

रूप्यन्तरवृद्धौ भवन्तीति गाथार्थः ॥ ५१ ॥

(मलय०)—कृता एकान्तरिता मार्गणा। संप्रति द्व्यन्तरिता क्रियते—प्रथमात्संख्येयगुणवृद्धस्थानादधः कियन्ति अनन्तभागवृद्धानि स्थानानि ? उच्यते—कण्डकघनो द्वौ कण्डकवर्गौ कण्डकं च। प्रथमादसंख्येयगुणवृद्धस्थानादधः कियन्त्यसंख्येयभागवृद्धानि स्थानानि ? उच्यते—कण्डकघनो द्वौ कण्डकवर्गौ कण्डकं च। प्रथमादनन्तगुणवृद्धस्थानादधः कियन्ति संख्येयभागवृद्धानि स्थानानि ? उच्यते—कण्डकघनो द्वौ कण्डकवर्गौ एकं च कण्डकम्। कथमेतदवसीयते ? इति चेद्, उच्यते—प्रथमात्संख्येयगुणवृद्धात्स्थानादधः एकैकस्य संख्येयभागवृद्धस्य स्थानस्याधः प्रत्येकमेकैककण्डकाधिकः कण्डकवर्गोऽनन्तभागवृद्धानां स्थानानां प्राप्यते, संख्येयभागवृद्धानि च स्थानानि कण्डकमात्राणि, ततः कण्डकवर्गो यदा कण्डकेन गुण्यते तदा कण्डकघनो भवति, कण्डकं च कण्डकेन गुणितं कण्डकवर्गः, संख्येयभागवृद्धाचोपरि कण्डकवर्ग एकं च कण्डकं प्राप्यते, ततो द्व्यन्तरितमार्गणायामनन्तभागवृद्धानां कण्डकघनो द्वौ कण्डकवर्गावेकं च कण्डकं भवति। एवमसंख्येयभागवृद्धादीनामपि द्व्यन्तरितमार्गणायां भावनीयम्। तथा चाह—द्विकान्तरायां वृद्धौ स्थानानामनन्तभागवृद्धादीनां प्रत्येकमेकं कण्डकमेकश्च कण्डकघनः कण्डकवर्गश्च द्विगुणः—द्वौ कण्डकवर्गावित्यर्थः। कृता द्व्यन्तरिता मार्गणा। सम्प्रति त्र्यन्तरिता क्रियते—प्रथमादसंख्येयगुणवृद्धात्स्थानादधः कियन्ति अनन्तभागवृद्धानि स्थानानि ? उच्यते—कण्डकवर्गवर्गः, त्रयः कण्डकघनाः, त्रयश्च कण्डकवर्गाः, एकं च कण्डकम्। तथा प्रथमादनन्तगुणवृद्धात्स्थानादधः कियन्त्यसंख्येयभागवृद्धानि स्थानानि ? उच्यते—कण्डकवर्गवर्गः, त्रयः कण्डकघनाः, त्रयः कण्डकवर्गाः, एकं च कण्डकम्। कथमेतदवसीयते ? इति चेद्, उच्यते—इह प्रथमादसंख्येयगुणवृद्धात्स्थानादध एकैकस्य संख्येयगुणवृद्धस्य स्थानस्या-

धः प्रत्येकमनन्तभागवृद्धानां स्थानानां कण्डकघनो, द्वौ च कण्डकवर्गौ, एकं च कण्डकं प्राप्यते। संख्येयगुणवृद्धानि च स्थानानि कण्डकमात्राणि, ततः कण्डकघनो यदा कण्डकेन गुण्यते तदा कण्डकवर्गवर्गो भवति, तथाहि—चतुष्कस्य घनश्चतुःषष्टिप्रमाणश्चतुष्केन गुण्यते, ततो द्वे शते षट्पञ्चाशदधिके भवतः,एतावत्प्रमाणश्चतुष्कस्य वर्गवर्गः, चतुष्कस्थानीयं चेह कण्डकं भावनीयम्, द्वौ कण्डकवर्गौ कण्डकेन गुणितौ द्वौ कण्डकघनौ भवतः, वर्गस्य वर्गमूलेन गुणने घनस्य भावात्, कण्डकं च कण्डकेन गुणितं कण्डकवर्गः, संख्येयगुणवृद्धस्थानकस्योपरि एकः कण्डकघनो द्वौ च कण्डकवर्गौ एकं च कण्डकं प्राप्यते, एतच्च पूर्वराशौ प्रक्षिप्यते। ततस्त्र्यन्तरितमार्गणायामनन्तभागवृद्धानां स्थानानां कण्डकवर्गवर्गः, त्रयश्च कण्डकघनाः, त्रयश्च कण्डकवर्गा एकं कण्डकं प्राप्यते। एवमसंख्येयभागवृद्धानामपि भावनीयम्। तथा चाह—कण्डकस्य वर्गवर्गः, कण्डकघनः कण्डकवर्गश्च त्रिगुणः—त्रयः कण्डकघनास्त्रयश्च कण्डकवर्गा इत्यर्थः, एकं च कण्डकं स्थानानां त्र्यन्तरितवृद्धौ भवति ॥ ५३ ॥

अड कंडवग्गवग्गा वग्गा चत्तारि छग्घणा कंडं। चउअन्तरवुड्ढीए हेट्ठट्ठाणप्परूवणया ॥ ५४ ॥

(स्वो०)—कण्डकस्याष्ट वर्गवर्गाश्चत्वारो वर्गाः कण्डकस्य षट् घनाः कण्डकं चतुरन्तरवृद्धौ स्थानानां भवन्ति। किमुक्तं भवति? प्रथमादनन्तगुणस्थानादधः कियन्त्यनन्तभागवृद्धिस्थानानि? कण्डकवर्गवर्गोऽष्टगुणः, वर्गश्चतुर्गुणः,घनः षड्गुणः, कण्डकं च चतुरन्तरवृद्धौ स्थानानां भवन्ति। इयमधःस्थानप्ररूपणेति गाथार्थः ॥ ५४ ॥

(मलय०)—कृता त्र्यन्तरिता मार्गणा। सम्प्रति चतुरन्तरिता क्रियते—प्रथमादनन्तगुणवृद्धात्स्थानादधः कियन्ति अनन्तभागवृद्धानि स्थानानि? उच्यते—अष्टौ कण्डकवर्गवर्गाः, षट् कण्डकघनाः, चत्वारश्च कण्डकवर्गाः, एकं च कण्डकम्। कथम्? इति चेद्, ॥ ४७ ॥

उच्यते—इह कण्डकमसत्कल्पनया सुखावबोधाय चतुःसंख्यात्मकं परिकल्प्यते, तत्र प्रथमादनन्तगुणवृद्धात्स्थानादध एकैकस्यासंख्येयगुणवृद्धात् स्थानादध एकैकस्य संख्येयगुणवृद्धस्य स्थानस्याधः प्रत्येकमनन्तभागवृद्धानां स्थानानामेकः कण्डकवर्गवर्गः, त्रयः कण्डकघना, त्रयश्च कण्डकवर्गाः, एकं च कण्डकं प्राप्यते, असंख्येयगुणवृद्धानि च स्थानानि कण्डकमात्राणि ततः कण्डकवर्गवर्गा असंख्येया कण्डकमात्राः प्राप्यन्ते, तथापि कण्डकमिह चतुःसंख्यात्मकं परिकल्पितमिति चत्वारः कण्डकवर्गवर्गा लब्धाः, त्रयश्च कण्डकघनाश्चतुःसंख्यात्मकेन कण्डकेन गुणिताः सन्तो जाता द्वादश, कण्डकघनश्चतुष्केन गुणितः कण्डकवर्गवर्गो भवति, ततोऽत्र लब्धास्त्रयः कण्डकवर्गवर्गाः, सर्वसंख्यया जाताः सप्तकण्डकवर्गवर्गाः, त्रयः कण्डकवर्गाः कण्डकेन चतुःसंख्यात्मकेन गुणिता जाता द्वादशकण्डकवर्गाः, कण्डकवर्गश्च कण्डकेन गुणितः कण्डकघनो भवति, यथा चतुष्कवर्गः षोडशकश्चतुष्केन गुणितश्चतुःषष्ट्यात्मकश्चतुष्कघनः, ततो लब्धास्त्रयः कण्डकघनाः, कण्डकं च कण्डकेन गुणितं कण्डकवर्गः, असंख्येयगुणवृद्धस्थानकण्डकाधोपरि एकः कण्डकवर्गवर्गः, त्रयः कण्डकघनाः, त्रयश्च कण्डकवर्गाः, एकं च कण्डकं प्राप्यते; तच्च पूर्वराशौ प्रक्षिप्यते, ततोऽष्टौ कण्डकवर्गवर्गाः, षट् कण्डकघनाः, चत्वारश्च कण्डकवर्गाः, एकं च कण्डकं भवति। तथा चाह—अष्टौ कण्डकस्य वर्गवर्गाः, चत्वारः कण्डकवर्गाः, षट् कण्डकघनाः, एकं च कण्डकं चतुरन्तरितायां वृद्धौ स्थानानां भवन्ति ॥ ५४ ॥

परिणामपच्चयाणं एसा णेहस्स छव्विहा वुड्ढी । हाणी व कुणंति जिया आवलिभाग असंखेज्जा ॥५५॥

अंतमुहुत्तं चरिमा उ दो वि समयं तु पुण जहण्णेणं । जवमज्झविहाणेणं एत्थ विगप्पा चउट्ठिइया ॥५६॥

(स्वो०)—परिणामप्रत्ययत एपाऽनन्तरोक्ता स्नेहस्य—अनुभागस्य षड्विधा वृद्धिर्भवति हानिर्वा एवमेव कुर्वन्ति। कियन्तं कालं? आवलिकाऽसंख्येयभागमात्रं निरन्तरां हानिं वृद्धिं वा जीवाः कुर्वन्तीति गाथार्थः। विशेषमाह—अन्तर्मुहूर्त्तमात्रं कालमुत्कृष्टतो भवतः पश्चिमे द्वे अपि अनन्तगुणवृद्धिहानिसंज्ञे। शेपा उभयत्र पञ्चाप्यावलिकाऽसंख्येयभागमात्रं कालं वर्द्धन्ते हीयन्ते वा, जघन्यतः समयमेकं सर्वा वर्द्धन्ते हीयन्ते वा। गता वृद्धिकालप्ररूपणा। यवमध्यविधानं योगस्थानेपूक्तम्। केपाञ्चिदनुभागस्थानानां चत्वारः समया उत्कृष्टोऽवस्थानकालः, केपाञ्चित् पञ्च पट् सप्ताष्टौ, पुनः सप्तपट्पञ्चचतुःत्रिद्विसमयाः। एकैकस्थानेऽसंख्येयलोकाकाशप्रदेशमात्राण्यनुभागबन्धाध्यवसायस्थानानि भवन्ति। जघन्यस्थितिः सर्वेष्वेकसमयः। अत्र द्वौ विकल्पौ अनन्तगुणवृद्धिहान्यात्मकौ अष्टसमयस्थितिकौ। किमुक्तं भवति? निरन्तराणि अनन्तगुणवृद्ध्या (अष्टसामयिकानि) असंख्येयलोकप्रमाणानि स्थानानि भवन्ति, तत्स्थानेभ्यः सप्तसामयिकान्युभयत्रासंख्येयगुणानि, एवं पट्पञ्चचतुस्त्रिद्विसमयस्थितिकानि अप्यसंख्येयगुणानि यथापरं जघन्योत्कृष्टतराणीति गाथार्थः, उक्ता यवमध्यप्ररूपणा ॥ ५५–५६ ॥

(मलय०)–इयमधस्तनस्थानप्ररूपणा कृता, सम्प्रति वृद्धिस्थानप्ररूपणा क्रियते—'परिणामप्रत्ययतो'—जीवपरिणामवशत एपा अनन्तरोक्ता स्नेहस्य षड्विधा वृद्धिर्हानिर्वा प्रवर्त्तते, नान्यथा। तत्र कां वृद्धिं हानिं वा कियन्तं कालं यावन्निरन्तरं जीवाः कुर्वन्ति इत्येतन्निरूप्यते—तत्रानन्तगुणवृद्धिमनन्तगुणहानिं च मुक्त्वा शेपाः पञ्चापि वृद्धीर्हानीश्चोत्कर्षत आवलिकाऽसंख्येयभागमात्रं यावन्निरन्तरं जीवाः कुर्वन्ति। चरमे च द्वे वृद्धिहानी अनन्तगुणलक्षणे अन्तर्मुहूर्त्तं कालम्। जघन्यतः पुनः पडपि वृद्धीर्हानीर्वा समयमात्रम्—एकं समयं यावत्कुर्वन्ति। कृता वृद्धिकालप्ररूपणा। सम्प्रत्येतेष्वेवानुभागस्थानेपु बन्धमाश्रित्यावस्थाने कालश्चिन्त्यते—तत्र प्रथमादनुभागस्थाना-

दारभ्य असङ्ख्येयलोकाकाशप्रदेशप्रमाणानि अनुभागस्थानान्युत्कर्षतश्चतुरः समयान् यावन्निरन्तरं बन्धमायान्ति न च पञ्चममपि समयम्। तेभ्यः पराणि असंख्येयलोकाकाशप्रदेशप्रमाणानि पञ्च समयान् यावत्, तेभ्योऽप्यपराणि असंख्येयलोकाकाशप्रदेशप्रमाणानि षट् समयान्, तेभ्योऽपि पराणि असङ्ख्येयलोकाकाशप्रदेशप्रमाणानि सप्त समयान्, तेभ्योऽपि पराणि असङ्ख्येयलोकाकाशप्रदेशप्रमाणानि अष्टौ समयान्, तेभ्यः पराणि पुनरसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि सप्त समयान् यावत् निरन्तरमुत्कर्षतो बन्धमायान्ति, तेभ्योऽपि पराण्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि षट् समयान्, तेभ्योऽपि पराण्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि पञ्च समयान्, तेभ्योऽपि पराण्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि चतुरः समयान्, तेभ्योऽपि पराण्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि त्रीन् समयान्, तेभ्योऽपि पराण्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि द्वौ समयौ यावत्। जघन्यतस्तु सर्वाण्यपि समयमात्रम्। एषा समयप्ररूपणा। सम्प्रति यवमध्यप्ररूपणा क्रियते—अष्टसामयिकानि स्थानानि यवमध्यमित्युच्यन्ते। यथा हि यवमध्यं पृथुलम्, उभयतः पार्श्वे च हीने हीनतरे तथाऽत्रापि कालतः पृथुलानि अष्टसामयिकानि, उभयपार्श्ववर्तीनि च सप्तसामयिकादीनि कालतो हीनानि हीनतराणि, ततोऽष्टसामयिकानि यवस्य मध्यमिव मध्यम्। तानि चानन्तगुणवृद्धौ अनन्तगुणहानौ च प्राप्यन्ते, तथाहि—सप्तसामयिकानां चरमादनुभागबन्धस्थानात्प्रथममष्टसामयिकं स्थानमनन्तगुणवृद्धम्, यदि प्रथममनन्तगुणवृद्धं ततः शेषाणि तदपेक्षया सुतरामनन्तगुणवृद्धानि भवन्ति। तथा अष्टसामयिकानां चरमादनुभागबन्धस्थानादुपरितनं प्रथमं सप्तसामयिकं स्थानमनन्तगुणवृद्धम्, ततस्तदपेक्षया पाश्चात्यानि सर्वाण्यप्यष्टसामयिकान्यनुभागबन्धस्थानान्यनन्तगुणहीनानि। एवं शेषाण्यपि सप्तसामयिकादीनि स्थानान्यनन्तगुणवृद्धौ अनन्तगुणहानौ च भावनीयानि। आद्यानि पुनश्चतुःसामयिकानि स्थानान्यनन्तगुणहानावेव, तथाहि—पञ्चसामयिकमनुभागबन्ध-

स्थानं चतुःसामयिकचरमानुभागबन्धस्थानापेक्षयाऽनन्तगुणवृद्धं ततस्तदपेक्षया पाश्चात्यानि चतुःसामयिकानि अनन्तगुणहानावेव प्राप्यन्ते। द्विसामयिकानि त्वनन्तगुणवृद्धावेव, तथाहि–त्रिसामयिकानां चरमादनुभागबन्धस्थानादाद्यं द्विसामयिकमनुभागबन्धस्थानमनन्तगुणवृद्धं, ततस्तदपेक्षया सर्वाण्यप्यनन्तगुणवृद्धान्येव। एतदेव किंचिदाह–'यवमध्यविधानेन'–यवमध्यकरणेन, येन प्रकारेण मध्यभागो यवमध्यकल्पो भवति–तेन प्रकारेणेत्यर्थः, 'अत्र'–एष्वनुभागस्थानेषु 'विकल्पाः–' भेदाश्चतुःसामयिकत्वादयो 'बहुस्थितिकाः–' यवमध्यं यावत्क्रमशो बहुबहुतरस्थितिकाः, परतः क्रमशो हीनहीनतरस्थितिका वेदितव्याः, ते च तथैव भाविताः। एतेन च समयप्ररूपणा कृता द्रष्टव्या। सम्प्रति चतुःसामयिकादीनां स्थानानामल्पबहुत्वमुच्यते–सर्वस्तोकान्यष्टसामयिकानि स्थानानि अतिचिरकालबन्धयोग्यानि हि स्थानानि स्तोकान्येव प्राप्यन्ते। तेभ्योऽसंख्येयगुणानि उभयपार्श्ववर्तीनि सप्तसामयिकानि, स्वस्थाने तु द्वयान्यपि परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि उभयपार्श्ववर्त्तीनि षट्सामयिकानि, अल्पतरबन्धकालविषयत्वात्, स्वस्थाने तु द्वयान्यपि परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि उभयपार्श्ववर्त्तीनि पञ्चसामयिकानि, स्वस्थाने तु परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि उभयपार्श्ववर्त्तीनि चतुःसामयिकानि, स्वस्थाने तु द्वयान्यपि परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि त्रिसामयिकानि, तेभ्योऽप्यसंख्येयगुणानि द्विसामयिकानि॥ ५५–५६॥

**सुहुमागणिपविसंता चिट्ठंता तेसि कायठितिकालो। कमसो असंखगुणिया तत्तो अणुभागठाणाइं॥५७॥** ॥ ४९ ॥

(स्वो०)—सूक्ष्माग्निकाये प्रतिसमयमसंख्येया जीवाः 'प्रविशन्ति'–उत्पद्यन्ते, तेभ्योऽसंख्येयगुणाः सूक्ष्माग्निकाये तिष्ठन्ति, तेभ्योऽपि तत्कायस्थितिकालोऽसंख्येयगुणः, तस्मादप्यसंख्येयगुणान्यनुभागबन्धाध्यवसायस्थानानि भवन्तीति गाथार्थः॥५७॥

(मलय०)–सम्प्रति सर्वेषामनुभागस्थानानां समुदायमधिकृत्य विशेषसंख्या निरूपणार्थमाह—सूक्ष्माग्नि ये प्रतिसमयं प्रविशन्ति, ये च अग्निकाये तिष्ठन्ति यच्च तेषामग्निकायिकानां कायस्थितिकालः, एते क्रमशोऽसंख्येयगुणाः, 'तत'–तेभ्योऽप्यनुभागबन्धस्थानानि असंख्येयगुणानि। इयमत्र भावना–ये एकस्मिन् समये सूक्ष्माग्निकायेषु प्रविशन्ति–उत्पद्यन्ते ते स्तोकाः, ते चासंख्येयलोकाकाशप्रदेशप्रमाणाः। तेभ्योऽपि ये अग्निकायत्वेनावतिष्ठन्ते ते असंख्येयगुणाः, तेभ्योऽपि अग्निकायस्थितिकालोऽसंख्येयगुणः, तेभ्योऽप्यनुभागबन्धस्थानान्यसंख्येयगुणानि ॥ ५७ ॥

कलिदावरतेयकडजुम्मसण्णिया होंति रासिणो कमसो। एगाइसेसगा चउहियम्मि कडजुम्म इह सव्वे ॥५८॥

(मो०)—कलिद्वापरत्रेताकृतयुग्मसंज्ञा यथाक्रमं राशयो भवन्ति। चतुर्भिर्भक्ते एकशेषः कलिसंज्ञो, द्विशेषो द्वापरसंज्ञः, त्रिशेषः त्रेतासंज्ञः, निःशेषः कृतयुग्मसंज्ञः। अविभागवर्गणास्पर्धकस्थानकण्डकस्थानानि सर्वेऽपि कृतयुग्मसंज्ञा भवन्तीति गाथार्थः, उक्ता ओजादिप्ररूपणा ॥ ५८ ॥

(मलय०)–सम्प्रत्योजोयुग्मप्ररूपणार्थमाह—इह ओजो विषमं, समं युग्मं, तत्र ये राशयश्चतुर्भिर्भागे हृते सति 'एगाइसेसगा'–एकद्वित्रिचतुःशेषका भवन्ति ते 'कमसः'–क्रमेण कलिद्वापरत्रेताकृतयुग्मसंज्ञा भवन्ति। इयमत्र भावना–ये विवक्षिता राशयश्चत्वारः स्थाप्यन्ते, तेषां चतुर्भिर्भागो ह्रियते, भागे च हृते सति यस्यैकः शेषो भवति स च राशिः पूर्वपुरुषपरिभाषया कल्योज उच्यते, यथा त्रयोदश। द्वौ शेषौ स द्वापरयुग्मं, यथा चतुर्दश। यस्य त्रयः शेषाः स त्रेतौजो, यथा पञ्चदश। यः पुनः निर्लेप एव भवति, न किञ्चित्पश्चादवतिष्ठते, स कृतयुग्मः, यथा षोडश। उक्तं च–"चउरग्ग रासिजुम्मा, ओजसर कडजुम्ममित्थ कलिओजो। तेयग तेओजो जुम्म दावरसेसे दु विसमया॥"

तत्राविभागवर्गणादयो याद्यग्राशिरूपास्ताद्यग्राशिरूपानाह—'कडजुम्म इह सव्वे'। इह—अस्मिन् अनुभागे सर्वे—अविभागवर्गणास्पर्द्धकस्थानकण्डकराशयः कृतयुग्माः—कृतयुगसंज्ञा वेदितव्याः ॥ ५८ ॥



**सव्वत्थोवा ठाणा अणंतगुणणाएँ जे उ गच्छंति । तत्तो असंखगुणियाऽणंतरवुड्डीएँ जह हेट्ठा ॥ ५९ ॥**

(स्वो०)—सर्वस्तोकानि स्थानान्यनन्तगुणनया यानि गच्छन्ति, तेभ्योऽप्यसंख्येयगुणान्यसंख्येयगुणस्थानानि, को गुणकारः ? कण्डकगुणः कण्डकप्रक्षेपः, कस्मात् ? एकैकस्यानन्तगुणस्थानस्याधोऽसंख्येयगुणस्थानानि कण्डकमात्राणि भवन्ति तेन कण्डकगुणकारः, उपरितनकण्डकप्रक्षेपः, यस्मात्प्रक्षेपकण्डकस्योपरि नास्ति अनन्तगुणवृद्धस्थानम्। एवमसंख्येयगुणेभ्यः संख्येयगुणानि स्थानान्यसंख्येयगुणानि, तेभ्योऽपि संख्येयभागवृद्धानि, तेभ्योऽपि असंख्येयभागवृद्धानि स्थानानि, तेभ्योऽपि अनन्तभागवृद्धानि स्थानान्यसंख्येयगुणानि भवन्ति। तुशब्दात् पर्यवसानस्थानमनन्तगुणवृद्धं ज्ञेयमिति गाथार्थः, उक्तं पर्यवसानद्वारमनन्तरोपथनिधा च ॥ ५९ ॥

(मलय०)—कृता ओजोयुग्मप्ररूपणा। सम्प्रति पर्यवसानप्ररूपणा क्रियते—अनन्तगुणवृद्धकण्डकस्योपरि पञ्चवृद्ध्यात्मकानि स्थानानि सर्वाण्यपि गम्यते, केवलमेकमनन्तगुणवृद्धं स्थानं न प्राप्यते, षट्स्थानकस्य परिसमाप्तत्वात्, अतस्तदेव सर्वान्तिमं स्थानं षट्स्थानकस्य पर्यवसानम् । कृता पर्यवसानप्ररूपणा, संप्रत्यल्पबहुत्वप्ररूपणा कर्त्तव्या—सा च द्विधा, अनन्तरोपनिधया परंपरोपनिधया च, तत्र प्रथमतोऽनन्तरोपनिधया तां चिकीर्षुराह—यानि स्थानानि अनन्तगुणनया गच्छन्ति,तानि सर्वस्तोकानि । प्राकृतत्वाच्च सूत्रे पुल्लिङ्गनिर्देशः । ततोऽनन्तरवृद्ध्या अनन्तरामनन्तरां वृद्धिमाश्रित्य यथा यथाऽधस्तनानि स्थानानि, तथा तथा असंख्येयगुणानि वक्तव्यानि । ॥ ५० ॥
इयमत्र भावना—सर्वस्तोकानि अनन्तगुणवृद्धानि स्थानानि, कण्डकमात्रत्वात्तेषां, तेभ्योऽसंख्येयगुणवृद्धानि स्थानान्यसंख्येयगुणानि,

को गुणकारो ? भण्यते—कण्डमेककंडकप्रक्षेपम । कथमेतदवसीयते इति चेत्, उच्यते—इह यस्मादेकैकस्यानस्थानन्तगुणवृद्धस्य स्थानस्याधस्तादसंख्येयगुणवृद्धानि स्थानानि कण्डकमात्राणि माप्यन्ते तेन कण्डककगुणकार', अनन्तगुणवृद्धस्थानकण्डकस्योपरि कण्डकमात्राणि असंख्येयगुणवृद्धानि माप्यन्ते न त्वनन्तगुणवृद्धं स्थानं, तेनोपरितनकण्डकस्याधिकस्य प्रक्षेपः । तेभ्योऽसंख्येयगुणवृद्धेभ्यः स्थानेभ्यः संख्येयगुणवृद्धानि स्थानानि असंख्येयगुणानि, तेभ्योऽपि सख्येयभागाधिकानि स्थानान्यसंख्येयगुणानि, तेभ्योऽप्यसंख्येयभागाधिकानि स्थानानि असंख्येयगुणानि, तेभ्योऽप्यनन्तभागवृद्धानि स्थानानि असख्येयगुणानि, गुणकारश्च सर्वत्रापि कण्डकम्, उपरि च एककण्डकप्रक्षेपः । तथाहि—एकैकस्य असंख्येयगुणवृद्धस्य स्थानस्याधस्तात्संख्येयगुणवृद्धानि स्थानानि कण्डकमात्राणि प्राप्यन्ते, तेन कण्डकगुणकारः । असंख्येयगुणवृद्धकण्डकस्योपरि कण्डकमात्राणि संख्येयगुणवृद्धानि स्थानानि माप्यन्ते तदनन्तरं त्वनन्तगुणवृद्धमेव स्थानं नत्वसंख्येयगुणवृद्धं, प्रथमाद्यानन्तगुणवृद्धात्स्थानादर्वाक् असख्येयगुणवृद्धस्थानापेक्षया संख्येयगुणवृद्धानि स्थानानि चिन्त्यन्ते न तत ऊर्ध्वमपि,तेनोपरि एकस्यैव कण्डकस्य प्रक्षेपः । एवं संख्येयभागवृद्धादीनामपि स्थानानामसंख्येयगुणत्वे गुणकारभावना द्रष्टव्या ॥५९॥

हुंति परंपरवुड्ढीए थोवाणतभागवुड्ढी जे । अस्सखसखगुणिया एक दो दो असखगुणा ॥ ६० ॥

(स्वो०)—भवन्ति परम्परवृद्धौ स्तोकान्यनन्तभागोत्तरस्थानानि । तेभ्योऽसंख्येयभागोत्तराण्यसंख्येयगुणानि। कस्मात् ? अनन्तभागवृद्धा कण्डकं गत्वाऽसंख्येयभागवृद्धिस्थानं भवति, यदीदमेवासंख्येयभागाधिकं ततस्तदुपरितनानि सुतरामसंख्येयभागोत्तराणि भवन्ति, एवमुपर्युपरिस्थानान्यसंख्येयभागाभ्यधिकानि विशेषतो भवन्ति, यावत् संख्येयभागाभ्यधिकं स्थान नोत्तिष्ठति तावत्तदन्तराले सर्वाण्यप्यसंख्येयभागवृद्धानि, तस्मादनन्तभागवृद्धेभ्यः असंख्येयभागवृद्धानि असख्येयगुणानि । एतदेकं वृद्धिस्थानमसंख्येयगुणं पूर्व-

स्थानाद् गतम्। अस्मात् संख्येयभागवृद्धिस्थानानि संख्येयगुणानि। कस्मात्? उच्यते—संख्येयभागवृद्धिस्थानादधःस्थानमधिकृत्य संख्येयभागवृद्धिरुपरितनेष्वभिधीयते, यतस्तदुपरिस्थानान्यनन्तभागासंख्येयभागसंख्येयभागवृद्धानि त्रीण्यपि संख्येयभागवृद्धित्वं भजन्ते यावद् द्वितीयं संख्येयभागवृद्धिस्थानं नायाति, द्वितीये प्राप्ते द्वाभ्यां संख्येयभागाभ्यां वर्द्धते यावत्तृतीयं नायाति, एवं त्रिचतुरादिस्थानेष्वपि वक्तव्यं, यावदुत्कृष्टं संख्येयभागवृद्धिस्थानं, चरमादसंख्येयभागवृद्धिस्थानादारभ्य यावदन्तिमं संख्येयभागवृद्धिस्थानं नोत्तिष्ठति तावत्तयोरन्तराले सर्वाण्यपि संख्येयभागवृद्धिस्थानानि भवन्ति एकहीनानि, यत उत्कृष्टसंख्येयभागाधिकं स्थानं प्रथमात् संख्येयगुणं भवति। असंख्येयभागवृद्धिस्थानेषु यावन्मात्रमेकमन्तरं तादृग्भूतान्यन्तराण्युत्कृष्टसंख्येयतुल्यानीति कृत्वा असंख्येयभागवृद्धिस्थानेभ्यः संख्येयभागवृद्धानि स्थानानि संख्येयगुणानि भवन्ति। एवं द्वितीयवृद्धेस्तृतीयवृद्धिः संख्येयगुणा। संख्येयभागवृद्धिस्थानेभ्यः संख्येयगुण(वृद्ध)स्थानानि संख्येयगुणानि भवन्ति। कस्मात्? उच्यते—संख्येयभागाभ्यधिकात् स्थानादुत्कृष्टसंख्येयतुल्यान्येकस्मिन्नन्तरे संख्येयभागवृद्धिस्थानान्युत्थितानि तदन्तस्थानं द्विगुणं साधिकं भवति, भूयस्तावन्ति स्थानानि गत्वा त्रिगुणं साधिकं भवति, एवं चतुर्गुणं, एवमुत्कृष्टसंख्येयतुल्यानि द्विगुणवृद्धिस्थानान्यन्तरेषु लब्धानि, तदन्तिमं संख्येयभागाभ्यधिकं स्थानं जघन्यासंख्येयगुणकगुणं भवति, तस्मात् संख्येयगुणस्थानानि संख्येयभागवृद्धिस्थानेभ्यः संख्येयगुणानि भवन्ति, यतः संख्येयभागवृद्धिसंख्येयगुणवृद्धिस्थानानि द्वे अपि स्वपूर्वस्थानेभ्यः संख्येयगुणानि भवन्ति। असंख्येयगुणानन्तगुणस्थानानि यथा परं द्वे अप्यसंख्येयगुणे भवतः। संख्येयगुणस्थानेभ्योऽसंख्येयगुणस्थानानि असंख्येयगुणानि भवन्ति, यतः—प्रथमसंख्येयगुणमादौ कृत्वा यान्यनन्तभागवृद्धानि असंख्येयभागवृद्धानि संख्येयभागवृद्धानि संख्येयगुणवृद्धानि असंख्येयगुणवृद्धानि एतानि सर्वाण्यपि असंख्येयगुणानि भवन्ति पूर्वस्थानादिति अ-

संख्येयगुणानि सख्येयगुणेभ्यः। एवमनन्तगुणान्यप्यसख्येयगुणानि भवन्ति। एकमसंख्येयगुणं द्वे संख्येयगुणे द्वे असङ्ख्येयगुणे सपूर्वस्थानादिति गाथार्थः॥ ६०॥

(मलय०)–तदेवं कृता अनन्तरोपनिधया अल्पबहुत्वप्ररूपणा, सम्प्रति परम्परोपनिधया तां कुर्वन्नाह—परम्परावृद्धौ चिन्त्यमानायां यानि अनन्तभागवृद्धानि स्थानानि तानि सर्वस्तोकानि भवन्ति, तत एकं वृद्धिस्थानमसंख्येयभागवृद्धिरूपमसंख्येयगुणम्, अत्र जातावेकवचनम्, ततोऽयमर्थः—अनन्तभागवृद्धेभ्यः स्थानेभ्योऽसख्येयगुणान्यसंख्येयभागवृद्धानि स्थानानि। ततो द्वे वृद्धिस्थाने–संख्येयभागवृद्धसंख्येयगुणवृद्धरूपे यथाक्रमं सख्येयगुणे। ततोऽपि द्वे वृद्धिस्थाने असंख्येयगुणवृद्धानन्तगुणवृद्धरूपे यथाक्रममसंख्येयगुणे। इयमत्र भावना–इह सर्वस्तोकानि अनन्तभागवृद्धानि स्थानानि, यत आद्यादनुभागबन्धस्थानादारभ्यानन्तभागवृद्धानि स्थानानि कण्डकमात्राण्येव प्राप्यन्ते नाधिकानि। तेभ्योऽप्यसंख्येयभागवृद्धानि स्थानानि असख्येयगुणानि। कथमिति चेद्, उच्यते–अनन्तभागवृद्धकण्डकादुपरितनं प्रथममसंख्येयभागवृद्धं स्थानं यदि पाश्चात्यकण्डकसत्कचरमस्थानापेक्षया असख्येयेन भागेनाधिकं तत उपरितनमनन्तभागवृद्धं स्थानं तदपेक्षया सुतरामसंख्येयभागवृद्धं भवति। अनन्तभागवृद्धं हि तद् प्रथमासंख्येयभागवृद्धस्थानापेक्षया, अनन्तभागवृद्धकण्डकसत्कचरमस्थानापेक्षया त्वसंख्येयभागाधिकमेव। तत उपरितनानि स्थानानि विशेषतो विशेषतरतोऽसंख्येयभागाधिकानि तावद् द्रष्टव्यानि यावत्संख्येयभागाधिकं स्थानं न भवति। तदेव–यतः प्रथमादसंख्येयभागवृद्धात्स्थानादारभ्य प्रथमात्संख्येयभागवृद्धात्स्थानादर्वाक् अपान्तराले यानि स्थानानि तानि सर्वाण्यप्यसंख्येयभागवृद्धानि प्राप्यन्ते। तस्मादनन्तभागवृद्धेभ्यः स्थानेभ्योऽप्यसंख्येयभागवृद्धानि स्थानान्यसंख्येयगुणानि। तेभ्योऽपि संख्येयभागवृद्धानि स्थानानि संख्येयगुणानि। कुत एतदवसी-

यते ? इति चेदु, उच्यते-प्रथमे संख्येयभागवृद्धे स्थाने पाश्चात्यमनन्तरं स्थानमधिकृत्य संख्येयभागवृद्धिः प्राप्यते, अन्यथा तस्य संख्येयभागवृद्धत्वस्यैवाऽयोगात् । तद्यदि प्रथमेऽपि संख्येयभागवृद्धे स्थाने संख्येयभागवृद्धिः प्राप्ता तर्हि ततः प्रथमात्स्थानादुत्तरेषामनन्तभागवृद्धाऽसंख्येयभागवृद्धानां सुतरां संख्येयभागवृद्धिर्भवति, यतोऽनन्तभागवृद्धिरसंख्येयभागवृद्धिर्वा पूर्वपूर्वानन्तरस्थानापेक्षया, प्रथमात्संख्येयभागवृद्धात्स्थानात् प्राक्तनमनन्तरं स्थानमधिकृत्य पुनः सर्वाण्यपि अनन्तभागवृद्धानि असंख्येयभागवृद्धानि वा स्थानानि यथोत्तरं सविशेषं सविशेषतरं संख्येयभागवृद्धानि भवन्ति, सविशेषमविशेषतरसंख्येयभागवृद्धिश्च तावद्वक्तव्या यावन्मौलं द्वितीयं संख्येयभागाधिकं स्थानं न भवति, द्वितीयं पुनर्मौलं संख्येयभागाधिकं स्थानं द्वाभ्यां सातिरेकाभ्यां संख्येयभागाभ्यामधिकमवगन्तव्यम्, तृतीयं त्रिभिः सातिरेकैः, चतुर्थं चतुर्भिः सातिरेकैः, एवं तावद्वाच्यं यावदुत्कृष्टसंख्येयतुल्यानि अन्तरान्तराभावीनि मूलानि संख्येयभागवृद्धानि स्थानानि भवन्ति, एतावति चान्तराले यावन्ति स्थानानि तावन्ति सर्वाण्यपि संख्येयभागवृद्धानि किलैकेन सर्वान्तिमेन स्थानेन न्यूनानि द्रष्टव्यानि, यत उत्कृष्टसंख्याततमं संख्येयभागवृद्धं स्थानं संख्येयगुणं भवति इति कृत्वा, ततो यावन्ति असंख्येयभागवृद्धानि स्थानानि अनन्तरमुक्तानि तावन्ति एकैकस्मिन् अन्तरान्तराभाविनां संख्येयभागवृद्धानां स्थानानामन्तरे प्राप्यन्ते, तानि चान्तरान्तराभावीनि संख्येयभागवृद्धानि स्थानानि प्रस्तुतनिंतायामुत्कृष्टसंख्यातकतुल्यानि गृह्यन्ते, केवलमेकमुत्कृष्टसंख्याततमं स्थानं न गृह्यते, ततोऽसंख्येयभागवृद्धेभ्यः स्थानेभ्यः संख्येयभागवृद्धानि स्थानानि संख्येयगुणान्येव भवन्ति । तेभ्योऽपि संख्येयगुणवृद्धानि स्थानानि संख्येयगुणानि। कथमिति चेदु, उच्यते-प्रथमात्संख्येयभागवृद्धात्स्थानात्प्राक्तनं यदनन्तरं स्थानं तदधिकृत्योत्तराणि अन्तरान्तराभावीनि मौलानि संख्येयभागवृद्धानि स्थानानि उत्कृष्टसंख्यातकतुल्यानि गत्वा चरमं स्थानं द्विगुणं साधिकमुपलब्धं, ततः पु-

नरपि च तावन्मात्राण्येव स्थानानि गत्वा परम स्थान सातिरेक त्रिगुणं, एवमेव चतुर्गुणं, एवं तावद्वाच्यं यावदुत्कृष्टं संख्येयगुणं भवति। ततः पुनरपि उत्कृष्टसंख्यातकतुल्यानि स्थानानि गत्वा परमं यदेकेन गुणेन वृद्धं भवति तज्जघन्याऽसंख्येयगुणं भवति, तस्मात्संख्येय भागवृद्धेभ्यः स्थानेभ्यः संख्येयगुणवृद्धानि स्थानानि संख्येयगुणान्येव भवन्ति। तेभ्योऽप्यसंख्येयगुणवृद्धानि स्थानानि असंख्येयगुणानि, कथमिति चेत्, उच्यते—इह यस्मात्प्रागुक्तादनन्तराज्जघन्याऽसंख्येयगुणात्स्थानात्पराणि सर्वाण्यपि अनन्तभागवृद्धाऽसंख्येयभागवृद्ध-संख्येयभागवृद्धसंख्येयगुणवृद्धानि स्थानानि असंख्येयगुणानि प्राप्यन्ते, ततः संख्येयगुणवृद्धेभ्यः स्थानेभ्योऽसंख्येयगुणवृद्धानि स्था नानि असंख्येयगुणानि भवन्ति। तेभ्योऽप्यनन्तगुणवृद्धानि स्थानानि असंख्येयगुणानि। कथमिति चेत्, उच्यते—इह प्रथमादनन्त-गुणवृद्धात्स्थानादारभ्य यावत् षट्स्थानकपरिसमाप्तिस्तावत्सर्वाण्यपि स्थानानि अनन्तगुणवृद्धानि। तथाहि—यदि प्रथममनन्तगुणवृद्धं स्थानं पाश्चात्यमनन्तरं स्थानमधिकृत्यानन्तगुणाधिकं जातं तत उपराणि अनन्तभागवृद्धादीनि स्थानानि तदपेक्षया सुतरामनन्तगुणवृ-द्धानि भवन्ति। यावन्ति च स्थानानि प्रागतिक्रान्तानि तावन्ति एकैकस्मिन् अनन्तगुणवृद्धानामन्तरान्तराभाविनां स्थानानामन्तरे भवन्ति, कण्डकमात्राणि च तानि अन्तराणि, ततोऽसंख्येयगुणवृद्धेभ्यः स्थानेभ्योऽनन्तगुणवृद्धानि स्थानान्यसंख्येयगुणानि भवन्ति ॥ ६० ॥

उक्तान्यनुभागबन्धाध्यवसायस्थानानि, साम्प्रत यद्विधिना तेषु जीवाः तिष्ठन्ति तमाह—

एगट्ठाणपमाण अंतरठाणा निरन्तरा ठाणा। कालो वुड्ढी जवमज्झफासणा अप्पबहु दारा ॥ ६१ ॥

(स्वो०)—द्वारगाथेयम्। एकस्मिन् स्थाने जीवप्रमाणप्ररूपणा, अन्तरस्थानप्ररूपणा, निरन्तरस्थानप्ररूपणा, स्थितिकालप्ररूपणा, वृ-द्धिप्ररूपणा, यवमध्यप्ररूपणा, स्पर्शनप्ररूपणा, अल्पबहुत्वप्ररूपणा कार्येति गाथार्थः ॥ ६१ ॥

(मलय०)–तदेवं कृताल्पबहुत्वप्ररूपणा, तत्करणाच्चोक्तानि अनुभागबन्धस्थानानि, सांप्रतमेतेष्वनुभागबन्धस्थानेषु निष्पादकत्वेन यथा जीवा वर्त्तन्ते तथा प्ररूपणा कर्त्तव्या। तत्र चाष्टावनुयोगद्वाराणि, तान्येवाह—एकस्थानप्रमाणं–एकैकस्मिन् स्थाने जीवप्रमाणं वक्तव्यम्, ततोऽन्तरस्थानप्ररूपणा, निरन्तरस्थानप्ररूपणा, ततोऽनन्तरं 'कालो' त्ति नानाजीवकालप्रमाणप्ररूपणा, ततो 'वुड्ढि' त्ति–वृद्धिप्ररूपणा, ततो यवमध्यप्ररूपणा, तदनन्तरं स्पर्शनाप्ररूपणा, ततोऽल्पबहुत्वप्ररूपणा चेत्यष्टौ द्वाराणि ॥ ६१ ॥

**एक्केक्कंमि असंखा तसेयराणंतया सपाउग्गे। एगाइ जाव आवलिअसंखभागो तसा ठाणे ॥ ६२ ॥**

(स्वो०)—एकैकस्मिन्नध्यवसायस्थाने एकाद्यसंख्याः–एकादयो यावदावलिकाऽसंख्येयभागमात्रास्त्रसजीवा स्वप्रायोग्ये भवन्ति। 'इतराः'–स्थावरा एकैकाध्यवसायस्थाने स्वप्रायोग्येऽनन्ता जीवास्तिष्ठन्तीति गाथार्थः ॥ ६२ ॥ द्वारम्।

(मलय०)–तत्र 'यथाद्देशं निर्देशः' इति न्यायात्प्रथमत एकस्थानप्रमाणप्ररूपणार्थमाह—एकैकस्मिन् स्वप्रायोग्ये त्रसानां बन्धं प्रति प्रायोग्ये अनुभागबन्धस्थाने त्रसा असंख्येया भवन्ति। इतरे स्थावराः स्वप्रायोग्ये स्थावराणां बन्धं प्रति प्रायोग्ये अनुभागबन्धस्थाने अनन्ता भवन्ति। त्रसा असंख्येया भवन्ति, तद्व्याचष्टे–'एगाइ' इत्यादि। जघन्येन एकादयः–एको द्वौ वा, उत्कर्षत आवलिकाया असंख्यभागः–आवलिकाया असंख्येयभागगतसमयप्रमाणास्त्रसाः स्थाने–एकस्मिन् स्थाने भवन्ति ॥ ६२ ॥

**तसजुत्तठाणविवरेसु सुण्णया होंति एक्कमाईया। जाव असंखा लोगा निरन्तरा थावरा ठाणा ॥६३॥** 

(स्वो०)—त्रसजीवैर्यानि युक्तान्यध्यवसायस्थानानि तद्विवरेषु शून्यान्यध्यवसायस्थानानि एकाद्यानि यावदसंख्येयलोकाकाशप्रमा-

धानि भवन्ति। स्थावरप्रायोग्यानि अध्यवसायस्थानानि निरन्तराण्यप्यवच्छिन्नानि तेषामनन्तत्वात् भवन्तीति गाथार्थः ॥६३॥ द्वारम् ।

(मलय०)—कृता एकस्थानप्रमाणप्ररूपणा, सांप्रतमन्तरस्थानप्ररूपणार्थमाह—त्रसयुक्तानि यानि अनुभागबन्धस्थानानि तद्विवरेषु शून्यानि त्रसप्रायोग्याण्यनुभागबन्धस्थानानि एकादीनि यावदसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति। इदमुक्तं भवति-त्रसप्रायोग्यानि यानि अनुभागबन्धस्थानानि त्रसजीवानां बन्धं नायान्ति तानि जघन्यपदे एकं द्वे वा उत्कर्षतोऽसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति। स्थावराणि स्थावरप्रायोग्यानि पुनः स्थानानि सर्वाण्यपि निरन्तराणि, न किमप्यन्तराले स्थावरप्रायोग्यमनुभागबन्धस्थान कदाचनापि बन्धशून्यं भवतीत्यर्थः। कथमेतद्गम्यते ? इति चेद्, उच्यते—इह स्थावरजीवा अनन्ताः, स्थावराणां बन्धं प्रति प्रायोग्यानि च स्थानानि पुनरसंख्येयानि, ततोऽन्तरं न प्राप्यते ॥६३॥

दो आइ जाव आवलिअसंखभागो निरंतर तसेहिं। नाणाजिएहिं ट्ठाणं असुण्णय आवलिअसंखं ॥६४॥

(स्वो०)—द्वे स्थाने आदौ कृत्वा यावदावलिकासंख्येयभागमात्राणि स्थानानि तावत्त्रसैर्जीवैर्निरन्तराणि भवन्ति, तेषां तदसंख्येयभागमात्रत्वादिति । नानाजीवैरशून्यमेकैकस्थानम् समयावामलिकाऽसंख्येयभागमात्रं कालं परतोऽवश्यं त्रसैः शून्यं भवति, न स्थावरैः स्वप्रायोग्यं, तेषामनन्तत्वादिति गाथार्थः ॥६४॥

(मलय०)—कृता अन्तरस्थानप्ररूपणा, संप्रति निरन्तरस्थानप्ररूपणार्थमाह—द्वे स्थाने आदौ कृत्वा यावदावलिकाया असंख्येयभागमात्राणि स्थानानि तावत्त्रसैर्जीवैर्निरन्तराणि भवन्ति। किमुक्तं भवति ? त्रसजीवैर्निरन्तरं बध्यमानानि अनुभागबन्धस्थानानि जघन्येन द्वे त्रीणि वा प्राप्यन्ते, उत्कर्षत आवलिकाया असंख्येयभागमात्राणि। कथमेतदवसेयम् ? इति चेद्, उच्यते—स्तोकास्त्रसजीवाः,

स्थानानि पुनस्त्रसप्रायोग्यानि असंख्येयानि, ततो न सर्वाणि त्रसजीवैर्निरन्तरं बध्यमानानि प्राप्यन्ते, किन्तूत्कर्षतोऽपि यथोक्तप्रमाणान्येव। संप्रति नानाजीवकालप्ररूपणार्थमाह—इह कश्चित्प्रश्नयति—एकैकमनुभागबन्धस्थानं नानाजीवैर्बध्यमानं कियन्तं कालं यावदविरहितं प्राप्यते ? अत्रोत्तरं—नानाजीवैरेकैकमनुभागबन्धस्थानमशून्यमावलिकाऽसंख्येयतमं भागं यावत्, परतोऽवश्यं बन्धशून्यं भवतीत्यर्थः। इयमत्र भावना—एकैकत्रसप्रायोग्यमनुभागबन्धस्थानमन्यैरन्यैश्च त्रसजीवैर्निरन्तरं च बध्यमानं जघन्येनैकं द्वौ वा समयौ यावत्प्राप्यते, उत्कर्षतस्त्वावलिकाया असंख्येयभागमात्रं कालम्। स्थावरप्रायोग्यं पुनरेकैकमनुभागबन्धस्थानमन्यैरन्यैश्च स्थावरजीवैर्निरन्तरं बध्यमानं सर्वकालमवाप्यते, न तु कदाचनापि बन्धशून्यं भवति ॥६४॥

वृद्धिप्ररूपणा द्विविधा—अनन्तरवृद्धिप्ररूपणा, परम्परवृद्धिप्ररूपणा च—

**जवमज्झंमि य बहवो विसेसहीणा उ उभयओ कमसो। गंतुमसंखा लोगा अद्धद्धा उभयओ जीवा ॥६५॥**

(स्वो०)—यवमध्याध्यवसायस्थाने बहवो जीवाः, तदधःस्थाने विशेषहीना विशेषहीनाः, यावत् सर्वजघन्ये विशेषहीनाः। यवमध्यादुत्कृष्टे च द्विसामयिके विशेषहीनाः क्रमशो भवन्ति। गतानन्तरोपनिधा। परम्परवृद्धौ यवमध्याध्यवसायस्थानजीवेभ्य उभयपार्श्वयोरसंख्येयलोकाकाशप्रदेशमात्राण्यध्यवसायस्थानान्युल्लङ्घ्य यत् स्थानं तस्मिन्नर्द्धा जीवा भवन्ति, एवं भूयो भूयो नेतव्यम्, यावज्जघन्यं स्थानम्। जघन्यस्थानादेवं द्विगुणवृद्धिर्यावद्यवमध्यं, परतो हानिः यावदुत्कृष्टं द्विसामयिकाध्यवसायस्थानमिति गाथार्थः ॥ ६५ ॥

(मलय०)—तदेवं कृता नानाजीवानाश्रित्य कालप्ररूपणा, संप्रति वृद्धिप्ररूपणावसरः, तत्र च द्वे अनुयोगद्वारे, तद्यथा—अनन्तरोपनिधा परम्परोपनिधा च, तत्रानन्तरोपनिधामाह—यवमध्ये अष्टसामयिकस्थानसङ्घाते बन्धकत्वेन वर्त्तमाना जीवाः सर्वबहवः, तत्र

## अनुभागबन्धस्थानानां यवाकृतिः ।

पृथक्सूक्ष्माण्यनुभागबन्धस्थानसूचकानि, सूक्ष्मशून्यानि जीवानां सूचकानि, यवाकृतिस्तु तत्र वर्तमानजीवाल्पबहुत्वापेक्षया कालापेक्षया च ।

प्रथमानुभागस्थाने जीवाः स्तोकाः

तेभ्यो विशेषाधिकाः

असं० लोका० अतिक्रम्य द्विगुणा जीवाः

तेभ्यो विशेषहीनाः

असं० लोका० अतिक्रम्य द्विगुणहीना जीवाः

४ ५ ६ ७ ८ ७ ६ ५ ४ ३ २

उभयतः–उभयपार्श्वयोः क्रमशः–क्रमेण विशेषहीना द्रष्टव्याः । इयमत्र भावना–सर्वजघन्ये अनुभागबन्धस्थाने बन्धकत्वेन वर्त्तमाना जीवाः सर्वस्तोकाः, ततो द्वितीयेऽनुभागबन्धस्थाने विशेषाधिकाः, ततोऽपि तृतीयेऽनुभागबन्धस्थाने विशेषाधिकाः, एवं तावद्वाच्यं यावद् यवमध्यं, सर्वमध्यानि अष्टसामयिकानीत्यर्थः । इत ऊर्ध्वं पुनर्जीवाः क्रमेण विशेषहीना विशेषहीनास्तावद्वक्तव्या यावदुत्कृष्टं द्विसामयिकमिति । गता अनन्तरोपनिधा, संप्रति परम्परोपनिधां कुर्वन्नाह—यवमध्यकल्पानुभागबन्धस्थानबन्धकेभ्यो जीवेभ्यो यवमध्यादुभयपार्श्वयोरसंख्येयलोकाकाशप्रदेशप्रमाणानि स्थानान्युल्लङ्घ्य यत् यत् परमनुभागबन्धस्थानं तत्र तत्र जीवाः पूर्वपूर्वापेक्षया अर्द्धा अर्द्धा भवन्ति, यावदेकत्र जघन्यं स्थानं, अपरत्र सर्वोत्कृष्टं स्थानम् । अयमिह भावार्थः–जघन्यानुभागबन्धस्थानबन्धकेभ्यो जीवेभ्यो जघन्यानुभागबन्धस्थानादारभ्य असंख्येयलोकाकाशप्रदेशप्रमाणानि स्थानान्यतिक्रम्य परं यदनुभागबन्धस्थानं तद्बन्धका जीवा द्विगुणवृद्धा भवन्ति, ततः पुनरपि तावन्ति स्थानान्यतिक्रम्य परस्यानुभागबन्धस्थानस्य बन्धका द्विगुणवृद्धा भवन्ति, एवं द्विगुणवृद्धिस्तावद्वक्तव्या यावद् यवमध्यम् । ततोऽसंख्येयलोकाकाशप्रदेशप्रमाणानि स्थानान्यतिक्रम्यापरस्यानुभागबन्धस्थानस्य ये बन्धका जीवास्ते चरमद्विगुणवृद्धिस्थानगतेभ्यो द्विगुणहीना भवन्ति, ततः पुनरपि तावन्ति स्थानान्यतिक्रम्यापरस्यानुभागबन्धस्थानस्य बन्धका अर्द्धा भवन्ति, एवमर्द्धार्द्धहानिस्तावद्वक्तव्या यावत्सर्वोत्कृष्टं द्विसामयिकमनुभागबन्धस्थानम् ॥ ६५ ॥

**आवलिअसंखभागं तसेसु हाणीण होइ परिमाणं । हाणिदुगंतरठाणा थावरहाणी असंखगुणा ॥ ६६ ॥**

(स्वो०)—द्विगुणजीववृद्धिस्थानानां हानिस्थानानां च त्रसविषये आवलिकाऽसङ्ख्येयभागमात्रं भवति प्रमाणम्, त्रसहान्योर्द्वयोर्यान्यन्तरालेऽध्यवसायस्थानानि–एकस्मिन्नन्तरे हान्योर्वृद्ध्योर्वा स्थानानि, स्थावरहानयो द्विगुणवृद्धयो वा भवन्त्यसङ्ख्येयगुणाः । नानात्रस-

जीवेषु गुणहानिस्थानानि स्तोकानि, एकस्मिन् हानिवृद्धिस्थानयोर्विवरे असंख्येयगुणानि अध्यवसायस्थानानि, स्थावरजीवेषु पुनर्यानि हान्योर्वृद्ध्योर्वा एकान्तरस्थानानि तेभ्यो द्विगुणस्थानानि हानिस्थानानि वा भवन्ति असंख्येयगुणानीति गाथार्थः ॥ ६६ ॥

(मलय०)—त्रसेषु-त्रसविषये यवमध्यादर्वाग् या उपरितनभागापेक्षया क्रमेणाधोऽधो द्विगुणहानयो याश्च यवमध्यस्योपरि तासां सर्वसंख्यया परिमाणमावलिकाया असंख्येयभागः, आवलिकाया असंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि सर्वसंख्यया त्रसेषु द्विगुणहानिस्थानानि भवन्तीत्यर्थः। ननु आवलिकाया असंख्येयभागमात्राण्येवानुभागबन्धस्थानानि त्रसजीवैर्निरन्तरं बध्यमानानि प्राप्यन्ते, एतच्च प्रागेवोक्तं, तत्कथं त्रसेषु द्विगुणवृद्धिहानय आवलिकाऽसंख्येयभागगतसमयप्रमाणा भवन्ति ? एव होकापि द्विगुणवृद्धिर्द्विगुणहानिर्वा न प्राप्नोतीति भावः। नैष दोषः, यस्माद् आवलिकाऽसंख्येयभागमात्राणि त्रसजीवैर्निरन्तरं बध्यमानतया प्राप्यमाणान्युक्तानि इह तु यद्यप्यावलिकाऽसंख्येयभागमात्रस्थानेभ्यः पराणि स्थानानि सम्प्रति बध्यमानानि न प्राप्यन्ते तथापि कदाचित्प्राप्यन्ते, तेषु च जीवा उत्कृष्टपदे क्रमेण विशेषाधिका लभ्यन्ते, ततो यथोक्तप्रमाणा द्विगुणवृद्धिहानयो न विरुध्यन्ते। तथा त्रसानां हानिद्विकस्य-द्वयोर्द्विगुणहान्योरपान्तराले यानि स्थानानि तेभ्यः स्थावराणां द्विगुणहानयो यवमध्यादर्वाक्तन्यः परभाविन्यश्च समुदिता असंख्येयगुणा भवन्ति। इह त्रसानां सर्वा अपि द्विगुणहानयः स्तोकाः, तेभ्योऽसंख्येयगुणानि द्विगुणहानिद्वयापान्तरालवर्तीनि स्थानानि, एव त्रसानाम्। स्थावराणां पुनरेव-त्रससत्कद्विगुणहानिद्वयापान्तरालवर्तीनि स्थानानि स्तोकानि, तेभ्यो द्विगुणहानयोऽसंख्येयगुणाः॥६६॥

जवमज्झे ठाणाइं असंखभागो उ सेसठाणाण। हेट्ठंमि होंति थोवा उवरिंमि असंखगुणियाणि ॥ ६७॥

(स्वो०)—यवमध्यस्थानानि अष्टसामयिकान्यसंख्येयभागमात्राणि शेषस्थानानाम्, यवमध्यादधःस्थानेषु स्तोकानि, यवमध्योपरिस्था-

नेष्वसंख्येयगुणानि भवन्तीति गाथार्थः ॥ ६७ ॥

(मलय०)–कृता वृद्धिप्ररूपणा, सम्प्रति यवमध्यप्ररूपणा क्रियते—यवमध्ये स्थानानि अष्टसामयिकानि शेषस्थानानामसंख्येयभागमात्राणि, ततः यवमध्यस्याधस्तात् स्थानानि स्तोकानि, ततो यवमध्यस्योपरितनानि असंख्येयगुणानि ॥ ६७ ॥

**दुगचउरट्ठतिसमइग सेसा य असंखगुणणया कमसो। काले अईए पुट्ठा जिएण ठाणा भमंतेण ॥ ६८ ॥**

(स्वो०)—द्विसामयिकान्युत्कृष्टाध्यवसायस्थानानि जीवेनातीते काले भ्रमता सर्वस्तोकं कालं स्पृष्टानि, तस्मादसंख्येयगुणं कालं चतुःसामयिकानि जघन्यस्थानानि, यवमध्योपरि चतुःसामयिकान्यप्येतावन्मात्रमेव कालं स्पृष्टानि, तस्माद् यवमध्यस्थानानि असंख्येयगुणं कालं स्पृष्टानि, तस्मात् त्रिसामयिकान्यसंख्येयगुणं कालं स्पृष्टानि, तस्मादप्युभयकण्डकस्थानानि–पञ्चपद्सप्तसामयिकानि कण्डकस्थानान्युच्यन्ते, त्रिसामयिकेभ्य उभयकण्डकस्थानान्यसंख्येयगुणं कालमतीते काले स्पृष्टानीति गाथार्थः ॥ ६८ ॥

(मलय०)–कृता यवमध्यप्ररूपणा, सम्प्रति स्पर्शनाप्ररूपणामाह—द्विकचतुरष्टत्रिसामयिकानि, शेषाणि च–पञ्चपद्सप्तसामयिकानि स्थानानि क्रमशः–क्रमेण असंख्येयगुणनया अतीते काले परिभ्रमता जीवेन स्पृष्टानि। इयमत्र भावना–अतीते काले परिभ्रमता जीवेन द्विसामयिकान्यनुभागबन्धस्थानानि स्तोकमेव कालं यावत्स्पृष्टानि, ततः प्राथमिकानि चतुःसामयिकान्यसंख्येयगुणं कालं यावत्स्पृष्टानि, एतावन्तमेव कालमुपरिवर्त्तीन्यपि चतुःसामयिकानि स्पृष्टानि, ततोऽप्यसंख्येयगुणं कालं यावदष्टसामयिकानि स्थानानि स्पृष्टानि, ततोऽपि त्रिसामयिकान्यसंख्येयगुणं कालं यावत्स्पृष्टानि, ततोऽप्यसंख्येयगुणं कालं यावत्प्राथमिकानि पञ्चपद्सप्तसामयिकानि स्पृष्टानि, एतेषां स्पर्शनाकालः समुदितोऽसंख्येयगुण इत्यर्थः, एतावन्तमेव च कालमुपरिवर्त्तीन्यपि पञ्चपद्सप्तसामयिकानि स्पृष्टानि ॥ ६८ ॥

तत्तो विसेसअहियं जवमज्झा उवरिमाइ ठाणाइं । तत्तो कंडगहेट्ठा तत्तो वि हु सव्वठाणाइं ॥ ६९ ॥

(स्वो०)—तस्मात् कण्डककालाद्विशेषाधिकं काल यवमध्योपरिस्थानानि स्पृष्टानि, तेभ्योऽप्युपरितनकण्डकाधःस्थानानि—जघन्यचतुःपञ्चषट्सप्ताष्टसामयिकानीति भावः, विशेषाधिक काल स्पृष्टानि, तेभ्योऽप्यशेषाणि—सर्वाणीति विशेषाधिक कालं स्पृष्टानीति गाथार्थः ॥

(मलय०)—ततः प्रागुक्तेभ्यः—उभयपार्श्ववर्तिपञ्चषट्सप्तसामयिकेभ्य इत्यर्थः, विशेषाधिक काल यावद्यवमध्यस्योपरितनानि सर्वाणि स्थानानि स्पृष्टानि, पञ्चषट्सप्तसामयिकस्य स्पर्शनाकालापेक्षया यवमध्यस्योपरितनानां सर्वेषां स्थानानां स्पर्शनाकालः समुदितो विशेषाधिक इत्यर्थः । ततः कण्डकादुपरितनचतुःसामयिकस्थानसंघातरूपादधस्तनानि सर्वाणि विशेषाधिक काल यावत्स्पृष्टानि, अमीषां सर्वेषामपि स्पर्शनाकालः समुदितोऽस्ति विशेषाधिक इति भावः । ततोऽपि सर्वाण्यपि स्थानानि विशेषाधिक कालं यावत्स्पृष्टानि, प्राक्तनस्पर्शनाकालापेक्षया सर्वेषां स्थानानां स्पर्शनाकालः समुदितो विशेषाधिक इत्यर्थः ॥ ६९ ॥

फासणकालप्पबहु जह तह जीवाण भणसु ठाणेसु । अणुभागबंधठाणा अज्झवसाया व एगट्ठा ॥ ७० ॥

(स्वो०)—स्पर्शनकालस्य यथाल्पबहुत्वं तथा जीवानामपि अल्पबहुत्वं भण स्थानेषु । उत्कृष्टेषु द्विसामयिकेषु स्थानेषु स्तोका जीवाः, जघन्यचतुःसामयिकेष्वसंख्येयगुणाः, एवमुपरि चतुःसामयिकेष्वपि, तेभ्योऽसंख्येयगुणा यवमध्ये, तेभ्योऽपि त्रिसामयिकस्थानेष्वसंख्येयगुणा जीवास्तिष्ठन्ति, तेभ्योऽप्यसंख्येयगुणा अधः कण्डके, उपरितनकण्डकेऽप्येतावन्मात्रा एव, मध्योपरिस्थानेषु विशेषाधिका जीवाः, उपरितनकण्डकाधःस्थानेषु विशेषाधिकाः, सर्वेष्वपि विशेषाधिकाः । अनुभागबन्धस्थानानि अध्यवसायस्थानानि वा

संक्लेशविशुद्धिस्थानानि वा, कारणस्य कार्यत्वात्, एकार्थिकानीति गाथार्थः ॥ ७० ॥

(मलय०)–कृता स्पर्शनाप्ररूपणा, सम्प्रत्यल्पबहुत्वप्ररूपणामाह—यथा स्पर्शनाकालस्याल्पबहुत्वमुक्तं तथा जीवानामल्पबहुत्वं स्थानेषु–अनुभागबन्धस्थानेषु भण–प्रतिपादय, तद्यथा–द्विसामयिकेष्वनुभागबन्धस्थानेषु बन्धकत्वेन वर्त्तमाना जीवाः सर्वस्तोकाः, ततः प्राथमिकेषु चतुःसामयिकेष्वसंख्येयगुणाः, एतावन्त एवोपरिवर्त्तिष्वपि चतुःसामयिकेषु, ततोऽष्टसामयिकेष्वसंख्येयगुणाः, ततोऽपि त्रिसामयिकेष्वसंख्येयगुणाः, ततोऽप्याद्यपञ्चषट्सप्तसामयिकेष्वसंख्येयगुणाः, एतावन्त एवोपरितनपञ्चषट्सप्तसामयिकेष्वपि, ततोऽष्टसामयिकानामुपरितनेषु सर्वेषु स्थानेषु विशेषाधिकाः, ततोऽप्युपरिवर्त्तिपञ्चसामयिकपर्यन्तेषु प्राथमिकचतुःसामयिकप्रभृतिषु समस्तेष्वनुभागबन्धस्थानेषु विशेषाधिकाः, ततोऽपि सर्वेषु स्थानेषु विशेषाधिकाः। ननु कर्मप्रकृतावध्यवसानेषूक्तप्रकारेण जीवानामल्पबहुत्वमुक्तं, तथा चोक्तं तत्र–"जीवप्पाबहुमेवं अज्झवसाणेसु जाणेज्जा," अत्र त्वनुभागस्थानेषु बन्धकत्वेन वर्त्तमानानां जीवानाम्, तत्कथं न विरोधः? अत आह–'अणुभागेत्यादि'। अनुभागबन्धस्थानानि अध्यवसाया वा एकार्थाः। तथाहि–अत्रानुभागस्थानेषु बन्धकत्वेन वर्त्तमानानां जीवानामल्पबहुत्वं, कर्मप्रकृतौ त्वनुभागबन्धस्थाननिमित्तेष्वध्यवसानेषु, ततो न कश्चिदप्यर्थभेदः ॥ ७० ॥

एकैकस्थितिस्थाने कियन्त्यनुभागस्थानानि भवन्त्येतदभिधातुकाम आह—

**ठितिठाणे ठितिठाणे कसायउदया असंखलोगसमा। एक्केक्कसायउदये एवं अणुभागठाणाइं ॥ ७१ ॥**

(स्वो०)—प्राक्स्थितेः समयोत्तराऽन्या स्थितिः स्थितिस्थानमुच्यते, स्थितिस्थाने स्थितिस्थाने प्रत्येकं कषायोदयाः तीव्रमन्दादिभेदभिन्ना असंख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति, इयन्मात्रैः कषायोदयविशेषैः कषायोदयस्थानं वा स्थितिस्थानं वा परिणामस्थानं

वा एकोऽर्थः, यस्मादेकस्थितिनिष्पादकाः सर्वेऽपि, अत एकं कषायस्थानम्। स्थानशब्दस्य छुप्तत्वादेकैककषायोदयस्थाने स्थितिस्थानेऽसंख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागस्थानानि भवन्तीति गाथार्थः ॥ ७१ ॥

(मलय०)—तदेवमनुभागबन्धस्थानेषु यथा जीवा वर्तन्ते तथा प्ररूपणा कृता, सम्प्रत्येकैकस्मिन् स्थितिस्थाने कियन्तः स्थितिबन्धहेतवोऽध्यवसायाः कियन्तो वा एकैकस्मिन् स्थितिस्थानाध्यवसाये नानाजीवापेक्षयाऽनुभागबन्धाध्यवसायाः प्राप्यन्ते ? इति तन्निरूपणामाह—इह जघन्यस्थितेरारभ्य उत्कृष्टां स्थितिं यावद् यावन्तः समयास्तावन्ति स्थितिस्थानानि। तथाहि—जघन्या स्थितिरेकं स्थितिस्थानम्, सैव समयोत्तरा द्वितीयं स्थितिस्थानम्, द्विसमयोत्तरा तृतीयं स्थितिस्थानम्, एवं समयवृद्ध्या तावद्वाच्यं यावदुत्कृष्टा स्थितिः, एवं चासंख्येयानि स्थितिस्थानानि भवन्ति। स्थितिस्थाने स्थितिस्थाने च बध्यमाने तद्बन्धहेतुभूताः प्रत्येकं कषायोदयास्तीव्रतीव्रतरमन्दमन्दतरादिभेदभिन्ना असंख्येयलोकसमाः—असंख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति। एकैकस्मिंश्च कषायोदये एव असंख्येयलोकाकाशप्रदेशप्रमाणानि अनुभागस्थानानि, कार्येण कारणोपलक्षणादनुभागबन्धाध्यवसायस्थानानि कृष्णादिलेश्यापरिणामविशेषरूपाणि भवन्ति। अनुभागबन्धाध्यवसाया हि कृष्णादिलेश्यापरिणामरूपाः, 'कषायोदयाः कृष्णादिलेश्यापरिणामविशेषा अनुभागबन्धहेतवः' इति वचनात्। ते चैकैकस्मिन् कषायोदये नानाजीवापेक्षया तीव्रतीव्रतरमन्दमन्दतरत्वाद्यनेकभेदसम्भवादसंख्येयलोकाकाशप्रदेशप्रमाणाः प्रतिपाद्यमाना न विरुध्यन्ते ॥ ७१ ॥

थोवाणुभागठाणा जहण्णठितिपढमबंधहेउम्मि। तत्तो विसेसअहिया जा चरिमाए चरमहेऊ ॥ ७२ ॥

(स्वो०)—स्तोकान्यनुभागस्थानानि जघन्यस्थितिबन्धस्य प्रथमहेतौ भवन्ति, प्रथमहेतुग्रहणं तस्या एव जघन्यस्थितेरसंख्येयहेतु-

विशेषख्यापनार्थम् । अनन्तरोपनिधिकामाश्रित्य हेतुविशेषे हेतुविशेषे विशेषाधिकानि विशेषाधिकान्यनुभागस्थानानि भवन्ति, जघन्यस्थितिजघन्यहेतोरारभ्य यावदुत्कृष्टस्थितेरुत्कृष्टहेतुस्थानं तावद्विशेषाधिकानि विशेषाधिकानि अनुभागस्थानानि भवन्तीति गाथार्थः ॥७२॥



(मलय०)–सम्प्रत्येतेष्वनुभागबन्धाध्यवसायेषु वृद्धिमार्गणा कर्त्तव्या, सा च द्विधा–अनन्तरोपनिधया परम्परोपनिधया च, तत्रानन्तपरोपनिधया तावद्वृद्धिमार्गणां चिकीर्षुराह—जघन्यस्थितेः प्रथमे सर्वजघन्ये बन्धहेतौ–बन्धहेतुभूते कषायोदये सर्वस्तोकानि अनुभागस्थानानि, कारणे कार्योपचारादनुभागबन्धाध्यवसायस्थानानि भवन्ति। 'तत्तो विसेसअहिय'त्ति–ततो द्वितीये कषायोदये विशेषाधिकानि, ततोऽपि तृतीये कषायोदये विशेषाधिकानि, ततोऽपि चतुर्थे विशेषाधिकानि, एवं तावद्वाच्यं यावच्चरमाया उत्कृष्टाया स्थितेश्चरमे उत्कृष्टे बन्धहेतौ कषायोदये विशेषाधिकानि ॥ ७२ ॥

**गंतुमसंखा लोगा पढमाहिंतो भवन्ति दुगुणाणि । आवलिअसंखभागो दुगुणट्ठाणाण संवग्गो ॥ ७३ ॥**

(स्वो०)—जघन्यकषायोदयस्थानादसंख्येयलोकप्रमाणानि कषायोदयस्थानान्युल्लङ्घ्य यत्कषायोदयस्थानं तस्मिन्नाद्यानुभागस्थानेभ्यो द्विगुणान्यनुभागस्थानानि भवन्ति, एवं भूयो भूयो नेतव्यम्, यावदुत्कृष्टकषायोदयस्थानम्। एवं विधिना नयतः कियन्ति द्विगुणस्थानानि भवन्ति ? सर्वाणि द्विगुणस्थानानि संवर्गितानि–मीलितान्यावलिकासंख्येयभागमात्राणि भवन्तीति गाथार्थः ॥ ७३ ॥

(मलय०)—कृताऽनन्तरोपनिधया वृद्धिमार्गणा, सम्प्रति परम्परोपनिधया तां चिकीर्षुराह—प्रथमाज्जघन्यकषायोदयादारभ्य असंख्येयान् लोकान्–असंख्येयलोकाकाशप्रमाणानि कषायोदयस्थानानि गत्वा–अतिक्रम्य परं यद्भवति कषायोदयस्थानं तत्रानुभागबन्धाध्यवसायस्थानानि जघन्यकषायोदयस्थानसत्कानुभागबन्धाध्यवसायस्थानापेक्षया द्विगुणानि भवन्ति । ततः पुनरपि तावन्ति कषा-

योदयस्थानानि गत्वा यदपरं कषायोदयस्थानं तस्मिन् द्विगुणानि भवन्ति, एवं भूयो भूयस्तावद्वाच्यं यावत्सर्वोत्कृष्टं कषायोदयस्थानम्। यानि चान्तरान्तरा द्विगुणवृद्धिस्थानानि भवन्ति तेषां संवर्गः—सर्वसंख्यया परिमाणमावलिकाया असंख्येयभागः—आवलिकाया असंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि सर्वसंख्यया द्विगुणवृद्धिस्थानानि भवन्तीत्यर्थः ।।७३।।

असुभपगईण एवं इयराणुक्कोसगंमि ठितिबंधे । सव्वुक्कोसगहेऊउ होइ एवं चिय असेसं ।। ७४ ।।

(स्वो०)—अशुभप्रकृतीनां पूर्वप्रतिपादितानां एवमनन्तरोक्तेन विधिना अनुभागस्थानान्यवगन्तव्यानि। 'इतरासां'—शुभप्रकृतीनां पूर्वप्रतिपादितानां उत्कृष्टे स्थितिबन्धे यः सर्वोत्कृष्टो हेतुरतितीव्रकषायोदयस्तस्माद् विपरीत भवत्येवमेवाशेषपूर्वोक्तमिति गाथार्थः ।।७४।।

(मलय०)—एवमनन्तरोक्तेन प्रकारेणाशुभप्रकृतीनां—ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीयमिथ्यात्वषोडशकषायनवनोकषायनरकायुःपञ्चेन्द्रियजातिवर्जजातिचतुष्टयसमचतुरस्रवर्जसंस्थानपञ्चकवज्रर्षभनाराचवर्जसंहननपञ्चकाशुभवर्णादिनवकनरकद्विकतिर्यग्द्विकाप्रशस्तविहायोगत्युपघातस्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्रान्तरायपञ्चकानां सप्ताशीतिसंख्यानां वृद्धिमार्गणा द्रष्टव्या । इतरासां पुनः शुभप्रकृतीनां सातवेदनीयतिर्यगायुर्मनुष्यायुर्देवायुर्देवगतिमनुष्यगतिपञ्चेन्द्रियजातिशरीरपञ्चकसङ्घातपञ्चकबन्धनपञ्चदशकसमचतुरस्रसंस्थानाङ्गोपाङ्गत्रयवज्रर्षभनाराचसंहननशुभवर्णाद्येकादशकदेवानुपूर्वीमनुजानुपूर्वीपराघाताऽगुरुलघूच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिनिर्माणतीर्थकरोच्चैर्गोत्ररूपाणामेकोनसप्ततिसंख्यानामुत्कृष्टे स्थितिबन्धे यः सर्वोत्कृष्टो हेतुरतितीव्रकषायोदयरूपस्तस्मादारभ्य एवमेव पूर्वोक्तेन प्रकारेणाशेष विपरीतमवगन्तव्यम् । तद्यथा—सर्वोत्कृष्टे कषायोदये अनुभागबन्धाध्यवसायस्थानानि सर्वस्तोकानि, ततो द्विचरमे कषायोदये विशेषाधिकानि,

## स्थितिबंधाध्यवसायेषु अनुभागाध्यवसायचित्रम्

८७ अनुभानाम्
असं० लोकानि
विशेषाधिकानि
द्विगुणानि
द्विगुणानि
द्विगुणानि
द्विगुणानि

६९ अनुभानाम्
असं० लोकानि
तेभ्यो विशेषा०
द्विगुणानि
द्विगुणानि
द्विगुणानि
द्विगुणानि

जघन्यात् कषायोदयादसंख्येयलोकाकाशप्रदेशप्रमाणानि कषायोदयस्थानानि गत्वा परं यद् कषायोदयस्थानं तस्मिन् द्विगुणानि रसबन्धाध्यवसायस्थानानि भवन्ति । पञ्चमेऽपि ।

० इति कषायोदयस्थानसूचकम्.

. इति रसबन्धाध्यवसायस्थानसूचकम्.

ततोऽपि त्रिचरमे कषायोदये विशेषाधिकानि, ततोऽपि चतुश्चरमे कषायोदये विशेषाधिकानि, एवं तावद्वक्तव्यं यावत्सर्वजघन्यं कषायोदयस्थानम्। इयमनन्तरोपनिधया वृद्धिमार्गणा। परम्परोपनिधया त्वियं—उत्कृष्टकषायोदयस्थानादारभ्यासंख्येयलोकाकाशप्रदेशप्रमाणानि कषायोदयस्थानानि अधोभागेनातिक्रम्य यदपरमधःकषायोदयस्थानं तस्मिन् अनुभागबन्धाध्यवसायस्थानानि उत्कृष्टकषायोदयसत्कानुभागबन्धाध्यवसायस्थानापेक्षया द्विगुणानि भवन्ति। पुनरपि तावन्ति कषायोदयस्थानानि ततः प्रभृत्यधोभागेनातिक्रम्य यदपरमधःकषायोदयस्थानं तस्मिन् द्विगुणानि भवन्ति। एवं भूयो भूयस्तावद्वाच्यं यावज्जघन्यं कषायोदयस्थानम्। यानि चान्तरान्तराभावीनि द्विगुणवृद्धिस्थानानि तान्यावलिकाया असंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि भवन्ति। अमूनि चावलिकाया असंख्येयभागमात्राणि शुभप्रकृतीनामशुभप्रकृतीनां च प्रत्येकं द्विगुणवृद्धिस्थानानि स्तोकानि, एकस्मिन् द्विगुणवृद्ध्यन्तराले कषायोदयस्थान्यसंख्येयगुणानि ॥७४॥

पूर्वोक्तमर्थं व्यञ्जयति—

**थोवाणुभागठाणा जहण्णठितिबंध असुभपगईण। समयवुड्ढीए किंचिहियाइं सुहियाण विवरीयं ॥७५॥**

(स्वो०)—स्तोकान्यनुभागस्थानानि जघन्यस्थितिबन्धेऽशुभप्रकृतीनां भवन्ति, तस्या जघन्यस्थितेः समयवृद्धौ विशेषाधिकानि विशेषाधिकानि, शुभप्रकृतीनामेतदेव विपरीतं—उत्कृष्टस्थितेरारभ्य गृह्यते इति गाथार्थः ॥ ७५ ॥

(मलय०)—तदेवं स्थितिबन्धहेतुषु अध्यवसायेषु अनुभागबन्धहेतूनामध्यवसायानां प्ररूपणा कृता, सम्प्रति स्थितिबन्धस्थानेषु अनुभागबन्धस्थानप्ररूपणां चिकीर्षुराह—पूर्वोक्तानामशुभप्रकृतीनामायुर्वर्जानां जघन्यस्थितिबन्धे सर्वस्तोकानि अनुभागबन्धस्थानानि,

तानि चासंख्येयलोकाकाशप्रदेशप्रमाणानि । ततः समयवृद्धौ किंचिदधिकानि–विशेषाधिकानि वक्तव्यानि, तद्यथा–द्वितीये स्थितिबन्धे विशेषाधिकानि, ततोऽपि तृतीये स्थितिबन्धे विशेषाधिकानि, एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः । तथा शुभप्रकृतीनामायुर्वर्जानां पूर्वोक्तानामेतदेव विपरीतं द्रष्टव्यं,तद्यथा–उत्कृष्टे स्थितिबन्धे अनुभागबन्धस्थानानि सर्वस्तोकानि,तानि चाऽसंख्येयलोकाकाशप्रदेशप्रमाणानि, तेभ्यः समयोनायामुत्कृष्टस्थितौ विशेषाधिकानि, ततोऽपि द्विसमयोनायां विशेषाधिकानि, एवं तावद्वाच्यं यावज्जघन्या स्थितिः ॥७५॥

**पलियासंखियमेत्ता ठितिठाणा गंतु गंतु दुगुणाइं । आवलिअसंखमेत्ता गुणा गुणंतरमसंखगुणं ॥७६॥**

(स्वो०)—अशुभप्रकृतीनां जघन्यस्थितेः शुभप्रकृतीनामुत्कृष्टस्थितेरारभ्य पल्योपमासंख्येयभागमात्राः स्थितीर्गत्वा यत्स्थितिस्थानं तस्मिन् पूर्वानुभागस्थानेभ्यो द्विगुणान्यनुभागस्थानानि भवन्ति, एवं भूयो भूयो द्विगुणानि पल्योपमाऽसंख्येयभागमात्रा स्थितीरुल्लङ्घ्य भवन्ति। जघन्योत्कृष्टस्थित्यन्तरे कियन्ति द्विगुणस्थानानि ? आवलिकासंख्येयभागमात्राणि,सर्वद्विगुणस्थानेभ्य एकद्विगुणान्तरस्थितिस्थानानि असंख्येयगुणानि भवन्तीति गाथार्थः ॥ ७६ ॥

(मलय०)–तदेवं कृता अनन्तरोपनिधया वृद्धिमार्गणा, सम्प्रति परम्परोपनिधया तां चिकीर्षुराह—पल्योपमासंख्येयभागमात्राणि स्थितिस्थानानि गत्वा गत्वा–अतिक्रम्य अतिक्रम्य पूर्वपूर्वानुभागस्थानेभ्यो द्विगुणानि भवन्ति, तद्यथा–पूर्वोक्तानामायुर्वर्जानामशुभप्रकृतीनां जघन्यस्थितेरारभ्य पल्योपमासंख्येयभागमात्राणि स्थितिस्थानानि अतिक्रम्य यदपरं स्थितिस्थानं तस्मिन् अनुभागबन्धस्थानानि जघन्यस्थितिसत्कानुभागबन्धस्थानेभ्यो द्विगुणानि भवन्ति, ततः पुनरपि तावन्ति स्थितिस्थानानि अतिक्रम्य यदपरं स्थितिस्थानं तस्मिन् द्विगुणानि अनुभागबन्धस्थानानि भवन्ति, एवं भूयोभूयस्तावद्वाच्यं यावदुत्कृष्टा स्थितिः । तथा पूर्वोक्तानामायुर्वर्जानां

स्थितिस्थानेषु अनुभागाध्यवसायचित्रम्

८१ शुभानामनु-
भागबन्धस्थानानि
असं० लोकानि
विशेषाधिकानि

द्विगुणानि

द्विगुणानि

द्विगुणानि

द्विगुणानि

६१ अशुभानामनु-
भागबन्धस्थानानि
असं० लोकानि
तेभ्यो विशेषा०

द्विगुणानि

द्विगुणानि

द्विगुणानि

द्विगुणानि

पल्यासङ्ख्येयभागमात्राणि स्थितिस्थानानि यस्मात् परं स्थितिस्थानं तस्मिन् तस्मिन् द्विगुणानि रसबन्धाध्यवसायस्थानानि भवन्ति

० इति स्थितिस्थानप्ररूपकम्

इति रसबन्धाध्यवसायस्थानप्ररूपकम्

शुभप्रकृतीनामुत्कृष्टस्थितेरारभ्य पल्योपमासंख्येयभागमात्राणि स्थितिस्थानानि अतिक्रम्य यदपरं स्थितिस्थानं तस्मिन् अनुभागबन्धस्थानानि उत्कृष्टस्थितिस्थानसत्कानुभागबन्धस्थानेभ्यो द्विगुणानि भवन्ति, ततः पुनरपि तावन्ति स्थितिस्थानानि अधोऽवतीर्य अधस्तनं यदपरं स्थितिस्थानं तस्मिन् द्विगुणानि भवन्ति, एवं भूयो भूयस्तावद्वाच्यं यावज्जघन्या स्थितिः । एतानि च शुभप्रकृतीनामशुभप्रकृतीनां च प्रत्येकं द्विगुणवृद्धिस्थानानि आवलिकाया असंख्येयभागमात्राणि—आवलिकाया असंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानीत्यर्थः । तथा गुणेभ्यः—सर्वद्विगुणवृद्धिस्थानेभ्यो गुणान्तरं—द्विगुणवृद्ध्योरपान्तरालमसंख्येयगुणं, तद्यथा—शुभप्रकृतीनां च प्रत्येकं द्विगुणवृद्धिस्थानानि स्तोकानि, आवलिकाऽसंख्येयभागमात्रत्वात्, एकस्मिन् द्विगुणवृद्ध्योरपान्तराले स्थितिस्थानानि असंख्येयगुणानि, पल्योपमासंख्येयभागमात्रत्वात् ॥ ७६ ॥

**सव्वजहण्णठिईए सव्वाण वि आउगाण थोवाणि । ठाणाणि उत्तरासुं असंखगुणणाइ सेढीए ॥७७॥**

(स्वो०)—सर्वेषामायुषां जघन्यस्थितौ सर्वस्तोकान्यनुभागस्थानानि, उत्तरासु समयवृद्धास्वनुभागस्थानान्यसंख्येयगुणश्रेण्या भूयो भूयो यावदुत्कृष्टा स्थितिस्तावन्नेतव्यानीति गाथार्थः ॥ ७७ ॥

(मलय०)—सम्प्रत्यायुषां स्थितिस्थानेष्वनुभागप्ररूपणार्थमाह—'सर्वेषामपि'। चतुर्णामपि आयुषां सर्वजघन्यस्थितिबन्धस्थाने अनुभागबन्धस्थानानि सर्वस्तोकानि, तत उत्तरासु समयवृद्धासु स्थितिषु असंख्येयगुणनया श्रेण्या नेतव्यानि, तद्यथा—समयाधिकायां जघन्यायां स्थितौ पूर्वोक्तेभ्योऽसंख्येयगुणानि, ततोऽपि द्विसमयाधिकायामसंख्येयगुणानि, एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः ॥७७॥

## आयुषः स्थितिस्थानेषु अनुभागस्थानानाम्




आयुषस्तु जघन्यस्थितिस्थानादारभ्य उत्तरोत्तरस्मिन् स्थाने असंख्येयगुणानि रसबन्धाध्यवसायस्थानानि भवन्ति ।

साम्प्रतमनुभागस्थानानां स्थितिस्थानवृद्धौ यथाऽनुत्कृष्टिर्भवति तथोच्यते तीव्रमन्दत्वजिज्ञासार्थम्—

**गंठीदेसे सण्णी अभव्वजीवस्स जो ठिईबंधो । ठिइवड्ढीए तस्स उ बंधा अणुकड्ढिओ तत्तो ॥ ७८ ॥**

(स्वो०)—ग्रन्थ्यां यदाऽभव्यजीवः संज्ञी भवति, अथ तस्याभव्यस्य यः स्थितिवन्धः, तस्माद् वन्धात् स्थितिवृद्धौ सत्यामनुकर्षणमनुकृष्टिरनुभागस्थानानां, ताश्च सर्वप्रकृतिविषया यथाऽनुकृष्टयो भवन्ति तथोच्यन्ते। 'तु' शब्दात् कासाञ्चित्तद् हीनतरवन्धाद् भवन्तीति गाथार्थः ॥ ७८ ॥

(मलय०)—साम्प्रतमनुभागवन्धस्थानानां तीव्रमन्दतापरिज्ञानार्थमनुभागवन्धाध्यवसायस्थानानामनुकृष्टिमभिधातुकाम आह—अत्र पदानां विषमः संवन्धः, स चैवं भावनीयः—योऽभव्यजीवः संज्ञी ग्रन्थिदेशे वर्त्तते तस्याऽभव्यस्य यो जघन्यस्थितिवन्धस्तस्माद्वन्धादारभ्य स्थितिवृद्धौ सत्यामनुभागवन्धाध्यवसायस्थानानामनुकृष्टिर्वक्ष्यमाणा वेदितव्या । अनुकर्षणमनुकृष्टिरनुवर्त्तनमित्यर्थः, तुशब्दस्यानुक्तार्थसमुच्चायकत्वात् कासांचित्प्रकृतीनामभव्यसत्कजघन्यस्थितिवन्धाद्धीनतरवन्धादप्यारभ्यानुकृष्टिर्भवतीति वेदितव्यम् ॥७८॥

**वग्गे वग्गे अणुकड्ढि तिव्वमंदत्तणाइ तुल्लाइ । उवघायघाइपयडी कुवण्णनवगं असुभवग्गो ॥७९॥**

(स्वो०)—चत्वारोऽस्यां प्रकृतिसमुदाया भवन्ति, तेभ्यो वर्गे वर्गे—प्रकृतिसङ्घाते प्रकृतिसङ्घाते तीव्रमन्दत्वानि अनुभागस्थानानां तुल्यानि, यथा वर्गादिप्रकृतेः तथा तेनैव क्रमेण तद्वर्गशेषाणामपीति भावः । 'उपघातघातिप्रकृतयः कुवर्णनवकं' चेति—ज्ञानदर्शनावरणमोहनीयान्तरायप्रकृतयः पञ्चचत्वारिंशदुपघातकुवर्णनवकसहिताः पञ्चपञ्चाशदशुभप्रकृतीवर्गोऽयमिति गाथार्थः ॥ ७९ ॥ 

(मलय०)—इहाऽनुकृष्टिविषये चत्वारः प्रकृतिवर्गाः प्रकृतिसमुदायास्तद्यथा—अपरावर्तमानाऽशुभप्रकृतिवर्गः, अपरावर्तमानशुभप्रकृतिवर्गः, परावर्तमानशुभप्रकृतिवर्गः, परावर्तमानाऽशुभप्रकृतिवर्गश्च । तत्र वर्गे वर्गे अनुकृष्टिस्तीव्रमन्दत्वानि च स्वस्थाने तु तुल्यानि । ततोऽवश्य वर्गप्ररूपणा कर्तव्या । तत्र प्रथमतोऽपरावर्तमानाऽशुभप्रकृतिवर्गः प्ररूप्यते—'उवघाये'त्यादि । उपघातनाम, घातिप्रकृतयः—पञ्चविधज्ञानावरणनवविधदर्शनावरणमिथ्यात्वषोडशकषायनवनोकषायपञ्चविधान्तरायरूपाः, कुवर्णनवक—कृष्णनीलदुरभिगन्धतिक्तकटुगुरुकर्कशरूक्षशीतरूपं, इत्येष पञ्चचत्वारिंशत्प्रकृतिसमुदायरूपोऽपरावर्तमानाऽशुभप्रकृतिवर्गः ॥ ७९ ॥

परघायबंधणतणूवंगसुवण्णाइतित्थनिम्माण । अगुरुलहूसासतिग संघाय छयाल सुभवग्गो ॥८०॥

(स्वो०)—पराघात, बन्धनानि पञ्चदश, पञ्च शरीराणि, त्रीण्यङ्गोपाङ्गानि, शुभवर्णैकादशकं, तीर्थङ्करं, निर्माणागुरुलघूच्छ्वासोद्योतातपपञ्चसंघाताः, एताः षट्चत्वारिंशत्प्रकृतयः शुभवर्गो द्वितीय इति गाथार्थः ॥ ८० ॥

(मलय०)—सम्प्रत्यपरावर्तमानशुभप्रकृतिवर्गप्ररूपणार्थमाह—पराघातनाम, पञ्चदशबन्धनानि, पञ्चशरीराणि, त्रीणि अङ्गोपाङ्गानि, सुवर्णादि-शुभवर्णाद्येकादशकम्, तीर्थकरनाम, निर्माणम्, अगुरुलघु, उच्छ्वासत्रिकं, उच्छ्वासातपोद्योतरूपम्, पञ्च संघातनामानि, इत्येष षट्चत्वारिंशत्प्रकृतिसमुदायरूपोऽपरावर्तमानशुभप्रकृतिवर्गः ॥ ८० ॥

साय थिराइ उच्च सुरमणु दो दो पणिंदि चउरसं । रिसहपसत्थविहगगइ सोलस परियत्तसुभवग्गो ॥८१॥

(स्वो०)—सातवेदनीय, स्थिरादिषट्कं, उच्चैर्गोत्र, देवमनुष्यद्विकं, पञ्चेन्द्रियजातिः, चतुरस्रसंस्थानं, वज्रर्षभनाराचसंहनन, प्रश

स्तविहायोगतिरेता षोडश प्रकृतयः परावर्त्तमानशुभवर्गसंज्ञाः तृतीयवर्गसंज्ञा भवतीति गाथार्थः ॥ ८१ ॥

(मलय०)–परावर्त्तमानशुभप्रकृतिवर्गप्ररूपणार्थमाह—सातवेदनीयम्, स्थिरादिषट्कम्–स्थिरशुभसुभगसुस्वरादेययशःकीर्त्तिरूपम्, उच्चैर्गोत्रम्, देवद्विकम्, मनुष्यद्विकम्, पञ्चेन्द्रियजातिः, समचतुरस्रसंस्थानम्, वज्रर्षभनाराचसंहननम्, प्रशस्तविहायोगतिः, इत्येष षोडशप्रकृतिसमुदायरूपपरावर्त्तमानशुभप्रकृतिवर्गः ॥ ८१ ॥

**अस्सायथावरदसं नरयदुगं विहगई य अपसत्था । पंचेंदिरिसभचउरंसगेयरा असुभघोलणिया ॥ ८२ ॥**

(स्वो०)—असातवेदनीयं, स्थावरादिदशकं, नरकद्विकं, अप्रशस्तविहायोगतिः, पञ्चेन्द्रियरहिताश्चतस्रो जातयः, प्रथमसंहननवर्जानि पञ्चसंहननानि, प्रथमसंस्थानवर्जानि पञ्चसंस्थानानि एता अष्टाविंशतिप्रकृतयोऽशुभघोलनासंज्ञाश्चतुर्थवर्गो भवतीति गाथार्थः ॥८२॥

(मलय०)—सम्प्रति परावर्त्तमानाऽशुभवर्गप्ररूपणार्थमाह—असातवेदनीयम्, स्थावरादिदशकं–स्थावरसूक्ष्मसाधारणाऽपर्याप्ताऽस्थिरा-ऽशुभदुर्भगदुःस्वराऽनादेयाऽयशःकीर्त्तिरूपम्, नरकद्विकम्, अप्रशस्ता विहायोगतिः, 'पंचिंदिरिसहचउरंसगेयर' त्ति–इतरशब्दः प्रत्येकम-भिसम्बध्यते, पञ्चेन्द्रियेतराः–पञ्चेन्द्रियजातिवर्जाः शेषाश्चतस्रो जातयः, वज्रर्षभनाराचसंहननवर्जानि शेषाणि पञ्चसंहननानि, समच-तुरस्रसंस्थानवर्जानि शेषाणि पञ्चसंस्थानानि, इत्येता अष्टाविंशतिसंख्या अशुभघोलनिकाः–अशुभपरावर्त्तमानाः प्रकृतयः, परावर्त्तमाना हि प्रकृतयः पूर्वपुरुषैर्घोलनिका इत्युच्यन्ते, परावर्त्त्य परावर्त्त्य घोलनापरिणामेन तासां वक्ष्यमाणत्वात् ॥ ८२ ॥

अनुकर्षणविधानमाह—

॥ ६३ ॥

मोत्तुमसंख भाग जहण्णठितिठाणगाण सेसाइं । गच्छंति उवरिमाए तदेक्कदेसेण अण्णाणि ॥ ८३ ॥

(स्वो०)—अशुभवर्गप्रकृतीनां जघन्यस्थितिबन्धे यान्यनुभागबन्धाऽध्यवसायस्थानानि तेषामसंख्येयभागं तस्यामेव जघन्यस्थितौ मुक्त्वा-अवस्थाप्य शेषाण्यनुभागस्थानानि गच्छन्ति तदुपरितनस्थितावनन्तरसमये, किं तस्यां तावन्मात्राण्येवानुभागस्थानानि भवन्ति? नैवं, तानि च तदेकदेशतोऽन्यानि च भवन्तीति गाथार्थः ॥ ८३ ॥

(मलय०)–कृता वर्गप्ररूपणा, सम्प्रति एतेषु वर्गेषु यथाक्रममनुकृष्टिमभिधित्सुराह—उपघातादीनामपरावर्तमानाऽशुभप्रकृतीनां पञ्चपञ्चाशत् संख्यानां जघन्यस्थितिबन्धारम्भे यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि उपरितन्यां द्वितीयायां स्थितौ–द्वितीयस्थितिस्थानबन्धारम्भे गच्छन्ति । ननु द्वितीयस्थितिस्थानबन्धारम्भे किं तान्येवाऽसंख्येयभागशेषाणि भवन्ति ? किं वा अन्यान्यपि ? अत आह–'तदेगदेसेण अन्नाणि' । तेषां–जघन्यस्थितिबन्धारम्भभाविनामेकदेशस्तदेकदेशः, तेन–तदेकदेशपरिमाणेनेत्यर्थः, तानि भवन्ति, अन्यानि च भवन्ति । द्वितीयस्थितिबन्धारम्भे च यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतम भागं मुक्त्वा शेषाणि सर्वाण्यपि तृतीयस्थितिस्थानबन्धारम्भे गच्छन्ति, अन्यानि च भवन्ति । तृतीयस्थितिस्थानबन्धारम्भे च यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतम भाग मुक्त्वा सर्वाण्यपि शेषाणि चतुर्थस्थितिस्थानबन्धारम्भे गच्छन्ति, अन्यानि च भवन्ति । एवं तावद्वाच्य यावत्पल्योपमाऽसंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्र जघन्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता ॥ ८३ ॥

एवं उवरिं हुत्ता गंतूण कंडगमेत्तठितिबंधा । पढमट्ठिइठाणाणं अणुकड्ढी जाइ परिणिट्ठं ॥ ८४ ॥

(स्वो०)—असंख्येयभागोऽसंख्येयभागस्तिष्ठति स्थित्यां स्थित्यां, जघन्यस्थित्यनुभागस्थानेभ्योऽनेन विधिना उपर्युपरि स्थितिस्थानेषु गच्छतः 'कण्डकमात्रान्'—पल्योपमासंख्येयभागमात्रान् स्थितिबन्धान् गत्वा प्रथमजघन्यस्थित्यनुभागस्थानानां अनुकृष्टिः परिनिष्ठां याति—समाप्तिमेतीति गाथार्थः ॥ ८४ ॥

(मलय०)—तथा चाह—एवमुक्तेन प्रकारेण स्थितिस्थानं स्थितिस्थानं प्रति असंख्येयासंख्येयभागमोचनेन 'उवरिं हुत्ता'—ऊर्ध्वमुखं कण्डकमात्रान्—पल्योपमासंख्येयभागमात्रान् स्थितिबन्धान् गत्वा कण्डकचरमस्थितौ प्रथमस्थितिस्थानानां जघन्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिनिष्ठां याति ॥ ८४ ॥

तदुवरिमआइयासुं कमसो बीयाइयाण निट्ठाइ । ठितिठाणाणणुकड्ढी आउक्कस्सं ठिई जाव ॥ ८५ ॥

(स्वो०)—'तदुपरिमादिकासु'—तस्य कण्डकस्य योपरितनस्थितिस्तदादिकासु स्थितिषु 'क्रमशः'—परिपाटया जघन्यस्थितेः या द्वितीयादिस्थितिस्तदादिकानां यान्यनुभागबन्धाध्यवसायस्थानानि तेषामनुकृष्टिः समाप्तिं याति, किमुक्तं भवति ? अभिमतस्थित्यनुभागस्थानानां स्थित्यां स्थित्यां असंख्येयभागं मुञ्चन् मुञ्चन् उपरितनस्थितिषु तावद् व्रजति यावत्कण्डकं—कण्डकान्तस्थितौ तदनुकृष्टिः समाप्तिं याति, स्थितौ स्थितौ तानि चान्यानि च भवन्त्येवं यावदुत्कृष्टं स्थितिस्थानं तावदनुकृष्टिर्नेया इति गाथार्थः ॥ ८५ ॥ 

(मलय०)—'तदुपरिमादिषु'—तस्मात्कण्डकादुपरितन्यादिषु 'क्रमशः'—परिपाटया जघन्यस्थितेरारभ्य द्वितीयादीनां स्थितीनां यान्य-

नुभागबन्धाध्यवसायस्थानानि तेषामनुकृष्टिर्निष्ठां याति । एवं स्थितिस्थानेषु अनुभागबन्धाध्यवसायस्थानानामनुकृष्टिरुत्कृष्टां स्थितिं यावन्नेतव्या। एतदुक्तं भवति—द्वितीयस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामेकैकस्मिन् स्थितिस्थाने असंख्येयं असंख्येय भाग मुञ्चन् तावद् व्रजेद् यावत्कण्डकादुपरितनी प्रथमा स्थितिः,अत्र तेषां द्वितीयस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति । ततोऽनन्तरायां स्थितौ तृतीयस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमेति । एवमुक्तनीत्या अनुकृष्टिः परिनिष्ठा च तावद्वक्तव्या यावदुक्तप्रकृतीनामात्मीयात्मीया उत्कृष्टा स्थितिः ॥ ८५ ॥

उवघायाईणेव एसो परघायमाइसु विसेसो । उक्कोसठ्ठिइहिंतो हेट्ठमुहं कीरइ असेसं ॥ ८६ ॥

(स्वो०)—उपघाताद्यशुभवर्णप्रकृतीनामेषमनन्तरोक्तविधिना अनुकृष्टिर्भवति । पराघातादिष्वयं विशेषः—सर्वोत्कृष्टस्थितिस्थानादधोमुखं पूर्वोक्तमशेषं क्रियते, किमुक्तं भवति ?—शुभप्रकृतीनामुत्कृष्टस्थितिबन्धे स्तोकान्यनुभागबन्धाध्यवसायस्थानानि भवन्ति, तेषामसंख्येयभागस्तस्यामेव तिष्ठति, शेषाणि तदधःस्थितौ गच्छन्ति । एवमसंख्येयभाग मुञ्चन् मुञ्चन् स्थितौ स्थितौ यान्ति परिनिष्ठां तदनुभागस्थानानि कण्डकान्तस्थिताविति, एवमुपान्त्यस्थित्यादीनामपि नेतव्यानि अनुभागबन्धाध्यवसायस्थानान्यधोमुखानि यावत् जघन्या स्थितिरिति गाथार्थः ॥ ८६ ॥

(मलय०)-तथा चाह—एवमुक्तेन प्रकारेण एषा अनुकृष्टिरुपघातादीनां प्रागुक्तानां पञ्चपञ्चाशत्संख्यानां प्रकृतीनामवगन्तव्या । पराघातादिषु पद्चत्वारिंशत्संख्यासु प्रकृतिषु पुनर्विशेषः, तमेवाह—'उक्कोसे'त्यादि—उत्कृष्टस्थितेः सर्वोत्कृष्टस्थितिस्थानादधोमुखं पूर्वोक्तमशेष क्रियते । इयमत्र भावना—उत्कृष्टस्थितिबन्धारम्भे यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतम भाग मुक्त्वा शेषा-

णि सर्वाण्यपि एकसमयोनोत्कृष्टस्थितिबन्धारम्भे प्राप्यन्ते, अन्यानि च भवन्ति। एकसमयोनोत्कृष्टस्थितिबन्धारम्भे च यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतम भागं मुक्त्वा शेषाणि सर्वाण्यपि द्विसमयोनोत्कृष्टस्थितिबन्धारम्भे प्राप्यन्ते, अन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमाऽसंख्येयभागमात्राः स्थितयो गता भवन्ति। अत्रोत्कृष्टस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानां स्थितिस्थाने स्थितिस्थाने असंख्येयाऽसंख्येयभागमोचनेनानुकृष्टिः परिसमाप्ता। ततोऽनन्तरमधस्तने स्थितिस्थाने एकसमयोनोत्कृष्टस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिनिष्ठां याति। ततोऽप्यधस्तनतरे स्थितिस्थाने द्विसमयोनोत्कृष्टस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमेति। एवं तावद्वाच्यं यावत्पराघातादीनां सर्वासामपि षट्चत्वारिंशत्संख्यानां प्रकृतीनामात्मीयात्मीया जघन्या स्थितिः ॥ ८६ ॥

सप्पडिवक्खाणं पुण असायसायाइयाण पगईणं। ठावेसु ठिइठाणा अंतोकोडाइ नियनियगा ॥८७॥

(स्वो०)—प्रतिपक्षो विद्यते यासां ताः सप्रतिपक्षाः—असातसातादिकाः, तासामसातादिकानां प्रकृतीनां स्थापयित्वा स्थितिस्थानानि अन्तःकोटाकोट्यादीनि अभव्यजघन्यबन्धादिकान्युभयोरपीति गाथार्थः ॥ ८७ ॥

(मलय०)—सम्प्रति परावर्तमानशुभाशुभप्रकृतीनामनुकृष्टिमभिधातुकाम आह—सह प्रतिपक्षेण विद्यन्ते यास्ताः सप्रतिपक्षाः—असातसातादिकाः, तासां स्थितिस्थानानि 'निजनिजकानि'—आत्मीयात्मीयानि अन्तःकोटीकोट्यादीनि, अभव्यस्य हि जघन्यः स्थितिबन्धः सर्वस्तोकोऽपि अन्तःकोटीकोटी प्रमाणः, अभव्यप्रायोग्यजघन्यस्थितिबन्धादारभ्य च प्रायोऽनुकृष्टिर्वक्तव्या, एतच्च प्रागेवोक्तम्, तत उक्तमन्तःकोटीकोट्यादीनीति। तानि स्थापयित्वा, स्थापनायां च सातस्योपरिभागादारभ्याधोमुखमसातस्य चाधोभागादारभ्यो

र्ध्वमुखं सागरोपमशतपृथक्त्वप्रमाणाः स्थितयः परस्परमाक्रान्ताः स्थापयितव्याः, एतावत्यो हि स्थितयः परावर्त्य बध्यन्ते तत आक्रान्ताः स्थाप्यन्ते। शेषास्तु सातस्याधोमुखा असातस्य चोर्ध्वमुखाः स्थापनीयाः यावन्निजनिजपर्यन्तवर्तिनी स्थितिः, एताश्चान्तरान्तरा प्रतिपक्षप्रकृतिबन्धाभावेन यथायोगं संक्लेशविशुद्धिवशान्निरन्तरं बध्यन्ते ततः शुद्धा इत्युच्यन्ते॥ ८७॥

जा पडिवक्खक्कंता ठिईउ ताणं इमो कमो होइ। ताणण्णाणि य ठाणा सुद्धठिईणं तु पुव्वकमो॥ ८८॥

(स्वो०)—याः प्रतिपक्षप्रकृतिस्थितिभिः स्थितय आक्रान्ताः—शुभप्रकृतेरशुभप्रकृतिभिः अशुभप्रकृतेः शुभप्रकृतिस्थितिभिः, तासां प्रकृतीनामयं क्रमो भवति—तानि चान्यानि चानुभागबन्धाध्यवसायस्थानानि शुभप्रकृतीनामुत्कृष्टस्थितेरशुभानां जघन्यस्थितेरारभ्य प्रतिपक्षाक्रान्तासु सर्वास्वपि स्थितिष्वनुयान्ति। कथमेतत्? उच्यते—सातस्योत्कृष्टस्थितिं बध्नानस्य यान्यनुभागबन्धाध्यवसायस्थानानि तानि स्तोकानि, समयोनायामुत्कृष्टस्थितौ तानि चान्यानि च भवन्ति, द्विसमयोनायामुत्कृष्टस्थितौ तानि चान्यानि च भवन्ति, एवं समयहान्या तावन्नेतव्यं यावदसातस्य जघन्या स्थितिरभव्यप्रायोग्येति। ततो जघन्यबन्धादभव्यप्रायोगात् तुशब्दादधःस्थितस्थितीनां तद्बन्धजघन्यतराणां पूर्वोक्तक्रमो यः पराघातादीनां शुभानां प्रागुक्तः स सातस्य भवति। तदेव दर्शयति—तद्बन्धात् समयोना या स्थितिः तस्याः यान्यनुभागबन्धाध्यवसायस्थानानि तान्युपरितनस्थितीनां बन्धाध्यवसायस्थानेभ्यः तदेकदेशेन तानि चान्यानि च भवन्ति, तस्याः समयोनायां स्थितौ तदेकदेशेन तानि चान्यानि चानुभागस्थानानि भवन्ति, तस्या अपि द्विसमयोनायां स्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवमधोमुखं नेयं यावत्पल्योपमसासंख्येयभागमात्राणि स्थितिस्थानानि, ततोऽभव्यजघन्यबन्धादधः स्थिता या स्थितिः तस्या अनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः निष्ठां याति, एवं नेतव्या यावत्सातस्य जघन्या

स्थितिः। सद्वेदनीयग्रहणेन तद्वर्गप्रकृतीनामपि वक्तव्येति। साम्प्रतमसातस्योच्यते—अभव्यप्रायोग्ये जघन्यस्थितिबन्धे यान्यसातस्यानुभागबन्धाध्यवसायस्थानानि तस्याः समयाधिकस्थितौ तानि चान्यानि च भवन्ति, एवं द्विसमयाधिकायां स्थितौ तानि चान्यानि च भवन्ति, प्रतिसमयमेव नेयं कण्डकविधिमकुर्वता यावत्सातस्थितिस्थानतुल्याः असातस्य स्थितय इति। इयं प्ररूपणा कासां स्थितीनामुच्यते? असातस्य याः स्थितीर्बध्नानो जघन्यानुभागं बध्नाति, किमुक्तं भवति? यावन्मात्राः सातस्य स्थितयः तावन्मात्रासु स्थितिषु जघन्यानुभागस्थानानामनुकृष्टिः याति, तदुपरितनस्थितीनां पूर्वक्रमः—उपघातादीनां यदुक्तं तद् भवति। कण्डकादिस्थितेः कण्डकान्त्यस्थित्यामनुकृष्टिः समाप्तिं याति, एवं यावदुत्कृष्टा स्थितिरिति गाथार्थः॥ ८८॥

(मलय०)—सम्प्रत्येतासु अनुकृष्टिक्रममाह—याः स्थितयः प्रतिपक्षाक्रान्तास्तासामयं क्रमः, यदुत तानि चान्यानि च स्थानानि अनुभागबन्धाध्यवसायस्थानानि भवन्ति। याश्च शुद्धाः प्रतिपक्षानाक्रान्ताः स्थितयस्तासां पूर्वक्रमः—तदेकदेशोऽन्यानि चेत्यर्थः। तदेवमतिसंक्षिप्तमुक्तमतो विशेषतो भाव्यते—तत्र सातस्योत्कृष्टां स्थितिं बध्नतो यानि अनुभागबन्धाध्यवसायस्थानानि समयोनोत्कृष्टस्थितिबन्धारम्भेऽपि तानि भवन्ति अन्यानि च। यानि समयोनोत्कृष्टस्थितिबन्धारम्भे भवन्ति द्विसमयोनोत्कृष्टस्थितिबन्धारम्भेऽपि तानि भवन्ति अन्यानि च। एवं तावद्वाच्यं यावत्स्थापनायामसातस्य जघन्या स्थितिः। एतदुक्तं भवति—यावत्प्रमाणाः स्थितयोऽसातस्य जघन्यानुभागबन्धप्रायोग्याः सातेन च सह परावृत्त्य बध्यन्ते तावत्प्रमाणासु सातस्य स्थितिषु तानि चान्यानि चेत्येव वक्तव्यम्। ततोऽसातस्याभव्यप्रायोग्यजघन्यस्थितिबन्धसमाने स्थितिस्थाने यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यसातजघन्यस्थितिबन्धादधस्तने स्थितिस्थाने प्राप्यन्ते अन्यानि च भवन्ति। तत्रापि यान्यनुभागबन्धा-

ध्यवसायस्थानानि तेपामसंख्येयतम भागं मुक्त्वा शेषाणि सर्वाण्यप्यनन्तरे स्थितिबन्धे प्राप्यन्ते अन्यानि च भवन्ति । अनेन क्रमेणाधोमुखं तावन्नेयं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । तत्र चासातसत्कजघन्यस्थितिबन्धतुल्यस्थितिस्थान-सत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति । ततोऽधस्तने स्थितिस्थाने असातजघन्यस्थितिबन्धतुल्यस्थितिस्थाना-दधस्तनस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिर्निष्ठामुपगच्छति । एवमनुकृष्टिः परिनिष्ठा च तावद्वाच्या याव-त्सातस्य जघन्यस्थितिः । एवं स्थिरादीनामपि परावर्तमानशुभप्रकृतीनामनुकृष्टिरवगन्तव्या । सम्प्रत्यसातस्योच्यते—असातस्य जघन्यस्थितिबन्धारम्भे यानि अनुभागबन्धाध्यवसायस्थानानि समयाधिकजघन्यस्थितिबन्धारम्भेऽपि तानि भवन्ति, अन्यानि च । यानि_ समयाधिकजघन्यस्थितिबन्धारम्भे अनुभागबन्धाध्यवसायस्थानानि तानि द्विसमयाधिकजघन्यस्थितिबन्धारम्भेऽपि भवन्ति, अन्यानि च । एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वम् । एताश्च स्थितयः सर्वजघन्यानुभागबन्धप्रायोग्याः, यत एतावत्यः स्थितयः सातेन सह परावृत्य परावृत्य बध्यन्ते, परावर्तमानश्च प्रायो मन्दपरिणामो भवति, तत एतासु जघन्यानुभाग-बन्धसम्भवः । जघन्यानुभागबन्धप्रायोग्यस्थितीनां च चरमस्थितिबन्धे यानि अनुभागबन्धाध्यवसायस्थानानि तेपामसंख्येयतम भागं मुक्त्वा शेषाणि सर्वाण्यपि तदुपरितनस्थितिबन्धारम्भेऽनुवर्तन्ते, अन्यानि च भवन्ति । ततोऽप्युपरितनस्थितिबन्धारम्भे यानि प्राक्तन-स्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानि तेपामसंख्येयतम भागं मुक्त्वा शेषाणि सर्वाण्यनुवर्तन्ते, अन्यानि च भवन्ति । एवं तावद्वाच्य यावत्पल्योपमाऽसंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्र जघन्यानुभागबन्धप्रायोग्यचरमस्थितिसत्कानामनुभागब-न्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमेति । ततोऽप्युपरितनस्थितिबन्धे जघन्यानुभागबन्धप्रायोग्यस्थित्यनन्तरस्थितिसत्कानुभा-

गबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति । एवं तावद्वाच्यं यावदसातस्योत्कृष्टा स्थितिः । एवं स्थावरदशकनरकद्विकादीनामपि सप्तविंशतिसंख्यानां परावर्त्तमानाशुभप्रकृतीनामनुकृष्टिरवसेया ॥ ८८ ॥

**मोत्तूण नीयमियरासुभाण जो जो जहण्णठितिबंधो । नियपडिवक्खसुभाणं ठावेयव्वो जहण्णयरो ॥८९॥**

(स्वो०)—मुक्त्वा नीचैर्गोत्रप्रकाराः–नीचैर्गोत्रतिर्यग्द्विकसंज्ञास्तिस्रः प्रकृतीः, इतराशुभानां–अन्याशुभप्रकृतीनां यो यो जघन्यस्थितिबन्धोऽभव्यप्रायोग्यस्तस्मान्निजप्रतिपक्षशुभानां स्थापनीयो जघन्यतरः, किमुक्तं भवति ? असातजघन्यबन्धात् सातस्य जघन्यतरः स्थाप्योऽभव्यप्रायोग्याज्जघन्यतरः, एवं सातासातादिवर्गप्रकृतीनां सर्व्वासामपीति गाथार्थः ॥ ८९ ॥

(मलय०)—अत्रैव स्थापनायां विशेषमभिधित्सुराह—मुक्त्वा नीचैर्गोत्रम्, नीचैर्गोत्रमिहोपलक्षणं, ततोऽयमर्थः–तिर्यग्गतितिर्यगानुपूर्वीनीचैर्गोत्राणि मुक्त्वा इतराऽशुभप्रकृतीनां–शेषपरावर्त्तमानाशुभप्रकृतीनामसातादीनां स्थापनायां यो यः स्थापितोऽभव्यप्रायोग्यो जघन्यस्थितिबन्धस्तस्याधस्तान्निजप्रतिपक्षशुभानां सातादीनां जघन्यतरः स्थापयितव्यः। तदेवं चतुर्णामपि वर्गाणामनुकृष्टिरभिहिता ॥८९॥

**पडिवक्खजहण्णयरो तिरिदुगनीयाण सत्तममहीए । सम्मत्ताईउ तओ अणुकड्ढी उभयवग्गेसु ॥ ९० ॥**

(स्वो०)—स्वप्रतिपक्षजघन्यबन्धाज्जघन्यतरो भवति, कासां ? तिर्यग्द्विकनीचैर्गोत्राणाम्, कुत्र ? सप्तमपृथिव्याम्, कदा ? सम्यक्त्वं प्रतिपत्तुकामस्य, तस्माज्जघन्यबन्धादनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः कार्योभयवर्गयोः, शुभानामभव्यजघन्यबन्धादिति। कथं ? सम्यक्त्वं प्रतिपत्तुकामस्य सप्तमपृथिव्यां यः सर्वजघन्यः स्थितिबन्धः तस्य जघन्यस्थितौ यान्यनुभागबन्धाध्यवसायस्थानानि

तान्युपरिमस्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवं यावत्कण्डकान्तस्थितिस्तावज्जघन्यस्थित्यनुभागस्थानानि तदेकदेशेन तानि चान्यानि च भवन्ति, जघन्यस्थितेरनुकृष्टिः समाप्तिं याति, एवं द्वितीयस्थितेः कण्डकोपरिस्थितावनुकृष्टिः समाप्तिं याति, एवमुपघातक्रमेण तावन्नेयं यावदभव्यजघन्यबन्धः । तस्मिन्नभव्यजघन्यस्थितिबन्धे यान्यनुभागबन्धाध्यवसायस्थानानि द्वितीयादिषु तानि चान्यानि च भवन्ति, घोलनप्रकृतिष्वयं विशेषः, [तानि चान्यानि च भवन्ति] प्रतिपक्षस्थितिमानासु स्थितिषु अशुभमशुभवर्गयोः पुनः तदेकदेशेन तानि चान्यानि च भवन्ति, कण्डकान्तस्थितौ कण्डकादिस्थितेरनुकृष्टिः समाप्तिं याति, एवमशुभवर्गोत्रस्थितिप्रमाणासु स्थितिषु तानि चान्यानि च भवन्ति जघन्यस्थित्यनुभागस्थानानि, तदुपरितनस्थितिष्वसातक्रमः, तिर्यग्द्विकेऽप्ययं विधिरिति गाथार्थः ॥ ९० ॥

(मलय०)—सम्प्रति तिर्यग्गतितिर्यगानुपूर्वीनीचैर्गोत्राणामभिधातुकाम आह—तिर्यग्द्विकनीचैर्गोत्रयोः स्थापनायां स्वप्रतिपक्षप्रकृतिजघन्यस्थितिबन्धादभव्यप्रायोग्याज्जघन्यतरः स्थितिबन्धः स्थापनीयः । तथा तिर्यग्द्विकनीचैर्गोत्रयोः सप्तमपृथिव्यां वर्तमानस्य नारकस्य सम्यक्त्वं प्रतिपत्तुकामस्य सम्यक्त्वादित आरभ्य सम्यक्त्वादनन्तरे पश्चात्ये समये यो जघन्यस्थितिबन्धस्तस्मादारभ्यानुकृष्टिर्वक्तव्या यावदभव्यप्रायोग्यजघन्यस्थितिबन्धः, ततस्तस्मादभव्यप्रायोग्यजघन्यस्थितिबन्धादारभ्यानुकृष्टिरुभयोरपि वर्गयोः, शुभप्रकृतीनां मनुष्यगतिमनुष्यानुपूर्व्युच्चैर्गोत्राणां अशुभप्रकृतीनां चामूषामेव तिर्यग्गत्यादीनामनुकृष्टिः प्रागुक्तशुभाशुभपरावर्तमानापरावर्तमानप्रकृतिवर्गवत् वेदितव्या । तत्र शुभप्रकृतीनां मनुष्यगत्यादीनां नामग्राहं प्रागेवोक्तम्, अशुभपरावर्तमानप्रकृतिवर्गानुसारेण चामूषामपि तिर्यगादीनामभव्यप्रायोग्यजघन्यस्थितिबन्धादारभ्य वक्तव्यम् । इदमप्यतिसंक्षिप्तमुक्तमिति विशेषतो भाव्यते—तत्र सप्त-

अनुभाग-
बन्धप्ररू-
पणा.

मपृथिव्यां वर्त्तमानस्य नारकस्यानन्तरसमये सम्यक्त्वं प्रतिपत्तुकामस्य तस्मिन् पाश्चात्ये समये तिर्यग्गतेर्जघन्यां स्थितिं बध्नतो यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि द्वितीयस्थितिबन्धारम्भे अनुवर्त्तन्ते, अन्यानि च भवन्ति। द्वितीयां च स्थितिं बध्नतो यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि तृतीयस्थितिबन्धेऽनुवर्त्तन्ते, अन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति। अत्र जघन्यस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमियर्त्ति। तत उपरितनस्थितिबन्धे द्वितीयस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति। एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यस्थितिबन्धः। अभव्यप्रायोग्यजघन्यस्थितिबन्धे च यानि अनुभागबन्धाध्यवसायस्थानानि तत उपरितनस्थितिबन्धे तानि भवन्ति, अन्यानि च। तत्रापि यानि अनुभागबन्धाध्यवसायस्थानानि तानि तत उपरितनस्थितिबन्धे सर्वाणि भवन्ति, अन्यानि च। एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वम्। यावत्यः स्थितयः प्रतिपक्षप्रकृत्या सह परावृत्य परावृत्य बध्यन्ते तावद्वाच्यमित्यर्थः। सागरोपमशतपृथक्त्वचरमस्थितौ च यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि तदुपरितनस्थितिबन्धेऽनुवर्त्तन्ते, अन्यानि च भवन्ति। तत्रापि यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि तत उपरितनस्थितिबन्धेऽनुवर्त्तन्ते, अन्यानि च भवन्ति। अत्र एवं तावद्वाच्यं यावत्पल्योपमाऽसंख्येयभागमात्राः स्थितयो गता भवन्ति। सागरोपमशतपृथक्त्वचरमस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता। तत उपरितने स्थितिबन्धे सागरोपमशतपृथक्त्वानन्तरस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति। एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः। एवं तिर्यगानुपूर्वीनीचैर्गोत्रयोरप्यनुकृष्टिरवगन्तव्या ॥९०॥

**अट्ठारस कोडीओ परघायकमेण तह चउक्केवि। कंडं निव्वत्तणकंडकं च पल्लस्स संखंसो ॥ ९१ ॥**

॥ ६९ ॥

(स्वो०)—अष्टादशसागरोपमकोटाकोटीर्यावत् पराघातक्रमो भवति त्रसादिचतुष्कस्य, अपिशब्दात् सातक्रमश्च, तत्परतो यावदभव्यप्रायोग्यो जघन्यबन्धः तदधो भूयोऽपि पराघाततुल्यम्। तदेव लेशतो दर्शयति–यान्युत्कृष्टस्थितिं बध्नानस्यानुभागबन्धाध्यवसायस्थानानि भवन्ति, [तदेकदेशेन तानि चान्यानि च एवं] समयोनामुत्कृष्टस्थितिं बध्नानस्य तदेकदेशेन तानि च अन्यानि च भवन्ति, एवं द्वित्रिचतुष्पञ्चसमयोनां बध्नानस्य तदेकदेशेन तानि चान्यानि च भवन्ति, एवं कण्डकान्तस्थितौ उत्कृष्टस्थितेरनुत्कृष्टिः समाप्तिं याति, समयोनस्थितेः कण्डकाधःस्थितौ समाप्तिं याति, द्विसमयोनस्थितेः कण्डकाधो द्वितीयस्थितौ समाप्तिं याति, एवमष्टादशकोटाकोटीर्यावदवतारयितव्याः, तदन्तस्थितेः साततुल्यं–अष्टादशकोटाकोटयन्तःस्थितेः यान्यनुभागस्थानानि भवन्ति, तानि चान्यानि च समयोनायां भवन्ति, एवं द्वित्रिचतुष्पञ्चसमयोनायां तानि चान्यानि च भवन्ति, एवं यावदभव्यप्रायोग्यः स्थावरनामादीनां बन्धः। तस्मादभव्यबन्धाज्जघन्यतरो बन्धस्त्रसादिचतुष्कस्य पराघातवद्भवति, शुभप्रकृतित्वात्। तस्मादभव्यबन्धात्समयोनस्थितेर्यानि अनुभागबन्धाध्यवसायस्थानानि द्विसमयोनस्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवं त्रिचतुष्पञ्चसमयोनस्थितौ तदेकदेशेन तानि चान्यानि च भवन्ति, एवं यावत्कण्डकं तावन्नेयम्, यतः कण्डकान्तस्थितौ कण्डकादिस्थितेरनुत्कृष्टिः समाप्तिं याति एवं पराघातक्रमेण नेया यावत्सर्वजघन्या स्थितिरिति। कण्डकं निर्वर्त्तनकण्डकं च पल्योपमासंख्येयभागस्याभिधाने भवत इति गाथार्थः ॥ ९१ ॥

(मलय०)—सम्प्रति त्रसादिचतुष्कस्यानुकृष्टिमभिधातुकाम आह—सर्वोपरितनात्स्थित्यग्रादारभ्य अधोऽधोऽवतरणेन यावदधस्तादष्टादशसागरोपमकोटीकोटयस्तिष्ठन्ति तावत्पराघातक्रमेण त्रसादिचतुष्केऽपि द्रष्टव्यम्, अपिशब्दात्ततोऽधस्तात्सातेन तुल्यमिति। तत्र त्रसनाम्नो भाव्यते—त्रसनाम्न उत्कृष्टस्थितिबन्धे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वा-

ण्यपि समयोनोत्कृष्टस्थितिबन्धेऽनुवर्तन्ते, अन्यानि च भवन्ति । समयोनोत्कृष्टस्थितिबन्धेऽपि यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतम भागं मुक्त्वा शेषाणि सर्वाण्यपि द्विसमयोनोत्कृष्टस्थितिबन्धेऽनुवर्तन्ते, अन्यानि च भवन्ति । एव तावद्वाच्य यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्रोत्कृष्टस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता । ततोऽधस्तने स्थितिस्थाने समयोनोत्कृष्टस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति । एवमधोऽधोऽनन्तररूपेण तावद्वाच्यं यावदधस्तादष्टादशसागरोपमकोटीकोटयस्तिष्ठन्ति । ततोऽष्टादशसागरोपमकोटीकोटीचरमस्थितौ यानि अनुभागबन्धाध्यवसायस्थानानि तानि अधस्तनस्थितिबन्धे सर्वाण्यपि भवन्ति, अन्यानि च । यानि च अधस्तनस्थितिबन्धे अनुभागबन्धाध्यवसायस्थानानि तानि ततोऽधस्तनस्थितिबन्धे सर्वाण्यपि भवन्ति, अन्यानि च । एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धविषयस्थावरनामसत्कस्थितिप्रमाणाः स्थितयो गता भवन्ति । ततोऽनन्तरमधस्तने स्थितिस्थाने प्राक्तनानन्तरस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामसंख्येयतम भाग मुक्त्वा शेषाणि सर्वाण्यप्यनुवर्तन्ते, अन्यानि च भवन्ति । एवं तावद्वाच्य यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्र जघन्यानुभागबन्धविषयस्थावरनामसत्कस्थितिप्रमाणतयाऽभिहितानां स्थितीनां प्रथमस्थितेर्यान्यनुभागबन्धाध्यवसायस्थानानि तेषामनुकृष्टिः परिसमाप्ता । ततोऽधस्तने स्थितिस्थाने द्वितीयस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिनिष्ठामेति । एवं तावद्वाच्यं यावज्जघन्या स्थितिः । एवं बादरपर्याप्तप्रत्येकनाम्नामपि भावनीया । सम्प्रति यत्प्राक् 'उवरिं हुत्ता गतूण कण्डकमेत्तठिईबन्धा' इत्यत्र कण्डकं, पुष वक्ष्यमाणं निर्वर्तनकण्डकं, ते द्वे अपि व्याचिख्यासुराह—कण्डकं प्रागुक्तं, निर्वर्तनकण्डकं च वक्ष्यमाणं पल्यस-पल्योपमस्यासंख्येयांशोऽसंख्येयतमो भागो द्रष्टव्यः ॥ ९१ ॥

अनुभागोत्कृष्टिः समाप्तेति । अनुभागस्य तीव्रमन्दत्वमधिकृत्य यद्यपि सर्वाशुभप्रकृतीनां जघन्यस्थित्यनुभागात् स्थितिवृद्धावनन्तगुणश्रेण्यानुभागो गच्छति यावदुत्कृष्टा स्थितिः, शुभानामेतदेव विपरीतमुत्कृष्टस्थितौ यो जघन्यानुभागः स प्रतिसमयमधोऽधोऽनन्तगुणवृद्ध्या गच्छति यावज्जघन्या स्थितिरिति । तथापि प्रतिसमय स्थितीनां तीव्रमन्दत्वमधिकृत्य विशेषदर्शनार्थमाह—

जा निव्वत्तणकंडं जहण्णठितिपढमठाणगाहिंतो । गच्छति उवरिहुत्तं अणंतगुणणाइ सेढीए ॥ ९२ ॥

तत्तो पढमठिईए उक्कोसं ठाणगं अणतगुणं । तत्तो कंडगउवरिं आउक्कस्स नए एवं ॥ ९३ ॥

उक्कोसाणं कंड अणंतगुणणाइ तम्मए पच्छा । उवघायमाइयाणं इयराणुक्कोसगाहिंतो ॥ ९४ ॥

(स्वो०)—अशुभवर्गप्रकृतीनां जघन्यस्थितौ यत्प्रथम जघन्यानुभागस्थान तस्माद्यावन्निर्वर्तनकण्डकं, पल्योपमासंख्येयभागमात्राः स्थितय इत्यर्थः, अनन्तगुणश्रेण्या उपर्युपरिस्थितयोऽनुभागमाश्रित्य यान्ति, प्रथमस्थितिजघन्यानुभागात् द्वितीयस्थितावनन्तगुणो जघन्यानुभागः, तस्मादपि तृतीयायामनन्तगुणो जघन्यानुभागः एव यावत्कण्डकमिति गाथार्थः । कण्डकान्तस्थितिजघन्यानुभागात्प्रथमस्थित्युत्कृष्टानुभागस्थानमनन्तगुणं, जघन्यस्थित्युत्कृष्टानुभागोऽनन्तगुण इत्यर्थः, तस्मात्कण्डकोपरिस्थितेर्जघन्यानुभागोऽनन्तगुणः, तस्मादपि द्वितीयस्थित्युत्कृष्टानुभागोऽनन्तगुणः, तस्मात्कण्डकोपरिद्वितीयस्थितेर्जघन्यानुभागोऽनन्तगुणः, एवमथ उपरि उत्कृष्टजघन्यक्रमेण तावज्ज्ञेयावदुत्कृष्टा स्थितिरिति गाथार्थः। उत्कृष्टस्थित्युपलक्षितं यत्कण्डक चरमकण्डकमित्यर्थः, तासामुत्कृष्टस्थितीनां प्रथमस्थित्युत्कृष्टानुभागात् द्वितीयायामुत्कृष्टोऽनुभागोऽनन्तगुणः, तस्मादपि तृतीयायामनन्तगुणः, एवं यावदुत्कृष्टस्थितेरनुभाग उत्कृष्टोऽन-

न्तगुणः, एवमुत्कृष्टस्थितीनां कण्डकं पश्चान्नयेदिति । उपघातादिवर्गप्रकृतीनामयं क्रमः, इतरासां-पराघातादीनां एवमेवोत्कृष्टस्थितेरारभ्य नयेदनन्तगुणश्रेण्यानुभाग इति गाथार्थः । उक्ता तीव्रमन्दता शुभाशुभवर्गयोरिति ॥ ९२-९३-९४ ॥

(मलय०)—तदेवमुक्ता सप्रपञ्चमनुकृष्टिः, सम्प्रति तीव्रमन्दता वक्तव्या, तस्याश्चेदं सामान्यलक्षणं-सर्वासामशुभप्रकृतीनां जघन्यस्थितेरारभ्य स्थितिवृद्धौ यथोत्तरमनन्तगुणानुभागो वक्तव्यः, शुभप्रकृतीनां तूत्कृष्टस्थितेरारभ्य क्रमेणाधोमुखमनन्तगुण इति। सम्प्रति विशेषोपदर्शनार्थमाह—'उपघातादीनाम्'। उपघातप्रभृतिप्रकृतीनां पञ्चपञ्चाशत्संख्यानां जघन्यस्थितौ यत्प्रथमं जघन्यमनुभागस्थानम्, तस्मात्परत उपरिमुखं-ऊर्ध्वमुखमेकैकस्यां स्थितौ जघन्यानुभागाः क्रमेणानन्तगुणनया श्रेण्या गच्छन्ति। तद्यथा-जघन्यायां स्थितौ जघन्योऽनुभागः सर्वस्तोकः, ततो द्वितीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः,ततोऽपि तृतीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावन्निर्वर्त्तनकण्डकं भवति। निर्वर्त्तनकण्डकं नाम यत्र जघन्यस्थितिबन्धारंभभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता तत्पर्यन्ता मूलत आरभ्य स्थितय उच्यन्ते। ततो निर्वर्तनकण्डकचरमस्थितिजघन्यानुभागात्प्रथमस्थितावुत्कृष्टमनुभागस्थानमनन्तगुणं भवति, तस्मादपि कण्डकस्योपरि प्रथमस्थितौ जघन्यमनुभागस्थानमनन्तगुणं, ततोऽपि द्वितीयस्थितावुत्कृष्टमनुभागस्थानमनन्तगुणं, ततोऽपि कण्डकोपरि द्वितीयस्थितौ जघन्यमनुभागस्थानमनन्तगुणं, एवमध उपरि चोत्कृष्टजघन्यक्रमेण आउत्कृष्टं-उत्कृष्टां स्थितिं यावत् नेयं, यावदुत्कृष्टायां स्थितौ जघन्यमनुभागस्थानं भवति तावदुक्तप्रकारेण नेयमित्यर्थः। कण्डकमात्राणां च स्थितीनामुत्कृष्टा अनुभागा अद्याप्यनुक्तास्तिष्ठन्ति, तत उत्कृष्टानामनुभागस्थानानां तत्कण्डकमनन्तगुणनया नयेत्। तद्यथा-कण्डकप्रथमस्थितावुत्कृष्टोऽनुभाग उत्कृष्टस्थितिजघन्यानुभागादनन्तगुणः, ततोऽपि द्वितीयस्यां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, ततोऽपि तृतीय-

## ५५ अपरावर्तमानाशुमानाम् तीव्रमंदता

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| निर्वर्तनकंडक | १० | स्थ उ० | अनु० असा- | | | | |
| | ११ | " | अनन्तगु० | | | | |
| | १२ | " | " | | | | |
| | १३ | " | " | | | | |
| | १४ | " | " | ततः | १०स्य उ० | अनु० | अनं०गु |
| ततः | १५ | " | " | ततः | ११ | " | " |
| ततः | १६ | " | " | ततः | १२ | " | " |
| ततः | १७ | " | " | ततः | १३ | " | " |
| ततः | १८ | " | " | ततः | १४ | " | " |
| ततः | १९ | " | " | ततः | १५ | " | " |
| ततः | २० | " | " | ततः | १६ | " | " |
| ततः | २१ | " | " | ततः | १७ | " | " |
| ततः | २२ | " | " | ततः | १८ | " | " |
| ततः | २३ | " | " | ततः | १९ | " | " |
| ततः | २४ | " | " | ततः | २० | " | " |
| ततः | २५ | " | " | ततः | २१ | " | " |
| ततः | २६ | " | " | ततः | २२ | " | " |
| ततः | २७ | " | " | ततः | २३ | " | " |
| ततः | २८ | " | " | ततः | २४ | " | " |
| ततः | २९ | " | " | ततः | २५ | " | " |
| ततः | ३० | " | " | ततः | २६ | " | " |
| | | | | " मन्त्यनिय० | २७ | " | " |
| | | | | | २८ | " | " |
| | | | | | २९ | " | " |
| | | | | | ३० | " | " |

पराघातादि ४६ अप० शुभानां प्रकृतीनां तीव्रमन्दता।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्र० निव० फंडकं | ३० | स्य जघ० | अनु० सर्वाल्पः | | | | |
| | २९ | ततः जघ० | अनु० अनंतगु० | | | | |
| | २८ | ,, | ,, | | | | |
| | २७ | ,, | ,, | | | | |
| | २६ | ,, | ,, | ततः | ३० | स्यउ.अनु. | अनंत. |
| ततः | २५ | ,, | ,, | ,, | २९ | ,, | ,, |
| ,, | २४ | ,, | ,, | ,, | २८ | ,, | ,, |
| ,, | २३ | ,, | ,, | ,, | २७ | ,, | ,, |
| ,, | २२ | ,, | ,, | ,, | २६ | ,, | ,, |
| ,, | २१ | ,, | ,, | ,, | २५ | ,, | ,, |
| ,, | २० | ,, | ,, | ,, | २४ | ,, | ,, |
| ,, | १९ | ,, | ,, | ,, | २३ | ,, | ,, |
| ,, | १८ | ,, | ,, | ,, | २२ | ,, | ,, |
| ,, | १७ | ,, | ,, | ,, | २१ | ,, | ,, |
| ,, | १६ | ,, | ,, | ,, | २० | ,, | ,, |
| ,, | १५ | ,, | ,, | ,, | १९ | ,, | ,, |
| ,, | १४ | ,, | ,, | ,, | १८ | ,, | ,, |
| ,, | १३ | ,, | ,, | ,, | १७ | ,, | ,, |
| ,, | १२ | ,, | ,, | ,, | १६ | ,, | ,, |
| ,, | ११ | ,, | ,, | ,, | १५ | ,, | ,, |
| ,, | १० | ,, | ,, | ,, | अंत्य निव० कं० १४ | ,, | ,, |
| | | | | ,, | १३ | ,, | ,, |
| | | | | ,, | १२ | ,, | ,, |
| | | | | ,, | ११ | ,, | ,, |
| | | | | ,, | १० | ,, | ,, |

स्यां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, एवं तावद्वाच्य यावदुत्कृष्टा स्थितिः । इतरासां पराघातादीनां षट्चत्वारिंशत्संख्यानामुत्कृष्टास्थितिस्थानादारभ्याधोमुखं पूर्वोक्तप्रकारेण अनन्तगुणनया श्रेण्या नयेत् । तद्यथा—उत्कृष्टायां स्थितौ जघन्यानुभागः सर्वस्तोकः, ततः समयोनायामुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततोऽपि द्विसमयोनायामुत्कृष्टस्थितौ जघन्योनुभागोऽनन्तगुणः, एवं तावद्वाच्य यावन्निर्वर्तनकण्डकं भवति । तत उत्कृष्टायां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, ततो निर्वर्तनकण्डकादधः प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततः समयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुण', ततो निर्वर्तनकण्डकादधो द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः, एव तावद्वाच्यं यावज्जघन्यस्थितौ जघन्योऽनुभागोऽनन्तगुणः। कण्डकमात्राणां च स्थितीनामुत्कृष्टा अनुभागा अद्याप्यनुक्ताः सन्ति, ततः कण्डकस्य चरमायां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, ततोऽप्यधस्तनस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, एव तावद्वाच्यं यावज्जघन्यस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः ॥ ९२–९३–९४ ॥

अस्सायजहण्णठिईठाणेहिं तुल्लयाइ सव्वाण । आपडिवक्खक्कतगठिईण ठाणाइ हीणाइ ॥९५॥

तत्तो अणंतगुणणाइ जंति कंडस्ससंखिया भागा । तत्तो अणंतगुणियं जहण्णठितिउक्कस्सं ठाणं ॥९६॥

एव उक्कस्साण अणतगुणणाइ कंडग वयइ । एक्कं जहण्णठाणं जाइ परक्कंतठाणाणं ॥९७॥

उवरिं उवघायसमं सायस्सवि नवरि उक्कसट्ठिइओ। अंतेसुवघायसमं मज्झे नीयस्ससायसमं ॥९८॥

(स्वो०)—असातस्य जघन्यस्थितेर्यानि जघन्यानुभागस्थानानि तैस्तुल्यानि सर्वासां स्थितीनां प्रतिपक्षाक्रान्तानां हीनानि जघ-

न्यानुभागस्थानानीति। किमुक्तं भवति ? असातस्य जघन्यपदे जघन्यानुभागाः स्तोकाः, द्वितीयायां जघन्यानुभागास्तावन्मात्रा एव, तावन्मात्रविधिना च तावन्नेया यावत् सातस्योत्कृष्टस्थितितुल्या असातस्य स्थितय इति गाथार्थः। ततः परावर्त्तमानान्तस्थितेः जघन्यानुभागेभ्यः तदुपरिमस्थितौ जघन्यानुभागोऽनन्तगुणः, एवं कण्डकस्यासंख्येया भागा जघन्यानुभागाः अनन्तगुणश्रेण्या यान्ति, तस्माद् स्थितिस्थानान्निवर्त्तितव्यम्, ततोऽभव्यप्रायोग्यजघन्यस्थितेरुत्कृष्टानुभागस्थानमनन्तगुणमिति गाथार्थः॥ जघन्यस्थितेरारभ्य उत्कृष्टानुभागा अनन्तगुणश्रेण्या स्थितीनां कण्डकं व्रजन्ति, प्रथमस्थितेरनुभागेभ्यो द्वितीयस्थितौ उत्कृष्टानुभागा अनन्तगुणाः, एवं त्रिचतुष्पञ्चमासु स्थितिषु यावत्कण्डकमुत्कृष्टानुभागा अनन्तगुणाः, ततो यस्याः स्थितेर्निवृत्तास्तस्या उपरिमस्थितिजघन्यानुभागस्थानमनन्तगुणं भवति, ततः परावर्त्तमानस्थितीनां द्वितीयकण्डकमनन्तगुणश्रेण्या उत्कृष्टानुभागानां स्थितिवृद्धौ व्रजति, एवं उपर्येकस्याः स्थितेर्जघन्यानुभागाः अधःकण्डकस्थितीनां उत्कृष्टानुभागाः अनन्तगुणश्रेण्या व्रजन्ति, यावद् सातोत्कृष्टस्थितितुल्यायामसातस्थितावुत्कृष्टानुभागा अनन्तगुणाः। ओघजघन्यस्थितीनां जघन्योत्कृष्टा अनुभागा उक्ताः। ओघजघन्या नाम याः स्थितीर्बध्नानोऽसातस्य जघन्यानुभागं बध्नाति ता ओघजघन्या घोलनपरावर्त्तमानस्थितयो वेति गाथार्थः। यासां स्थितीनां तानि चान्यानि चानुभागस्थानानि उक्तानि अनुकृष्टौ तदुपरिस्थितिषु यासु तदेकदेशेन तानि च अन्यानि च भवन्तीत्युक्तं तासूपघातवद्भवति। परावर्त्तमानस्थित्युपरि कण्डकस्य या समयोत्तरा स्थितिः तस्याः जघन्यानुभागा अनन्तगुणाः, तेभ्यस्तस्या एव कण्डकादिस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, तेभ्योऽपि कण्डकोपरि द्वितीयस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततः कण्डकादिद्वितीयस्थितेः उत्कृष्टानुभागा अनन्तगुणाः, एवमध उपरि उत्कृष्टजघन्यक्रमेणानन्तगुणश्रेण्या तावन्नेयं यावदसातस्योत्कृष्टा स्थितिः। पश्चादुत्कृष्टकण्डकस्थितीनामुत्कृष्टानुभागोऽनन्तगुणश्रेण्या ने-

तम्याः। असातक्रमेणासातवर्गस्य तीव्रमन्दता वक्तव्येति।

सद्वेदनीयस्याप्येवमेव वक्तव्य किन्तूत्कृष्टस्थितेरारभ्य सम्यगवतारयितव्यम्। एतदेव लेशतो दर्शयति–सद्वेदनीयस्य उत्कृष्ट-स्थितौ जघन्यानुभागा स्तोकाः, समयोनायां तावन्मात्रा एव, द्विसमयोनायां स्थितौ जघन्यपदे तावन्मात्रा एव, एवं जघन्य-पदे प्रतिसमयं तावद्वक्तव्य यावदभव्यप्रायोग्या जघन्या स्थितिरिति। तस्या अभव्यप्रायोग्यजघन्यस्थितेर्जघन्यानुभागेभ्य एव तस्या एव याऽधःस्थितौ जघन्यतरा स्थितिस्तस्यां जघन्यानुभागा अनन्तगुणाः, तेभ्यस्तदधःस्थितेर्जघन्यानुभागा अनन्तगुणाः, एवमधोऽधस्तावन्नेय यावत्पल्योपमासंख्येयभागमात्राः स्थितयः, एकान्तेनैव साकारोपयोगसंज्ञाः, ताश्च कण्डकमसंख्येयभागहीनम्। तेभ्यो जघन्यानुभागेभ्य उत्कृष्टस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, ततः समयोनोत्कृष्टस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, द्विसमयोनोत्कृष्टायामुत्कृष्टानुभागा अनन्तगुणाः, एवमनन्तगुणवृद्ध्या यावत्कण्डकमात्रा स्थितयस्तावदवतारयितव्याः, ततः कण्डकान्तस्थितेरुत्कृष्टानुभागेभ्यः उक्तसाकारोपयोगान्तस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततो द्वितीयकण्डकस्थितीनामनन्तगुणश्रेण्या उत्कृष्टानुभागाः प्रतिसमयमवतारयितव्याः, ततः साकारोपयोगस्थितेरेकस्या जघन्यानुभागा अनन्तगुणाः, ततस्तृतीयकण्डकस्थितीनामनन्तगुणश्रेण्या उत्कृष्टानुभागाः प्रतिसमयमवतारयितव्याः, एव साकारोपयोगयोग्याया एकस्याः स्थितेर्जघन्यानुभागाः परावर्तमानस्थितीनां कण्डकोत्कृष्टानुभागा अनन्तगुणश्रेण्या तावन्नेतव्या यावत्साकारोपयोगानां कण्डकं पूर्णम्। परावर्तमानानामभव्यप्रायोग्यजघन्यस्थितेरुत्कृष्टानुभागा अनन्तगुणा इति। ततः साकारोपयोगकण्डकाधःस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततः साकारोपयोगप्रथमस्थितेरुत्कृष्टानुभागाः, एव जघन्योत्कृष्टानुभागक्रमेण अध उपरि स्थित्योरनन्तगुणश्रेण्या तावद् गन्तव्य यावत्सर्वजघन्या स्थितिरिति। पश्चात्क-

ण्डकमात्राणां स्थितीनामुत्कृष्टानुभागोऽनन्तगुणश्रेण्या तावदधो मुखो नेयो यावत्सर्वजघन्या सातस्य स्थितिरित्युक्ता सातस्य तीव्रमन्दता। प्रागपरन्तयोरुपघाततुल्यं मध्ये-परावर्त्तमानासु स्थितिपु नीचैर्गोत्रस्यासातसमं वक्तव्यं तीव्रमन्दताविधानमिति गाथार्थः। नीचैर्गोत्रस्य सूत्रकारेणातिदिष्टं वृत्तिकारो दर्शयति—सप्तमपृथिव्यां नारकस्य सर्वजघन्यस्थितिवन्धे सर्वे जघन्यानुभागाः स्तोकाः, द्वितीयायां जघन्यस्थाने जघन्यानुभागा अनन्तगुणाः, एवं त्रिचतुष्पञ्चमासु स्थितिपु जघन्यपदे जघन्यानुभागा अनन्तगुणाः, जघन्यपदक्रमेण अनन्तगुणश्रेण्या तावद् गन्तव्यं यावत्कण्डकमिति, ततः कण्डकान्तस्थितेर्जघन्यानुभागेभ्यः जघन्यस्थितावुत्कृष्टपदे उत्कृष्टानुभागा अनन्तगुणाः, ततः कण्डकोपरिस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततो जघन्यद्वितीयाया उत्कृष्टानुभागा अनन्तगुणाः, एवं कण्डकोपरिमासु जघन्यानुभागा जघन्यस्थितेरुपरिमाद्युत्कृष्टानुभागाः प्रतिसमयं परिपाट्याऽनन्तगुणश्रेण्या नेतव्या यावदभव्यजघन्यवन्धादधःस्थितिरिति अभव्यजघन्यवन्धादधःकण्डकस्योत्कृष्टानुभागान्मुक्त्वा शेषमुक्तम्। ततः कण्डकाध उत्कृष्टानुभागेभ्योऽभव्यजघन्यस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततः समयोत्तरायां जघन्यानुभागास्तावन्मात्रा एव, एवं द्वित्रिचतुष्पञ्चमाद्यासु जघन्यानुभागास्तावन्मात्रा एव, एवं तावन्मात्रविधिना तावन्नेयं यावत्प्रतिपक्षोत्कृष्टा स्थितिरिति। परावर्त्तमानजघन्यानुभागवन्धप्रायोग्यसंज्ञा एताः सर्वा अपि स्थितयो भण्यन्ते। ततस्तदुत्तरस्थितेर्जघन्यानुभागाः अनन्तगुणाः, एवं द्वित्रिचतुष्पञ्चसमयोत्तरास्वपि जघन्यानुभागा अनंन्तगुणा यावत्तदुपरि कण्डकमसंख्येयभागोनमतो निर्वर्त्तितव्यम्, अभव्यजघन्यवन्धादधः। कण्डकस्य जघन्यस्थितेरुत्कृष्टानुभागा अनन्तगुणा यस्याः निवृत्तस्तदनुभागेभ्य इति। तदुत्तरस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, एवं द्वित्रिचतुष्पञ्चमास्वपि नेयाः, यावदभव्यजघन्यवन्धादधःस्थितिरिति, अभव्यजघन्यवन्धादधःस्थित्युत्कृष्टानुभागेभ्यो यतो निवृत्तस्तस्याः समयोत्तरायां स्थितौ जघन्यानुभागा

अनन्तगुणाः, ततोऽभव्यजघन्यानुभागबन्धप्रायोग्यानां जघन्यस्थितावुत्कृष्टानुभागा अनन्तगुणाः,समयोत्तरायामुत्कृष्टानुभागा अनन्तगुणाः, एवं कण्डकमात्राणां स्थितीनामुत्कृष्टानुभागा अनन्तगुणश्रेण्या नेतव्याः । ततो यस्या उपरितनस्थितेर्जघन्यानुभागान् उक्त्वा निवृत्तः तस्याः समयोत्तरायां स्थितौ जघन्यानुभागा अनन्तगुणाः,ततो जघन्यानुभागप्रायोग्यासु द्वितीयकण्डकस्थितिषूत्कृष्टानुभागाः क्रमेण अनन्तगुणाः, अनेन क्रमेणोपरितनस्थितीनामेकैकस्याः स्थितेर्जघन्यानुभागाः परावर्तमानस्थितीनां कण्डकमात्राणां उत्कृष्टानुभागा अनन्तगुणश्रेण्या तावन्नेतव्या यावज्जघन्यानुभागबन्धप्रायोग्यानां चरमस्थितिरिति । घोलनस्थितीनां याः कण्डकमात्रा उपरि स्थितय-स्तासां जघन्यानुभागा उक्ताः, अत उत्कृष्टा घोलनान्तस्थितेरुत्कृष्टानुभागेभ्यः कण्डकोपरिस्थितौ जघन्यानुभागा अनन्तगुणाः, ततोऽधःस्थितेरुत्कृष्टानुभागाः, उपरिस्थितेर्जघन्यानुभागा एवमथ उपरि क्रमेण तावज्ज्ञेयाः यावदुत्कृष्टा स्थितिः, तत उत्कृष्टस्थितेरधो यत्कण्डकं तदनन्तगुणश्रेण्या पश्चान्नयेदिति ।

नीचैर्गोत्रक्रमेण तिर्यग्द्विकेऽपि तीव्रमन्दतानुभागस्य वक्तव्येति । त्रसादिचतुष्कस्य तीव्रमन्दतोच्यते—यद्यपि परावर्तक्रमोऽष्टादश कोटाकोटीर्यावत्तथापि किञ्चिदुच्यते—त्रसनाम्नो विंशतिकोटाकोटीर्यदा बध्नाति तदा उत्कृष्टस्थितेर्जघन्यपदे जघन्यानुभागाः स्तोकाः, समयोनायां जघन्यानुभागा अनन्तगुणाः, एवं निर्वर्तनकण्डकं यावज्जघन्यपदे जघन्यानुभागा अनन्तगुणश्रेण्या नेतव्याः, ततः उत्कृष्टस्थितेरुत्कृष्टपदे उत्कृष्टानुभागा अनन्तगुणास्ततः कण्डकाधःस्थितेर्जघन्यपदे जघन्यानुभागा अनन्तगुणाः, ततः समयोनो त्कृष्टस्थितेरुत्कृष्टपदे उत्कृष्टानुभागा अनन्तगुणाः, एवं जघन्योत्कृष्टानुभागाः समयहान्याऽध उपरि क्रमेण तावज्ज्ञेयाः यावदष्टादश-सागरोपमकोटाकोट्यन्तस्थितौ जघन्यानुभागा अनन्तगुणाः । घोलनस्थितीनां यदुपरि कण्डकं तस्योत्कृष्टानुभागा नोक्ताः,

शेषं सर्वमुक्तम्। ततः समयोनस्थितौ जघन्यानुभागास्तावन्मात्रा एव, एवं द्वित्रिचतुष्पञ्चसमयोनस्थितौ जघन्यानुभागास्तावन्मात्रा एव, ततो घोलनजघन्यस्थितेरधस्ताद्या स्थितिः तस्या जघन्यानुभागा अनन्तगुणाः, एवमभव्यजघन्यबन्धादधोऽधोऽसंख्येयासु स्थितिषु जघन्यानुभागा अनन्तगुणश्रेण्या नेयाः, ताश्च स्थितयः कण्डकमसंख्येयभागोनं, ततः परावर्त्तमानस्थितीनामुपरि कण्डकस्य यस्योत्कृष्टानुभागा नोक्ताः तत्सर्वोत्कृष्टस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, एवमनन्तगुणश्रेण्या तत्कण्डकं नेयम्, ततस्तत्कण्डकान्तस्थितेरुत्कृष्टानुभागेभ्यो यदभव्यबन्धादधः स्थितयो जघन्यानुभागमधिकृत्योक्तास्तदधःस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततः परावर्त्तमानकण्डकस्थितीनामुत्कृष्टानुभागा अधोऽधः क्रमेणानन्तगुणाः, ततोऽधस्तनस्थितेरेकस्या जघन्यानुभागा अनन्तगुणाः, ततो द्वितीयकण्डकस्य परावर्त्तमानस्थितीनामुत्कृष्टानुभागा अधोऽधः क्रमेणानन्तगुणाः, एवमधस्तनाया एकस्या स्थितेर्जघन्यानुभागा अनन्तगुणाः घोलनस्थितीनां कण्डकमात्राणां उत्कृष्टानुभागा अनन्तगुणश्रेण्या नेतव्या यावत्परावर्त्तमानजघन्यस्थितेरुत्कृष्टानुभागा अनन्तगुणाः। ततोऽभव्यबन्धाज्जघन्यतरकण्डकस्योत्कृष्टानुभागा नोक्ताः, तस्मात् कण्डकादधःस्थितेर्जघन्यानुभागा अनन्तगुणाः, ततः कण्डकाद्यस्थितेरुत्कृष्टानुभागा अनन्तगुणाः, एवमध उपरि जघन्योत्कृष्टक्रमेण तावन्नेयं यावत्सर्वजघन्या स्थितिः, ततोऽधस्तनकण्डकादुत्कृष्टानुभागाः परिपाट्या अनन्तगुणश्रेण्या नेयाः, यावत्सर्वजघन्या स्थितिरिति। त्रसक्रमेण बादरपर्याप्तकप्रत्येकानामपि वक्तव्या। तीव्रमन्दता समाप्ता। तत्समाप्तावनुभागबन्धः समाप्तः ॥ ९५-९६-९७-९८ ॥

(मलय०)-सम्प्रत्यसातस्य तीव्रमन्दतामभिधित्सुराह—असातस्य जघन्यस्थितौ यानि अनुभागस्थानानि तैः सर्वासां स्थितीनां आप्रतिपक्षाक्रान्तानां यावत्यः स्थापनाः-सातरूपप्रतिपक्षाक्रान्ताः स्थितयः स्थापिताः प्राग्भाविताश्च तावतीनामित्यर्थः, हीनानि- ॥ ७६ ॥

जघन्यानि अनुभागस्थानानि तुल्यानि भवन्ति। किमुक्तं भवति? असातस्य जघन्यस्थितौ जघन्योऽनुभागः सर्वस्तोकः, द्वितीयायां स्थितौ जघन्योऽनुभागस्तावन्मात्रः, तृतीयस्यामपि स्थितौ जघन्योऽनुभागस्तावन्मात्र एव, एवं तावद्वाच्यं यावत्प्रतिपक्षाक्रान्ताः स्थितयो गता भवन्ति, यावत्सागरोपमशतपृथक्त्वं गतं भवतीत्यर्थः। ततः सागरोपमशतपृथक्त्वचरमस्थितेर्जघन्यानुभागा अनन्तगुणनया यान्ति, तद्यथा—सागरोपमशतपृथक्त्वस्योपरि प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततोऽपि द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावत्कण्डकस्य संख्येया भागा गता भवन्ति, एकोऽवशिष्यते। ततो जघन्यायां स्थितावुत्कृष्टमनुभाग(स्थानम-नन्तगुणं, ततोऽनुभाग)स्थानानां कण्डकमनन्तगुणनया व्रजति, तद्यथा—द्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, ततोऽपि तृतीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावत्कण्डकमात्राः स्थितयो गता भवन्ति। ततो यस्याः स्थितेर्जघन्यमनुभागस्थानमभिधातुमिष्टं तस्या उपरि जघन्यमनुभागस्थानमनन्तगुणं, ततः प्रागुक्तस्यानुभागविषयस्य कण्डकस्योपरि प्रथमस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, ततोऽपि द्वितीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावत्कण्डकमात्राः स्थितयो गता भवन्ति। ततः पुनरपि यस्याः स्थितेर्जघन्यमनुभागमुक्त्वा निवृत्तस्तस्या उपरि जघन्योऽनुभागोऽनन्तगुणः, ततो भूयोऽपि प्रागुक्तकण्डकस्योपरि कण्डकमात्राणां स्थितीनामुत्कृष्टा अनुभागा यथोत्तरमनन्तगुणाः। एवमेकस्यां स्थितौ जघन्यमनुभागस्थानं कण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागाननन्तगुणनया तावद्वदेत् यावत्तानि चान्यानि च इत्येवमनुकृष्टेः परासां जघन्यानुभागविषयाणामेकैकस्थितीनां कण्डकं परिपूर्णं भवति, उत्कृष्टानुभागविषयाश्च सागरोपमशतपृथक्त्वमात्रा भवन्ति, यावत्सातरूपप्रतिपक्षप्रकृत्याक्रान्ताः स्थितयः परिपूर्णा भवन्तीत्यर्थः। ततः पराक्रान्तस्थानानां—प्रतिपक्षप्रकृत्याक्रान्तस्थितीनामुपरि उपघातसमं वेदितव्यम्। तद्यथा—प्रागु-

क्तजघन्यानुभागकण्डकस्योपरि प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततः सागरोपमशतपृथक्त्वस्योपरि प्रथमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, ततः प्रागुक्तजघन्यानुभागकण्डकस्योपरि द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततः सागरोपमशतपृथक्त्वस्योपरि द्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, एवमेकैकं जघन्यमुत्कृष्टं चानुभागमनन्तगुणं वदन् तावद्व्रजेत् यावदसातवेदनीयस्योत्कृष्टायां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। कण्डकमात्राणां च स्थितीनामुत्कृष्टा अनुभागा अद्याप्यनुक्ताः सन्ति, शेषाः सर्वेऽप्युक्ताः, ततस्तेऽपि यथोत्तरमनन्तगुणा वक्तव्याः। एवं स्थावरादिदशकनरकद्विकादीनामपि सप्तविंशतिप्रकृतीनां तीव्रमन्दता द्रष्टव्या।

सम्प्रति सातस्य तां विवक्षुराह–सातवेदनीयस्याप्येवमेव तीव्रमन्दता वक्तव्या, नवरं–केवलमुत्कृष्टस्थितेरारभ्य। तद्यथा–सातस्योत्कृष्टायां जघन्योऽनुभागः सर्वस्तोकः, समयोनायामपि उत्कृष्टस्थितौ जघन्योऽनुभागस्तावन्मात्र एव, द्विसमयोनायामपि उत्कृष्टस्थितौ जघन्योऽनुभागस्तावन्मात्र एव, एवं तावद्वाच्यं यावदभव्यप्रायोग्या जघन्या स्थितिः। ततोऽधस्तनस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततोऽप्यधस्तनस्थितौ जघन्योऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावत्कण्डकस्य संख्येया भागा गता भवन्ति, एकोऽवशिष्यते। एतावत्यश्च स्थितयः संख्येयभागहीनकण्डकमात्राः पूर्वग्रन्थेषु साकारोपयोगसञ्ज्ञा इति व्यवह्रियन्ते, साकारोपयोगेनैवैतासां बध्यमानत्वात्। तत उत्कृष्टस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणो वक्तव्यः, ततः समयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, ततोऽपि द्विसमयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, एवमधोऽधोऽवतरणेन उत्कृष्टोऽनुभागोऽनन्तगुणतया तावद्वक्तव्यो यावत्कण्डकमात्राः स्थितयोऽतिक्रान्ता भवन्ति, ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तः ततोऽधस्तने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः, ततः प्रागुक्तानामुत्कृष्टानुभागविषयाणां स्थितीनामधस्तात्कण्डकमात्रासु स्थितिषूत्कृष्टा अनुभागाः क्रमेणानन्तगुणा वक्तव्याः, ततो

यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तः ततोऽधस्तने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणो वक्तव्यः, ततः पुनरपि कण्डकमात्राणां स्थितीनामुत्कृष्टा अनुभागाः क्रमेणानन्तगुणा वक्तव्याः, एवमेकस्याः स्थितेर्जघन्योऽनुभागः कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽनन्तगुणतया तावद्वाच्यो यावत्साकारोपयोगसम्बन्धानां कण्डकं परिपूर्णं भवति, उत्कृष्टानुभागविषयाश्च स्थितयोऽभव्यप्रायोग्यजघन्यस्थितिबन्धपर्यन्ताः। ततः साकारोपयोगकण्डकादधस्तनस्थितेर्जघन्योऽनुभागोऽनन्तगुणः, ततोऽभव्यप्रायोग्यजघन्यस्थितेरधः प्रथमस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, ततः साकारोपयोगकण्डकस्याधो द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततोऽभव्यप्रायोग्यजघन्यस्थितेरधो द्वितीयस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, एवमेकैकं जघन्यमुत्कृष्टं चानुभागमनन्तगुणतया वदन् तावद् भजेत् यावत्सर्वजघन्या स्थितिः। कण्डकमात्राणां च स्थितीनामुत्कृष्टा अनुभागा अद्याप्यनुक्ताः सन्ति, ततस्तेऽप्यधोऽधःक्रमेणानन्तगुणा वक्तव्याः यावत्सर्वजघन्या स्थितिः। एवं स्थिरादिषट्कोच्चैर्गोत्रादीनामपि पञ्चदशप्रकृतीनां तीव्रमन्दता चानुसर्तव्या।

सम्प्रति साक्षान्नीचैर्गोत्रस्योपलक्षणद्वारेण तिर्यग्द्विकत्रसादिचतुष्कयोरपि तीव्रमन्दतामभिधित्सुराह—'अंतेसुसघायसमं मज्झे नीयस्स सायसम।' अन्तयोः—पूर्वान्तपश्चिमान्ते च आद्यावसाने च इत्यर्थः, उपघातसम उपघातस्येव नीचैर्गोत्रस्य वक्तव्य, मध्येपुनरसातसमम्। नीचैर्गोत्रमुपलक्षणं तेन तिर्यग्द्विकत्रसादिचतुष्कयोरप्येवं द्रष्टव्यम्। इदमतिसङ्क्षिप्तमुक्तमिति विशेषतो भाव्यते—सप्तमपृथिव्यां वर्तमानस्य नारकस्य सर्वजघन्ये स्थितिबन्धे जघन्योऽनुभागः सर्वस्तोकः, ततो द्वितीयस्थितौ जघन्यानुभागोऽनन्तगुण', ततोऽपि तृतीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः, एष तावद्वाच्यं यावन्निवर्तनकण्डकमतिक्रान्त भवति। ततो जघन्यस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, ततो निवर्तनकण्डकस्योपरि प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततो द्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, ततो निवर्तनकण्डकस्यो-

परि द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धस्याधश्चरमा स्थितिः। अभव्यप्रायोग्यजघन्यानुभागबन्धस्य चाधः कण्डकमात्राणां स्थितीनामुत्कृष्टा अनुभागा अद्याप्यनुक्ताः सन्ति, ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषये प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः, द्वितीयस्यां स्थितौ जघन्योऽनुभागस्तावन्मात्र एव, एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वमात्राः स्थितयो गता भवन्ति। एतासां च स्थितीनां पूर्वपुरुषैः परावर्त्तमानजघन्यानुभागबन्धप्रायोग्या इति नाम कृतम्। एतासां चोपरि प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः, ततोऽपि द्वितीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावत्कण्डकस्य संख्येया भागा गता भवन्ति, एकोऽवतिष्ठते। ततो यतः स्थितिस्थानादुत्कृष्टमनुभागमुक्त्वा निवृत्तः तत उपरितने द्वितीये स्थितिस्थाने उत्कृष्टोऽनुभागोऽनन्तगुणः, ततोऽप्युपरितनस्थितौ उत्कृष्टोऽनुभागबन्धोऽनन्तगुणः, एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धस्याधश्चरमा स्थितिः। ततो यतः स्थितिस्थानाज्जघन्यानुभागमुक्त्वा निवृत्तस्ततत उपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः, ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषये प्रथमस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः, ततोऽपि द्वितीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावत्कण्डकमात्राः स्थितयोऽतिक्रान्ता भवन्ति। ततो यस्याः स्थितेर्जघन्यमनुभागमुक्त्वा निवृत्तः, तत उपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः, ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषये कण्डकस्योपरि पुनरपि कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागो यथोत्तरमनन्तगुणो वक्तव्यः, एवमेकस्याः स्थितेर्जघन्यमनुभागं कण्डकमात्राणां च स्थितीनामुत्कृष्टाननुभागान् वदता तावद्गन्तव्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धविषये चरमा स्थितिः, ततो यस्याः स्थितेर्जघन्यमुक्त्वा निवृत्तः तत उपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः, ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषयाणां

दुसु तिसु आवलियासुं समयविहीणासु आइमठिईए । सेसासु पुंसंजलणयाण न भवे पडिग्गहया ॥ ७ ॥

(स्वो०)—प्रथमस्थितेर्द्वयोरावलिकयोः समयोनयोः शेषयोः पुरुषवेदस्य प्रतिग्रहता नास्ति, न तत्र किञ्चित्संक्रामयतीत्यर्थः, प्रथमस्थितेस्तिसृष्वावलिकासु समयोनासु सञ्ज्वलनानां क्रोधमानमायालोभाख्यानां न प्रतिग्रहता भवतीति गाथार्थः ॥७॥

(मलय०)—संप्रति भेष्या पतद्ग्रहतापवादमाह—इह द्वित्रिशब्दाभ्यां पुरुषवेदसंज्वलनचतुष्टययोर्यथासङ्ख्येन योजना । तेनायमर्थः—अन्तरकरणे कृते सति प्रथमस्थितेर्द्वयोरावलिकयोः समयोनयोः शेषीभूतयोः सत्योः पुरुषवेदस्य पतद्ग्रहता न भवति, न किमपि तत्र संक्रमतीत्यर्थः । तिसृषु पुनरावलिकासु समयोनासु शेषीभूतासु सतीषु संज्वलनानां क्रोधमानमायालोभानां पतद्ग्रहता न भवति, प्रकृत्यन्तरदलिकं न किमपि तत्र संक्रामतीति भावः । तदेवं पतद्ग्रहताविषयेऽपवाद उक्तः ॥ ७ ॥

भणितं सामान्यविशेषलक्षणं सापवादम्, साद्यनादिप्ररूपणोच्यते, सा च मूलप्रकृतिषु परस्परं संक्रमाभावात् न संभवति, उत्तरप्रकृतिष्वाह—

धुवसंतीण चउद्देह संकमो मिच्छणीयवेयणिए । साइअधुवो बधोव्व होइ तह अधुवसंतीणं ॥ ८ ॥

(स्वो०)—ध्रुवसत्प्रकृतीनां चतुर्धा इह—अस्मिन् प्रवचने संक्रमो भवति । किं सर्वासाम् ? नेत्याह—मिथ्यात्वनीचैर्गोत्रसातासातवर्जितानां षड्विंशत्युत्तरशतप्रमाणानामिति । कथम् ? ज्ञानान्तरायदर्शनावरणनाम्नां याः ध्रुवसत्प्रकृतयस्तासामुपशमश्रेण्यां सूक्ष्मसम्परायान्तसमये संक्रमाभावः, बन्धाभावात्, यतो बन्धे सति सङ्क्रमो भवतीति, तस्मात् प्रतिपततः सादिः, तत्स्थानमप्राप्तस्यानादिः,

अभव्यस्य ध्रुवो, भव्यस्याध्रुव इति। मिथ्यात्वस्य सम्यक्त्वोत्पत्तौ सम्भवात् सादिः, तदभावेऽध्रुव इति। उद्वलितमुच्चैर्गोत्रं यदा भूयोऽपि बध्नाति तदा तस्मिन् सति नीचैर्गोत्रस्य सादिः सङ्क्रमः, तदेव नीचैर्गोत्रं परावृत्त्य यदा बध्नाति–प्रतिग्रहत्वेन स्थापयति तदाऽध्रुवसंक्रम इति। सातासातयोः परावर्त्तकत्वात् सादिरध्रुव इति। अध्रुवप्रकृतीनां–आयुश्चतुष्कवर्जितानां उच्चैर्गोत्रतीर्थंकरनाम-सम्यक्त्वसम्यग्मिथ्यात्वदेवनरकमनुष्यद्विकवैक्रियाहारकसप्तकाख्यानां सादिरध्रुवः संक्रमो भवति,स चाध्रुवत्वादेव सुगम इति गाथार्थः॥

(मलय०)—संप्रति साद्यनादिप्ररूपणा कर्तव्या, सा चान्यत्र द्विधा, मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्रेह मूलप्रकृतिषु परस्परं संक्रमाभावान्न संभवतीत्युत्तरप्रकृतिविषयां तां चिकीर्षुराह–सम्यक्त्वसम्यग्मिथ्यात्वनरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरोच्चैर्गोत्ररूपाश्चतुर्विंशतिप्रकृतयोऽध्रुवसत्ताका आयुश्चतुष्टयं च, शेषं पुनर्स्त्रिंशदुत्तरं शतं ध्रुवसत्ताकम्। तासां ध्रुवसत्ताकानां प्रकृतीनां मिथ्यात्वनीचैर्गोत्रसातवेदनीयासातवेदनीयवर्जानां षड्विंशत्युत्तरशतसंख्यानां संक्रमः साद्यादिरूपतया चतुर्विधो भवति। तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च, तथाहि–अमूषां ध्रुवसत्प्रकृतीनां संक्रमविषयप्रकृतिबन्धव्यवच्छेदे सति संक्रमो न भवति, ततः पुनरपि तासां संक्रमविषयप्रकृतीनां स्वबन्धहेतुसंपर्कतो बन्धारम्भे सति भवति, ततोऽसौ सादिः, तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादिः, अभव्यस्य ध्रुवः, कदाचिदपि व्यवच्छेदाऽभावात्, भव्यस्य पुनरध्रुवः, कालान्तरे व्यवच्छेदसंभवात्। मिथ्यात्वनीचैर्गोत्रसातासातवेदनीयानां पुनः संक्रमो द्विधा, तद्यथा–सादिरध्रुवश्च, तथाहि–मिथ्यात्वस्य संक्रमो विशुद्धसम्यग्दृष्टेर्भवति,विशुद्धसम्यग्दृष्टित्वं च कादाचित्कम्, ततस्तस्य संक्रमः साद्यध्रुव एव। सातासातवेदनीयनीचैर्गोत्राणां पुनः परावर्त्तमानत्वात्साद्यध्रुवो वेदितव्यः। ||४||
तथाहि–साते च बध्यमाने असातस्य संक्रमः, असाते च बध्यमाने सातस्य, नान्यदा। तथा उच्चैर्गोत्रे च बध्यमाने नीचैर्गोत्रस्य,

नीचैर्गोत्रे च बध्यमाने उच्चैर्गोत्रस्य, न शेषकालम्, तत एषां संक्रमः सादिरध्रुवश्च। अध्रुवसत्ताकानां तु प्रकृतीनामध्रुवसत्कर्मत्वादेव बन्धवत्संक्रमोऽपि साद्यध्रुवो भावनीयः ॥ ८ ॥

आयुषां संक्रमाभावेन चतुष्पञ्चाशदधिकशतप्रकृतीनां संक्रमस्य साद्यादिभङ्गकयन्त्रम्।

| प्रकृतीनां संख्या | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| १२९ ध्रुवसत्ताकानां | प्रतिग्रहरूपबन्धविच्छेदानन्तरं पुनर्बन्धे | भव्यानाम् | सादिरप्राप्तस्य | अभव्यानाम् |
| २५ अध्रुवसत्ताकानां | अध्रुवसत्त्वादेव | अध्रुवसत्त्वादेव | ० | ० |
| वेदनीययोः नीचैर्गोत्रस्य च | बन्धे परावर्तमानत्वात् | बन्धे परावर्तमानत्वात् | ० | ० |
| मिथ्यात्वस्य | विशुद्धसम्यग्दृष्टेः संक्रम्यमाणत्वेन कादाचित्कत्वात् | सादित्वात् | ० | ० |

विशेषमाह—

साअणजसदुविहकसायसेसदोदंसणाण जइपुव्वा । संकामगंत कमसो सम्मुच्चाणं पढमदुइया ॥९॥

(स्वो०)—सातस्य संक्रामकाणामन्तिमः प्रमत्तः, यतस्तस्मात् परतोऽसातं न बध्यते, न च प्रतिग्रहत्वेन भवति। अनन्तानुबन्धिनामप्रमत्तः संक्रामकान्तिमः, यतस्तेषां स एवोद्वलकक्षपकाणामन्तिमः। यशःकीर्त्तेरपूर्वकरणः, यतस्तदूर्ध्वतो नाम्नः शेषप्रकृतीनां प्रतिग्रहता नास्ति, सा एव प्रतिग्रहत्वेन भवति। कषायनोकषायाणां बादरकषायः संक्रामकान्तिमः, यतस्तत्परतस्तेषां बन्धाभावात् प्रतिग्रहतैव नास्ति। शेषाणां सूक्ष्मसम्परायः संक्रामकान्तिमः, यतस्तदुपरि सर्वकर्म्मणां साम्परायिकं बन्ध एव नास्ति। 'दोदंसणाण' त्ति—मिथ्यात्वसम्यग्मिथ्यात्वयोरुपशान्तः संक्रामकान्तिमः, यतस्तदुपरि तयोः सत्तैव नास्ति। सम्यक्त्वस्य मिथ्यादृष्टिरेव संक्रामकः, यतस्तस्मिन् मिथ्यात्वे बध्यमाने तत्संक्रामति, तस्य च स एव बन्धकः। उच्चैर्गोत्रस्य सास्वादनः संक्रामकान्तिमः, यतस्तदुपरितना नीचैर्गोत्रं न बध्नन्तीति गाथार्थः ॥९॥

(मलय०)—स्यादेतत्—कासां प्रकृतीनां किं संक्रमपर्यवसानं येन तत ऊर्ध्वमभवन् प्रतिपाते च पुनरपि भवन्संक्रमः सादिर्भवेत् ? अत आह—सातानन्तानुबन्धियशःकीर्त्तिद्विविधकषायशेषप्रकृतिद्विदर्शनानां यतिपूर्वाः—प्रमत्तसंयताद्याः, क्रमशः—क्रमेण, संक्रमकाणामन्तिमाः पर्यवसानभूता वेदितव्याः। तथा सम्यक्त्वोच्चैर्गोत्रयोर्यथासंख्यं प्रथमद्वितीयाः—प्रथमद्वितीयगुणस्थानकवर्त्तिनः संक्रमकाणामन्तिमाः। इयमत्र भावना—सातवेदनीयस्य संक्रामका मिथ्यादृष्टयः प्रमत्तपर्यवसाना वेदितव्याः, न परे, परतो ह्यसातवेदनीयं न बध्यते, किन्तु सातवेदनीयमेव, ततोऽसातस्यैव साते बध्यमाने संक्रमो भवति, न सातस्य, तेन प्रमत्तसंयत एव सातवेदनीयस्य-

सङ्क्रमकाणामन्तिमः सङ्क्रमकः। एवं सर्वत्रापि सङ्क्रमकान्तिमत्वभावना द्रष्टव्या। अनन्तानुबन्धिनां पुनर्मिथ्यादृष्ट्यादयोऽप्रमत्तसंयतपर्यवसानाः संक्रमकाः, न परे, परतस्तेषामुपशान्तत्वेन क्षीणत्वेन वा संक्रमस्याऽभावात्। यशःकीर्तेरपूर्वकरणान्ता मिथ्यादृष्ट्यादयः सङ्क्रमकाः समवन्ति, परतस्तस्या एव केवलाया बन्धसंभवेन पतद्ग्रहत्वस्यैव भावात्। द्विविधानां च कषायाणां-अनन्तानुबन्धिवर्ज्जद्वादशकषायनोकषायरूपाणां मिथ्यादृष्ट्यादयोऽनिवृत्तिबादरसम्परायपर्यवसानाः संक्रमकाः, परतस्तेषामुपशान्तत्वेन क्षीणत्वेन वा संक्रमाभावात्। शेषाणां प्रोक्तवक्ष्यमाणव्यतिरिक्तानां मतिज्ञानावरणीयादिप्रकृतीनां सूक्ष्मसम्परायपर्यवसाना मिथ्यादृष्ट्यादयः संक्रमकाः, न परे, परतो बन्धाऽभावेन पतद्ग्रहप्रकृत्यभावात्। तथा द्वयोर्दर्शनयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोरविरतसम्यग्दृष्ट्यादय उपशान्तमोहपर्यवसानाः संक्रमकाः, न परे, परतस्तयोः सत्ताया एवाऽभावात्। सम्यग्मिथ्यात्वस्य पुनर्मिथ्यादृष्टिरपि संक्रमकः, सासादनसम्यग्मिथ्यादृष्टयस्तु न किमपि दर्शनमोहनीयं क्वापि सङ्क्रमयन्ति, "दुइयवइज्जा न दंसणतिग पि" इति वचनात्, मिथ्यादृष्टिस्तु मिथ्यात्वं स्वभावत एव न संक्रमयति, "नियनियदिट्ठि न केई" इति वचनात्, अत उक्तं अविरतसम्यग्दृष्ट्यादय इति। तथा सम्यक्त्वस्य मिथ्यादृष्टिरेव सङ्क्रमकः, नान्यः, यतः सम्यक्त्वं मिथ्यात्वे एव वर्तमानः सङ्क्रमयति, न सासादनत्वे मिश्रत्वे वा, मिथ्यात्वे च वर्तमानो मिथ्यादृष्टिरेव। तथा उच्चैर्गोत्रस्य द्वितीयाः-सासादनाः संक्रमकाणामन्तिमाः, यतो मिथ्यादृष्टिसासादना एव नीचैर्गोत्रं बध्नन्ति, न शेषाः, नीचैर्गोत्रे एव बध्यमाने उच्चैर्गोत्रस्य सङ्क्रमः, न शेषकालम्, अतस्त एव संक्रमकाः ॥९॥

चतुष्पञ्चाशदधिकशतप्रकृतीनां संक्रमपर्यवसानाः।

| | |
|---|---|
| ज्ञानदर्शनावरणयोः | सूक्ष्मसम्परायान्ताः |
| सातवेदनीयस्य | प्रमत्तान्ताः |
| असातस्य | सूक्ष्मसम्परायान्ताः |
| मिथ्यात्वस्य | अविरतसम्यग्दृष्टेरारभ्योपशान्तपर्यवसानाः |
| मिश्रस्य | मिथ्यादृष्टिरविरतसम्यग्दृष्टेरारभ्योपशान्तपर्यवसानाश्च |
| सम्यक्त्वस्य | मिथ्यादृष्टयः |
| अनन्तानुबन्धिचतुष्कस्य | अप्रमत्तान्ताः |

| | |
|---|---|
| आद्यवर्जद्वादशकषायाणां नोकषायाणां च | अनिवृत्तिबादरान्ताः |
| यशःकीर्तेः | अपूर्वकरणषष्ठभागपर्यवसानाः |
| जिनस्य | द्वितीयतृतीयवर्जसूक्ष्मसम्परायपर्यन्ताः |
| जिनयशोवर्जितशेषनाम्न एकोत्तरशतस्य | सूक्ष्मसम्परायपर्यवसानाः |
| उच्चैर्गोत्रस्य | प्रथमद्वितीयगुणस्थानवर्तिनः |
| नीचैर्गोत्रस्यान्तरायपञ्चकस्य च | सूक्ष्मसम्परायपर्यवसानाः |

प्रतिग्रहाणां साधनादिप्ररूपणायाह—

चउहा पडिग्गहत्तं धुववंधीणं विहाय मिच्छत्तं। मिच्छाधुववंधीणं साई अधुवा पडिग्गहया ॥१०॥

(स्वो०)—चतुर्धा–चतुष्प्रकारं प्रतिग्रहत्वं ध्रुवबन्धिनीनां–पञ्च ज्ञानावरणानि, नव दर्शनावरणानि, षोडश कषायाः, भयजुगुप्सा

विंशतिर्वर्णादयोऽगुरुलघुनिर्माणतैजससप्तकोपघातान्तरायपञ्चकानां सप्तषष्टिप्रकृतीनां स्वकीयानन्धात् प्रतिपतद्ग्रहता सादिप्रतिग्रहत्वा, तत्स्थानमप्राप्तानामनादिः, अभव्यानां ध्रुवा, भव्यानामध्रुवेति। यतो यावद् बन्धस्तावत् प्रतिग्रहत्वम्, अतो बन्धवद् भावना कार्या। 'विहाय' त्यक्त्वा मिथ्यात्वम्, यतस्तस्य ध्रुवबन्धित्वेऽपि सति सम्यक्त्वसम्यग्मिथ्यात्वयोरध्रुवत्वात् संक्रमो भाव्य इति। अध्रुवबन्धिनीनां साद्यध्रुवा प्रतिग्रहता, सा च सुगमैवेति गाथार्थः ॥ १० ॥

(मलय०)— तदेवं संक्रममधिकृत्य साद्यादिप्ररूपणा कृता, संप्रति पतद्ग्रहत्वमधिकृत्य तां चिकीर्षुराह–मिथ्यात्वं 'विहाय' परित्यज्य, *शेषाणां ध्रुवबन्धिनीनां* ज्ञानावरणपञ्चकदर्शनावरणनवकषोडशकषायभयजुगुप्सातैजससप्तकवर्णादिविंशतिनिर्माणागुरुलघूपघातान्तरायपञ्चकरूपाणां *सप्तषष्टिसंख्यानां* चतुर्धा–चतुष्प्रकारं पतद्ग्रहत्वम्। तद्यथा–सादि अनादि ध्रुवमध्रुवं च। तथाहि–एतासां ध्रुवबन्धिनीनामात्मीयात्मीयबन्धव्यवच्छेदे सति पतद्ग्रहत्वं न भवति, न किमपि प्रकृत्यन्तरदलिकं तत्र संक्रामतीत्यर्थः, पुनः स्वबन्धहेतुसम्पर्कतो बन्धारम्भे सति पतद्ग्रहत्वं भवति, ततः सादि, तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादि, ध्रुवाध्रुवे अभव्यभव्यापेक्षया, मिथ्यात्वस्याऽध्रुवबन्धिनीनां च पतद्ग्रहता सादिरध्रुवा च। तथाहि–मिथ्यात्वस्य ध्रुवबन्धित्वे यस्य सम्यक्त्वसम्यग्मिथ्यात्वे विद्येते स एव तत्र संक्रमयति, नान्य इति तस्य पतद्ग्रहता साद्यध्रुवा। शेषाणां चाऽध्रुवबन्धिनीनां पञ्चाशीतिसंख्यानामध्रुवबन्धित्वादेव पतद्ग्रहता साद्यध्रुवा वेदितव्या। तदेवमेकैकप्रकृतीनां संक्रमस्य पतद्ग्रहत्वस्य च साद्यादिप्ररूपणा कृता ॥ १० ॥

पतद्ग्रहप्रकृतीनां साद्यादिभङ्गकयन्त्रम् ।

| प्रकृतीनां प्रतिग्रहता | सादिः | अध्रुवा | अनादिः | ध्रुवा |
|---|---|---|---|---|
| ६७ ध्रुवबन्धिनीनाम् | स्वस्वबन्धव्यवच्छेदानन्तरं पुनर्बन्धारम्भे | भव्यानाम् | सादित्वाप्राप्तस्य | अभव्यानाम् |
| ८४ अध्रुवबन्धिनीनाम् | अध्रुवबन्धित्वादेव | अध्रुवबन्धित्वादेव | ० | ० |
| मिथ्यात्वस्य | पतद्ग्रहताया एव कादाचित्कत्वात् | पतद्ग्रहताया एव कादाचित्कत्वात् | ० | ० |
| मिश्रसम्यक्त्वयोः | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |

संक्रमप्रतिग्रहसंख्याप्ररूपणायाह—

**संतट्ठाणसमाइं संकमठाणाइ दोण्णि बीयस्स । बंधसमा पडिगहया अट्ठहिया दो वि मोहस्स ॥११॥**

(स्वो०)—यावन्ति यस्य कर्मणः सत्स्थानानि तावन्ति तस्य संक्रमस्थानानि । ज्ञानावरणान्तराययोरेकैकं पञ्चप्रकृत्यात्मकम् ।

गोत्रवेदनीययोरप्येकमेकम्, द्वितीयसत्स्थान विपक्षश्चये यद्यपि भवति, तथाऽपि तच्चाविवक्षितम्, यतस्तत्र संक्रमाभाव इति। 'दोण्णि बीयस्स' त्ति। द्वितीयस्य दर्शनावरणस्य द्वे संक्रमस्थाने नवषट्प्रकृत्यात्मके। द्वादश नाम्नः संक्रमस्थानानि त्र्युत्तरशताद्यानि। 'बन्धसमा पडिगहग' त्ति। यावन्ति यस्य कर्मणो बन्धस्थानानि तावन्ति तस्य प्रतिग्रहस्थानानि। ज्ञानावरणान्तरायवेदनीयगोत्राणामेकैकं प्रतिग्रहस्थानम्। त्रीणि दर्शनावरणस्य नवषट्चतुष्प्रकृत्यात्मकानि। अष्टौ नाम्नः त्रयोविंशत्याद्यानि। अष्टाभ्यधिके द्वे अपि संक्रमप्रतिग्रहस्थाने मोहनीयस्य भवतः, तस्य पञ्चदश सत्स्थानानि, तान्येवाष्टस्थानाभ्यधिकानि त्रयोविंशतिसंक्रमस्थानानि भवन्ति, दश बन्धस्थानानि तान्येव अष्टाभ्यधिकानि, अष्टादश प्रतिग्रहस्थानानि भवन्ति। प्रतिस्थानं सूत्रकार एव दर्शयिष्यति। आह च—ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मके प्रतिग्रहस्थाने पञ्चप्रकृत्यात्मकमेव संक्रमस्थानं संक्रामति, तथा च दर्शनावरणे चतुष्प्रकृत्यात्मके प्रतिग्रहे चतुष्प्रकृत्यात्मकं तृतीयं संक्रमस्थानं कस्मान्न संक्रामतीति? उच्यते, तयोरन्यस्थानारम्भकत्वादेव पंचप्रकृत्यात्मकं संक्रमति। अस्य चतुर्बन्धकस्योपशमश्रेण्यां नवस्थानसम्भवाच्चतुष्कं न सम्भवति, क्षपकश्रेण्यां चतुष्षट्स्थानसम्भवात् तन्न संक्रामति, (यद्यपि चतुष्कषट्के द्वे सत्स्थाने भवतः, तथापि चतुष्कं क्षीणमोहगुणभवित्वात् न संक्रामति) बन्धाभावे तूभयाभाव एवेति गाथार्थः ॥ ११ ॥

(मलय०)—संप्रति प्रकृतिस्थानेषु तां चिकीर्षुः प्रथमतः क्रमपतद्ग्रहविषयस्थानसंख्याप्ररूपणार्थमाह—सत्तास्थानसमानि संक्रमस्थानानि। किमुक्तं भवति? यस्य कर्मणो यावन्ति सत्तास्थानानि तस्य तावन्ति संक्रमस्थानान्यपि भवन्ति। केवलं द्वितीयस्य कर्मणो दर्शनावरणाख्यस्य द्वे एव नवकषट्करूपसंक्रमस्थाने, न पुनः सत्तास्थानवत् तृतीयमपि चतुष्करूपं संक्रमस्थानम्। तथा 'बन्धसमा' बन्धस्थानसमाः पतद्ग्रहकाः, यस्य यावन्ति बन्धस्थानानि तस्य तावन्ति पतद्ग्रहस्थानानि भवन्तीत्यर्थः। केवलं 'मोहस्स'

मोहनीयस्य द्वयान्यपि संक्रमपतद्ग्रहस्थानानि यथासंख्यं सत्तास्थानबन्धस्थानेभ्योऽष्टाधिकानि वेदितव्यानि । तथाहि–मोहनीयस्य पञ्चदश सत्तास्थानानि, त्रयोविंशतिः संक्रमस्थानानि; तथा दश बन्धस्थानानि, अष्टादश पतद्ग्रहस्थानानि । इयमत्र भावना–ज्ञानावरणीयस्यान्तरायस्य प्रत्येकं पञ्चप्रकृत्यात्मकमेकैकं सत्तास्थानं संक्रमस्थानं च, तथा पञ्चप्रकृत्यात्मकमेव चैकैकं बन्धस्थानं पतद्ग्रहस्थानं च । तथाहि–पञ्चापि प्रकृतयो ज्ञानावरणीयस्य परस्परं संक्रामन्ति, तद्यथा–मतिज्ञानावरणीयं श्रुतज्ञानावरणावधिमनःपर्यायज्ञानावरणकेवलज्ञानावरणेषु संक्रामति, श्रुतज्ञानावरणमपि मतिज्ञानावरणावधिमनःपर्यायज्ञानावरणकेवलज्ञानावरणेष्वित्यादि, एवमन्तरायस्यापि भावनीयम् । इमौ च ज्ञानावरणान्तराययोः संक्रमपतद्ग्रहभावौ साद्यादिरूपतया चतुष्प्रकारौ । तद्यथा–सादी अनादी ध्रुवौ अध्रुवौ च । तथाहि–उपशान्तमोहगुणस्थानके तौ न भवतः, ततः प्रतिपाते च भवत इति सादी, तत्स्थानमप्राप्तस्य पुनरनादी, ध्रुवाध्रुवता अभव्यभव्यापेक्षया । तथा दर्शनावरणस्य त्रीणि सत्तास्थानानि । तद्यथा– चतुष्कं षट्कं नवकं च । एतान्येव त्रीणि बन्धस्थानानि पतद्ग्रहस्थानानि च, द्वे संक्रमस्थाने । तद्यथा–षट्कं नवकं च । तथाहि–नवकरूपे पतद्ग्रहे मिथ्यादृष्ट्यः सासादनाश्च नवविधदर्शनावरणबन्धका नवकमपि संक्रमयन्ति । अयं च नवकरूपः पतद्ग्रहः साद्यादिरूपतया चतुष्प्रकारः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि–सम्यग्मिथ्यादृष्ट्यादिषु गुणस्थानकेषु न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया । तथा सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्यापूर्वकरणस्य संख्येयतमं भागं यावत्षड्विधदर्शनावरणसत्कर्मणः षड्विधदर्शनावरणबन्धकाः षट्कं नव संक्रमयन्ति । अयं च षट्करूपः पतद्ग्रहः साद्यध्रुवः, कादाचित्कत्वात् । तथा अपूर्वकरणस्य संख्येयतमे भागे निद्राप्रचलयोर्बन्धव्यवच्छेदे, तत ऊर्ध्वं सूक्ष्मसंपरायगुणस्थानकचरमसमयं यावद् उपशमश्रेण्यां नवविधदर्शना-

वरणसत्कर्माणश्चतुर्विधदर्शनावरणबन्धकाश्चतुष्के नवकं संक्रमयन्ति, अयं चतुष्करूपः पतद्ग्रहः साद्यध्रुवः नवकरूपस्तु संक्रमः साद्यादि-रूपतया चतुष्प्रकारः । तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—सूक्ष्मसंपरायात्परत उपशान्तमोहे न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया । क्षपकश्रेण्यां पुनरनिवृत्तिबादरसंपरायगुणस्थानकाद्धायाः संख्येयतमे भागेऽवशिष्टे सति स्त्यानर्द्धित्रिकक्षयात्परतः सूक्ष्मसंपरायगुणस्थानकचरमसमयं यावत् षड्विधदर्शनावरणसत्कर्माणश्चक्षुरा-दिदर्शनावरणचतुष्कं बध्नन्तस्तस्मिन् दर्शनावरणचतुष्के षट्कं संक्रमयन्ति, इमावपि संक्रमपतद्ग्रहौ साद्यध्रुवौ, कादाचित्कत्वात् । अतः परं तु दर्शनावरणस्य न संक्रमो नापि पतद्ग्रहत्वं, बन्धाऽभावात्, अत एव चतुष्करूपं तृतीयमपि संक्रमस्थानं न प्राप्यते । तथा वेदनीयस्य गोत्रस्य च प्रत्येकमेकैकप्रकृत्यात्मकं संक्रमस्थानं पतद्ग्रहस्थानं च । यद्यपि वेदनीयगोत्रयोः प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—द्वे एका च, तथापि युगपद् द्वयोः संक्रमाऽभावात् 'संतट्ठाणसमाइं संकमठाणाइं'—इति सामान्योक्तावप्येकप्रकृत्यात्मकमेकैक-मेव संक्रमस्थानं वेदितव्यम् । तद्यथा—सातबन्धकानां मिथ्यादृष्टिप्रभृतीनां सूक्ष्मसंपरायपर्यन्तानां सातासातसत्कर्मणां सातवेदनीये बध्यमाने पतद्ग्रहे असातं संक्रामति, असातबन्धकानां पुनर्मिथ्यादृष्टिप्रभृतीनां प्रमत्तसंयतपर्यन्तानां सातासातसत्कर्मणामसातवेद-नीये बध्यमाने पतद्ग्रहे सातं संक्रामति । इमौ च सातासातरूपौ संक्रमपतद्ग्रहौ साद्यध्रुवौ, भूयोभूयः परावृत्त्यपरावृत्त्यभावात् । तथा मिथ्यादृष्टिप्रभृतीनां सूक्ष्मसंपरायपर्यन्तानामुच्चैर्गोत्रबन्धकानामुच्चैर्गोत्रं पतद्ग्रहः, नीचैर्गोत्रं तु संक्रमति । नीचैर्गोत्रबन्धकानां पुनर्मिथ्यादृष्टिसासादनानामुच्चनीचैर्गोत्रसत्कर्मणां नीचैर्गोत्रं पतद्ग्रहः, उच्चैर्गोत्रं संक्रमस्थानम्, इमावपि उच्चनीचैरूपौ संक्रमपतद्ग्रहौ प्रागिव साद्यध्रुवौ भावनीयौ । तथा मोहनीयस्य पञ्चदश सत्तास्थानानि । तद्यथा—अष्टाविंशतिः, सप्तविंशतिः,

षड्विंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिः, त्रयोदश, द्वादश, एकादश, पञ्च, चतस्रः, तिस्रः, द्वे, एका उक्तं च–" अट्ठ य सत्त य छच्चउ तिगदुगएगाहिगा भवे वीसा । तेरस बारेक्कारस इत्तो पंचाइ एगूणा, " त्रयोविंशतिः संक्रमस्थानानि, तद्यथा–एका, द्वे, तिस्रः, चतस्रः, पञ्च, षट्, सप्त, अष्टौ, नव, दश, एकादश, द्वादश, त्रयोदश, चतुर्दश, अष्टादश, एकोनविंशतिः, विंशतिः, एकविंशतिः, द्वाविंशतिः, त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिश्चेति । उक्तं च–" अट्ठ चउरहियवीसं सत्तरसं सोलसं च पनरसं । वज्जिय संकमठाणाइं होंति तेवीसइं मोहे " इह यद्यपि सत्तास्थाने अष्टाविंशतिश्चतुर्विंशतिश्चोक्ता, तथापि संक्रमे न प्राप्येते इति प्रतिषिध्येते । तथाहि–अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति मिथ्यात्वव्यतिरिक्ताः शेषाः सप्तविंशतिरेव संक्रमेण प्राप्यन्ते, नाष्टाविंशतिः । तत्र चारित्रमोहनीयं पञ्चविंशतिप्रकृत्यात्मकं परस्परं संक्रामति, सम्यक्त्वसम्यग्मिथ्यात्वे च मिथ्यात्वे । संप्रति शेषाण्यपि संक्रमस्थानानि भाव्यन्ते, तद्यथा–सम्यक्त्वे उद्वलिते सति सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यग्मिथ्यात्वस्य पतद्ग्रह इति तद्व्यतिरिक्ता शेषा षड्विंशतिः संक्रामति, सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशतिसत्कर्मणः पञ्चविंशतिः । अथवाऽनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणः पञ्चविंशतिः, मिथ्यात्वस्य संक्रमाऽभावात्, न हि तत् चारित्रमोहनीये संक्रामति, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमाभावात् । अथवा औपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मणः सम्यक्त्वलाभादावलिकाया ऊर्ध्वं वर्तमानस्य सम्यक्त्वे मिथ्यात्वसम्यग्मिथ्यात्वयोः संक्रमः, तेन तत्पतद्ग्रह इति त-

१ अष्टौ च सप्त च षट्चतुस्त्रिकद्विकैकाधिका भवेत् विंशतिः । त्रयोदश द्वादशैकादशेतः पञ्चाद्येकोनाः ॥ २ अष्ट चतुरधिकविंशतिः सप्तदश षोडश च पञ्चदश । वर्जयित्वा संक्रमस्थानानि भवन्ति त्रयोविंशतिर्मोहे ॥

प्रागुक्ताया एकविंशतेः स्त्रीवेद उपशान्ते सति शेषा विंशतिः संक्रामति, यद्वा क्षायिकसम्यग्दृष्टेरुपशमश्रेणिं प्रतिपन्नस्य चारित्रमोहनीयस्यान्तरकरणे कृते संज्वलनलोभस्यापि प्रागुक्तयुक्तेः संक्रमो न भवति, ततस्तस्मिन्नपसारिते शेषा विंशतिः संक्रमे प्राप्यते, ततो नपुंसकवेदे उपशान्ते एकोनविंशतिः, स्त्रीवेदे चोपशान्ते अष्टादश, औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य संबन्धिन्याः प्रागुक्ताया विंशतेः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश संक्रामन्ति, ततः पुरुषवेदे उपशान्ते त्रयोदश। यद्वा क्षपकस्य क्षपकश्रेण्यां वर्त्तमानस्य प्रागुक्ताया एकविंशतेरष्टसु कषायेषु क्षीणेषु शेषास्त्रयोदश संक्रामन्ति। तस्यैव च क्षपकस्य चारित्रमोहनीयस्यान्तरकरणे कृते संज्वलनलोभस्य प्रागुक्तयुक्तेः संक्रमो न भवतीति तस्मिन्नपसारिते शेषा द्वादश संक्रामन्ति। अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य प्रागुक्ताभ्योऽष्टादशभ्यः षट्सु नोकषायेषूपशान्तेषु सत्सु शेषा द्वादश संक्रामन्ति। ततः पुरुषवेदे उपशान्ते एकादश, क्षपकस्य वा प्रागुक्ताभ्यो द्वादशभ्यो नपुंसकवेदे क्षीणे शेषा एकादश संक्रामन्ति। अथवा औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां प्रागुक्ताभ्यस्त्रयोदशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते शेषा एकादश संक्रमे प्राप्यन्ते। क्षपकश्रेण्यामेकादशभ्यः स्त्रीवेदे क्षीणे शेषा दश संक्रामन्ति। औपशमिकसम्यग्दृष्टेर्वा उपशमश्रेण्यां वर्त्तमानस्य एकादशभ्यः संज्वलनक्रोधे उपशान्ते शेषा दश संक्रामन्ति। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य प्रागुक्ताभ्य एकादशभ्योऽप्रत्याख्यानप्रत्याख्यानरूपे क्रोधद्विके उपशान्ते शेषा नव संक्रामन्ति। तस्यैव संज्वलनक्रोधेऽप्युपशान्ते अष्टौ। अथवा औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य प्रागुक्ताभ्यो दशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मानद्विके उपशान्ते शेषा अष्टौ संक्रामन्ति। तस्यैव संज्वलनमाने उपशान्ते सप्त। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य प्रागुक्ताभ्योऽष्टाभ्योऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मानद्विके उपशान्ते शेषाः षट् संक्रामन्ति। तस्यैव

संज्वलनमाने उपशान्ते पञ्च । यद्वा औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यः सप्तभ्यः प्रकृतिभ्योऽप्रत्याख्यान-
प्रत्याख्यानावरणरूपे मायाद्विके उपशान्ते शेषाः पञ्च संक्रामन्ति, तस्यैव संज्वलनमायायामुपशान्तायां चतस्रः । अथवा क्षायिक-
सम्यग्दृष्टेः क्षपकस्य प्रागुक्ताभ्यो दशभ्यः षट्सु नोकषायेषु क्षीणेषु शेषाश्चतस्रः प्रकृतयः संक्रामन्ति । तस्यैव पुरुषवेदे क्षीणे तिस्रः ।
अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यः पञ्चभ्योऽप्रत्याख्यानप्रत्याख्यानावरणरूपमायाद्विके उपशान्ते शेषास्तिस्रः
संक्रामन्ति । तस्यैव संज्वलनमायायामुपशान्तायां द्वे । अथवा औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यश्चतसृभ्यः
प्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणरूपे लोभद्विके उपशान्ते शेषे द्वे प्रकृती संक्रामतः । अथवा क्षपकस्य प्रागुक्ताभ्यस्तिसृभ्यः
प्रकृतिभ्यः संज्वलनक्रोधे क्षीणे द्वे संक्रामतः । तस्यैव संज्वलनमाने क्षीणे एका । तदेवं परिभाव्यमाने अष्टाविंशतिचतुर्विंशतिसप्तद-
शषोडशपञ्चदशलक्षणानि संक्रमस्थानानि न प्राप्यन्ते इति प्रतिषिध्यन्ते, तेषु च प्रतिषिद्धेषु शेषाणि त्रयोविंशतिसंख्यानि संक्रमस्था-
नान्यवगन्तव्यानि । एतेषु च संक्रमस्थानेषु मध्ये पञ्चविंशतिप्रकृत्यात्मकं संक्रमस्थानं साद्यादिरूपतया चतुष्प्रकारम्, तद्यथा—सादि
अनादि ध्रुवमध्रुवं च । तथाष्टाविंशतिसत्कर्मणः सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलितयोर्भवत्सादि, अनादिमिथ्यादृष्टेरनादि, ध्रुवाध्रुवता
अभव्यभव्यापेक्षया । शेषाणि तु सर्वाण्यपि संक्रमस्थानानि साद्यध्रुवाणि, कादाचित्कत्वात् ।

मोहनीयसंक्रमस्थानानां साद्यादिभङ्गकयन्त्रम्।

| प्रकृतिस्थानसंक्रमः | सादिः | अध्रुवः | अनादिः | ध्रुव· |
| --- | --- | --- | --- | --- |
| २७ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २६ | ,, | ,, | ० | ० |
| २५ | सम्यक्त्वमिश्रयोरुद्वलनात् | भव्यानाम् | अनादिमिथ्यादृष्टेः | अभव्यानाम् |
| २३ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २२, २१, २०, १९, १८, | ,, | ,, | ० | ० |
| १४, १३, १२, ११, १०, ९, | ,, | ,, | ० | ० |
| ८, ७, ६, ५, ४, ३, २, १ | ,, | ,, | ० | ० |

तथा मोहनीयस्य दशबन्धस्थानानि, तद्यथा—द्वाविंशतिः, एकविंशतिः, सप्तदश, त्रयोदश, नव, पञ्च, चतस्रः, तिस्रः, द्वे, एका च। उक्तं च—"बावीस एकवीसा सत्तरस तेरसेव नव पंच। चउतिगदुगं च एगं बंधट्ठाणाणि मोहस्स॥" अष्टादश पतद्ग्रहस्थानानि, तद्यथा—एका, द्वे, तिस्रः, चतस्रः, पञ्च, षट्, सप्त, नव, दश, एकादश, त्रयोदश, चतुर्दश, पञ्चदश, सप्तदश, अष्टादश, एकोनविंशतिः, एकविं-



१ द्वाविंशतिरेकविंशतिः सप्तदश त्रयोदशैव नव पञ्च। चतुः त्रिकं द्विकं चैकं बन्धस्थानानि मोहस्य॥

शतिः, द्वाविंशतिश्च । उक्तं च—"सोलससबारसमट्ठगवीसगसतेवीसगाइगे छच्च । वज्जिय मोहस्स पडिग्गहा उ अट्ठारस हवंति ॥" तत्र क-स्मिन् पतद्ग्रहे काः प्रकृतयः संक्रामन्तीत्येतद् भाव्यते—तत्र मिथ्यादृष्टेरष्टाविंशतिसत्कर्मणो मिथ्यात्वस्य सम्यक्त्वमिथ्यात्वयोः पतद्ग्रह इति तस्मिन्नपनीते शेषाः सप्तविंशतिर्मिथ्यात्वषोडशकषायान्यतरवेदभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगललक्षणायां द्वाविंशतौ संक्रामति । तस्यैव सम्यक्त्वे उद्वलिते सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वस्य सम्यग्मिथ्यात्वस्य पतद्ग्रह इति तस्मिन्नपनीते शेषाः षड्विंशतिः प्रागुक्तायां द्वाविंशतौ संक्रामति । तस्यैव मिथ्यादृष्टेः सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशतिसत्कर्मणो मिथ्यात्वे न किमपि संक्रामति, ततो न तत् कस्यचित्पतद्ग्रह इति तस्मिन् प्रागुक्ताया द्वाविंशतेरपनीते शेषे एकविंशतिप्रकृतिसमुदायरूपे पतद्ग्रहे पञ्चविंशतिः संक्रामति, अथवाऽनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणो मिथ्यात्वं न क्वापि संक्रामति, नापि तत्रान्या प्रकृतिरित्याधाराधेयभावपरिभ्रष्टं मिथ्यात्वमपनीयते, ततः शेषा पञ्चविंशतिः प्रागुक्तायामेकविंशतौ संक्रामति । तथा चतुर्विंशतिसत्कर्मा मिथ्यात्वं गतः सन् यद्यपि मिथ्यात्वप्रत्ययतो भूयोऽपि अनन्तानुबन्धिनो बध्नाति, तथापि बन्धावलिकागतं सकलकरणायोग्यमिति ततोऽपि तान् न संक्रमयति, मिथ्यात्वं च सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहः, ततोऽनन्तानुबन्धिचतुष्टयमिथ्यात्ववर्जिताः शेषास्त्रयोविंशतिप्रकृतयः प्रागुक्तायां द्वाविंशतौ संक्रामन्ति । तदेवं मिथ्यादृष्टेः द्वाविंशतिपतद्ग्रहे सप्तविंशतिषड्विंशतित्रयोविंशतिरूपास्त्रयः संक्रमाः प्राप्यन्ते, एकविंशतिपतद्ग्रहे च पञ्चविंशतिसंक्रमः, शेषः संक्रमः पतद्ग्रहो न संभवति । सासादनसम्यग्दृष्टेस्तु 'दुरेयतइज्जा न दसणतिग पि ।' इति वचनप्रामाण्यात् दर्शनमोहनीयत्रितयस्य संक्रमाभाव, ततोऽस्य सर्वदा एकविंशतिरूपे पतद्ग्रहे पञ्चविंशतिरेव संक्रामति ।

---

[1] षोडश द्वादशाष्टौ विंशतिसप्तविंशतिस्त्र्याद्यः षट् च । वर्जयित्वा मोहस्य पतद्ग्रहास्त्वष्टादश भवन्ति ॥ [2] गाथा [3] द्वितीयपाद'।

सम्यग्मिथ्यादृष्टेरपि दर्शनत्रितयसंक्रमाभाव इति अष्टाविंशतिसत्कर्मणः सप्तविंशतिसत्कर्मणो वा पञ्चविंशतिः, चतुर्विंशतिसत्कर्मणः पुनरेकविंशतिर्द्वादशकषायपुरुषवेदभयजुगुप्सान्यतरयुगलरूपसप्तदशप्रकृतिसमुदायरूपे पतद्ग्रहे संक्रामति। तदेवमुक्तौ सासादनसम्यग्मिथ्यादृष्टी। संप्रत्यविरतदेशविरतप्रमत्ताप्रमत्तेषु संक्रमाणां तुल्यत्वाद् युगपत्पतद्ग्रहा उच्यन्ते—तत्रैतेषामविरतादीनामौपशमिकसम्यग्दृष्टीनां सम्यक्त्वलाभप्रथमसमयादारभ्य यावदावलिकामात्रं तावत् सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहतैव भवति, न संक्रम इति शेषा षड्विंशतिरविरतानां द्वादशकषायपुरुषवेदभयजुगुप्सान्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वरूपे एकोनविंशतिपतद्ग्रहे, देशविरतानां प्रत्याख्यानावरणसंज्वलनकषायपुरुषवेदभयजुगुप्साऽन्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वरूपे पञ्चदशपतद्ग्रहे, प्रमत्ताप्रमत्तानां संज्वलनचतुष्टयपुरुषवेदसम्यक्त्वसम्यग्मिथ्यात्वभयजुगुप्सान्यतरयुगलरूपे एकादशपतद्ग्रहे संक्रामन्ति। तेषामेवाविरतसम्यग्दृष्टीनां आवलिकायाः परतः सम्यग्मिथ्यात्वं संक्रमे पतद्ग्रहे च लभ्यते इति सप्तविंशतिः प्रागुक्तेषु त्रिषु पतद्ग्रहेषु संक्रामति। तथा तेषामेवाविरतसम्यग्दृष्ट्यादीनामनन्तानुबन्धिषूद्वलितेषु चतुर्विंशतिसत्कर्मणां क्षायोपशमिकसम्यग्दृष्टीनां सम्यक्त्वं पतद्ग्रह इति शेषा त्रयोविंशतिः प्रागुक्तेष्वेकोनविंशत्यादिषु त्रिषु पतद्ग्रहेषु संक्रामति। ततो मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वं पतद्ग्रहभावे न लभ्यते, मिथ्यात्वं च संक्रमे, ततः शेषा द्वाविंशतिरविरतदेशविरतसंयतानां यथासंख्यमष्टादशचतुर्दशदशरूपेषु पतद्ग्रहेषु संक्रामति। ततः सम्यग्मिथ्यात्वे क्षपिते सति सम्यक्त्वस्य न संक्रमो नापि पतद्ग्रहतेति एकविंशतिरविरतादीनां यथासंख्यं सप्तदशत्रयोदशनवकरूपेषु त्रिषु पतद्ग्रहेषु संक्रामति। संप्रत्यौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य संक्रमानाश्रित्य पतद्ग्रहविधिरुच्यते—चतुर्विंशतिसत्कर्मणः सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह एवेति कृत्वा तस्मिन्नपसारिते शेषा त्रयोविंशतिः पुरुषवेदसंज्वलनचतुष्टयसम्यक्त्वसम्य-

गिमिथ्यात्वरूपे सप्तकपतद्ग्रहे संक्रामति। तस्यैवोपशमश्रेण्यां वर्तमानस्यान्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवतीति तस्मिन्नपनीते शेषा द्वाविंशतिः पूर्वोक्ते एव सप्तरूपतद्ग्रहे सङ्क्रामति। तस्यैव नपुंसकवेदे उपशान्ते सप्तकपतद्ग्रहे एकविंशतिः, ततः स्त्रीवेदे उपशान्ते विंशतिः, ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां 'दुसु तिसु आवलियासु' इत्यादिवचनप्रामाण्यात्पुरुषवेद' पतद्ग्रहो न भवति। तत' प्रागुक्तात्सप्तकात्पुरुषवेदेऽपनीते शेषे षट्करूपे पतद्ग्रहे प्रागुक्ता विंशतिः संक्रामति। ततः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश प्रकृतयः प्रागुक्ते एव षट्करूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावत्सङ्क्रामन्ति यावत्समयोनावलिकाद्विकम्। ततः पुरुषवेदे उपशान्ते शेषास्त्रयोदश षट्करूपे एव पतद्ग्रहे सङ्क्रामन्ति, ताश्च तत्र तावद् यावदन्तर्मुहूर्तम्। ततः सञ्ज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनक्रोधोऽपि पतद्ग्रहो न भवतीति प्रागुक्तात् षट्कात्तस्मिन्नपसारिते शेषे पञ्चकरूपे पतद्ग्रहे ता एव त्रयोदश प्रकृतयः सङ्क्रामन्ति। ततोऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते शेषा एकादश पञ्चकपतद्ग्रहे सङ्क्रामन्ति, ताश्च तावत् यावत्समयोनमावलिकाद्विकम्। ततः सञ्ज्वलनक्रोधे उपशान्ते शेषा दश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे तावत्सङ्क्रामन्ति यावदन्तर्मुहूर्तम्। ततः सञ्ज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां सञ्ज्वलनमानोऽपि पतद्ग्रहो न भवति। ततः पञ्चकात्तस्मिन्नपनीते शेषे चतुष्करूपे पतद्ग्रहे ता एव दश प्रकृतयः सङ्क्रामन्ति, ताश्च तावद् यावत्समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मानद्विके उपशान्ते शेषा अष्टौ प्रकृतयश्चतुष्करूप एव पतद्ग्रहे सङ्क्रामन्ति। ततः सञ्ज्वलनमान उपशान्ते सप्त, ताश्च सप्त चतुष्करूपे पतद्ग्रहे अन्तर्मुहूर्तं काल यावत्संक्रामन्ति। ततः सञ्ज्वलनमायायाः

१ गाथा ७ प्रथमपादः।

प्रथमस्थितौ समयोनावलिकाद्विकशेषायां संज्वलनमायापि पतद्ग्रहो न भवतीति चतुष्कात्तस्यामपनीतायां शेषे त्रिकरूपे पतद्ग्रहे पूर्वोक्ताः सप्त संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मायाद्विके उपशान्ते शेषाः पञ्च प्रकृतयस्त्रिकरूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततः संज्वलनमायायामुपशान्तायां शेषाश्चतस्रः संक्रामन्ति, ताश्च तावद्यावदन्तर्मुहूर्तम्। ततोऽनिवृत्तिबादरसंपरायचरमसमये अप्रत्याख्यानप्रत्याख्यानावरणरूपे लोभद्विके उपशान्ते शेषे द्वे प्रकृती संक्रामतः, ते च मिथ्यात्वसम्यग्मिथ्यात्वलक्षणे, न चैते संज्वलनलोभे संक्रामतः, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमाऽभावात्, ततस्तस्यापि पतद्ग्रहता न भवतीति द्वयोरेव ते द्वे संक्रामतः। तत्र मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोः, सम्यग्मिथ्यात्वं सम्यक्त्वे। तदेवमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्तः।

संप्रति क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुच्यते—तत्रानन्तानुबन्धिचतुष्टयदर्शनत्रिकरूपे सप्तके क्षपिते सति एकविंशतिसत्कर्मा सन् क्षायिकसम्यग्दृष्टिरुपशमश्रेणिं प्रतिपद्यते, तस्य चान्तर्मुहूर्तं कालं यावत्पुरुषवेदसंज्वलनचतुष्टयरूपे पञ्चकपतद्ग्रहे एकविंशतिः संक्रामति। ततोऽन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवति, तत एकविंशतेस्तस्मिन्नपनीते शेषा विंशतिः पञ्चकपतद्ग्रहे संक्रामति, सा चान्तर्मुहूर्तं कालं यावत्। नपुंसकवेदे उपशान्ते एकोनविंशतिः, सापि चान्तर्मुहूर्तं यावत्। ततः स्त्रीवेदे उपशान्ते शेषा अष्टादश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति, ताश्च तत्र तावत् यावदन्तर्मुहूर्तम्। ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदोऽपि पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपगते शेषे चतुष्करूपे पतद्ग्रहे ता एवाष्टादश प्रकृतयः संक्रामन्ति। ॥१३॥
ततः षट्सु नोकषायेषु उपशान्तेषु शेषा द्वादश प्रकृतयश्चतुष्करूप एव तस्मिन्पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्वि-

कम्। ततः पुरुषवेदे उपशान्ते एकादश, ताश्च चतुष्करूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम्। ततः सज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां सज्वलनक्रोधोऽपि पतद्ग्रहो न भवतीति चतुष्काचस्मिन्नपगते शेषे त्रिकरूपे पतद्ग्रहे ताः पूर्वोक्ता एकादश प्रकृतयः संक्रामन्ति, ताश्च तावत् यावत् समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे क्रोधद्विके उपशान्ते नव प्रकृतयः पूर्वोक्त एव त्रिकरूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावत् यावत् समयोनमावलिकाद्विकम्। ततः संज्वलनक्रोध उपशान्ते अष्टौ संक्रामन्ति, ताश्च त्रिकरूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम्। ततः सज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां सज्वलनमानोऽपि पतद्ग्रहो न भवतीति त्रिकादस्मिन्नपनीते शेषे द्विकरूपे पतद्ग्रहे पूर्वोक्ता अष्टौ प्रकृतयः संक्रामन्ति, ताश्च तावत् यावत्समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मानद्विके उपशान्ते शेषाः षट् प्रकृतयो द्विकपतद्ग्रहे संक्रामन्ति, ताश्च तावत् यावत्समयोनमावलिकाद्विकम्। ततः सज्वलनमाने उपशान्ते पञ्च संक्रामन्ति, ताश्च द्विकरूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम्। ततः सज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमायापि पतद्ग्रहो न भवतीति द्विकादस्यामपगतायां शेषे सज्वलनलोभे एव एकस्मिन् ताः पञ्च प्रकृतयः संक्रामन्ति, ताश्च तावत् यावत्समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मायाद्विके उपशान्ते शेषास्तिस्रः प्रकृतयः सज्वलनलोभे संक्रामन्ति, ताश्च तावत् यावत् समयोनमावलिकाद्विकम्। ततः सज्वलनमायायामुपशान्तायां शेषे अप्रत्याख्यानप्रत्याख्यानावरणलोभरूपे द्वे प्रकृती संज्वलनलोभे संक्रामतः, ते चान्तर्मुहूर्तकालं यावत्। ततोऽनिवृत्तिबादरसंपरायगुणस्थानकचरमसमये ते उपशान्ते इति न किमपि क्वापि संक्रामति। तदेवं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्तः।

संप्रति क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां संक्रमपतद्ग्रहविधिरभिधीयते- तत्र क्षायिकसम्यग्दृष्टिरेकविंशतिसत्कर्मा क्षपकश्रेणिं प्रतिपद्यते, तस्य चाऽनिवृत्तिबादरसंपरायगुणस्थानकं प्राप्तस्य पुरुषवेदसंज्वलनचतुष्टयरूपे पञ्चकपतद्ग्रहे प्रथमत एकविंशतिप्रकृतयः संक्रामन्ति। ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश, ताश्चान्तर्मुहूर्त्तं कालं यावत्। ततोऽन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवतीति शेषा द्वादश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति, ताश्चान्तर्मुहूर्त्तं कालं यावत्। ततो नपुंसकवेदे क्षीणे एकादश, ता अप्यन्तर्मुहूर्त्तं कालं यावत्। ततः स्त्रीवेदे क्षीणे दश, ता अप्यन्तर्मुहूर्त्तं कालं यावत् तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति। ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदः पतद्ग्रहो न भवतीति पश्चात्तस्मिन्नपनीते शेषे चतुष्करूपे पतद्ग्रहे ता एव दश संक्रामन्ति, ताश्च तावत् यावत्समयोनमावलिकाद्विकम्। ततः षट्सु नोकषायेषु क्षीणेषु शेषाश्चतस्रः प्रकृतयस्तस्मिन्नेव चतुष्करूपे पतद्ग्रहे संक्रामन्ति। ततः पुरुषवेदः क्षीणः, तत्समये च संज्वलनक्रोधस्यापि पतद्ग्रहता न भवतीति तस्मिन्नपगते शेषासु तिसृषु प्रकृतिषु तिस्रः प्रकृतयः संक्रामन्ति, ताश्चान्तर्मुहूर्त्तं कालं यावत्। ततः समयोनावलिकाद्विकेन कालेन संज्वलनक्रोधः क्षीयते, तत्समये च संज्वलनमानस्यापि पतद्ग्रहता न भवतीति शेषयोर्द्वयोः प्रकृत्योर्द्वे प्रकृती संक्रामतः, ते चान्तर्मुहूर्त्तं कालं यावत्। ततः समयोनावलिकाद्विकेन कालेन संज्वलनमानोऽपि क्षीयते, तत्समयमेव संज्वलनमायाया अपि पतद्ग्रहता न भवतीति एकस्यामेव संज्वलनलोभरूपायां प्रकृतौ संज्वलनमायारूपा एका प्रकृतिः संक्रामति, सा चान्तर्मुहूर्त्तं कालं यावत्। तत आवलिकाद्विकेन कालेन संज्वलनमायापि क्षीयते, तत ऊर्ध्वं न किमपि क्वापि संक्रामति। ॥१४॥

एतेषु च पतद्ग्रहेषु मध्ये एकविंशतिरूपः पतद्ग्रहः साद्यादिप्ररूपणया चतुष्प्रकारः, तद्यथा-सादिरनादिर्ध्रुवोऽध्रुवश्च। तत्र मिथ्यादृष्टेः

सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलितयोः सतोः षड्विंशतिसत्कर्मण एकविंशतिरूपः पतद्ग्रहः सादिः, अनादिमिथ्यादृष्टेः षड्विंशति-सत्कर्मणोऽनादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया । शेषास्तु पतद्ग्रहाः सर्वेऽपि साद्यध्रुवाः कादाचित्कत्वात् ॥११॥

मोहनीयस्य प्रतिग्रहस्थानानां साद्यादिभङ्गकयन्त्रम् ।

| प्रकृतिस्थानप्रतिग्रहः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| २२ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २१ | उद्वलितमिश्रसम्यक्त्वस्य सादिमिथ्यादृष्टेः | भव्यानाम् | अनादिमिथ्यादृष्टेः | अभव्यानाम् |
| १९ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| १८, १७, १५, १४, १३, | " | " | ० | ० |
| ११, १०, ९, ७, ६, | " | " | ० | ० |
| ५, ४, ३, २, १ | " | " | ० | ० |

मोहनीयस्य संक्रमप्रतिग्रहस्थानानि स्पष्टयन्नाह—

पण्णरससोलसत्तरअडचउवीसा य संकमे नत्थि । अट्ठदुवालससोलसवीसा य पडिग्गहे नत्थि ॥१२॥

(स्वो०)—एकाद्यष्टाविंशतिपर्यन्तान् उपर्युपरि क्रमेणाङ्कान् संस्थाप्य पञ्चदश षोडश सप्तदशाष्टाविंशतिचतुर्विंशत्यङ्कानपनयेत्, ततस्त्रयोविंशतिसंक्रमस्थानानि—एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवदशैकादशद्वादशत्रयोदशचतुर्दशाष्टादशैकोनविंशतिविंशत्येकविंशतिद्वाविंशतित्रयोविंशतिपञ्चविंशतिषड्विंशतिप्रकृत्यात्मकानि भवन्ति। भावनां सूत्रकार एव करिष्यति। प्रतिग्रहानामपि परिज्ञानार्थं एकादिद्वाविंशतिपर्यन्तानामुपर्युपरि अङ्कान् संस्थाप्याष्टद्वादशषोडशविंशतिरित्यपनयेत्, ते प्रतिग्रहत्वेन न भवन्ति, शेषाण्यष्टादशस्थानानि-एकद्वित्रिचतुष्पञ्चषट्सप्तनवदशैकादशत्रयोदशचतुर्दशपञ्चदशसप्तदशाष्टादशैकोनविंशतिएकविंशतिद्वाविंशतिप्रकृत्यात्मकान्यष्टादश स्थानानि प्रतिग्रहत्वेन भवन्ति। भावनामत्रापि सूत्रकार एव करिष्यतीति गाथार्थः ॥ १२ ॥

(मलय०)—उक्तमेवार्थं सूत्रकृद् गाथाभिः संक्षेपत उपदर्शयति—मोहनीयस्य पञ्चदशषोडशसप्तदशाष्टाविंशतिचतुर्विंशतिरूपाणि पञ्च स्थानानि संक्रमे न सन्ति, ततः शेषाण्येव त्रयोविंशतिसंख्यानि संक्रमस्थानानि ज्ञातव्यानि, तानि च प्रागेव भावितानि। तथा अष्टद्वादशषोडशविंशतयः पतद्ग्रहे न सन्ति, चशब्दस्याऽनुक्तार्थसमुच्चायकत्वात् त्रयोविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिअष्टाविंशतयश्च, ततः शेषाण्येवाष्टादशसंख्यानि पतद्ग्रहस्थानानि भवन्ति, तानि च प्रागेवोक्तानि ॥१२॥

सर्वसंक्रमप्रतिग्रहाणां साद्यनादिप्ररूपणायाह—

**संकमणपडिग्गहया पढमतइज्जट्ठमाण चउभेया। इगवीसो पडिगहगो पणवीसो संकमो मोहे ॥१३॥**

(स्वो०)—ज्ञानावरणवेदनीयान्तरायाणां संक्रमाः प्रतिग्रहाश्चतुर्विधा भवन्ति। एकविंशतिप्रकृत्यात्मकः प्रतिग्रहः पञ्चविंशतिप्रकृत्यात्मकः संक्रमो मोहनीये साद्यनादिचतुर्विधो भवति। एतदेव सस्वामित्वं भावयति—ज्ञानान्तराययोः सूक्ष्मसम्परायावसानं यावत्

जीवाः पञ्च पञ्चसु सङ्क्रामयन्ति, तदुपरि उभयाभावः। प्रतिपततः साद्यनादिभावना प्राग्वत्। वेदनीयस्यान्यतरमन्यतरे संक्रामति सूक्ष्मसम्परायं यावद्, यतः साम्परायिको बन्धस्तत्रैव, नोपरितनेषु। प्रतिपततः उभयोरपि सादिता, तत्स्थानमप्राप्तस्यानादिता, ध्रुवाध्रुव तु प्राग्वत्। सातस्य प्रतिग्रहता दशसु गुणेषु, पञ्चसु सक्रमो, विपक्षस्य एतदेव विपरीतमिति। अनादिमिथ्यादृष्टेः षड्विंशति-प्रकृत्यात्मकं सत्स्थानं भवति, तस्मान्मिथ्यात्व न कषायमोहनीये संक्रामति, अतः पञ्चविंशतिप्रकृत्यात्मक सक्रमस्थानम्, द्वाविंशतिबन्धकस्य मिथ्यादृष्टेर्मिथ्यात्व विना एकविंशतिप्रकृत्यात्मकं प्रतिग्रहस्थान भवति। एतदुभयमपि विशिष्टगुणप्राप्तौ सत्यामध्रुवं भवति, तस्मात्प्रतिपततः सादि, तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुव प्राग्वदिति गाथार्थः॥ १३॥

(मलय०)—संप्रति सर्वसंक्रमपतद्ग्रहस्थानानां साद्यादिप्ररूपणार्थमाह—प्रथमं ज्ञानावरणम्, तृतीयं वेदनीयम्, अष्टममन्तरायम्, एतेषां सक्रमणं पतद्ग्रहता च साद्यादिरूपतया 'चतुर्भेदा' चतुष्प्रकारा, तद्यथा—सादिरनादिर्ध्रुवा अध्रुवा च। तत्र ज्ञानावरणा-न्तराययोर्भावना प्रागेव कृता। वेदनीयस्य त्वेकप्रकृत्यात्मकं संक्रमस्थानमेकप्रकृत्यात्मक च पतद्ग्रहस्थानं सामान्येन सूक्ष्मसंपरायं यावद् भवति, तत ऊर्ध्वं सांपरायिकबन्धाभावाच्च भवति, उपशान्तमोहगुणस्थानकाच्च प्रतिपाते पुनरपि भवति, ततः सादि, तत्स्थान-मप्राप्तस्य पुनरनादि, ध्रुवाध्रुवता अभव्यभव्यापेक्षया। यदा तु प्रतिनियतसातादिरूपव्यक्त्यात्मक सक्रमस्थान पतद्ग्रहस्थानं च विवक्ष्यते तदा तु द्विधा, तद्यथा—साद्यध्रुवं च, सा च साद्यध्रुवता प्रागेव भाविता। तथा मोहनीयस्य एकविंशतिरूपः पतद्ग्रहः, पञ्चविंशतिरूपश्च संक्रमः, साद्यादिरूपतया चतुष्प्रकारः, चतुष्प्रकारता च प्रागेवोक्ता॥ १३॥

दंसणवरणे नवगो सकमणपडिग्गहो भवे एव। साई अधुवा सेसा सकमणपडिग्गहट्ठाणा॥१४॥

(स्वो०)—दर्शनावरणे नवको यः संक्रमो नवक एव प्रतिग्रहकः, स चतुर्विधो भवति, पञ्चविंशतिसंक्रमवत्संक्रमः एकविंशतिप्रतिग्रहवद् प्रतिग्रहो भावनीयः, किन्त्वनयोर्मिथ्यादृष्टिसास्वादनौ स्वामिनौ । शेषाणि संक्रमस्थानानि प्रतिग्रहस्थानानि च साद्यध्रुवाणि भवन्ति । गोत्रस्य यावदुच्चैर्गोत्रं नोद्वलयति तावद् वेदनीयवद् भाव्यम् । उद्वलिते तु संक्रमप्रतिग्रहाभावः, भूयस्तद्बन्धकस्योभयोरपि सादित्वम्, भूयस्तदुद्वलने अध्रुवत्वमिति । सूक्ष्मसम्परायं यावदुच्चैर्गोत्रस्य प्रतिग्रहस्वामित्वम्, सास्वादनं यावत्संक्रमस्वामित्वम्, नीचैर्गोत्रस्यैतदेव विपरीतमिति गाथार्थः ॥ १४ ॥

(मलय०)—'दर्शनावरणे' दर्शनावरणस्य नवकरूपः संक्रमो नवकरूपश्च पतद्ग्रह एवं साद्यादिरूपतया चतुष्प्रकारो भवति, सा च चतुष्प्रकारता प्रागेव भाविता । शेषाणि तु सर्वाण्यपि-सर्वकर्मगतानि संक्रमणस्थानानि पतद्ग्रहस्थानानि च साद्यध्रुवाण्यवसेयानि, कादाचित्कत्वात् ॥ १४ ॥

मोहायुर्नामवर्जप्रकृतिसंक्रमप्रतिग्रहस्थानानां साद्यादिभङ्गकयन्त्रम्।

| प्रकृतिस्थानानां संक्रमः | सादिः | अध्रुवः | अनादि | ध्रुव |
|---|---|---|---|---|
| ज्ञानावरणान्तराय दशकस्य | उपशान्तमोहात् प्रतिपततः | भव्यानाम् | उपशान्तमोहाप्राप्तस्य | अभव्यानाम् |
| दर्शनावरणीयनवकस्य | ,, | ,, | असम्यक्मिथ्यात्वस्य | ,, |
| दर्शनावरणीयषट्कस्य | क्षपकश्रेण्यां विद्यमानत्वेन कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| असातवेदनीयस्य | परावर्तमानबन्धित्वात् | परावर्तमानबन्धित्वात् | ० | ० |
| सातवेदनीयस्य | ,, | ,, | ० | ० |
| उच्चैर्गोत्रस्य | ,, | ,, | ० | ० |
| नीचैर्गोत्रस्य | ,, | ,, | ० | ० |

मोहायुर्नामवर्जकर्मणां पतद्ग्रहस्थानानां साद्यादिभङ्गकयन्त्रम्।

| प्रकृतिस्थानानां प्रतिग्रहता | सादिः | अध्रुवा | अनादिः | ध्रुवा |
|---|---|---|---|---|
| ज्ञानावरणान्तराय-दशकस्य | उपशान्तमोहात् प्रतिपततः | भव्यानाम् | उपशान्तमोहाप्राप्तस्य | अभव्यानाम् |
| दर्शनावरणनवकस्य | षट्कबन्धात् नवबन्धकस्य | " | अप्राप्तमिथ्यात्वस्य | " |
| दर्शनावरणषट्कस्य | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| दर्शनावरणचतुष्कस्य | " | " | ० | ० |
| सातस्य | अध्रुवबन्धित्वात् | अध्रुवबन्धित्वात् | ० | ० |
| असातस्य | " | " | ० | ० |
| उच्चैर्गोत्रस्य | " | " | ० | ० |
| नीचैर्गोत्रस्य | " | " | ० | ० |

णवछक्क चउक्केसुं नवग सकमइ उवसमगयाण । खवगाण चउसु छक्क तुइय मोहं अओ वोच्छं ॥१५॥

(स्वो०)—नवषट्कचतुष्कप्रतिग्रहेषु नवकं संक्रामति, सास्वादनं यावन्नवसु नव संक्रामन्ति, सम्यग्मिथ्यादृष्टेरारभ्यापूर्वकरणसंख्येयभागं यावत् तावदुभयश्रेण्योः षट्सु नव संक्रामन्ति, तस्मात् स्त्यानात्सूक्ष्मसम्परायान्तसमयं यावदुपशमश्रेण्यां चतुष्कप्रतिग्रहे नव संक्रामन्ति । उपशान्तकषाये उभयाभावोऽतः पट्चतुष्कस्थानयोः प्रतिग्रहता सायध्रुवा । क्षपकश्रेण्यां स्त्यानर्द्धित्रिकक्षयस्थानात् सूक्ष्मसम्परायान्तसमयं यावत् चतुष्के षट् संक्रामन्ति । क्षीणकषाय उभयाभावोऽतः षट्कस्य सादिरध्रुवः संक्रमो द्वितीयकर्मणि भवति । मोहनीयमत ऊर्ध्वं वक्ष्येऽहमिति गाथार्थः ॥ १५ ॥

(मलय०)—सम्प्रति दर्शनावरणीयकर्मणि सक्रमपतद्ग्रहा ये यथा संभवन्ति, तान् तथा प्रतिपिपादयिषुराह—द्वितीये दर्शनावरणीये कर्मणि नवकषट्कचतुष्करूपेषु त्रिष्वपि पतद्ग्रहेषु नवकं संक्रामत्प्राप्यते। तत्र चतुष्के नवकं संक्रामत्प्राप्यते उपशमश्रेणिगतानाम्। तथा चाह—'उवसमगयाण' ति। तथाहि—उपशमश्रेण्यामेव हि चतुष्के नवकं संक्रामत्प्राप्यते, नान्यत्र। तथा क्षपकाणामेव—क्षपकश्रेणिगतानामेव स्त्यानर्द्धित्रिकक्षयादारतः सूक्ष्मसंपरायगुणस्थानचरमसमयं यावच्चतुष्के षट्कं सक्रामत्प्राप्यते, नान्येषाम् ॥१५॥

संक्रमस्थानभावनायाह—

लोभस्स असंकमणा उव्वलणाखवणओ छसत्तण्ह । उवसंताण वि दिट्ठीण संकमासंकमा नेया ॥१६॥

(स्वो०)—अन्तरकरणे श्रेण्योः सञ्ज्वलनलोभस्यासंक्रमाद्धेतोः षण्णां—सम्यक्त्वसम्यग्मिथ्यात्वानन्तानुबन्धिनां उद्वलनतः, क्षपणातश्च सप्तानां—सप्तनोकषायक्षपणभेदतश्च, उपशान्तानामपि दृष्टीनां संक्रमाद्धेतोः सक्रमा 'नेया'—भावनीया इति गाथार्थः ।

साम्प्रतं भावयति—अष्टाविंशतिसंक्रमो न भवति, यतो दर्शनमोहनीयं चारित्रमोहनीये न संक्रामति, अतो मिथ्यात्वमपनीय प्रतिग्रहत्वे कृतं शेषाः सप्तविंशतिर्द्वाविंशतिप्रतिग्रहे संक्रामति । सम्यक्त्वे समुद्वलिते षड्विंशतिर्द्वाविंशतिप्रतिग्रहे संक्रामति । द्वयोरप्युद्वलितयोरनादिमिथ्यादृष्टेर्वा षड्विंशतिः सत्कर्म भवति, तस्य मिथ्यात्वमाधाराधेयत्वभ्रष्टम्, शेषाः पञ्चविंशतिरेकविंशतिप्रतिग्रहे संक्रामति । चतुर्विंशतिर्न सम्भवति, यतश्चतुर्विंशतिसत्कर्मा सम्यग्दृष्टिः मिथ्यात्वं गतः, स चावलिकामध्ये नानन्तानुबन्धिनः सतोऽपि संक्रामयति, मिथ्यात्वे प्रतिग्रहत्वे कृते त्रयोविंशतिः संक्रामति, उक्तो मिथ्यादृष्टिः । सास्वादनस्य दृष्टित्रिकं न संक्रामतीति, पञ्चविंशतिसंक्रम एकविंशतिप्रतिग्रहे संक्रामति । सम्यग्मिथ्यादृष्टेरपि दृष्टित्रिकं न संक्रामतीति अष्टाविंशतिसप्तविंशतिसत्कर्मणः पञ्चविंशतिसंक्रमः, चतुर्विंशतिसत्कर्मण एकविंशतिसंक्रमः सप्तदशप्रतिग्रहे संक्रामति । भणितौ सास्वादनमिश्रौ । अविरतदेशविरतप्रमत्ताप्रमत्तानां तुल्याः संक्रमाः, प्रतिग्रहेषु विशेषः । एतेषामुपशमदृष्टीनां यावदावलिका तावत्सम्यग्मिथ्यात्वसम्यक्त्वयोः प्रतिग्रहत्वं भवति, अतः षड्विंशतिसंक्रम एकोनविंशतिपञ्चदशैकादशप्रतिग्रहेषु संक्रामति । तेषामेवावलिकापरतः सम्यग्मिथ्यात्वं उभयत्र भवति, अतः अविरतदेशविरतविरतरूपे सप्तविंशतिसंक्रमः तेष्वेव प्रतिग्रहेषु संक्रामति, तेषामेवाविरतादीनामुद्वलितानन्तानुबन्धिनां वेदकसम्यग्दृष्टीनां सम्यक्त्वे प्रतिग्रहत्वेन कृते त्रयोविंशतिसंक्रमः एकोनविंशत्यादिषु प्रतिग्रहेषु संक्रामति, मिश्रस्योभयत्र स्थितत्वात् । मिथ्यात्वे क्षपितेऽष्टादशचतुर्दशदशसु प्रतिग्रहेषु द्वाविंशतिः संक्रामति, यतो मिथ्यात्वक्षये मिश्रस्य प्रतिग्रहता न भवति, ततोऽपि सम्यग्मिथ्यात्वे क्षपिते सम्यक्त्वस्य आधाराधेयत्वे नष्टे सप्तदशत्रयोदशनवप्रतिग्रहे चैकविंशतिः संक्रामति ॥ १६ ॥

(मलय०)—अतः परं संक्रमपतद्ग्रहस्थानान्यधिकृत्य मोहं वक्ष्ये, तत्र प्रथमतः संक्रमपतद्ग्रहस्थानानां मार्गणे उपायानाह—

अन्तरकरणे कृते सति 'लोभस्य' संज्वलनलोभस्यासंक्रमणात्–संक्रमाभावात्, सम्यक्त्वसम्यग्मिथ्यात्वानन्तानुबन्धिचतुष्टयरूपाणां च षण्णां प्रकृतीनामुद्वलनातः, सप्तानां नोकषायाणां क्षपणातः, तथा उपशान्तानामपि दृष्टीनां संक्रमात्–संक्रमणसंभवात्संक्रमा ज्ञेयाः। इदमुक्तं भवति–अन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवतीति परिभाव्य, तथा सम्यक्त्वादीनां च षण्णां प्रकृतीनां यत्र यदोद्वलनं भवति तदपि च परिभाव्य, तथा स्त्रीवेदक्षयानन्तरं पुरुषवेदहास्यादिषट्करूपाः सप्तापि नोकषाया ये यदा क्षीयन्ते तान् परिभाव्य, दर्शनत्रिकस्य चोपशान्तस्यापि संक्रमो भवतीत्येतदपि च विचिंत्य यत्संक्रमस्थानं यत्र यदोपपद्यते तत्तत्र तदा ज्ञातव्यमिति ॥ १६ ॥

अथैणिगतानां संक्रमोपसंहारार्थमाह—

आमीस पणुवीसो इगवीसो मीसगाउ जाऽपुव्वो। मिच्छक्खवगे वुवीसो मिच्छे य तिसत्तछव्वीसो ॥१७॥

(स्वो०)—'आमिश्रं'–सम्यग्मिथ्यादृष्टिं यावत्पञ्चविंशतिसंक्रमो भवति। एकविंशतिसंक्रमः सम्यग्मिथ्यादृष्टेरारभ्यापूर्वकरणं यावद् भवति। मिथ्यात्वक्षपकेऽविरतदेशविरतसर्वविरतरूपे द्वाविंशतिसंक्रमो भवति। मिथ्यादृष्ट्याद्यविरतादीनां च त्रयोविंशतिषड्विंशतिसप्तविंशतिसंक्रमाश्च भवन्ति, भावना प्रागभिहितैवेति गाथार्थः ॥ १७ ॥

(मलय०)—संप्रति यत्संक्रमस्थानं येषु येषु गुणस्थानकेषु संभवति तत्तेषु प्रतिपादयन्नाह–मिथ्यादृष्टिगुणस्थानकादारभ्य आमिश्रं–मिश्रगुणस्थानकं यावत्, पञ्चविंशतिरूपः संक्रमः संभवति, नान्यत्र, तथा मिश्रकात्–मिश्रगुणस्थानकादारभ्य यावदपूर्वकरणगुणस्थानकं तावदेकविंशतिरूपः संक्रमो भवति, न शेषेषु गुणस्थानकेषु। तथा मिथ्यात्वक्षपके–अविरतदेशविरतसर्वविरतरूपे द्वाविंशतिसंक्रमो, न

शेषेषु। तथा मिथ्यादृष्टौ, चशब्दादविरतदेशविरतसर्वविरतेष्वपि च 'तिगसत्तछव्वीसो' इति त्रयोविंशतिः सप्तविंशतिः षड्विंशतिश्च संक्रमो भवति, न शेषेषु ॥ १७॥

सकलप्रतिग्रहाणां भावनायाह—

खवगस्स सबंध च्चिय उवसमसेढीएँ सम्ममीसजुया। मिच्छक्खवगे ससम्मा अट्ठारस इय पडिग्गहया ॥१८॥

(स्वो०)—सप्तक्षपकस्य चारित्रमोहनीयक्षपकस्य च स्वकीया-आत्मीया बन्धा एव सप्तदशत्रयोदशनवाख्याः पञ्चचतुस्त्रिद्व्येकरूपाश्च प्रतिग्रहा भवन्ति। उपशमश्रेण्याम्-उपशान्तदृष्टीनां पञ्चादयः सम्यग्मिथ्यात्वसम्यक्त्वयुक्ताः प्रतिग्रहा भवन्ति। सप्तदशत्रयोदशनवबन्धाश्च उपशमसम्यक्त्वप्राप्तौ आवलिकापरतो यावत् न मिथ्यात्वं क्षीयते तावत्तदुभययुक्ता भवन्ति। मिथ्यात्वक्षपके सप्तदशादयः सम्यक्त्वयुक्ताः प्रतिग्रहा भवन्तीति। अनेन प्रकारेणाष्टादशचतुर्दशदशप्रतिग्रहा भावनीया इति गाथार्थः ॥ १८ ॥

(मलय०)—संप्रत्यष्टादशैव पतद्ग्रहस्थानानि भवन्ति, नोनाधिकानि, इत्यत्र युक्तिमुपन्यस्यन्नाह—क्षपकस्य-क्षीणसप्तकस्य चारित्रमोहनीयक्षपकस्य च, स्वबन्धा एव-आत्मीया एव बन्धाः पतद्ग्रहा भवन्ति। तत्र क्षीणसप्तकानामविरतदेशविरतसंयतानां यथाक्रमं सप्तदशत्रयोदशनवाख्याः, चारित्रमोहनीयक्षपकस्य तु पञ्चचतुस्त्रिद्व्येकरूपाः। तथा उपशमश्रेण्यामौपशमिकसम्यग्दृष्टीनां क्षपकसत्का एव पञ्चादयः पतद्ग्रहाः सम्यक्त्वमिश्रयुक्ता वेदितव्याः, तथा च सति तेषां सप्तषट्पञ्चचतुस्त्रिरूपाः पतद्ग्रहा भवन्ति। तथा मिथ्यात्वक्षपके-क्षीणमिथ्यात्वे अविरतदेशविरतसंयतरूपे ये प्राक् क्षीणसप्तकस्योक्ताः सप्तदशत्रयोदशनवकरूपाः पतद्ग्रहाः, ते यावन्नाद्यापि सम्यग्मिथ्यात्वं क्षयमुपयाति तावत्ससम्यक्त्वाः-सम्यक्त्वसहिता द्रष्टव्याः, तथा च सति ते यथाक्रममष्टादशचतुर्दशदशकरूपा ॥१९॥

भवन्ति, यावच्च मिथ्यात्वमपि न क्षीयते तावत्सम्यक्त्वसम्यग्मिथ्यात्वसहिताः, इति यथाक्रममेकोनविंशतिपञ्चदशैकादशरूपा वेदितव्याः। द्वाविंशत्येकविंशतिरूपौ च मिथ्यादृष्टिसास्वादनेषु सुप्रतीताविति। अनेन प्रकारेणाष्टादशैव पतद्ग्रहा भवन्ति, नाधिकाः ॥१८॥

साम्प्रतं क्षपकश्रेणिद्विविधोपशमश्रेणीसंक्रमान् संक्षिप्य पञ्चचतुस्त्र्येकप्रतिग्रहेषु यथासम्भवं विभज्य दर्शयन्नाह—

दसगट्ठारसगाई चउ चउरो संकमंति पचंमि। सत्तड्ढचउदसिगारसबारसट्ठारा चउक्कंमि ॥१९॥

(स्वो०)—दशकादयोऽष्टादशादयश्चत्वारश्चत्वारः संक्रमा दशैकादशद्वादशत्रयोदशाष्टादशैकोनविंशतिविंशतिएकविंशतिरूपाः पञ्चकप्रतिग्रहे संक्रामन्ति। सप्ताष्टचतुर्दशैकादशद्वादशाष्टादशसंक्रमाः सप्तापि चतुष्कप्रतिग्रहे संक्रामन्तीति गाथार्थः ॥ १९ ॥

(मलय०)—संप्रति श्रेणिमधिकृत्य यस्मिन् पतद्ग्रहे यानि संक्रमस्थानानि भवन्ति तानि तत्र विवक्षुराह—पञ्चकरूपे पतद्ग्रहे दशादयो—दशैकादशत्रयोदशरूपाः, अष्टादशादयः—अष्टादशैकोनविंशतिविंशत्येकविंशतिरूपाश्चत्वारः संक्रमाः संक्रामन्ति। तत्र दशैकादशरूपौ क्षपकश्रेण्यामौपशमिकसम्यग्दृष्टीनामुपशमश्रेण्यां च। द्वादश क्षपकश्रेण्यामेव। त्रयोदश क्षपकश्रेण्यामौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां च। अष्टादशैकोनविंशतिविंशतिरूपाः क्षीणसप्तकस्योपशमश्रेण्याम्, एकविंशतिः क्षीणसप्तकस्योपशमश्रेण्यां क्षपकश्रेण्यां च। 'सत्तड' इत्यादि। 'चतुष्के'—चतुष्करूपे पतद्ग्रहे सप्ताष्टचतुर्दशैकादशद्वादशाष्टादशरूपाः सप्त संक्रमाः संक्रामन्ति। तत्र चतुष्कं क्षपकश्रेण्यामेव, दशकं क्षपकश्रेण्यामौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां च, सप्ताष्टकावौपशमिकसम्यग्दृष्टेरुपशमश्रेण्याम्, एकादशद्वादशाष्टादशकाः क्षीणसप्तकस्योपशमश्रेण्याम् ॥ १९ ॥

तिण्णि तिगाई सत्तट्ठ नव य संकममिगारस तिगंमि। दोसु छडट्ठदुपंचय इगि एक्कं दोण्णि तिण्णि पण ॥२०॥

(स्वो०)—त्रिचतुष्पञ्चसप्ताष्टनवैकादशसंक्रमाः सप्ताप्येते त्रिकप्रतिग्रहे संक्रामन्ति। षडष्टद्विकपञ्चकसंक्रमाः द्विकप्रतिग्रहे संक्रामन्ति। एकद्वित्रिपञ्चसंक्रमाश्चत्वारोऽपि एकप्रकृतिप्रतिग्रहे संक्रामन्तीति गाथार्थः ॥ २० ॥

(मलय०)—त्रिकादीनि त्रीणि, तद्यथा—त्रिकं चतुष्कं पञ्चकं च, तथा सप्त अष्टौ नव एकादश इत्येते सप्त संक्रमास्त्रिकरूपे पतद्ग्रहे संक्रामन्ति। तत्र त्रिकं क्षपकश्रेण्याम्, चतुःपञ्चसप्तका औपशमिकसम्यग्दृष्टीनामुपशमश्रेण्याम्, अष्टनवकैकादशकाः क्षीणसप्तकस्योपशमश्रेण्याम्। तथा तद्द्वयो–द्विकरूपे पतद्ग्रहे, षट्काष्टकद्विकपञ्चकरूपाश्चत्वारः संक्रमाः संक्रामन्ति। तत्र षट्काष्टकपञ्चकाः क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां [ क्षपकश्रेण्यां च,] द्विकमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षपकश्रेण्यां च। तथा एकस्मिन्–एकप्रकृत्यात्मके पतद्ग्रहे एका द्वे तिस्रः पञ्च च प्रकृतयः संक्रामन्ति। तत्र द्विकत्रिकपञ्चकाः क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्, एका क्षपकश्रेण्याम् ॥ २० ॥

मिथ्यादृष्ट्यादिसङ्क्रमाणां प्रतिग्रहान् अभ्युद्धरितषट्सप्तप्रतिग्रहयोश्च संक्रमान् योजयन्नाह—

पणवीसो संसारिसु इगवीसे सत्तरे य संकमई। तेरसचोद्दस छक्के वीसा छक्के य सत्ते य ॥ २१ ॥

(स्वो०)—पञ्चविंशतिसंक्रमः संसारिजीवेषु भवति, मिथ्यादृष्टिसास्वादनयोरेकविंशतिप्रतिग्रहे सम्यग्मिथ्यादृष्टेः सप्तदशप्रतिग्रहे च संक्रामति, त्रयोदशचतुर्दशसंक्रमे चतुष्कबन्धकस्योपशमश्रेण्यामुपशान्तदृष्टेः षट्कप्रतिग्रहे संक्रामतः। तस्यैव षट्के सप्तके च प्रतिग्रहे विंशतिसंक्रमः संक्रामतीति गाथार्थः ॥ २१ ॥

(मलय०)—संप्रति मिथ्यादृष्ट्यादिष्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां च पतद्ग्रहेषु संक्रमान् चिन्तयन्नाह—संसारिषु मिथ्या-

दृष्टिसासादनसम्यग्मिथ्यादृष्टिरूपेषु जीवेषु पञ्चविंशतिरूपः संक्रम एकविंशतौ सप्तदशके च संक्रामति, तत्र मिथ्यादृष्टिसासादनयोरेकविंशतौ, सम्यग्मिथ्यादृष्टेः सप्तदशके। तथा औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां त्रयोदश चतुर्दश च पञ्चके संक्रामन्ति। विंशति पञ्चके च सप्तके च ॥ २१ ॥

बावीसे गुणवीसे पण्णरसेक्कारसेसु छव्वीसा। संकमइ सत्तवीसा मिच्छे तह अविरयाईणं ॥२२॥

(स्वो०)—मिथ्यादृष्टेः द्वाविंशतिप्रतिग्रहे, अविरतस्यैकोनविंशतिप्रतिग्रहे, देशविरतस्य पञ्चदशप्रतिग्रहे, प्रमत्ताप्रमत्तयोरेकादशप्रतिग्रहे षड्विंशतिः सप्तविंशतिसंक्रमश्च संक्रामतीति गाथार्थः ॥ २२ ॥

(मलय०)—मिथ्यादृष्टौ तथा अविरतादीनां—अविरतदेशविरतसंयतादीनां—यथाक्रमं द्वाविंशतौ, एकोनविंशतौ, पञ्चदशके, एकादशके च षड्विंशतिः सप्तविंशतिश्च संक्रामति। तत्र मिथ्यादृष्टेर्द्वाविंशतौ, अविरतसम्यग्दृष्टेरेकोनविंशतौ, देशविरतस्य पञ्चदशके, संयतानामेकादशके ॥ २२ ॥

बावीसेगुणवीसे, पण्णरसेक्कारसे य सत्ते य। तेवीसा संकमई, मिच्छाविरयाइयाण कमा ॥२३॥

(स्वो०)—मिथ्यादृष्टेर्द्वाविंशतिप्रतिग्रहेऽविरतदेशविरतप्रमत्ताप्रमत्तापूर्वाणामेकोनविंशतिपञ्चदशैकादशप्रतिग्रहेषु उपशमश्रेण्यामुपशान्तदृष्टेः बादरस्य सप्तप्रतिग्रहे त्रयोविंशतिः संक्रामतीति गाथार्थः ॥ २३ ॥

(मलय०)—मिथ्यादृष्ट्यविरतादीनां—मिथ्यादृष्टेरविरतदेशविरतसंयतानिवृत्तिबादराणां च क्रमात्—क्रमेण द्वाविंशतावेकोनविंशतौ

पञ्चदशके सप्तके च त्रयोविंशतिः संक्रामति, तद्यथा–मिथ्यादृष्टेर्द्वाविंशतौ, अविरतसम्यग्दृष्टेरेकोनविंशतौ, देशविरतस्य पञ्चदशके, संयतानामेकादशके, औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां अनिवृत्तिबादरस्य सप्तके ॥ २३ ॥

**अट्ठारसचोद्दससत्तगेसु बावीस खीणमिच्छाणं। सत्तरसतेरनवसत्तगेसु इगिवीस संकमई ॥२४॥**

(स्वो०)—अष्टादशचतुर्दशदशप्रतिग्रहेषु अविरतादीनां मिथ्यात्वक्षये द्वाविंशतिः संक्रामति, लोभस्यासंक्रमादुपशमश्रेण्यां द्वाविंशतिः सप्तकप्रतिग्रहे संक्रामति। एतेष्वेव क्षीणसप्तकेषु सप्तदशत्रयोदशनवप्रतिग्रहेषु क्रमादेकविंशतिः, नपुंसकवेदे उपशान्ते उपशमश्रेण्यां सप्तप्रतिग्रहे एकविंशतिः संक्रामतीति गाथार्थः ॥ २४ ॥

(मलय०)—क्षीणमिथ्यात्वानामविरतदेशविरतसंयतानाम्, बहुवचनस्येष्टव्याप्त्यर्थत्वादौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां च यथाक्रममष्टादशके चतुर्दशके दशके सप्तके च द्वाविंशतिः संक्रामति। तद्यथा–क्षीणमिथ्यात्वस्याऽविरतसम्यग्दृष्टेरष्टादशके, देशविरतस्य चतुर्दशके, संयतस्य दशके, औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां सप्तके, तथा तेषामेवाविरतादीनां क्षीणसप्तकानामौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां च यथाक्रमं सप्तदशकत्रयोदशकनवकसप्तकेषु पतद्ग्रहेषु एकविंशतिः संक्रामति, भावना प्रागिव द्रष्टव्या ॥ २४ ॥

साम्प्रतं क्षपकश्रेणिसंक्रमप्रतिग्रहप्रतिपादनायाह—

**दसगाइ चउक्कं एक्कवीस खवगस्स संकमाहि पंचे। दस चत्तारि चउक्के तिसु तिण्णि दु दोसु एक्केक्कं॥२५॥**

(स्वो०)—दशकादयश्चत्वारः संक्रमाः–दशैकादशद्वादशत्रयोदशप्रकृत्यात्मका एकविंशतिसंक्रमश्च पञ्चप्रतिग्रहे बादरक्षपकस्य संक्रा-

मन्ति । दशचतुष्कसङ्क्रमी स एव बादरः चतुष्कप्रतिग्रहे सङ्क्रामयति । त्रिकसंक्रमं त्रिकप्रतिग्रहे सङ्क्रामयति, द्विकसंक्रमं द्विकप्रतिग्रहे सङ्क्रामयति, एकप्रकृतिसङ्क्रमं एकप्रतिग्रहे सङ्क्रामयतीति गाथार्थः ॥

एतदेव भावयति—क्षपितसप्तकः क्षपकश्रेणीं करोति, असौ बादरोऽन्तर्मुहूर्तं यावदेकविंशतिः पञ्चकप्रतिग्रहे सङ्क्रामयति । ततो मध्यमाष्टकषायक्षये अन्तर्मुहूर्तं त्रयोदश तस्मिन्नेव पञ्चकप्रतिग्रहे सङ्क्रामयति । ततस्त्रयोदशानामन्तरकरणे कृते सञ्ज्वलनलोभस्यासङ्क्रमात् द्वादशान्तर्मुहूर्तं पञ्चकप्रतिग्रहे सङ्क्रामयति । ततो नपुंसकवेदे क्षपिते एकादश पञ्चकप्रतिग्रहेऽन्तर्मुहूर्तं सङ्क्रामयति । ततः स्त्रीवेदे क्षपिते दशान्तर्मुहूर्तं यावत्पञ्चकप्रतिग्रहे सङ्क्रामयति । ततः पुरुषवेदस्य प्रथमस्थित्यां समयोनद्व्यावलिकाशेषायां प्रतिग्रहता न भवति, ता एव दश चतुष्कप्रतिग्रहे समयोनद्व्यावलिकाकालं सङ्क्रामयति । ततो हास्यादिषट्के क्षपिते चत्वारि (चतस्रः समयोन)द्व्यावलिकाकालं तस्मिन्नेव चतुष्कप्रतिग्रहे सङ्क्रामयति । ततः पुरुषवेदे क्षपिते तत्कालमेव क्रोधस्य प्रतिग्रहत्वे नष्टे चतुर्बन्धकोऽन्तर्मुहूर्तं त्रिकसङ्क्रमं त्रिकप्रतिग्रहे सङ्क्रामयति । ततः क्रोधस्य बन्धेऽपगते समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ त्रिकबन्धकस्य मानप्रतिग्रहता नश्यति, [1]द्विकसङ्क्रममन्तर्मुहूर्तं यावद् द्विकप्रतिग्रहे सङ्क्रामयति । [2]ततो माने क्षपिते [मायायाः प्रतिग्रहत्वेऽपगते] मायां संज्वलनलोभरूपे प्रतिग्रहे अन्तर्मुहूर्तं संक्रामयति । अनेन विधिना भावना कार्या इति ॥ २५ ॥

---

१ ततस्त्रिकसंक्रमं त्रिकप्रतिग्रहे समयोनद्व्यावलिकाकालं संक्रामयति । ततः क्रोधे क्षपिते । अयं पाठः त्रुटित इव संभाव्यते ।

२ ततो मानस्य बन्धेऽपगते समयोनावलिकात्रिकशेषायां प्रथमस्थितौ मायायाः प्रतिग्रहता नश्यति, ततो द्विकसंक्रममेकस्मिन् संज्वलनलोभरूपे प्रतिग्रहे समयोनद्व्यावलिकाकालं संक्रामयति । अयं पाठस्त्रुटित इव संभाव्यते ।

(मलय०)—इह पूर्वं क्षपकश्रेण्युपशमश्रेण्योः पतद्ग्रहेषु संक्रमा उक्ताः, संप्रति क्षपकश्रेण्यामेव केवलायां पतद्ग्रहेषु संक्रमान् प्रतिपिपादयिषुराह—अनिवृत्तिबादरस्य क्षपकश्रेण्यां वर्त्तमानस्य दशकादिकं—दशकैकादशकद्वादशकत्रयोदशकरूपं चतुष्कम्, एकविंशतिश्च पञ्चकरूपे पतद्ग्रहे संक्रामति। तथा तस्यैवाऽनिवृत्तिबादरक्षपकस्य चतुष्के—चतुष्करूपे पतद्ग्रहे दश चतस्रश्च प्रकृतयः संक्रामन्ति। तथा तिसृषु त्रिप्रकृत्यात्मके पतद्ग्रहेषु तिस्रः संक्रामन्ति। द्वयोर्द्वे, एकस्यामेकेति ॥ २५॥

साम्प्रतं क्षपितसप्तकस्योपशमश्रेण्यां सङ्क्रमप्रतिग्रहान् योजयन्नाह—

**अट्ठाराइचउक्कं पंचे अट्ठारबारएक्कारा। चउसेक्कारसनवअड तिगे दुगे अट्ठछप्पंच ॥२६॥**

(स्वो०)—अष्टादशादिसंक्रमचतुष्कं—अष्टादशैकोनविंशतिर्विंशत्येकविंशतिप्रकृतिरूपं पञ्चकप्रतिग्रहे संक्रामति। अष्टादशद्वादशैकादशसंक्रमाश्चतुष्कप्रतिग्रहे संक्रामन्ति। एकादशनवाष्टसंक्रमाः त्रिकप्रतिग्रहे संक्रामन्ति। अष्टषट्पञ्चसंक्रमा द्विकप्रतिग्रहे संक्रामन्तीति गाथार्थः ॥ २६ ॥

(मलय०)—संप्रति क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां पतद्ग्रहेषु संक्रमानभिधित्सुराह—क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यामष्टादशकादि—अष्टादशैकोनविंशतिर्विंशत्येकविंशतिरूपं संक्रमचतुष्कं पञ्चकरूपे पतद्ग्रहे संक्रामति। तथा चतसृषु चतुष्प्रकृत्यात्मके पतद्ग्रहे अष्टादश द्वादश एकादश च संक्रामन्ति। तथा त्रिके—त्रिकरूपे पतद्ग्रहे एकादश नव अष्टौ च संक्रामन्ति। द्विके अष्टौ षट् पञ्च च ॥ २६ ॥

**पण तिण्णि दोण्णि एक्के, उवसमसेढीए खइयदिट्ठिस्स। इयरस्स उ दो दोसुं सत्तसु वीसाइ चत्तारि ॥२७॥**

(स्वो०)—अस्यां श्रेण्यां गाथार्थः समन्वीयते, पञ्चत्रिंशतिसंक्रमाः एकप्रतिग्रहे संक्रामन्ति, उपशमश्रेण्यां क्षायिकदृष्टेरेव संक्रमप्रतिग्रहा भवन्ति। एतदेव भावयति–सप्तके क्षपिते य उपशमश्रेणीं करोति, स एकविंशतिसत्कर्मा भवति, स चान्तर्मुहूर्तं पञ्चके एकविंशतिं संक्रमयति। ततोऽन्तरकरणे कृते सञ्ज्वलनलोभस्यासङ्क्रमाद् विंशतिसङ्क्रमः पञ्चकेऽन्तर्मुहूर्तं सङ्क्रामति। ततो नपुंसकवेदे उपशान्ते एकोनविंशतिः पञ्चकेऽन्तर्मुहूर्तं सङ्क्रमति। ततः स्त्रीवेदे उपशान्तेऽष्टादश पञ्चकेऽन्तर्मुहूर्तं सङ्क्रामन्ति। ततो पुरुषवेदस समयोनघ्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, ततश्चतुष्कप्रतिग्रहो भवति, तस्मिन् ता एवाष्टादश समयोनघ्यावलिकाकालं सङ्क्रामन्ति। ततो हास्यादिषट्के उपशान्ते द्वादश तस्मिन्नेव चतुष्कप्रतिग्रहे समयोनघ्यावलिकाकाल सङ्क्रामन्ति। ततः पुरुषवेदे उपशान्ते एकादश चतुष्कप्रतिग्रहेऽन्तर्मुहूर्तं सङ्क्रामन्ति, ततः सञ्ज्वलनक्रोधस्य समयोनघ्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, ततस्त(ता)एवैकादश त्रिकप्रतिग्रहे समयोनघ्यावलिकाकालं सङ्क्रामन्ति। ततः क्रोधद्वये उपशान्ते नव त्रिकप्रतिग्रहे समयोनघ्यावलिकाकालं सङ्क्रामन्ति। तत सञ्ज्वलनक्रोधे उपशान्ते अष्टौ त्रिकप्रतिग्रहेऽन्तर्मुहूर्तं संक्रामन्ति। ततः सञ्ज्वलनमानस्य समयोनघ्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहता गच्छति, ततस्त(ता) एवाष्टौ द्विकप्रतिग्रहे समयोनघ्यावलिकाकालं सङ्क्रामन्ति। ततो मानद्वये उपशान्ते षट् तस्मिन्नेव द्विकप्रतिग्रहे समयोनघ्यावलिकाकाल संक्रामन्ति। ततः सञ्ज्वलनमाने उपशान्ते पञ्च द्विकप्रतिग्रहे सङ्क्रामन्ति। ततः सञ्ज्वलनमायायाः समयोनघ्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, ततस्त(ता) एव पञ्च सञ्ज्वलनलोभप्रतिग्रहे समयोनघ्यावलिकाकालं सङ्क्रामन्ति। ततो मायाद्विके उपशान्ते त्रिकसंक्रमः सञ्ज्वलनलोभप्रतिग्रहे समयोनद्व्यावलिकाकाल संक्रामति। ततः सञ्ज्वलनमायोपशमे मध्यमलोभद्विकं तस्मिन्नेव सञ्ज्वलनलोभप्रतिग्रहेऽन्तर्मुहूर्तं सङ्क्रमति।

एवं बादरकषायस्यान्तसमये लोभद्विकोपशमः, ततः संक्रमप्रतिग्रहाभावः, सूक्ष्मस्यान्तसमये सञ्ज्वलनलोभस्योपशमः क्षीणसप्तकस्योपशमश्रेण्यां भावनीय इति । भणिता क्षीणसप्तकस्योपशमश्रेणी । उपशान्तदर्शनस्योपशमश्रेण्यां संक्रमप्रतिग्रहान् योजयन्नाह—'इयरस्स उ दो दोसुं सत्तसु वीसाइ चत्तारि' । गाथापश्चार्द्धस्य व्याख्या—इतरस्योपशान्तदृष्ट्युपशामकस्य द्विकप्रतिग्रहे दृष्ट्यात्मके दृष्टिद्विकं संक्रामति । सप्तकप्रतिग्रहे विंशत्यादयश्चत्वारः संक्रमाः—विंशत्येकविंशतिद्वाविंशतित्रयोविंशतिरूपाः संक्रामन्तीति गाथार्थः ॥२७॥

(मलय०)—'एकस्मिन्'—एकप्रकृत्यात्मके पतद्ग्रहे, पञ्च तिस्रो द्वे च संक्रामन्ति । एते चाष्टादशादयः संक्रमाः पञ्चकादिषु पतद्ग्रहेषूक्ताः क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वेदितव्याः । 'इतरस्य'—उपशमसम्यग्दृष्टेरुपशमश्रेण्याम्, द्वे प्रकृती द्वयोः—द्विकरूपे पतद्ग्रहे संक्रामतः, तथा सप्तसु—सप्तप्रकृत्यात्मके पतद्ग्रहे विंशत्यादीनि—विंशत्येकविंशतिद्वाविंशतित्रयोविंशतिरूपाणि चत्वारि संक्रमस्थानानि ॥२७॥

**छसु वीसचोद्दतेरसतेरेक्कारस य दस उ पंचंमि । दस अड सत्त चउक्के तिगंमि सगपंच चउरो य ॥२८॥**

(स्वो०)—षट्प्रतिग्रहे विंशतिचतुर्दशत्रयोदशसंक्रमाः संक्रामन्ति । त्रयोदशैकादशदशसंक्रमाः पञ्चकप्रतिग्रहे संक्रामन्ति । दशाष्टसप्तसंक्रमाश्चतुष्कप्रतिग्रहे संक्रामन्ति । सप्तपञ्चचतुःसंक्रमाः त्रिकप्रतिग्रहे संक्रामन्तीति गाथार्थः ॥

एतदेव वृत्तिकारो भावयति—अष्टाविंशतिसत्कर्मा सप्तकं प्रथममुपशमय्य तत उपशमश्रेणीं करोति, 'अणदंसणपुंसित्थी' इति वचनात् । केचिद्वदन्ति—अनन्तानुबन्धिन उद्वलय्य दर्शनत्रिकमुपशमय्योपशमश्रेणीं करोति । उभयत्राप्यदोषः, यतः—उभयत्रापि तेषां संक्रमप्रतिग्रहता न भवति । ततश्चतुर्विंशतेः सम्यक्त्वं प्रतिग्रहत्वे कृतं सम्यग्मिथ्यात्वमुभयत्र व्यवस्थापितम्, अनेन कारणेन पञ्चबन्धकस्य सप्तप्रतिग्रहे त्रयोविंशतिः संक्रामति । ततोऽन्तरकरणे कृते सञ्ज्वलनलोभस्यासंक्रमाद् द्वाविंशतिः संक्रामति । ततो नपुंसकवेदे उपशान्ते

एकविंशतिः सङ्क्रामति । ततः स्त्रीवेदे उपशान्ते विंशतिस्तत्रैव सप्तकेऽन्तर्मुहूर्तं सङ्क्रामति । ततः पुरुषवेदस्य समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, सैव विंशतिः सञ्ज्वलनदृष्टित्रिकात्मके षट्कप्रतिग्रहे समयोनद्व्यावलिकोनं (काकाल) संक्रामति । ततो हास्यादिषट्के उपशान्ते चतुर्दश समयोनद्व्यावलिकाकालं षट्कप्रतिग्रहे सङ्क्रामन्ति । ततः पुरुषवेद उपशान्ते त्रयोदश षट्कप्रतिग्रहेऽन्तर्मुहूर्तं सङ्क्रामन्ति । ततः सञ्ज्वलनक्रोधस्य (समयोन)द्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, पञ्चकप्रतिग्रहे त (ता) एव त्रयोदश समयोनद्व्यावलिकाकालं संक्रामन्ति । ततः मध्यमक्रोधद्वये उपशान्ते एकादश समयोनद्व्यावलिकाकाल पञ्चसु सङ्क्रमन्ति । ततः संज्वलनक्रोधे उपशान्ते दश पञ्चस्वन्तर्मुहूर्तं सङ्क्रामन्ति । ततः सञ्ज्वलनमानस्य समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, त (ता) एव दश समयोनद्व्यावलिकाकालं चतुष्कप्रतिग्रहे सङ्क्रामन्ति । ततो मध्यममानद्वय उपशान्तेऽष्टौ चतुष्कप्रतिग्रहे समयोनद्व्यावलिकाकालं संक्रामन्ति । ततः संज्वलनमाने उपशान्ते सप्तान्तर्मुहूर्तं चतुष्कप्रतिग्रहे सङ्क्रामन्ति । ततः सञ्ज्वलनमायायाः समयोनद्व्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहता अपगच्छति, ततः स (ता) एव सप्त त्रिकप्रतिग्रहे समयोनद्व्यावलिकाकाल संक्रामन्ति । ततः मध्यममायाद्विके उपशान्ते पञ्च तस्मिन्नेव त्रिकप्रतिग्रहे समयोनद्व्यावलिकाकाल संक्रामन्ति । ततः संज्वलनमायायां उपशान्तायां चतस्रः तस्मिन्नेव त्रिकप्रतिग्रहेऽन्तर्मुहूर्तं संक्रामन्ति । ततो मध्यमलोभद्विके उपशान्ते च बादरकषायगुणस्थानेऽपगते सूक्ष्मसम्परायेव संज्वलनलोभसाधारणेयत्वेऽपगते सम्यक्त्वसम्यग्मिथ्यात्वयोर्मिथ्यात्वं, सम्यग्मिथ्यात्वं सम्यक्त्वे संक्रामति उपशान्तकाल यावत् । अस्मा भणने उक्ता सङ्क्रमप्रतिग्रहभावनेति ॥ २८ ॥

(मलय०)—'षट्सु'—षट्करूपे पतद्ग्रहे विंशतिश्चतुर्दश त्रयोदश च संक्रामन्ति । तथा पञ्चकरूपे पतद्ग्रहे त्रयोदश एकादश दश च । तथा 'चतुष्के'—चतुष्करूपे पतद्ग्रहे दश अष्टौ सप्त च । तथा 'त्रिके' त्रिकरूपे पतद्ग्रहे सप्त पञ्च चतस्रश्च प्रकृतयः सङ्क्रामन्ति ॥२८॥

मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टीनां प्रतिग्रहाः स्वल्पत्वात् सुगमाः, शेषाणां प्रतिग्रहस्वामित्वमाह—

इगुणवीसपन्नरेक्कारसाइ ति तिसंमदेसविरयाणं। सत्तपणाइ छ पंच उ पडिगहगा उभयसेढीसु ॥२९॥

(स्वो०)—एकोनविंशत्यष्टादशसप्तदशप्रतिग्रहास्त्रयोऽप्यविरतस्य भवन्ति। पञ्चदशचतुर्दशत्रयोदशप्रतिग्रहाः त्रयोऽपि देशविरतस्य भवन्ति। एकादशदशनवप्रतिग्रहास्त्रयोऽपि प्रमत्ताप्रमत्तयोर्भवन्ति। तुशब्दादुपशान्तदृष्टेः, एकादश क्षीणदृष्टेर्नवापूर्वकरणस्य भवन्ति। सप्तादिषट्प्रतिग्रहाः सप्तषट्पञ्चचतुस्त्रिद्विप्रकृत्यात्मका उपशमश्रेण्यां भवन्ति। पञ्चादयः पञ्च प्रतिग्रहाः पञ्चचतुस्त्रिद्व्येकप्रकृतिरूपाः क्षपकश्रेण्यां क्षीणदृष्टेः, उपशमश्रेण्यां च भवन्तीति गाथार्थः ॥२९॥

(मलय०)—इह मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टीनां पतद्ग्रहान् सुगमत्वादप्रतिपाद्य शेषाणां पतद्ग्रहानभिधित्सुराह—एकोनविंशत्यादयः पञ्चदशादय एकादशादयश्च त्रयस्त्रयः पतद्ग्रहाः 'सम्मदेसविरयाणं' ति—अविरतसम्यग्दृष्टिदेशविरतसर्वविरतानां भवन्ति। तद्यथा—अविरतसम्यग्दृष्टेः प्रथमत एकोनविंशतिः, तस्यैव मिथ्यात्वे क्षीणे अष्टादश, तस्यैव सम्यग्मिथ्यात्वेऽपि च क्षीणे सप्तदश, एवं देशविरतस्याप्युक्तप्रकारेण पञ्चदशचतुर्दशत्रयोदशरूपास्त्रयः पञ्चदशादयः, सर्वविरतस्यापि एकादशदशनवकरूपास्त्रयः पतद्ग्रहा वेदितव्याः। तथा सप्तादयः—सप्तषट्पञ्चचतुस्त्रिद्विकरूपाः षट् पतद्ग्रहा औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां भवन्ति। पञ्चादयः पञ्च पतद्ग्रहाः क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षपकश्रेण्यां च। इह यद्यपि सूत्रे 'उभयसेढीसु' त्ति सामान्येनोक्तम्, तथापि श्रेणिगताः

॥२४॥ प्रागुक्तसंक्रमपतद्ग्रहस्थानपर्यालोचनात् मूलटीकोपदर्शितभावनातश्च, सप्तादयः षड् औपशमिकसम्यग्दृष्टेरुपशमश्रेण्याम्, पञ्चादयः पञ्च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षपकश्रेण्यां च भवन्तीति व्याख्यातम्, नोपशमक्षपकश्रेणिक्रममात्रेण यथासंख्यमिति ॥२९॥

## मोहनीयस्य सत्स्थानादियन्त्रम् ॥

| सत्स्थानानि | प्रकृतयः | संक्रमस्थानानि | प्रकृतयः | कालमानम् | गुणस्थानकादिविषयतया स्वामित्वम् |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | २७ | मिथ्यात्वव्यतिरिक्ताः | पल्योपमासंख्येयभाग यावत् | मिथ्यादृष्टिः |
| २८ | ,, | २७ | सम्यक्त्वव्यतिरिक्ताः | आवलिकायऔपशमसम्यक्त्वकालं यावत् | उपशमसम्यग्दृष्टिः |
| २८ | ,, | २७ | ,, | साधिकषट्षष्टिसागरोपम यावत् | वेदकसम्यग्दृष्टिः |
| २७ | सम्यक्त्वव्यतिरिक्ताः | २६ | मिथ्यात्वसम्यक्त्वव्यतिरिक्ताः | पल्योपमासंख्येयभाग यावत् | मिथ्यादृष्टिः |
| २८ | सर्वप्रकृतिसमुदायः | २६ | मिश्रसम्यक्त्वव्यतिरिक्ताः | आवलिकामात्रं यावत् | औपशमिकसम्यग्दृष्टिः |
| २६ | सम्यक्त्वमिश्रव्यतिरिक्ताः | २५ | दर्शनमोहव्यतिरिक्ताः | अर्धपुद्गलपरावर्तं यावदभव्यमाश्रित्यानन्तकालं यावत् | उद्वलितमिश्रसम्यक्त्वमोहनीयो मिथ्यादृष्टिरभव्यश्च |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २३ | अनन्तानुबन्धिसम्यक्त्वव्यतिरिक्ताः | साधिकषट्षष्टिसागरोपमं यावत् | विसंयोजितानन्तानुबन्धिसम्यग्दृष्टिः |

| | | | | | |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | २३ | अनन्तानुवन्धिमिथ्यात्व-व्यतिरिक्ताः | आवलिकामात्रं यावत् | विसंयोजितानन्तानुवन्धिसम्यग्दृष्टिः मिथ्यात्वं गतः |
| २३ | अनन्तानुवन्धिमिथ्यात्वव्यतिरिक्ताः | २२ | अनन्तानुवन्धिमिथ्यात्व-सम्यक्त्वव्यतिरिक्ताः | अन्तर्मुहूर्तं यावत् | सम्यग्दृष्टिः |
| २८ | सर्वप्रकृतिसमुदायः | २२ | अन० सम्यक्त्वसंज्वलनलोभव्यतिरिक्ताः | अन्तर्मुहूर्तं यावत् | उपशमश्रेण्यामन्तरकरणे कृते सति नवमगुणस्थानवर्त्ती |
| २४ | अनन्तानुवन्धिव्यतिरिक्ताः | २२ | ” | ” | ” |
| २८ | सर्वप्रकृतिसमुदायः | २१ | अन० सम्यक्त्वसंज्वलनलोभनपुंसकवेदव्यतिरिक्ताः | | नपुंसकवेदे उपशान्तेऽनिवृत्तिवादरः |
| २४ | अनन्तानुवन्धिव्यतिरिक्ताः | २१ | ” | ” | ” |
| २२ | अनन्तानुवन्धिमिथ्यात्व-मिश्रव्यतिरिक्ताः | २१ | अन० दर्शनत्रिकव्यतिरिक्ताः | ” | वेदकसम्यग्दृष्टिः |

| | | | | | |
|---|---|---|---|---|---|
| २१ | अनन्तानुबन्धिदर्शनत्रिकव्यतिरिक्ताः | २१ | " | | उपशमश्रेण्यामन्तरकरणात्पूर्वं क्षायिकसम्यग्दृष्टिः |
| २१ | " | २१ | " | साधिकत्रयस्त्रिंशत्सागरोपमं यावत् | क्षायिकसम्यग्दृष्टिः कषायाएकक्षयपर्यन्तं |
| २८ | सर्वप्रकृतिसमुदायः | २० | अन० स्त्रीनपुंसकसंज्वलनलोभसम्यक्त्ववर्जाः शेषाः | अन्तर्मुहूर्तं यावत् | उपशमश्रेण्यामुपशमसम्यग्दृष्टिः |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २० | " | " | " |
| २१ | अनन्तानुबन्धिदर्शनत्रिकव्यतिरिक्ताः | २० | अन० संज्वलनलोभदर्शनत्रिकव्यतिरिक्ताः | " | उपशमश्रेण्यां क्षायिकसम्यग्दृष्टेरन्तरकरणे कृते सति |
| २१ | " | १९ | अन० दर्शनत्रिकसंज्वलनलोभनपुंसकवेदव्यतिरिक्ताः | " | " |
| २१ | " | १८ | अन० दर्शनत्रिकसंज्वलनलोभनपुंसकस्त्रीवेदवर्जाः | " | " |

| | | | | | |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | १४ | अन० सम्यक्त्वसंज्वलन लोभक्लीनपुंसकवेद-हास्यषट्कवर्जाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेण्यामुपशाम-सम्यग्दृष्टिः |
| २४ | अनन्तानुबन्धिव्यति-रिक्ताः | १४ | " | " | " |
| २८ | सर्वप्रकृतिसमुदायः | १३ | पूर्वोक्ताः पुंवेदवर्जाश्च शेषाः | अन्तर्मुहूर्तं यावत् | " |
| २४ | आद्यकषायविहीनाः | १३ | " | " | " |
| १३ | संज्वलनचतुष्कनव-नोकषायाः | १३ | संज्वलनचतुष्कनव-नोकषायाः | " | क्षपकश्रेण्यामन्तरकरणात्पूर्वं मध्यमकषायाष्टकक्षयादनन्तरम् |
| १३ | " | १२ | संज्वलनलोभहीनाः पूर्वोक्ताः | " | क्ष० श्रे० अन्तरकरणानन्तरम् |
| २१ | अन० दर्शनत्रिकव-र्जाः शेषाः | १२ | पुंवेदमध्यमकषायाष्टकलोभ-वर्जसंज्वलनत्रिकरूपाः | समयोनावलिकाद्विकं यावत् | उ. श्रे. क्षा. स. दृष्टिः हा-स्यादिषट्के उपशान्ते |

| | | | | | |
|---|---|---|---|---|---|
| २१ | „ | ११ | पुंवेदवर्जाः पूर्वोक्ताः | अन्तर्मुहूर्तं यावत् | क्रमेण पुंवेदे उपशान्ते सति |
| १२ | संज्वलनचतुष्कनपुंसकवर्जनोकषायाः | ११ | संज्वलनक्रोधमानमायानपुंसकवर्जनोकषायाः | „ | नपुंसकवेदे क्षीणे क्षपकश्रेण्याम् |
| २८ | सर्वप्रकृतिसमुदायः | ११ | मध्यमक्रोधमानमायालोभसंज्वलनक्रोधमानमायामिथ्यात्वमिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेण्यामौपशमिकसम्यग्दृष्टेः मध्यमक्रोधद्विके उपशान्ते |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | ११ | „ | „ | „ |
| ११ | हास्यादिषट्कपुंवेदसंज्वलनचतुष्करूपाः | १० | हास्यादिषट्कपुंवेदक्रोधवर्जसंज्वलनत्रिकरूपाः | अन्तर्मुहूर्तं यावत् | क्षपकश्रेण्यामनिवृत्तियावत् |
| २८ | सर्वप्रकृतिसमुदायः | १० | मध्यमक्रोधमानमायालोभसंज्वलनमानमायामिथ्यात्वमिश्ररूपाः | „ | उपशमश्रेण्यामुपशमसम्यग्दृष्टेः |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | १० | „ | „ | „ |

| | | | | | |
|---|---|---|---|---|---|
| २१ | अन० दर्शनत्रिकव्य-तिरिक्ताः | ९ | मध्यममानमायालोभसंज्व-लनक्रोधमानमायाख्याः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्य-ग्दृष्टिः |
| २१ | " | ८ | संज्वलनक्रोधव्यतिरिक्ताः पूर्वोक्ताः | अन्तर्मुहूर्तं यावत् | " |
| २८ | सर्वप्रकृतिसमुदायः | ८ | मध्यममायालोभसंज्वलन मानमायामिथ्यात्व-मिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणावुपशमसम्य-ग्दृष्टिः |
| २४ | अन० व्यतिरिक्ताः | ८ | " | " | " |
| २८ | सर्वप्रकृतिसमुदायः | ७ | मध्यममायालोभसंज्वलन मायामिथ्यात्वमिश्राख्याः | अन्तर्मुहूर्तं यावत् | " |
| २४ | अन० व्यतिरिक्ताः | ७ | " | " | " |

| | | | | | |
|---|---|---|---|---|---|
| २१ | अन० दर्शनत्रिकवर्जाः | ६ | मध्यममायालोभसंज्वलनमानमायारूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्यग्दृष्टेः |
| २१ | ,, | ५ | संज्वलनमानयुतपूर्वोक्ताः | अन्तर्मुहूर्तं यावत् | ■ |
| २८ | सर्वप्रकृतिसमुदायाः | ६ | मध्यमलोभत्रिकसंज्वलनमायामिथ्यात्वमिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेण्यामुपशमसम्यग्दृष्टेः |
| २४ | अनन्ता०व्यतिरिक्ताः | ५ | ,, | ,, | ,, |
| २८ | सर्वप्रकृतिसमुदायाः | ४ | मध्यमलोभत्रिकमिथ्यात्वमिश्ररूपाः | अन्तर्मुहूर्तं यावत् | ,, |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | ४ | ,, | ,, | ,, |
| ९ | पुंवेदसंज्वलनचतुष्करूपा | ४ | पुंवेदसंज्वलनक्रोधमानमायारूपाः | समयोनावलिकाद्विकं यावत् | क्षपकश्रेण्यामनिवृत्तिबादरे |

| | | | | | |
|---|---|---|---|---|---|
| ४ | संज्वलनचतुष्करूपाः | ३ | संज्वलनक्रोधमान मायारूपाः | अन्तर्मुहूर्तं यावत् | ,, |
| २१ | अन० दर्शनत्रिकव्य-तिरिक्ताः | ३ | मध्यमलोभद्विकसंज्वलन मायारूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्य-ग्दृष्टिः |
| २१ | ,, | २ | मध्यमलोभद्विकं | अन्तर्मुहूर्तं यावत् | ,, |
| २८ | सर्वप्रकृतिसमुदायः | २ | मिथ्यात्वमिश्ररूपम् | ,, | उपशमश्रेणावुपशमसम्य-ग्दृष्टिः |
| २४ | अन० वर्जाः | २ | ,, | ,, | ,, |
| ३ | संज्वलनमानमाया-लोभरूपम् | २ | संज्वलनमायालोभरूपे | ,, | क्षपकश्रेणावनिवृत्तिबादरः |
| २ | संज्वलनमानमायारूपम् | १ | संज्वलनमायारूपा | ,, | ,, |

भणिता मोहनीयबन्धव्यता, नाम्नोऽभिधीयते–अत्र द्वादश सत्स्थानानि, सचतुस्थानि च संक्रमस्थानानि। कथं? सकलप्रकृतिसमुदायोऽस्य त्र्युत्तरशतं तत्प्रथमं सत्स्थानम्। एतदेव तीर्थंकरवर्जितं द्व्युत्तरशतं भवति। अथवा आहारकसप्तकवर्जितं षण्णवतिः। अथवा आहारकसप्तकतीर्थंकरवर्जितं पञ्चनवतिर्भवति। एतत्प्रथमचतुष्कसंज्ञं सचतुष्कम्। संक्रमस्थानान्यपि चत्वार्येतान्येव। प्रथमचतुष्कात् त्रयोदशप्रकृतिक्षये क्षपकश्रेण्यां द्वितीयचतुष्कसंज्ञं सचतुष्कं भवति–नवत्येकोननवतिद्व्यशीतिद्व्यशीतिरूपम्। अमीषां नवतिद्व्यशीतिसत्स्थाने संक्रमे न सम्भवतः, शेषे द्वे संभवतः। पञ्चनवतेर्देवद्विके उद्वलिते त्रिनवतिर्भवति। तस्या अपि वैक्रियसप्तके सनरकद्विके उद्वलिते चतुरशीतिर्भवति। तस्या अपि मनुजद्विके उद्वलिते द्व्यशीतिर्भवति। एतदध्रुवसंज्ञं सत्त्रिकं संक्रमे भवति, किन्तु द्व्यशीतिः यद्यपि प्रकृतिभेदेन व्यवस्थिता तथापि सङ्ख्यातुल्यत्वात् पृथक् सत्स्थानं न भवति। एवमष्टौ संक्रमस्थानानि। नवाष्टौ सत्स्थाने यद्यपि स्तः तथापि संक्रमं प्रति न भवतस्ते यतोऽयोगिस्थाने, तत्र च नामकर्मणो बन्धं विना प्रतिग्रहतापि नास्ति, प्रतिग्रहं विना कुत्र संक्रमो भवति? तस्मात् सत्स्थानवाच्यानि चत्वार्यन्यानि संक्रमस्थानानि–एकोत्तरशतचतुर्नवत्यष्टाशीत्येकाशीतिरूपाणि भवन्ति। अष्टौ प्रतिग्रहाः–त्रयोविंशतिपञ्चविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदेकप्रकृत्यात्मकाः, यतो बन्धसमास्तेऽभिहिता इति। साम्प्रतं ये यत्र प्रतिग्रहे संक्रमा संक्रामन्ति तत्सस्वामित्वानाह—

पढमचउक्कं तित्थयरवज्जियं अधुवसंतातियजुत्तं। तियपणछव्वीसेसुं संकमंति परिग्गहेसु तिसु ॥ ३० ॥

(स्वो०)—'प्रथमचतुष्कं तीर्थङ्करोपलक्षितसत्स्थानद्विकवर्जितं अध्रुवस्थानत्रिकयुक्तम्'–किमुक्तं भवति? द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसंक्रमाः, 'त्रयोविंशतिपञ्चविंशतिषड्विंशतिप्रतिग्रहेषु' पञ्चापि प्रत्येकं सङ्क्रामन्तीति गाथार्थः।

यथा संक्रमाः संक्रामन्ति तथा भावयति—अपर्याप्तैकेन्द्रियप्रायोग्यां त्रयोविंशतिं बध्नतां एकद्वित्रिचतुष्पञ्चेन्द्रियतिरश्चां त्रयोविंशतिप्रतिग्रहे, अथवा पर्याप्तैकेन्द्रियापर्याप्तकद्वित्रिचतुष्पञ्चेन्द्रियतिर्यक्प्रायोग्यामेतेषामेव पञ्चविंशतिं बध्नानानां पञ्चविंशतिप्रतिग्रहे, अथवैतेषामेव पर्याप्तैकेन्द्रियप्रायोग्यां षड्विंशतिं बध्नानानां षड्विंशतिप्रतिग्रहे, द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसंक्रमाः पञ्चापि तत्तत्सत्कर्मणां संक्रामन्ति। द्व्युत्तरशतपञ्चनवतिसंक्रमौ देवाः तत्तत्सत्कर्माणः पर्याप्तैकेन्द्रियप्रायोग्यं षड्विंशतिबन्धं पञ्चविंशतिबन्धं च बध्नानास्तयोः प्रतिग्रहयोः संक्रामयन्ति। त्रयोविंशतिपञ्चविंशतिषड्विंशतिप्रतिग्रहेषु प्रागुक्तप्रायोग्येषु द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिसंक्रमान् मनुष्याः तत्तत्सत्कर्माणः तत्तद्बध्नानाः प्रत्येकं संक्रामयन्ति ॥२०॥

(मलय०)—तदेवमुक्तं सप्रपञ्चं मोहनीयम्। संप्रति नामकर्माभिधीयते—तत्र नामकर्मणो द्वादश सत्तास्थानानि, तद्यथा—त्र्युत्तरशतं द्व्युत्तरशतं षण्णवतिः पञ्चनवतिः। एतत्प्रथमसंज्ञं सत्ताचतुष्कम्। तत्र सकलप्रकृतिसमुदायस्त्र्युत्तरं शतम्, तदेव तीर्थकररहितं द्व्युत्तरं शतम्, त्र्युत्तरशतमेवाहारकसप्तकरहितं षण्णवतिः, द्व्युत्तरशतमाहारकसप्तकरहितं पञ्चनवतिः। क्षपकश्रेण्यां प्रथमसत्ताचतुष्कात् त्रयोदशप्रकृतिक्षये यथाक्रमं द्वितीयं सत्ताचतुष्कं—नवतिरेकोननवतिः त्र्यशीतिर्द्व्यशीतिश्च। तथा पञ्चनवतेर्देवद्विके उद्वलिते त्रिनवतिः, तस्या अपि वैक्रियसप्तके नरकद्विकसहिते उद्वलिते चतुरशीतिः, अस्या अपि मनुजद्विके उद्वलिते द्व्यशीतिः, एतच्च सत्तात्रिकमध्रुवसंज्ञम्। द्व्यशीतिश्च यद्यपि द्वितीयसत्ताचतुष्केऽस्ति च प्रतिभेदेन व्यवस्थिता तथापि संख्यया तुल्यत्वादेकत्वेन सत्तास्थानं गण्यते, तदेवं दश सत्तास्थानानि। तत्र द्वितीये सत्ताचतुष्के नवतित्र्यशीतिरूपे द्वे सत्तास्थाने संक्रमे न प्राप्येते, शेषाणि तु सर्वाण्यपि प्राप्यन्ते, ततोऽष्टौ संक्रमस्थानानि भवन्ति। नवाष्टकरूपे चान्ये द्वे सत्तास्थाने स्तः, ते चायोगिचरमसमये प्राप्येते, ततो द्वादश सत्तास्थानानि भवन्ति, परं नवाष्टकरूपे द्वे सत्तास्थाने

न सङ्क्रमे प्राप्येते, सङ्क्रमोऽपि पतद्ग्रहे सति भवति, पतद्ग्रहश्च बध्यमाना प्रकृतिः, न च तदानीमयोग्यवस्थायां बन्ध इति ते सङ्क्रमे न भवतः। सत्तास्थानवाच्यानि तु चत्वार्यन्यानि संक्रमस्थानानि भवन्ति, तद्यथा–एकोत्तरं शतम्, चतुर्नवतिः, अष्टाशीतिः, एकाशीतिश्च। सदेवं द्वादश सत्तास्थानानि द्वादशैव च सङ्क्रमस्थानानि। तदुक्तं–[1]"तिदुगसयं छप्पंचगतिगनउई नउई इगुणनउई य। चउतिगदुगाहिगासी नव अट्ठ य नामठाणाइं ॥१॥ [2]तिदुगेगसयं छप्पणचउतिगनउई य इगुणनउई या। अडचउदुगेक्कसीई संकमा बारस य छट्ठे ॥२॥"

अष्टौ बन्धस्थानानि, तद्यथा–त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका च। एतान्येव पतद्ग्रहस्थानानि। तथा चोक्तं–[3]"तेवीसपणवीसा छव्वीसा अट्ठवीसिगुणतीसा। तीसेक्कतीसमेगं बन्धट्ठाणाणि नामस्स ॥१॥ [4]तेवीसा पणवीसा छव्वीसा अट्ठावीसिगुणतीसा। तीसेक्कतीसमेग पडिग्गहा अट्ठ नामस्स ॥२॥"

संप्रति काः प्रकृतयः कुत्र सङ्क्रामन्तीत्येतन्निरूप्यते—'प्रथमचतुष्कं तीर्थकरवर्जितं'—तीर्थंकरनामोपलक्षितं त्र्युत्तरशतं पञ्चनवतिरूपं यत्सत्तास्थानकं तद्रहितं 'अध्रुवसत्ताकैर्युक्तं' अध्रुवसंज्ञं यत्सत्ताकं प्रागुक्तं त्रयोविंशतिपञ्चविंशतिषड्विंशतिरूपेषु त्रिषु पतद्ग्रहेषु सङ्क्रमति। द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च पञ्च सङ्क्रमस्थानानि त्रयोविंशत्यादिषु त्रिषु पतद्ग्रहेषु संक्रामन्तीत्यर्थः। तद्यथा–अपर्याप्तकैकेन्द्रियप्रायोग्यां वर्णादिचतुष्कागुरुलघूपघातनिर्माणतैजसकार्मणौदारिकशरीरहुण्डसंस्थानैकेन्द्रियजातितिर्यग्गतितिर्यगानुपूर्वीबादरसूक्ष्मान्यतरस्थावरापर्याप्तकप्रत्येकसाधारणान्यतरास्थिराशुभदुर्भगानादेयायशःकीर्तिलक्षणां त्रयोविंशतिं बध्नतां एकद्वित्रिचतुःपञ्चेन्द्रियतिरश्चां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासम्भवं तस्यामेव

---

१ कर्मप्रकृतिः–सत्ताधिकारे गा १४ २ कर्मप्रकृती–संक्रमकरणे गा ११ ३ षष्ठकर्मग्रन्थ–गा २६ ४ कर्मप्रकृती–संक्रमकरणे गा १४

त्रयोविंशतौ द्व्युत्तरशतं पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च संक्रामति। तथा एकेन्द्रियपर्याप्तप्रायोग्यां तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कैकेन्द्रियजातिहुण्डसंस्थानौदारिकशरीरतिर्यग्गतितिर्यगानुपूर्वीस्थावरबादरसूक्ष्मान्यतरपर्याप्तप्रत्येकसाधारणान्यतरस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगानादेययशःकीर्त्ययशःकीर्त्त्यन्यतरपराघातोच्छ्वासरूपां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुरिन्द्रियादीनां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासङ्ख्यं तस्यामेव पञ्चविंशतौ द्व्युत्तरशतं पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च संक्रामति। अथवा अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणद्वीन्द्रियाद्यन्यतमजातिहुण्डसंस्थानसेवार्तसंहननौदारिकशरीरौदारिकाङ्गोपाङ्गतिर्यग्गतितिर्यगानुपूर्वीत्रसबादरापर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगानादेयायशःकीर्त्तिलक्षणां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुःपञ्चेन्द्रियतिर्यग्नराणां द्व्युत्तरशतादिसत्कर्मणां पञ्चविंशतौ द्व्युत्तरशतादीनि पञ्च संक्रमस्थानानि संक्रामन्ति। तथा एकेन्द्रियादीनां सर्वेषां नरयिकवर्जितानां द्व्युत्तरशतसत्कर्मणां पञ्चनवतिसत्कर्मणां च तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कैकेन्द्रियजातिहुण्डसंस्थानौदारिकशरीरतिर्यग्गतितिर्यगानुपूर्वीस्थावरबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगानादेययशःकीर्त्त्ययशःकीर्त्त्यन्यतरपराघातोच्छ्वासातपोद्योतान्यतररूपामेकेन्द्रियपर्याप्तप्रायोग्यां षड्विंशतिं बध्नतां द्व्युत्तरशतं पञ्चनवतिश्च तस्यामेव षड्विंशतौ संक्रामति। तथा तेषामेव एकेन्द्रियादीनां देववर्जानां त्रिनवतिसत्कर्मणां देवनारकवर्जितानां चतुरशीतिसत्कर्मणां च तामेव पूर्वोक्तां षड्विंशतिं बध्नतां यथासङ्ख्यं त्रिनवतिश्चतुरशीतिश्च तस्यामेव षड्विंशतौ संक्रामति। तथा तेषामेव एकेन्द्रियादीनां देवनारकमनुष्यवर्जानां द्व्यशीतिसत्कर्मणां तामेव पूर्वोक्तां षड्विंशतिं बध्नतां द्व्यशीतिस्तस्यामेव षड्विंशतौ संक्रामति। तदेवं कृता त्रयोविंशतिपञ्चविंशतिषड्विंशति-

पतद्ग्रहेषु संक्रमयोजना ॥ ३० ॥

उक्ता त्रिपञ्चषड्विंशतिप्रतिग्रहेषु संक्रमयोजना, शेषेष्वाह—

**पढमं सतचउक्कं इगितीसे अधुवतिगजुय तं तु। गुणतीसतीसएसुं जसहीणा दो चउक्कजसे ॥ ३१ ॥**

(स्वो०)—प्रथमं सत्चतुष्कं एकत्रिंशत्प्रतिग्रहे संक्रामति । तदेव प्रथमसत्चतुष्कं अध्रुवसत्त्रिकयुक्तमेकोनत्रिंशत्त्रिंशत्प्रतिग्रहयोः संक्रामति । यशःकीर्त्याः प्रतिग्रहं कृत्वा तद्धीनं प्रथमचतुष्कं द्वितीयचतुष्कं च यशःकीर्तिप्रतिग्रहे संक्रामतीति गाथार्थः ।

एतदेव भावयति–एकत्रिंशद्बन्धकस्याप्रमत्तस्यापूर्वकरणस्य वा बन्धावलिकायां गतायां एकत्रिंशत्प्रतिग्रहे त्र्युत्तरशतं संक्रामति । बन्धावलिकायामनपगतायां तस्मिन्नेव प्रतिग्रहे पञ्चनवतिः संक्रामति । पूर्वं त्रिंशद्बन्धं बद्ध्वा पश्चादेकत्रिंशद्बन्धकस्याप्रमत्तस्यापूर्वकरणस्य वा यावद्बन्धावलिका नापगच्छति तावदेकत्रिंशत्प्रतिग्रहे द्व्युत्तरशतं संक्रामति । तीर्थङ्करसहितमेकोनत्रिंशद्बन्धं पूर्वं बद्ध्वा पश्चादेकत्रिंशद्बन्धकस्य आहारकसत्कस्य बन्धावलिकायामनपगतायां एकत्रिंशत्प्रतिग्रहे षण्णवतिः संक्रामति । इदानीं त्रिंशदेकोनत्रिंशत्प्रतिग्रहयोः भावना क्रियते–देवो मनुष्यप्रायोग्य तीर्थकरोपलक्षित त्रिंशद्बन्धं बध्नानः त्र्युत्तरशतसत्कर्मा त्रिंशत्प्रतिग्रहे त्र्युत्तरशतं संक्रमयति । अप्रमत्तस्यापूर्वकरणस्य वा त्रिंशद्बन्धं बध्नानस्य बन्धावलिकायां गतायां त्रिंशत्प्रतिग्रहे द्व्युत्तरशतं संक्रामति । बन्धावलिकायामनपगतायां तत्रैव पञ्चनवतिः संक्रामति । देवनारकाः सम्यग्दृष्टयो मनुष्यप्रायोग्यं तीर्थङ्करसहितं त्रिंशद्बन्धं बध्नानाः षण्णवतिं त्रिंशत्प्रतिग्रहे संक्रामयन्ति । अविरतदेशविरतप्रमत्ता देवप्रायोग्यं एकोनत्रिंशद्बन्धं बध्नानाः त्र्युत्तरशतसत्कर्माणः एकोनत्रिंशत्प्रतिग्रहे त्र्युत्तरशतं संक्रामयन्ति । एत एव तीर्थकरस्य बन्धावलिकायामनपगतायां तस्मिन्नेवैकोनत्रिंशत्प्रतिग्रहे द्व्युत्तरशत संक्राम-

यन्ति। एत एव तीर्थकरस्य बन्धावलिकायां गतायां षण्णवतिसत्कर्माण एकोनत्रिंशत्प्रतिग्रहे षण्णवतिं संक्रामयन्ति। बन्धावलिकायामनपगतायां एकोनत्रिंशत्प्रतिग्रहे पंञ्चनवतिं संक्रामयन्ति। अथवा नारकः षण्णवतिसत्कर्मा मिथ्यात्वं गतः प्राकृतमनुष्यप्रायोग्यं एकोनत्रिंशद्बन्धं बध्नान एकोनत्रिंशत्प्रतिग्रहे षण्णवतिं संक्रामयति। पर्याप्तकद्वित्रिचतुष्पञ्चेन्द्रियतिर्यक्प्रायोग्यमुद्योतोपलक्षितं त्रिंशद्बन्धं बध्नाना उद्योतरहितैकोनत्रिंशद्बन्धं बध्नाना एत एव द्वित्रिचतुष्पञ्चेन्द्रिया अनयोरेव प्रतिग्रहयोः द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसंक्रमान् तत्तत्सत्कर्माणो मनुष्या अपि द्व्यशीतिरहितानेतानेव संक्रमाननयोरेव प्रतिग्रहयोः संक्रामयन्ति, यतस्तेषां अध्रुवं द्व्यशीतिसत्स्थानं नास्ति। पञ्चेन्द्रियतिर्यक्प्रायोग्यमेकोनत्रिंशद्बन्धं त्रिंशद्बन्धं वा बध्नाना देवनारकास्तयोरेव प्रतिग्रहयोर्द्व्युत्तरशतं पञ्चनवतिं च तत्तत्सत्कर्माणः संक्रामयन्ति। प्रथमचतुष्कायशःकीर्त्तिप्रतिग्रहत्वे कृत्वा ततो द्व्युत्तरैकोत्तरशतपञ्चनवतिचतुर्णवतिरूपं प्रथमचतुष्कं उपशामका अपूर्वकरणबादरसूक्ष्माः यशःकीर्त्तिप्रतिग्रहे संक्रामयन्ति। द्वितीयचतुष्कमपि यशःकीर्तिहीनमेकोननवतिअष्टाशीतिद्व्यशीत्येकाशीतिरूपं नामत्रयोदशके च क्षीणे क्षपकश्रेण्यां यज्जातं द्वितीयचतुष्कं तद्बादरसूक्ष्मक्षपकाः यशःकीर्तिप्रतिग्रहे संक्रामयन्तीति ॥ ३१ ॥

(मलय०)—संप्रति शेषेषु तां कुर्वन्नाह—यतेरप्रमत्तस्याऽपूर्वकरणस्य वा देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकास्थिरशुभसुभगसुस्वरादेययशःकीर्त्तितैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकराहारकद्विकरूपामेकत्रिंशतं बध्नतस्तस्यामेकत्रिंशति प्रथमं सत्ताचतुष्कं त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपं संक्रामति। तत्र त्र्युत्तरशतं तीर्थकराहारकनाम्नोर्बन्धावलिकायामपगतायामेकत्रिंशति पतद्ग्रहे संक्रामति, तीर्थकरनाम्नः

पुनर्बन्धावलिकयामनपगतायां त्र्युत्तरशतम्, आहारकसप्तकस्य तु बन्धावलिकयामनपगतायां षण्णवतिः, तीर्थकराहारकसप्तकयोर्बन्धावलिकयामनपगतायां पञ्चनवतिः। 'अधुवसंतयजुयं तं तु गुणतीसतीसएसु'त्ति—तदेव प्रथमसत्ताचतुष्कं अध्रुवसंज्ञसत्तात्रिकयुक्तं एकोनत्रिंशत्त्रिंशत्पतद्ग्रहयोः संक्रमति, इदमुक्तं भवति—एकोनत्रिंशति त्रिंशति च प्रत्येकं त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतित्र्यशीतिरूपाणि सप्त संक्रमस्थानानि संक्रामन्ति। तत्र त्र्युत्तरशतसत्कर्मणो देवस्य सम्यग्दृष्टेस्तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणपञ्चेन्द्रियजात्यौदारिकशरीरौदारिकाङ्गोपाङ्गसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहनननमनुजगतिमनुजानुपूर्वीत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासप्रशस्तविहायोगतितीर्थकरलक्षणां मनुजगतिप्रायोग्यां तीर्थकरनामसहितां त्रिंशतं बध्नतस्तस्यां त्रिंशति त्र्युत्तरशतं संक्रामति। द्व्युत्तरशतसत्कर्मणोऽप्रमत्तसंयतस्य अपूर्वकरणस्य वा देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तितैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणाहारकद्विकरूपां देवगतिप्रायोग्यां त्रिंशतं बध्नतो द्व्युत्तरं शतं तस्यां त्रिंशति संक्रामति। अथवा द्व्युत्तरशतसत्कर्मणामेकेन्द्रियादीनामुद्योतसहितां द्वीन्द्रियादिप्रायोग्यां तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कतिर्यग्गतितिर्यगानुपूर्वीद्वीन्द्रियाद्यन्यतमजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगदुःस्वरानादेययशःकीर्त्ययशःकीर्त्यन्यतरौदारिकशरीरौदारिकाङ्गोपाङ्गान्यतमसंस्थानान्यतमसंहननाप्रशस्तविहायोगतिपराघातोद्योतोच्छ्वासरूपां त्रिंशतं बध्नतां द्व्युत्तरशतं तस्यां त्रिंशति संक्रामति। षण्णवतिसत्कर्मणां देवनारकाणां मनुजगतिप्रायोग्यां तीर्थकरनामसहितां प्रागुक्तां त्रिंशतं बध्नतां तस्मिन् त्रिंशत्पतद्ग्रहे षण्णवतिः। पञ्चनवतिसत्कर्मणामप्रमत्तापूर्वकरणसंयतानामाहारकद्विक-

सहितां प्रागुक्तां देवगतिप्रायोग्यां त्रिंशतं बध्नतामाहारकसप्तकस्य बन्धावलिकायामनपगतायां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे संक्रामति। अथवा पञ्चनवतिसत्कर्मणामेकेन्द्रियादीनां द्वीन्द्रियादिप्रायोग्यामुद्योतसहितां प्रागुक्तां त्रिंशतं बध्नतां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे संक्रामति। त्रिनवतिसत्कर्मणां चतुरशीतिसत्कर्मणां द्व्यशीतिसत्कर्मणां चैकेन्द्रियादीनां विकलेन्द्रियपञ्चेन्द्रियतिर्यक्प्रायोग्यां प्रागुक्तामुद्योतसहितां त्रिंशतं बध्नतां यथाक्रम त्रिनवतिश्चतुरशीतिद्व्यशीतिश्च त्रिंशत्पतद्ग्रहे संक्रामति। तथा त्र्युत्तरशतसत्कर्मणामविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानां देवगतिप्रायोग्यां तीर्थकरनामसहितां देवद्विकपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरसमचतुरस्रसंस्थानतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकरलक्षणामेकोनत्रिंशतं बध्नतां त्र्युत्तरशतमेकोनत्रिंशत्पतद्ग्रहे संक्रामति। एतेषामविरतादीनां त्रयाणां प्रागुक्तामेकोनत्रिंशतं बध्नतां तीर्थकरनाम्नो बन्धावलिकायामनपगतायां द्व्युत्तरशतं तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति। अथवा एकेन्द्रियादीनां द्व्युत्तरशतसत्कर्मणां द्वीन्द्रियादिप्रायोग्यां प्रागुक्तामेव त्रिंशतमुद्योतरहितामेकोनत्रिंशतं बध्नतां द्व्युत्तरशतमेकोनत्रिंशत्पतद्ग्रहे संक्रामति। अविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानां पण्णवतिसत्कर्मणां प्रागुक्ताया देवगतिप्रायोग्यायास्त्रिंशत आहारकद्विकेऽपनीते तीर्थंकरनाम्नि च तत्र क्षिप्ते सति या एकोनत्रिंशद्भवति तां बध्नतां पण्णवतिस्तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति। अथवा नैरयिकस्य तीर्थकरनामसत्कर्मणो मिथ्यादृष्टेरपर्याप्तावस्थायां वर्त्तमानस्य मनुजगतिप्रायोग्यां मनुजगतिमनुजानुपूर्वीपञ्चेन्द्रियजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगदुर्भगान्यतरादेयानादेयान्यतरयशःकीर्त्ययशःकीर्त्यन्यतरसंस्थानषट्कान्यतमसंस्थानसंहननषट्कान्यतमसंहननवर्णादिचतुष्कागुरुलघूपघाततैजसकार्मणनिर्माणौदारिकशरीरौदारिकाङ्गोपाङ्गसुस्वरदुःस्वरान्यतरपराघातो-

स्वरासप्रशस्ताप्रशस्तान्यतरविहायोगतिलक्षणामेकोनत्रिंशतं बध्नतः षण्णवतिरेकोनत्रिंशत्पतद्ग्रहे संक्रामति। अविरतसम्यग्दृष्टीनां देशविरतानां प्रमत्तसंयतानां वा षण्णवतिसत्कर्मणां प्रागुक्तां तीर्थकरनामसहितां देवगतिप्रायोग्यां एकोनत्रिंशतं बध्नतां तीर्थकरनामकर्मणो बन्धावलिकायामनपगतायामेकोनत्रिंशति (पञ्चनवतिः संक्रामति)। पञ्चनवतिसत्कर्मणामेकेन्द्रियादीनां द्वीन्द्रियादिप्रायोग्या या त्रिंशत्, सैवोद्योतरहिता एकोनत्रिंशत्, तां बध्नतां तस्यामेवैकोनत्रिंशति पञ्चनवतिः संक्रामति। त्रिनवतिचतुरशीतिद्व्यशीतयो यथा त्रिंशत्पतद्ग्रहेऽभिहितास्तथैवात्रापि भावनीयाः। 'जसहीणा दोसुउक जसे' इति—यशःकीर्तिरूपे एकप्रकृत्यात्मके पतद्ग्रहे यशःकीर्तिहीने द्वे चतुष्के संक्रामतः, यशःकीर्तिरहितं प्रथमं द्वितीयं च सत्ताचतुष्कं संक्रामतीत्यर्थः। इदमुक्तं भवति—यशःकीर्तिरूपे पतद्ग्रहे अष्टौ संक्रमस्थानानि संक्रामन्ति। तद्यथा—द्व्युत्तरशतमेकोत्तरशतं पञ्चनवतिश्चतुर्नवतिरेकोननवतिरष्टाशीतिरेकाशीतिश्च। तत्र त्र्युत्तरशतसत्कर्मणो यशःकीर्तिर्बध्यमाना पतद्ग्रह इति तस्यामुत्सारितायां शेषं द्व्युत्तरशतं यशःकीर्तौ संक्रामति। एवमेव द्व्युत्तरशतसत्कर्मण एकोत्तरं शतम्। तथा षण्णवतिसत्कर्मणो यशःकीर्तिः पतद्ग्रह इति तस्यामुत्सारितायां शेषा पञ्चनवतिस्तस्यां यशःकीर्तौ संक्रामति। एवमेव पञ्चनवतिसत्कर्मणश्चतुर्नवतिः। तथा त्र्युत्तरशतसत्कर्मणस्त्रयोदशसु नरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतरूपेषु कर्मसु क्षीणेषु यशःकीर्तिः पतद्ग्रह इति तस्यामुत्सारितायां शेषा एकोननवतिर्यशःकीर्तौ संक्रामति। द्व्युत्तरशतसत्कर्मणः पुनस्त्रयोदशसु क्षीणेषु अष्टाशीतिः, षण्णवतिसत्कर्मणो नामत्रयोदशके क्षीणे द्व्यशीतिः, पञ्चनवतिसत्कर्मणस्तु नामत्रयोदशके क्षीणे एकाशीतिः संक्रामति ॥२१॥

एकोनत्रिंशत्त्रिंशदेकत्रिंशदेकप्रतिग्रहाणां योजनोक्ता। अष्टाविंशतिप्रतिग्रहस्याह—

पढमचउक्कं आइल्लवज्जियं दो अणिच्च आइल्ला। संकमहि अट्ठवीसे सामी जहसंभवं नेया ॥ ३२ ॥

(स्वो०)—प्रथमचतुष्कं आद्यमत्स्थानत्र्युत्तरशतरूपवर्जितं, द्वे आद्ये अध्रुवस्थाने, अमी पञ्चाप्यष्टाविंशतिप्रतिग्रहे संक्रामन्ति, स्वामिनो यथासम्भवं 'नेयाः'—नेतव्या इति, अथवा स्वबुद्ध्या ज्ञेया ज्ञातव्या इति गाथार्थः।

एतदेव वृत्तिकारो भावयति—मिथ्यादृष्टिः (नरकदेवगतिप्रायोग्यं) सम्यग्मिथ्यादृष्टि (ःसम्यग्दृष्टि)र्वा देवगतिप्रायोग्यमष्टाविंशतिबन्धं बध्नानो द्व्युत्तरशतपञ्चनवतिसत्कर्माऽष्टाविंशतिप्रतिग्रहे द्व्युत्तरशतं पञ्चनवतिं वा संक्रामयति। सम्यग्दृष्टिर्मिथ्यात्वं गतो नरकप्रायोग्यमष्टाविंशतिबन्धं बध्नानः षण्णवतिं अष्टाविंशतिप्रतिग्रहे संक्रामयति। द्व्यशीतिसत्कर्मा सूक्ष्मत्रसः शेषतिरश्चां भवं प्राप्तः सन्मनुष्यद्विकं बद्ध्वा चतुरशीतिसत्कर्म्मा जातस्तदन्तर्मुहूर्त्तात्परतः परावर्त्त्य नरकप्रायोग्यं वा देवप्रायोग्यं वा अष्टाविंशतिबन्धं बध्नाति, बन्धावलिका यावन्नापगच्छति तावदष्टाविंशतिप्रतिग्रहे चतुरशीतिं संक्रामयति, बन्धावलिकायामतीतायां तस्मिन्नेवाष्टाविंशतिप्रतिग्रहे त्रिनवतिं संक्रामयति ॥ ३२ ॥

(मलय०)—'प्रथमचतुष्कम्'—प्रथमं सत्तास्थानचतुष्कम्, 'आदिमवर्जितम्'—त्र्युत्तरशतसत्तास्थानवर्जितम्, तथा द्वे अनित्ये—अध्रुवसंज्ञे 'आदिमे'—त्रिनवतिचतुरशीतिरूपे सत्तास्थाने अष्टाविंशतौ संक्रामतः। इदमुक्तं भवति—अष्टाविंशतौ पञ्च संक्रमस्थानानि संक्रामन्ति, तद्यथा—द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिश्च। तत्र मिथ्यादृष्टेर्नरकगतिप्रायोग्यां नरकगतिनरकानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गहुण्डसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकास्थिरास्थिरान्यतरशुभाशुभान्यतर(प्रत्येकास्थिराशुभ)दुर्भगदुःस्वरानादेयायशःकीर्तिवर्णादिचतुष्कागुरुलघूपघाततैजसकार्मणनिर्माणरूपाम्, तथा मिथ्यादृष्टेः(सम्य- ॥ ३६ ॥

रिमिथ्यादृष्टेः) सम्यग्दृष्टेर्वा देवगतिप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणदेवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीर-वैक्रियाङ्गोपाङ्गसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरा-देययशःकीर्त्ययशःकीर्त्यन्यतरलक्षणामष्टाविंशतिं बध्नतो द्व्युत्तरशतसत्कर्मणो द्व्युत्तरशतमष्टाविंशतिपतद्ग्रहे संक्रामति। तथा मनुष्यस्य तीर्थकरनामसत्कर्मणः पूर्वमेव नरकबद्धायुष्कस्य सतो नरकाभिमुखस्य सतो मिथ्यात्वं प्रपन्नस्य नरकगतिप्रायोग्यां पूर्वोक्तामष्टा-विंशतिं बध्नतः पञ्चनवतिसत्कर्मणोऽष्टाविंशतिपतद्ग्रहे पञ्चनवतिः संक्रामति। यथा द्व्युत्तरशतस्य भावना कृता तथा पञ्चनवतेरपि भावना कार्या, केवलं द्व्युत्तरशतस्थाने पञ्चनवतिरित्युच्चारणीयम्। तथा मिथ्यादृष्टेस्त्रिनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्ताम-ष्टाविंशतिं बध्नतो वैक्रियसप्तकदेवगतिदेवानुपूर्वीणां बन्धावलिकायाः परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। अथवा पञ्चनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवति-रष्टाविंशतौ संक्रामति, अथवा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्वी-वैक्रियसप्तकानां बन्धावलिकायाः परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। अथवा पञ्चनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगति-प्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। तथा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्देवगतिप्रायोग्यामष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्वीवैक्रियसप्तकानां बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति, अथवा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरक-गतिनरकानुपूर्वीवैक्रियसप्तकानां बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति। 'सामी जहसंभवं नेयं' ति।

यस्य संक्रमस्थानस्य ये स्वामिनस्ते यथासंभवं ज्ञेयाः-ज्ञातव्याः, ते च प्रायः प्रतिसंक्रमस्थानं प्रतिपादिता एव ॥३२॥

एतच्छ्रुत्वाह परः—

**संकमइ नण्णपगइं पगतीओ पगतिसंकमे दलियं । ठितिअणुभागा चेवं ठंति तहट्ठा तयणुरूवा ॥३३॥**

(स्वो०)—संक्रामति नान्यां प्रकृतिं-प्रतिग्रहरूपां संक्रमप्रकृतितो दलिकं-परमाणुरूपं प्रकृतिसंक्रमे। स्थित्यनुभागावप्येवमेव, स्थितिसंक्रमेऽपि स्थितिः न संक्रामयति, अनुभागसंक्रमेऽप्यनुभागो न संक्रामति । यदि परं स्वप्रकृतिस्था एवानुभागपरमाणवः प्रतिग्रहप्रकृतिस्वरूपेण तिष्ठन्ति, यदि पुनः समकं प्रकृतिसंक्रमादिषु दलं परमाणुरूपं संक्रामयति, ततः प्रदेशसंक्रमस्य वैयर्थ्यम्, न संक्रामयति चेत् ? ततः प्रकृतिसंक्रमादिभणने व्यर्थः कपोलव्यायाम इति । एतच्छ्रुत्वाऽऽहाचार्यः-भद्र! न वेत्सि तत्त्वम्,अमी प्रकृतिस्थित्यनुभागप्रदेशसंक्रमा बन्धा वा उदया वा समकं-समकालं प्रभवन्ति, तत्कथनं चैककालं वक्तुं न शक्यते, वाचःक्रमवर्त्तित्वात्, समकालप्रवर्त्तने च प्रकृतिसंक्रमे परमाण्वात्मकदलसंक्रमं को निवारयति? किन्तु चत्वारोऽपि संक्रमाः स्वविषयप्राधान्येन व्यवस्थिताः, प्रकृतिसंक्रमे संख्यामात्रस्यैव प्राधान्यम्, इयत्प्रकृतिष्वियत्यः संक्रामन्ति, कालानुभागपरमाणवोऽत्र सन्तोऽप्युपमर्ज्जनभूताः । स्थितिसंक्रमे कालस्य प्राधान्यम् । अनुभागसंक्रमे यद्यप्यनुभागः प्रदेशभिन्नो नास्ति तथापि तन्मात्रस्यैव प्राधान्यम् । प्रदेशसंक्रमेऽपि प्रदेशानामेव कालरसादिनिरपेक्षाणां प्राधान्यम् । एवं स्थिते कोऽत्र दोष इति गाथार्थः ॥ ३३ ॥

(मलय०)-संप्रति परं प्रश्नयन्नाह—ननु प्रकृतिसंक्रमे वर्ण्यमाने प्रकृतेः संक्रम्यमाणायाः सकाशात् दलिकं परमाण्वात्मकं समाक्र-

ष्यान्यां प्रकृतिं—पतद्ग्रहप्रकृतिरूपां न सङ्क्रमयति, न तत्र नीत्वा प्रक्षिपति, परमाण्वात्मकदलिकसङ्क्रमो प्रकृतिसङ्क्रमो न भवतीत्यर्थः, परमाणुसङ्क्रमो हि प्रदेशसङ्क्रमो भवति, न प्रकृतिसंक्रमः । अथ प्रकृतिः स्वभावस्तत्सङ्क्रमः प्रकृतिसङ्क्रम इत्युच्यते, तदयुक्तम्, स्वभावस्यान्यत्र सङ्क्रमयितुमशक्यत्वात्, तत इत्थं विचार्यमाणः प्रकृतिसंक्रमो नोपपद्यते इति तत्प्रतिपादनं सकलमपि शास्त्रं बन्ध्यासुतसौभाग्यादिगुणोपवर्णनप्रख्यम् । यावपि च स्थित्यनुभागसङ्क्रमौ वक्ष्यमाणौ तावप्येवं द्रष्टव्यौ, तावप्ययुक्तावित्यर्थः, तयोरपि विचार्यमाणयोरघटमानत्वात् । तथाहि—स्थितिर्नाम नियतकालविशिष्टमवस्थानम्, न च कालोऽन्यत्र संक्रमयितुं शक्यते, अमूर्तत्वात् । अनुभागोऽपि च रस उच्यते, रसश्च परमाणूनां गुणः, गुणाश्च गुणिनमन्तरेणान्यत्र नेतुं न शक्यन्ते, गुणिनां च परमाणूनां संक्रमे प्रदेशसङ्क्रम एव प्रसज्यते । ततः स्थित्यनुभागसंक्रमावप्युक्तनीत्याऽनुपपद्यमानाविति । अत्र आचार्य आह—सङ्क्रम्यमाणप्रकृतिसत्काः परमाणवस्तथास्थाः—तेन पतद्ग्रहप्रकृतिगतत्वेन प्रकारेण स्थिताः सन्तस्तदनुरूपं—पतद्ग्रहप्रकृत्यनुयायिप्रकृतिस्थित्यनुभागानुरूपं तिष्ठन्ति, पतद्ग्रहप्रकृत्यनुयायिप्रकृत्यादिरूपतया भवन्तीत्यर्थः । इदमुक्तं भवति—इह प्रकृतिर्नाम ज्ञानावारकत्वादिलक्षणः स्वभावः, स्थितिर्नियतकालमवस्थानम्, तदपि च कर्मपरमाणूनां स्थानावधिविशेष एव, अनुभागोऽपि च रसः, त्रयाणामाधारभूताश्च परमाणवः प्रदेशाः, ततः परमाणुषु परप्रकृतिषु सङ्क्रम्यमाणेषु सङ्क्रम्य च परप्रकृतिरूपतामापद्यमानेषु प्रकृतिसङ्क्रमादयः सर्वेऽप्युपपद्यन्ते । तथाहि—पतद्ग्रहप्रकृतिरूपतापादनं प्रकृतिसङ्क्रमः, पतद्ग्रहप्रकृतिरूपतयैव च नियतकालविशिष्टस्यावस्थानस्यापादनं स्थितिसङ्क्रमः, पतद्ग्रहप्रकृत्यनुयायिरसापादनं त्वनुभागसङ्क्रमः, परमाणूनां च प्रक्षेपणं प्रदेशसङ्क्रमः, तेन तदुच्यते । 'अथ प्रकृतिसंक्रमः स्वभावसङ्क्रम इष्यते, तदयुक्तम्, स्वभावस्यान्यत्र नेतुमशक्यत्वात्'—इत्यादि तत्सर्वमनवकाशम्, न हि स्वभावस्थितिरसा विवक्षितपरमाणुभ्यः

समाकृष्य परमाण्वन्तरेषु प्रक्षिप्यन्ते इत्येवं प्रकृतिसंक्रमादीनाचक्ष्महे, किन्तु विवक्षितपरमाणुषु पतद्ग्रहप्रकृत्यादिरूपतयापादनलक्षणान्, ततो न कश्चिद्दोषः, अत एव यदेते परस्पराविनाभाविनस्तत एकस्मिन् प्रवर्तमाने सर्वेऽपि प्रवर्त्तन्ते, तदुक्तं मूलटीकायां— 'अमी प्रकृतिस्थित्यनुभागप्रदेशेषु संक्रमा बन्धा वा उदया वा समकं-समकालं प्रवर्तन्ते इति केवलं युगपदभिधातुं न शक्यन्ते, वाचः क्रमवर्तित्वात्, ततो यो यदा संक्रमो वक्तुमिष्यते स तदानीं बुद्धया पृथक्कृत्वा सप्रपञ्चमुच्यते' इति सर्वमुपपन्नम्। अथवा स्थितिरसप्रदेशसमुदायः प्रकृतिः, "[1]तस्समुदाओ पगईबंधो' इति वचनात्, तत्संक्रमः प्रकृतिसंक्रमः, समुदायश्च समुदायिभ्यः कथञ्चिद् भिन्न इति स्थितिसंक्रमादिभ्यः प्रकृतिसंक्रमो भिन्नः, स्थित्यनुभागसंक्रमौ च प्रागिवेत्यविरोधः ॥ ३३ ॥

भूयोऽप्याह परः—

**दलियरसाणं जुत्तं मुत्तत्ता अण्णभावसंकमणं। ठितिकालस्स न एवं उउसंकमणं पिव अदुट्ठं ॥३४ ॥**

(स्वो०)—परमाणुरसयोः युक्तमन्यद्भावसंक्रमणं पृथिवीजलयोरिव मूर्त्तत्वात्, स्थितिकालस्यैवं न घटते, अमूर्त्तत्वादाकाशस्येव, अन्यभावाभावे च स्थितिसंक्रमस्य वैयर्थ्यमिति। आहाचार्यः—'उउसंकमणं पिव अदुट्ठं' अमूर्त्तस्यापि कालस्य संक्रमो लोकेऽप्यदुष्टः, यथा—यतोऽन्यस्मिन्नृतावन्यर्तुत्वानुभावो दृश्यते, पित्तादिप्रकोपात्, तरुषु पुष्पफलादिसद्भावाच्च न दोषः कश्चिदिति गाथार्थः॥ ३४ ॥

प्रकृतिसंक्रमः समाप्तः ॥



---

१ पंचसंग्रहे बन्धनकरणं गा. ४०.

(मलय०)—उक्तमर्थमनवबुध्यमानः स्थितिसंक्रमविषये भूयोऽपि परः प्रश्नयति—ननु दलिकरसानां परमाण्वनुभागानां पृथिवीजलयोरिव मूर्त्तत्वादन्यभावसंक्रमणं—प्रकृत्यन्तरपरिणामापादनं युक्तम्, कालस्त्वमूर्त्तः, ततः स्थितिकालस्य कथमिवान्यभावसंक्रमणमुपपद्यते ? तदेतदसमीचीनम्, न खलु कालस्य संक्रमणमस्माभिरिष्यते, किन्तु स्थितेः, स्थितिश्चावस्थानम्, तच्च पूर्वमन्यप्रकृतिरूपतया आसीत्, संप्रति त्वन्यप्रकृतिरूपतया यदवस्थानापादनं स स्थितिसंक्रमः, न चायमनुपपन्नः, प्रत्यक्षसिद्धत्वात् । तथाहि—तृणादिपरमाणवः पूर्वं तृणादिरूपा आसीरन्, ततो लवणाकरेषु निपतिताः सन्तः कालक्रमेण लवणरूपतया अवतिष्ठन्ते । अथवा स्थितिकालस्यापि संक्रमणमस्तु, तथापि न कश्चिद्दोषः, तथा चाह—ऋतुसंक्रमणमिव स्थितिकालस्यापि संक्रमणमदुष्टम् एतदुक्तं भवति—यथा वृक्षादिषु स्वभावतः क्रमेण, देवतादिप्रयोगतो युगपदपि वा सर्वेऽपि ऋतवः संक्रामन्ति, तत्तत्कार्यपुष्पफलादिदर्शनात्, तथेहापि जीवप्रयोगतः कर्मपरमाणुषु सातादिरूपताहेतुं कालमपनीयासातादिरूपताहेतुः कालः संक्रामन्न विरुध्यते इत्यदोषः ॥३४॥

प्रकृतिसंक्रमः समाप्तः ॥

नाम्नः संक्रमस्थानानां प्रतिग्रहस्थानानां च साद्यादिभङ्गकयन्त्रं नाम्नः संक्रमस्थानानि च।

| स्थानसंक्रमः | सादिः | अध्रुवः | स्थानप्रतिग्रहः | सादिः | अध्रुवः |
|---|---|---|---|---|---|
| १०३ | कादाचित्कत्वात् | कादाचित्कत्वात् | ३१ | " | " |
| १०२, १०१, ९६ | " | " | ३०, २९ | " | " |
| ९५, ९४, ९३, ८९ | " | " | २८, २६ | " | " |
| ८८, ८४, ८२, ८१ | " | " | २५, २३, १ | " | " |

| | | | |
|---|---|---|---|
| १०३ | सर्वप्रकृतिसमुदायः | ८८ | त्रयोदशासु क्षीणास्वेकोननवतिसत्ताकस्य यशः-कीर्तिवर्जम् |
| १०२ | जिनवर्जं यशःकीर्तिवर्जं वा | ८४ | आहारवैक्रियसप्तकजिनदेवद्विकनरकद्विकवर्जितम् |
| १०१ | जिनयशःकीर्तिवर्जं | | |
| ९६ | आहारकसप्तकवर्जं | | |
| ९५ | आहारकसप्तकयशःकीर्तिवर्जम् | ८२ | त्रयोदशासु क्षीणासु त्र्यशीतिसत्ताकस्य यशः-कीर्तिवर्जम् |
| ९४ | आहारकसप्तकयशःकीर्तिजिनवर्जम् | | |
| ९३ | आहारकसप्तकजिनदेवद्विकवर्जम् | ८१ | त्रयोदशासु क्षीणासु द्व्यशीतिसत्ताकस्य यशः-कीर्तिवर्जम् |
| ८९ | त्रयोदशासु क्षीणासु नवतिसत्ताकस्य यशःकीर्तिवर्जम् | | |

नामकर्मणः प्रतिग्रहस्थानेषु संक्रमस्थानानि ।

| प्रतिग्रह-स्थानानि | बध्यमानप्रतिग्रहप्रकृत्यभिधानानि | संक्रमस्थानानि | स्वामिनः | | | |
|---|---|---|---|---|---|---|
| | | | सर्वे तिर्यञ्चः | मनुजाः | देवाः | नारकाः |
| २३ | अपर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | ,, | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २५ | पर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | म० | दे० | ० |
| ,, | ,, | ९५ | ,, | ,, | ,, | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| २५ | अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रिय-मनुजप्रायोग्यासु | १०२ | ,, | म० | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २६ | पर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | म० | दे० | ० |
| ,, | ,, | ९५ | ,, | ,, | ,, | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २८ | देवप्रायोग्यासु | १०२ | पर्याप्तपञ्चेन्द्रियतिर्य | म० | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| २८ | नरकप्रायोग्यासु | १०२ | ,, | ,, | ० | ० |
| ,, | ,, | ९१ | ० | ,, | ० | ० |
| ,, | ,, | ९५ | प० प० ति० | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| २९ | पर्याप्तविकलेन्द्रियप्रायोग्यासु | १०२ | सर्वे तिर्यञ्चः | ,, | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २९ | पर्याप्तपञ्चेन्द्रियतिर्यक्प्रायोग्यासु | १०२ | ,, | म० | देवाः | नारकाः |

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ९५ | ,, | ,, | ,, | ,, |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २९ | पर्याप्तमनुजप्रायोग्यासु | १०२ | ,, | ,, | दे० | ना० |
| ,, | ,, | ९६ | ० | ० | ० | ,, |
| ,, | ,, | ९५ | ति० | म० | दे० | ,, |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २९ | देवप्रायोग्यासु | १०३ | ० | म० | ० | ० |
| ,, | ,, | १०२ | ० | ,, | ० | ० |
| ,, | ,, | ९६ | ० | ,, | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| " | " | ९१ | ० | " | ० | ० |
| ३० | पर्याप्तविकलेन्द्रियप्रायोग्यासु | १०१ | सर्वे तिर्यञ्चः | " | ० | ० |
| " | " | ९१ | " | " | ० | ० |
| " | " | ९३ | " | " | ० | ० |
| " | " | ८४ | " | " | ० | ० |
| " | " | ८२ | " | ० | ० | ० |
| ३० | प० पञ्चेन्द्रियतिर्यक्प्रायो० | १०२ | " | म० | दे० | ना० |
| " | " | ९६ | " | " | " | " |
| " | " | ९३ | " | " | ० | ० |
| " | " | ८४ | " | " | ० | ० |
| " | " | ८२ | " | ० | ० | ० |
| ३० | प० मनुजप्रायोग्यासु | १०३ | ० | ० | दे० | ० |
| " | " | ९६ | ० | ० | " | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| ३० | देवप्रायोग्यासु | १०२ | ० | म० | ० | ० |
| ,, | ,, | ९५ | ० | ,, | ० | ० |
| ३१ | देवप्रायोग्यासु | १०३ | ० | ,, | ० | ० |
| ,, | ,, | १०२ | ० | ,, | ० | ० |
| ,, | ,, | ९६ | ० | ,, | ० | ० |
| ,, | ,, | ९५ | ० | ,, | ० | ० |
| १ | यशःकीर्त्याम् | १०२ | ० | ,, उ. श्रे. | ० | ० |
| ,, | ,, | १०१ | ० | ,, | ० | ० |
| ,, | ,, | ९५ | ० | ,, | ० | ० |
| ,, | ,, | ९४ | ० | ,, | ० | ० |
| ,, | ,, | ८९ | ० | ,, क्ष. श्रे. | ० | ० |
| ,, | ,, | ८८ | ० | ,, | ० | ० |
| ,, | ,, | ८२ | ० | ,, | ० | ० |
| ,, | ,, | ८१ | ० | ,, | ० | ० |

प्रकृतिसंक्रमलक्षणसामान्यमयाथपत् स्थितेर्विशेषलक्षणमाह—

उवट्टण व ओवट्टण च पगर्तितरामि वा नयण। बंधे व अबंधे वा जं सकामो इह ठिईए॥ ३५॥

(स्वो०)—'उद्वर्त्तनं' वा—स्वप्रकृतावेव स्थितेः दीर्घीकरणं, 'अपवर्त्तनं' च—स्वप्रकृतावेव स्थितेः ह्रस्वीकरणं, प्रकृत्यन्तरे वा स्थितेर्नयनम्, तथोत्तरप्रकृतीनामेव भवति, उद्वर्त्तनापवर्त्तनसंक्रमौ तु उभयोरपि भवतः, बन्धे वा अबन्धे वा यत् भवति संक्रम इति अथ स्थितेः त्रिविधः—इत्येवमभिहिते आह परः—भो! भो! अमूर्त्तस्य कालस्याकाशस्येवोद्वर्त्तनापवर्त्तनान्यत्रनयनानि न घटन्ते। आहाचार्यः—ह्रस्वस्थितिकालोपलक्षिताः कर्मपरमाणवो यदशुभपरिणामजनिताभिनवस्थितिसमयेषु व्यवस्थाप्यन्ते तदुद्वर्त्तनम्, यत्पुनः दीर्घस्थितिपरमाणून् शुभेन परिणामेन स्वाबस्वनस्थितिषु निवेशयति तदपवर्त्तनम्, यत्पुनः संक्रमप्रकृतिस्थितिसमयस्था कर्मपरमाणवः प्रतिग्रहप्रकृतौ संक्रमप्रकृतितुल्यासु स्थितिषु नीत्वा निवेश्यन्त इत्येषः प्रकृत्यन्तरनयनसंक्रमः, यथा 'मञ्चाः क्रोशन्ति'—इत्यनेन न्यायेन तत्स्थितपरमाणुसंक्रमात् स्थितिसंक्रमोऽभिधीयते इति गाथार्थः॥ ३५॥

(मलय०)—तदेवमुक्तः प्रकृतिसंक्रमः। सम्प्रति स्थितिसंक्रमाभिधानावसरः, तत्र चैते अर्थाधिकारास्तद्यथा—भेदः, विशेषलक्षणम्, उत्कृष्टस्थितिसंक्रमप्रमाणम्, जघन्यस्थितिसंक्रमप्रमाणम्, साद्यादिप्ररूपणा च। तत्र प्रथमतो भेदः प्ररूप्यते—इह द्विविधः स्थितिसंक्रमो मूलप्रकृतिसंक्रम उत्तरप्रकृतिसंक्रमश्च। तत्र मूलप्रकृतिसंक्रमोऽष्टप्रकारस्तद्यथा—ज्ञानावरणीयस्य दर्शनावरणीयस्य यावदन्तरायस्य, उत्तरप्रकृतिसंक्रमोऽष्टपञ्चाशच्छतधा, तद्यथा—मतिज्ञानावरणीयस्य श्रुतज्ञानावरणीयस्य यावद्वीर्यान्तरायस्य। सम्प्रति विशेषलक्षणप्ररूपणार्थमाह—

'उद्वर्त्तनं'—कर्मपरमाणूनां ह्रस्वस्थितिकालतामपगमय्य दीर्घस्थितिकालतया व्यवस्थापनम्, 'अपवर्त्तनं'—तेषामेव कर्मपरमाणूनां दीर्घ-

स्थितिकालतामपगमय्य ह्रस्वस्थितिकालतया व्यवस्थापनं, 'प्रकृत्यन्तरे' वा–पतद्ग्रहप्रकृतिरूपे यन्नयनम्–नीत्वा निवेशनमित्येवं स्थितेः संक्रमस्त्रिविधो भवति, एष च बन्धे अबन्धे वा द्रष्टव्यः । तत्र प्रकृत्यन्तरनयनलक्षणो दर्शनद्विकमन्तरेण शेषपतद्ग्रहप्रकृतीनां बन्धे एव, दर्शनद्विकस्य तु बन्धाभावेऽपि संक्रमो भवति, तथाहि–सम्यक्त्वसम्यग्मिथ्यात्वयोर्बन्धाभावेऽपि तत्र मिथ्यात्वं संक्रामति, सम्यक्त्वे च सम्यग्मिथ्यात्वमिति । उक्तं च–"दुसु वेगे दिट्ठिदुगं बंधेण विणा वि सुद्धदिट्ठिस्स"। उद्वर्त्तनासंक्रमोऽप्युद्वर्त्यमानप्रकृतीनां बन्धे एव, यद्वक्ष्यति–"आबंधं उव्वट्टइ", अपवर्त्तनासंक्रमस्तु बन्धे अबन्धे वा प्रवर्त्तते–"सव्वत्थावट्टणाठिइरसाणं" इति वक्ष्यमाणवचनात् । इदं च विशेषलक्षणं सामान्यलक्षणे सत्येवावगन्तव्यम्, न सर्वथा तदपवादेन, तेन मूलप्रकृतीनां परस्परसंक्रमप्रतिषेधात्प्रकृत्यन्तरनयनलक्षणः स्थितिसंक्रमो न भवति किन्तु द्वावेवोद्वर्त्तनापवर्त्तनारूपौ, उत्तरप्रकृतीनां तु त्रयोऽपि संक्रमा वेदितव्याः ॥३५॥

उत्कृष्टजघन्यस्थितिसंक्रमपरिज्ञापनार्थमाह—

**जासिं बंधनिमित्तो उक्कोसो बंधमूलपगईणं । ता बंधुक्कोसाओ सेसा पुण संकमुक्कोसा ॥ ३६ ॥**

(स्वो०)—यासां बन्धहेतुक उत्कृष्टो बन्धो भवति मूलप्रकृतीनां ताः प्रकृतयो बन्धोत्कृष्टाः, शेषाः संक्रमोत्कृष्टा इति । कास्ताः ? नारकतिर्यग्द्विके आद्यन्तजाती औदारिकवैक्रियकार्मणान्त्यन्ताशुभवर्णाद्यगुरुलघुसप्तकानि षष्ठे संहननसंस्थाने अशुभविहायोगतिः स्थावरं त्रसादिचतुष्कमस्थिरादिषट्कम्–एता नाम्नः पञ्चपञ्चाशत् नीचैर्गोत्रमसातं षोडश कषाया मिथ्यात्वज्ञानदर्शनावरणान्तरायायुष्कसकलप्रकृतयश्चैताः सर्वास्सप्तनवतिर्बन्धोत्कृष्टाः । आह–तृतीयद्वारे आयुष्काणि चतसृणामपि संज्ञानां बाह्यानि कृतान्यत्र तु बन्धोत्कृष्टान्युक्तान्येवं विरोधः । अत्रोच्यते–सदधिकारं प्रकृत्यन्तरसंक्रमं चाङ्गीकृत्य संज्ञाकरणं व्यर्थमिति तत्र न कृतम्, अत्र तु उद्वर्त्तनापवर्त्ते-

नाधिकारे मार्थकत्वात् कृतमिति न दोषः। शेषाः—देवमनुजद्विके विकलेन्द्रियत्रिकमित्रिके आहारसप्तकं पञ्च पञ्चाद्यानि संहननसंस्थानानि नीलं तिक्तं शुभविहायोगतिः तीर्थकरं स्थिरादिषट्कं नव नोकषायाः सम्यक्त्वं सम्यग्मिथ्यात्वं सातमुच्चैर्गोत्रमित्येता एकषष्टिः सक्रमोत्कृष्टा इति गाथार्थः ॥ ३१ ॥

*(मलय०)—तदेवं विशेषलक्षणं प्रतिपाद्य संप्रत्युत्कृष्टस्थितिसंक्रमप्रमाणप्रतिपादनार्थमाह—*यासां उत्तरप्रकृतीनां 'मूलपगईणं'ति—मूलप्रकृतीनामनुसारेण 'बन्धनिमित्तो'—बन्धहेतुक 'उक्कोसो बन्धः'—स्थितिबन्धो भवति ता बन्धोत्कृष्टाः, इदमुक्तं भवति—यावती मूलप्रकृतीनामुत्कृष्टस्थितिरभिहिता तावत्येव यासामुत्तरप्रकृतीनां बन्धनिमित्ता उत्कृष्टा स्थितिर्भवति ता बन्धोत्कृष्टाः। ताश्चेमाः—ज्ञानावरणपञ्चकं दर्शनावरणनवकमन्तरायपञ्चकमायुश्चतुष्टयमसातवेदनीयं नरकद्विकं तिर्यग्द्विकं एकेन्द्रियजातिः पञ्चेद्रियजातिस्तैजससप्तकमौदारिकसप्तकं वैक्रियसप्तकं नीलकटुवर्जशेषाशुभवर्णादिनवकं अगुरुलघु पराघातं उपघातमुच्छ्वासमातपमुद्योतं निर्माणं षष्ठं संस्थानं षष्ठं संहननं अशुभविहायोगतिः स्थावरनाम त्रसचतुष्कं अस्थिरषट्कं नीचैर्गोत्रं षोडश कषाया मिथ्यात्वं च, सर्वसङ्ख्यया सप्तनवतिः। अत्र नरतिर्यगानुपूर्वी यद्यपि स्वमूलप्रकृत्यपेक्षया तुल्यस्थितिके न भवतः तथापि सक्रमोत्कृष्टत्वाभावाच्च बन्धोत्कृष्टे उक्ते, षोडशानां कषायाणां चारित्रमोहनीयरूपमूलप्रकृत्यपेक्षया तुल्यस्थितिकत्वाद् बन्धोत्कृष्टत्वमवसेयम्। शेषाः पुनरेकषष्टिसङ्ख्याः सक्रमोत्कृष्टा वेदितव्याः। ताश्चेमाः—सातवेदनीयं, सम्यक्त्वं, सम्यग्मिथ्यात्वं, नवनोकषायाः, आहारकसप्तकं, शुभवर्णादिकादशकं, नीलं, कटु, देवद्विकं, मनुजद्विकं, द्वित्रिचतुरिन्द्रियजातयः, अन्त्यवर्जानि संस्थानानि, अन्त्यवर्जानि संहननानि, प्रशस्तविहायोगतिः, सूक्ष्मं साधारणं, अपर्याप्तं, स्थिरशुभसुभगसुस्वरादेययशःकीर्तितीर्थकरोच्चैर्गोत्राणि च ॥३६॥

बंधुक्कोसाण ठिई मोत्तुं दा आवली उ संकमइ। सेसा इयराण पुणो आवलियातिगं पमोत्तूणं ॥२७॥

(स्वो०)—बन्धोत्कृष्टानां उत्कृष्टतः—उत्कृष्टा स्थितिरावलिकाद्विकं मुक्त्वा शेषाः संक्रामति, यतो बद्धा सती बन्धावलिकायां गतायां संक्रामति, उदयावलिका सर्वकरणासाध्येति कृत्वा न संक्रामत्येव। 'इतरासां'—संक्रमोत्कृष्टानां पुनरावलिकात्रयं—बन्धसंक्रमोदयसंज्ञं मुक्त्वा शेषा स्थितिः संक्रामयति। आह परः—बन्धसंक्रमौ समकं भवतः, अतः साधारणा एकैवावलिका भवति, न भिन्ना, एवमसावपि द्व्यावलिकाहीना संक्रामति। न वेत्सि भद्र! सद्भावम्, नरकद्विकस्य बन्धोत्कृष्टस्य या बद्धा उत्कृष्टा स्थितिः सा बन्धावलिकाहीना मिथ्यादृष्टिः मनुजद्विकं बध्नानो मनुजद्विके संक्रामयति, ततः स एव देवद्विकं बध्नानः संक्रमोत्कृष्टान्मनुजद्विकात् संक्रमावलिकारहितामुदयावलिकारहितां च तां बन्धावलिकारहितां संक्रान्तस्थितिं देवद्विके संक्रामयतीति गाथार्थः ॥ २७ ॥

(मलय०)—तत्र बन्धोत्कृष्टानां स्थितिर्द्वे आवलिके बन्धावलिकोदयावलिकालक्षणे मुक्त्वा शेषा सर्वापि संक्रामति। तत्र ज्ञानावरणपञ्चकदर्शनावरणनवकान्तरायपञ्चकानां त्रिंशत्सागरोपमकोटीकोटीप्रमाणा उत्कृष्टा स्थितिरावलिकाद्विकहीना संक्रामति। कषायाणां चत्वारिंशत्सागरोपमकोटीकोटीप्रमाणा, नरकद्विकादीनां तु विंशतिसागरोपमकोटीकोटीप्रमाणा। आवलिकाद्विकहीनत्वं कथमवसेयमिति चेत्? उच्यते—इह स्थितिर्बद्धा सती बन्धावलिकायामतीतायां सत्यां संक्रामति, तत्राप्युदयावलिका सकलकरणायोग्येति कृत्वा तत उपरितनी संक्रामति। इह उदयवतीनामनुदयवतीनां वा प्रकृतीनामुदयसमयादारभ्यावलिकामात्रा स्थितिरुदयावलिका वेदितव्या, तथैव चिरन्तनग्रन्थेषु व्यवहारात्। इतरासां पुनः संक्रमोत्कृष्टानामावलिकात्रिकं—बन्धावलिकासंक्रमावलिकोदयावलिकारूपं प्रमुच्य शेषा सर्वापि स्थितिः संक्रामति,तथाहि—बन्धावलिकायामतीतायां सत्यामावलिकाया उपरितनी स्थितिः सर्वाप्यन्यत्र प्रकृत्यन्तरे

आवलिकाया उपरि सक्रामति, तत्र च संक्रान्ता सती आवलिकामात्रं कालं यावत्सकलकरणायोग्येति कृत्वा संक्रमावलिकायामतीतायां सत्यामुदयावलिकात उपरितनी सर्वापि स्थितिस्ततोऽप्यन्यत्र प्रकृत्यन्तरे संक्रामति, यथा नरकद्विकस्य विंशतिसागरोपमकोटीकोटीप्रमाणामुत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायामतीतायां सत्यामावलिकात उपरितनीं तां सकलामपि स्थितिं मनुजद्विकं बध्नन् तत्र मनुजद्विके आवलिकाया उपरि संक्रमयति, तत्र च संक्रान्ता सती आवलिकामात्रं यावत् सकलकरणायोग्येति कृत्वा संक्रमावलिकायामतिक्रान्तायां सत्यामुदयावलिकात उपरितनीं तां सर्वामपि स्थितिं देवद्विकं बध्नन् तत्र संक्रमयति, एवमन्यासामपि भावनीयम् ॥२७॥

स्थितिसंक्रमे परप्रकृतिलतायां या संक्रम्यमाणा स्थितिः संक्रमकाले च सर्वा स्थितिस्तयोः स्थापना

१   २   बन्धोत्कृष्टानां यथा नरकगतेः संक्रमप्रायोग्याः स्थितयः

नरकगतेः बध्यमाना लता OOOOO OOOOO OOOOOOOOOOOOOOOOOOOOOOOOOOOOOO

बन्धावलिका   उदयावलिका

अत्र प्राग्बद्धनरकगतेर्देवगतौ संक्रमः

पूर्वलतायाः संक्रमप्रायोग्याः स्थितयः सर्वत्र लतायामुदयावलिकायर्जासु संक्रामन्ति

संक्रम्यमाणनरकगतेः बध्यमानदेवगतिरूपा पतद्ग्रहलता OOOOO OOOOOOOOOOOOOOOOOOOOOOOOOOOOOO

देवगतेः बन्धाव० नरकगतेरुदयाव० सं० आ० इति तिसृणामेककालीनत्वम्

१   संक्रमोत्कृष्टानां यथा मनुजगतेः संक्रमप्रायोग्याः स्थितयः

नरकगतेर्बध्यमाना लता OOOOO OOOOO OOOOOOOOOOOOOOOOOOOOOOOOOOOOOO

बन्धाव०   उदयाव०

अत्र प्राग्बद्धनरकगतेः मनुजगतौ संक्रमः

संक्रम्यमाणनरकगतेः बध्यमानमनुजगतिरूपा प्रतिग्रहलता ··· ○○○○○ ○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○

(२ — ३; पूर्वलतायाः संक्रमप्रायो० स्थितयः सर्वत्र लतायामुदयावलिकावर्जासु सं०)

नरकगतेरुदयाव० संक्रमाव० मनुजगतेरुदयाव० मनुजगतेश्च बन्धाव० इति तिसृणामेककालीनत्वम्

अस्या लतायाः संक्रमप्रा० स्थितयः

संक्रम्यमाणमनुजगतेः देवगतिरूपा प्रतिग्रहलता········ ○○○○○|○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○

पूर्वसंक्रमितलतायाः संक्रमप्रायो० स्थितय उदयावलिवर्जासु सर्वत्र लतायां सं०

मनुजगतेरुदयाव० संक्रमाव० देवगतेश्च बन्धाव० इति तिसृणामेककालीनत्वम्

अत्र या उदयावलिका सा उदयवतीनां विपाकोदयावलिका अनुदयवतीनां च प्रदेशोदयावलिका इति। अस्याः स्थापनाया अनुसारेण बन्धोत्कृष्टनामावलिकात्रिकोना संक्रमस्थितिः १-२ इति अंकतः, संक्रमोत्कृष्टानां चावलिकात्रिकहीना संक्रमस्थितिः १-२-३ इति अंकतः अंकिता। परप्रकृतिलतायां संक्रम्यमाणदलिकमुदयावलिकायां न संक्रामति इति उदयावलिकायाः सर्वत्र वर्जनं कृतम्।

(उदीरणापवर्त्तनयोरेवोदयावलिकासु दलिकप्रक्षेपः स्यान्नान्यत्र)

तीर्थङ्कराहारकप्रकृतीः संयता बध्नन्ति, तेषां चान्तःकोटाकोटिरुत्कृष्टोऽपि सर्वप्रकृतीनां स्थितिबन्धः सत्ता च भवति, इयत्स-त्तायां संक्रमेणापि इयता एव भाव्यम्, एवं हि बन्धसंक्रमोत्कृष्टत्वे संशयस्तदपनोदायाह—

तित्थयराहाराणं संकमणे बंधसंतएसुपि । अंतो कोडाकोडीतहावि ता संकमुक्कोसा ॥३८॥

(स्वो०)—यद्यप्याहारकतीर्थङ्कराणां संक्रमणे बन्धसत्तोरप्यन्तःकोटाकोटिस्तथापि ताः संक्रमोत्कृष्टा यतो बन्धान्तःकोटाकोट्याः संक्रमात् कोटाकोटिः संख्येयगुणेति गाथार्थः ॥ ३८ ॥

(मलय०)—इह तीर्थकरस्याहारकसप्तकस्य चोत्कृष्टः स्थितिबन्धोऽन्तःसागरोपमकोटीकोटीप्रमाणः, सत्कर्माप्येतेषामन्तःसागरोपमको-टीकोटीप्रमाणमेव, ततः संशयः—किमेताः संक्रमोत्कृष्टाः, उत बन्धोत्कृष्टाः इति ? तदपनोदार्थमाह—यद्यपि 'तीर्थकराहारकयोः'—तीर्थ-कराहारकसप्तकयोः 'संक्रमणे बन्धसतोरपि'—बन्धे सत्तायां च स्थितिसत्कर्म अन्तःकोटीकोटी—अन्तःसागरोपमकोटीकोटीप्रमाणम्, तथापि तास्तीर्थकराहारकसप्तकरूपाः प्रकृतयः संक्रमोत्कृष्टा एव वेदितव्याः, न बन्धोत्कृष्टाः, बन्धोत्कृष्टायाः स्थितेः सकाशात्संक्रमोत्कृष्टस्थितेः सङ्ख्येयगुणत्वात्, तदुक्तं कर्मप्रकृतिचूर्णौ—"बंधठिइउ संतकम्मठिइ संखेज्जगुणा" ॥ ३८ ॥

भूय एतदेव भावयति—

एवइयसंतया जं सम्मद्दिट्ठीण सव्वकम्मेसु । आऊणि बंधउक्कोसगाणि जं णण्णसंकमणं ॥३९॥

(स्वो०)—अन्तःकोटाकोटिसत्कर्मता सम्यग्दृष्टीनां यतः सर्वकर्मसु भवति अतः संक्रमोऽप्यन्तःकोटाकोटिमात्र एव । आयूंषि बन्धोत्कृष्टान्यत्राभिहितानि यस्माच्चेष्वन्यप्रकृतिसंक्रमणं नास्तीति गाथार्थः ॥ ३९ ॥

(मलय०)—ननु नामकर्मण उत्कृष्टस्थितिर्विंशतिसागरोपमकोटीकोटीप्रमाणा, तत आहारकसप्तके तीर्थकरे च संक्रमादुत्कृष्टा स्थितिः प्राप्यमाणा बन्धावलिकारहिता सागरोपमविंशतिकोटीकोटीप्रमाणोपलभ्यते, कथमुच्यते तीर्थकराहारकसप्तकयोः संक्रमतोऽप्युत्कृष्टा स्थितिरन्तःसागरोपमकोटीकोटीप्रमाणेति ? अत्र आह—'यत्'—यस्मात्कारणात्सम्यग्दृष्टीनां सर्वेष्वप्यायुर्वर्जेषु कर्मसु सत्ता एतावत्येव—अन्तःसागरोपमकोटीकोटीप्रमाणैव प्राप्यते ततः संक्रमोऽप्येतावत्या एव। इदमुक्तं भवति—तीर्थकराहारकसप्तकयोः प्रकृत्यन्तरस्य स्थितिः संक्रामति बन्धकाले,नान्यदा,बन्धश्चानयोर्विशुद्धसम्यग्दृष्टेर्विशुद्धसंयतस्य च, विशुद्धसम्यग्दृष्टीनां संयतानां च स्थितिसत्कर्म सर्वेषामपि कर्मणामायुर्वर्जानामन्तःसागरोपमकोटीकोटीप्रमाणम्, नाधिकम्, ततः संक्रमोऽप्येतावन्मात्र एव प्राप्यते, नाधिक इति। तथा आयूंषि चत्वार्यपि बन्धोत्कृष्टानि वेदितव्यानि, न संक्रमोत्कृष्टानि, यद् यस्मात्तेषु अन्यप्रकृतिदलिकसंक्रमो न भवति ॥३९॥

यासां बन्धे संक्रमो भवति तासां संक्रमपरिमाणमुक्तम्, यासामबन्धे स्थितिसंक्रमो भवति तासां प्रमाणनिरूपणायाह—

**गंतुं सम्मो मिच्छंतस्सुक्कोसं ठिइं च काऊणं। मिच्छियराणुक्कोसं करेति ठितिसंकमं सम्मो ॥४०॥**

(स्वो०)—वेदकसम्यगदृष्टिर्मिथ्यात्वं गत्वा तस्य मिथ्यात्वस्योत्कृष्टस्थितिं च कृत्वा ततो विशुद्ध्यमानपरिणामोऽन्तर्मुहूर्त्ते व्यतीते सम्यक्त्वं प्रतिपन्नः, ततः सम्यग्दृष्टिः सम्यक्त्वसम्यग्मिथ्यात्वयोः मिथ्यात्वस्थितिं अन्तर्मुहूर्त्तोनसप्ततिकोटाकोटिप्रमाणां संक्रामयतीति गाथार्थः ॥ ४० ॥

(मलय०)—तदेवं यासां प्रकृतीनां पतद्ग्रहप्रकृतिबन्धे सति संक्रमो भवति तासां संक्रमपरिमाणमुक्त्वा संप्रति यासां प्रकृतीनां पतद्ग्रहप्रकृतिबन्धाभावेऽपि संक्रमो भवति तासां संक्रमपरिमाणनिरूपणार्थमाह—'सम्मो'। सम्यग्दृष्टिः—क्षायोपशमिकसम्यग्दृष्टिः पूर्वं

भूत्वा ततो मिथ्यात्वं गच्छति, मिथ्यात्वं च गतो उत्कृष्टे संक्लेशे वर्तमानस्तस्य मिथ्यात्वस्योत्कृष्टां स्थितिं करोति—बध्नाति, तत उत्कृष्टां स्थितिं कृत्वा अन्तर्मुहूर्तं कालं तस्मिन्नेव मिथ्यात्वेऽवतिष्ठते, ततोऽन्तर्मुहूर्तानन्तरं मिथ्यात्वात्प्रतिपत्य विशुद्धिवशात्सम्यक्त्वं प्रतिपद्यते, ततः सम्यग्दृष्टिः सन् मिथ्यात्वेतरयो—मिथ्यात्वव्यतिरिक्तयो सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहयोरुत्कृष्टं स्थितिसंक्रमं करोति, सकलामपि मिथ्यात्वस्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणामन्तर्मुहूर्तोनां सम्यक्त्वसम्यग्मिथ्यात्वयोः संक्रमयतीत्यर्थः ॥४०॥

उत्कृष्टसंक्रमस्वामित्वमाह—

अंतोमुहुत्तहीणं आवलियदुहीणं तेसु सट्ठाणे। उक्कोससंकमपहू उक्कोसगबंधगण्णासु ॥४१॥

(स्वो०)—अन्तर्मुहूर्तोनां मिथ्यात्वस्थितिं सम्यक्त्वसम्यग्मिथ्यात्वयोः संक्रमयति, तामप्यावलिकापरतः सम्यग्मिथ्यात्वस्थितिं सम्यक्त्वे संक्रामयति, तामपि द्वितीयावलिकापरतः सम्यक्त्वस्थितिं सम्यग्दृष्टिरेव स्वस्थाने—सम्यक्त्वस्थितावपवर्तयति, अत तिसृणामपि दृष्टिप्रकृतीनामुत्कृष्टस्थितिसंक्रमस्य प्रभुः—स्वामी सम्यग्दृष्टिः। अन्यासां बन्धोत्कृष्टानां संक्रमोत्कृष्टानां च स्वोत्कृष्टस्थितिबन्धका उत्कृष्टस्थितिसंक्रमस्वामिन, ते च प्रायः संज्ञिमिथ्यादृष्टयो देवायुस्तीर्थंकराहारकवर्जितानामिति गाथार्थः ॥ ४१ ॥

(मलय०)—तदेवं मिथ्यात्वस्योत्कृष्टस्थितिसंक्रमोऽन्तर्मुहूर्तोनः उत्कृष्टस्थितिसंक्रमस्वामी च सम्यग्दृष्टिरुक्तः, सम्प्रति सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टस्थितिसंक्रमपरिमाणं सर्वासामन्यप्रकृतीनामुत्कृष्टस्थितिसंक्रमस्वामिनश्च प्रतिपिपादयिषुराह—अन्तर्मुहूर्तोनं सत्स्थितिसत्कर्म आवलिकाद्विकहीनं 'तेसु'त्ति—तयोः सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टः स्थितिसंक्रमः, स च सम्यक्त्वस्य स्वस्थाने, सम्यग्मिथ्यात्वस्य परस्थानेऽपि च। इयमत्र भावना—सम्यक्त्वे च मिथ्यात्वस्थितिरन्तर्मुहूर्तोनसप्ततिसागरोपमकोटीकोटीप्रमाणा संक्रा-

न्ता सती आवलिकामात्रं यावत् सकलकरणायोग्या, ततः संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वस्थितिमपवर्त्तनाकरणेन स्वस्थाने संक्रमयति, सम्यग्मिथ्यात्वस्थितिः पुनरावलिकात उपरितनी सम्यक्त्वे संक्रामति, अपवर्त्तनाकरणेन स्वस्थाने च, ततः सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टस्थितिसंक्रम आवलिकाद्विकाधिकान्तर्मुहूर्त्तोनः, उत्कृष्टस्थितिसंक्रमस्वामी च वेदकसम्यग्दृष्टिः' ॥४१॥

**बंधुक्कोसाणं आवलिए आवलिदुगेण इयराणं। हीणा सव्वावि ठिई सो जट्ठिइसंकमो भणिओ ॥४२॥**

(स्वो०)—बन्धेनोत्कृष्टा सत्कर्मता यासां ता बन्धोत्कृष्टाः, तासां बन्धावलिकारहिताः—बन्धावलिकापरतः उत्कृष्टस्थितिबन्धका उत्कृष्टस्थितिं संक्रामयन्ति, संक्रमोत्कृष्टानां बन्धावलिकासंक्रमावलिकाभ्यां परतस्त एव मिथ्यादृष्टयो यथासम्भवमुत्कृष्टस्थितिसंक्रमं कुर्वन्ति। उत्कृष्टस्य जघन्यस्य वा संक्रमस्य काले या सर्वापि स्थितिः उदयावलिकासहिता उत्कृष्टा संक्रमस्थितिः यत्स्थितिभण्यते, यत्स्थितिसमासत्रस्तदुपलक्षितो वा संक्रमो यत्स्थितिसंक्रमो भण्यते इति गाथार्थः ॥ ४२ ॥

(मलय०)—तथा अन्यासु अन्यासां प्रकृतीनां बन्धोत्कृष्टानां संक्रमोत्कृष्टानां वा संक्रमणकाले यावती स्थितिस्तावतीं निर्दिदिक्षुराह—बन्धोत्कृष्टानां संक्रमणकाले सर्वापि स्थितिरेकया आवलिकया हीना प्राप्यते। तथाहि—संक्लेशकारणवशत उत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायामतीतायामन्यत्र प्रकृत्यन्तरे संक्रमयितुमारभते, ततो बन्धोत्कृष्टानां संक्रमणकाले सर्वापि स्थितिरेकयावलिकया हीना

१ अन्यासां च प्रकृतीनां देवायुर्जिनाहारकसप्तकवर्जानां बन्धोत्कृष्टानां संक्रमोत्कृष्टानां च स्वस्वोत्कृष्टस्थितिबन्धकाः उत्कृष्टस्थितिसंक्रमस्वामिनो भवन्ति। ते च प्रायः संज्ञिमिथ्यादृष्टय एव। देवायुषः प्रमत्तसंयतोऽप्रमत्ताभिमुखः, जिननाम्नस्तु बद्धजिननामा नरकाभिमुखो मिथ्यादृष्टिः, आहारकसप्तकस्य प्रमत्ताभिमुखोऽप्रमत्तः उत्कृष्टां स्थितिं बध्नाति ततस्ते बन्धावलिकापरतः उत्कृष्टस्थितिसंक्रमस्वामी भवति।

प्राप्यते। इतरासां–संक्रमोत्कृष्टानां पुनः सक्रमणकाले सर्वापि स्थितिरावलिकाद्विकेन हीना प्राप्यते। तथाहि–बन्धावलिकायामतीतायां सत्यामावलिकात उपरितनी सर्वापि स्थितिरन्यत्र प्रकृत्यन्तरे आवलिकाया उपरि सक्रम्यते, ततः संक्रान्ता सती सक्रमावलिकायामतीतायामन्यत्र प्रकृत्यन्तरे संक्रमयितुमारभ्यते, ततः सक्रमोत्कृष्टानां बन्धावलिकासंक्रमावलिकाहीना संक्रमणकाले सर्वा स्थितिः स यस्थितिसक्रमो भणितः, स एव यत्स्थितिसहितः संक्रम उच्यत इत्यर्थः सक्रमणकाले या सर्वा स्थितिः ॥४२॥

उत्कृष्टसक्रमस्थितेर्यत्स्थितेश्च प्रमाणम्।

| प्रकृतिषु | संक्रमस्थितिप्रमाणं | यत्स्थितेः प्रमाणं |
|---|---|---|
| मिथ्यात्ववर्जबन्धोत्कृष्टानां | आवलिकाद्विकहीन | एकावलिकाहीनं |
| सक्रमोत्कृष्टानां | आवलिकात्रिकहीन | आवलिकाद्विकहीन |
| मिथ्यात्वस्य | अन्तर्मु० हीनं ७० सा० को० को० | अन्तर्मु० हीनं ७० सा० को० को० |
| सम्यक्त्वमिश्रयोः | आवलिकाद्विकाधिकान्तर्मु०हीन७०सा०को० | सावलिकान्तर्मु० ही ७० सा० को० |

| ॥४८॥

उत्कृष्टस्थितिसंक्रमस्वामिनः

| प्रकृतीनाम् | स्वामिनः | विशेषः |
| --- | --- | --- |
| बंधोत्कृष्टानां | चतुर्गतिकाः | बन्धावलिकापरतः |
| संक्रमोत्कृष्टानां | ,, | बंधसंक्रमावलिकापरतः |
| दर्शनमोहानां | सम्यग्दृष्टयः | |

आवलिकापवादमाह—

सावाहा आउठिई आवलिगूणा उ जट्ठिति सठाणे । एक्का ठिई जहण्णो अणुदइयाणं निहयसेसा ॥४३॥

(स्वो०)—साबाधा आयुषः स्थितिः यत्स्थितिरुच्यते, यतस्तस्य पारभविकाऽबाधा भवति, आयुषां परस्परं संक्रमाभावान्न तस्याः संक्रमोऽस्ति, अतः साबाधोच्यते । एकभविका आयुषः स्थितिः आवलिकोना तु यत्स्थितिसंक्रमः, बन्धोत्कृष्टत्वात्, स च स्वस्थाने-स्वप्रकृतावेव संक्रामयतीत्युक्तमुत्कृष्टस्वामित्वम् । एकस्याः स्थितेर्यः संक्रमः स जघन्यसंक्रमः, अनुदयवतीनां तु या निहतशेषा जघन्या स्थितिः सा जघन्यसंक्रम इति गाथार्थः ॥ ४३ ॥

॥४८॥

(मलय०)—आयुषो यत्स्थितिप्रतिपादनार्थमाह—आयुषो व्याघातभाविन्यपवर्त्तना नियमादुदये सति प्रवर्त्तते ततो न तामधिकृत्येद यत्स्थितिनिरूपणम्। या तु निर्व्याघातभाविन्यपवर्त्तना साऽनुदयेऽपि बन्धावलिकातिक्रमे प्रवर्तते, अपि च बन्धे प्रवर्त्तमाने एव सति प्रथमादिसमयबद्धानां लतानां बन्धावलिकातिक्रमे उद्वर्त्तनापि भवति, ततो निर्व्याघातमाव्यपवर्त्तनारूपे (उद्वर्त्तनारूपे च) स्वस्थानसंक्रमे यत्स्थितिरायुष आवलिकाहीना साबाधा सर्वा स्थितिः। तदेवमुक्तमुत्कृष्टस्थितिसंक्रमस्य परिमाणम्, उत्कृष्टस्थितिसंक्रमस्वामी च। सम्प्रति जघन्यस्थितिसंक्रमपरिमाणप्रतिपादनार्थमाह—उदयवतीनां प्रकृतीनां समयाधिकावलिकाशेषायां स्थितौ एकस्याः समयमात्रायाः स्थितेर्यः संक्रमः स जघन्यस्थितिसंक्रमः, अनुदयवतीनां पुनः प्रकृतीनां या 'निहयशेषा'—हतशेषा स्थितिरुद्धरति तस्याः संक्रमे जघन्यः स्थितिसंक्रमः ॥ ४३ ॥

जघन्यसंक्रमस्वामित्वमभिदित्सुराह—

जो जो जाण खवगो जहण्णठितिसंकमस्स सो सामी। सेसाण तु सजोगी अंतमुहुत्तं जओ तस्स ॥४४॥

(स्वो०)—यः कश्चिद्यासां प्रकृतीनां क्षपकः स तासां प्रकृतीनां जघन्यस्थितिसंक्रमस्वामी, शेषाणां तु सयोगी, यतस्तस्य सर्वप्रकृतीनां अन्तर्मुहूर्त्तमात्रा स्थितिः स्वल्पा भवतीति गाथार्थः ॥ ४४ ॥

(मलय०)—तदेवमुक्तं जघन्यस्थितिसंक्रमपरिमाणम्, सम्प्रति जघन्यस्थितिसंक्रमस्वामिन आह—यो यो यासां यासां प्रकृतीनां क्षपकः स स तासां तासां जघन्यस्थितिसंक्रमस्वामी। शेषाणां तु प्रकृतीनां सयोगी—सयोगिकेवली जघन्यस्थितिसंक्रमस्वामी, यतस्तस्यैव चरमसमये अघातिप्रकृतीनां संक्रमयोग्या अन्तर्मुहूर्त्तप्रमाणा स्वल्पा स्थितिः प्राप्यते, न शेषस्य ॥ ४४ ॥

तस्यैव जघन्यस्थितिसंक्रमस्य स्वपरप्रकृतिस्थानविशेषाद् द्वैविध्यं दर्शयति—

**उदयावलिए छोभो अण्णप्पगईए जो य अंतिमओ। सो संकमो जहण्णो तस्स पमाणं इमं होइ ॥४५॥**

(स्वो०)—'अन्यप्रकृतेः'—परप्रकृतेरुदयावलिकायां योऽन्तिमः संच्छोभः, यश्च स्वप्रकृतावेवोदयावलिकायामन्तिमः संच्छोभः स संक्रमो जघन्यः, तस्य च प्रतिप्रकृतिप्रमाणमेतद् वक्ष्यमाणं भवतीति गाथार्थः ॥ ४५ ॥

(मलय०)—सम्प्रति जघन्यस्थितिसंक्रमस्य लक्षणमाह—विवक्षितायाः संक्रम्यमाणप्रकृतेः संबन्धिनः स्थितिसत्कर्मणोऽन्यप्रकृतेः—पतद्ग्रहप्रकृतेः सत्कायामुदयावलिकायां योऽन्तिमः छोभः—प्रक्षेपः यश्च स्वप्रकृतावेवोदयावलिकायामन्तिमः संछोभः, स जघन्यस्थितिसंक्रमः, तेनोदयावलिकाया बहिर्भागेऽपि यः प्रक्षेपः स जघन्यस्थितिसंक्रमो न भवतीति सिद्धम्। एतच्च लक्षणं निद्राद्विकमतिरिच्य वेदितव्यम्। एष च जघन्यस्थितिसंक्रमः कस्याः प्रकृतेः कियान् भवतीति तन्निरूपणार्थमाह—'तस्य'—जघन्यस्थितिसंक्रमस्य प्रमाणमिदं—वक्ष्यमाणं भवति ॥४५॥

स्वप्रकृतौ जघन्यसंक्रमं तावदाह—

**संजलणलोभनाणंतरायदंसणचउक्कआऊणं। सम्मत्तस्स य समओ सगआवलियातिभागंमि ॥४६॥**



(स्वो०)—सञ्ज्वलनलोभज्ञानान्तरायदशकदर्शनायुश्चतुष्कप्रकृतीनां वेदकसम्यक्त्वस्य च सामयिका स्थितिः स्वोदयावलिकात्रिभागे(समयाधिके)संक्रामयत्येष जघन्य आसां संक्रम इति। सस्वामित्वमेतद्भावयति—सूक्ष्मसम्परायक्षपके सञ्ज्वलनलोभस्य यदो-

दयावलिका समयाधिका स्थितिः शेषा भवति तदा तत्सामयिकं दलं स्वोदयावलिकात्रिभागे(समयाधिके)सङ्क्रामयत्येष जघन्यसंक्रमः। क्षीणकषायोऽप्येवमेव ज्ञानान्तरायदर्शनचतुष्कानाम्। आयुषामपि स्वानुभवकाले एवमेव कुर्वन्ति। यत्स्थितिः सर्वासां समयाधिकावलिका। सम्यक्त्वस्योत्तरगाथायां स्वप्रकारो भावयिष्यतीति गाथार्थः ॥ ४६ ॥

(मलय०)–तदेवाह—संज्वलनलोभस्य पञ्चानां ज्ञानावरणानां पञ्चानामन्तरायाणां दर्शनावरणचतुष्टयस्यायुषश्चतुष्टयस्य वेदकसम्यक्त्वस्य च, सर्वसंख्यया विंशतिप्रकृतीनामात्मीयात्मीयसत्ताव्यवच्छेदकाले यः समयः—समयमात्रा स्थितिः स्वस्वोदयावलिकात्रिभागे समयाधिकं प्रक्षिप्यते स जघन्यः स्थितिसंक्रमः। इयमत्र भावना–सूक्ष्मसंपरायेण क्षपकेण संज्वलनलोभस्य सत्कायां समयाधिकावलिकाशेषायां स्थितौ वर्तमानेन उदयावलिकासकलकरणायोग्येति कृत्वा उदयावलिकात उपरितनी या समयमात्रा स्थितिरपवर्तनासंक्रमेणाधस्तने स्वोदयावलिकात्रिभागे समयाधिके प्रक्षिप्यते स संज्वलनलोभस्य जघन्यस्थितिसंक्रमः, स्वामी च सूक्ष्मसंपरायः। तथा क्षीणकषायेण ज्ञानावरणपञ्चकान्तरायपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणरूपदर्शनावरणचतुष्टयानां समयाधिकावलिकाशेषायां स्थितौ वर्तमानेनोदयावलिकात उपरितनी या समयमात्रा स्थितिरपवर्तनासंक्रमेण स्वस्वोदयावलिकात्रिभागेऽधस्तने समयाधिके प्रक्षिप्यते स तेषां जघन्यस्थितिसंक्रमः, स्वामी च क्षीणकषायः। तथा चतुर्णामप्यायुषां स्वस्वभवव्यवच्छेदसमयाधिकावलिकाशेषा उदयावलिकात उपरितनी समयमात्रा स्थितिः या स्वस्वोदयावलिकात्रिभागेऽधस्तने समयाधिके प्रक्षिप्यते स तेषां जघन्यस्थितिसंक्रमः, तत्तदायुरुदये वर्तमानाः स्वामिनः, सर्वत्रापि संक्रमणकाले यत्स्थितिः समयाधिकावलिकाशेषा वेदितव्या ॥४६॥

खविऊण मिच्छमीसे मणुओ सम्ममि खवियसेसम्मि। चउगइउ तओ होउ जहण्णठितिसंकमस्सामी ॥४७॥

(स्वो०)—क्षपित्वा मिथ्यात्वमिश्रे मनुष्यः ततः सम्यक्त्वे क्षपितशेषे कश्चिच्चतुर्गतिकोऽपि भवति, तत्र प्राक्क्रमेण जघन्यसंक्रमं करोति, अतश्चतुर्गतिका अपि स्वामिनो भवन्तीति गाथार्थः ॥ ४७ ॥

(मलय०)-सम्यक्त्वस्य भावनां स्वयमेव सूत्रकृदाह—मनुष्यो जघन्यतोऽपि वर्षाष्टकस्योपरि वर्त्तमानो मिथ्यात्वसम्यग्मिथ्यात्वे क्षपयित्वा सम्यक्त्वं सर्वापवर्त्तनया अपवर्त्तयति, अपवर्त्तने च कृते सम्यक्त्वं क्षपितशेषं भवति, ततस्तस्मिन् सम्यक्त्वे क्षपितशेषे सति चतुर्गतिको भूत्वा चतसृणां गतीनामन्यतमस्यां गतौ गत्वा सम्यक्त्वस्य समयाधिकावलिकाशेषायां स्थितौ वर्त्तमान उदयावलिकात उपरितनीं यां समयमात्रां स्थितिमपवर्त्तनासंक्रमेणाधस्तने स्वोदयावलिकात्रिभागे समयाधिके प्रक्षिपति, स तस्य जघन्यसंक्रमः, स च चसृणामन्यतमस्यां गतौ वर्त्तमानो जघन्यस्थितिसंक्रमस्वामी, संक्रमणकाले यत्स्थितिः समयाधिकावलिकाशेषा ॥४७॥

**निद्दादुगस्स साहियआवलियदुगं तु साहिए तंसे । हासाईणं संखेज्ज वच्छरा ते य कोहम्मि ॥४८॥**

(स्वो०)—निद्राप्रचलयोरेका स्थितिः जघन्यस्थितिसंक्रमः, संक्रमान्ते स्वस्थितेरुपरिस्था एकास्थितिः साधःस्थसमयाधिके आवलिकात्रिभागे क्षीणकषायः संक्रामयति। तयोः कियन्मात्रा यत्स्थितिः ? तस्मिन् काले आवलिकाद्विकमसंख्येयभागाधिकं सर्वस्थितिप्रमाणमिति भावः। हास्यरत्यरतिशोकभयजुगुप्सानां क्षपकेनापवर्त्य संख्येयवार्षिका स्थितिः कृता, सा तेषामात्मनिर्लेपनाद्धायां सञ्ज्वलनक्रोधे प्रक्षिप्यमाणा जघन्यः संक्रमो भवति। तेषां कियती यत्स्थितिः? अन्तरकरणोनानि संख्येयवर्षाणीति गाथार्थः ॥४८॥

(मलय०)-'निद्राद्विकस्य'-निद्राप्रचलारूपस्य स्वसंक्रमान्ते—स्वस्थितेरुपरितनी या एकसमयमात्रा स्थितिः सा 'त्र्यंशे'-तत एव समयमात्राया स्थितेरनन्तरमधस्तन्यामावलिकाया अधस्तने त्रिभागे 'साधिके'-समयाधिके प्रक्षिप्यते, स जघन्यः स्थितिसंक्रमः। इदमु-

क्त भवति–क्षीणकषायवीतरागछद्मस्थो निद्राद्विकस्य द्वयोरावलिकयोस्तृतीयस्याश्चावलिकाया असंख्येयतमे भागे वर्तमानः सर्वोपरितनीं समयमात्रां स्थितिमपवर्त्तनाकरणेनाधस्तन्यामावलिकायास्त्रिभागे समयाधिके यत्प्रक्षिप्यते स निद्राद्विकस्य जघन्यस्थितिसंक्रमः, क्षीणकषायवीतरागश्च स्वामी। तदानीं च यत्स्थितिः साधिकमावलिकाऽसंख्येयभागाधिकमावलिकाद्विकम्। इह वस्तुस्वभाव एव यन्नि-द्राद्विकस्यावलिकाऽसंख्येयभागाधिकावलिकाद्विकशेषायां स्थितावुपरितनी समयमात्रा एका स्थितिः संक्रामति, न पुनर्मतिज्ञानावरणी-यादीनामिव समयाधिकावलिकाशेषायामिति। तथा हासादीनां–हास्यरत्यरतिशोकभयजुगुप्सानामनिवृत्तिबादरेण क्षपकेण अपवर्त्तनाक-रणेन संख्येयानि वर्षाणि–संख्येयवर्षप्रमाणा स्थितिः कृता, ततस्तानि संख्येयानि वर्षाणि, सूत्रे च प्राकृतत्वात्पुंस्त्वनिर्देशः, संख्येय-वर्षप्रमाणा स्थितिरित्यर्थः, क्रोधे–संज्वलनक्रोधे प्रक्षिप्यमाणे जघन्यस्थितिसंक्रमः, स्वामी चानिवृत्तिबादरक्षपकः। तदानीं च यत्स्थि-तिरन्तर्मुहूर्ताभ्यधिकासंख्येयवर्षप्रमाणा स्थितिः, यतोऽन्तरकरणेन वर्त्तमानस्तां संख्येयवर्षप्रमाणां स्थितिं संज्वलनक्रोधे संक्रमयति, अन्तरकरणे च कर्मदलिकं न विद्यते, किन्तु तत ऊर्ध्वं, ततोऽन्तरकरणकालेनाभ्यधिका संख्येयवर्षप्रमाणा स्थितिर्हास्यादिषट्कस्य ज-घन्यस्थितिसंक्रमणकाले यत्स्थितिः। इमां च संख्येयवर्षप्रमाणां स्थितिमपवर्त्तनाकरणेनापवर्त्य संज्वलनक्रोधस्योदयावलिकायां प्रक्षि-पतीति प्रतिपत्तव्यम्। अन्यथा स्थितेः प्रभूतत्वादुदयावलिकाबहिर्भागेऽपि प्रक्षेपः स्यात्, तथा च सति 'उदयावलिए छोभो अण्णप्-गईए जो उ अंतिमओ। सो संकमो जहण्णो'–इति प्रागुक्तं विरुध्यते ॥४८॥

पुसजलणाण ठिई जहण्णिया आवलीदुगेणूणा। अंतो जोगंतीण पलियासंखंससंखयराण ॥४९॥

(स्वो०)—पुवेदसञ्ज्वलनक्रोधमानमायानां या जघन्या स्थितिः सैव यत्स्थितिः। तत्र पुरुषवेदस्याष्टौ वर्षाणि जघन्यसंक्रममधि-

कृत्यान्तर्मुहूर्त्तोनानि अवाधोनानीति भावः। एवं सञ्ज्वलनक्रोधस्य मासद्वयमन्तर्मुहूर्त्तोनम्, मानस्य मासो अन्तमुहूर्त्तोनः, मायायाः अर्द्धमासोऽन्तर्मुहूर्त्तोनो जघन्यसंक्रमः, यत्स्थितिः सावाधः स एव, किन्त्वावलिकाद्विकोना, यतो वन्धव्यवच्छेदात् वन्धावलिकायां गतायां क्षपयितुमारब्धास्ताः प्रकृतयोभूयोऽप्यावलिकायां क्षिप्यन्ते, अतो वन्धावलिकाक्षपणावलिकारहिता शेषा यत्स्थितिरिति। 'अंतो जोगंतीणं' ति–सयोग्यन्ते सत्ता यासां ताः सयोग्यन्ताः, तासां सर्वापवर्त्तनेनान्तर्मुहूर्त्तिकी स्थितिर्भवति, सा उदयावलिकारहिता जघन्यसंक्रमः। सावलिकः स एव यत्स्थितिः सर्वस्थितिरित्यर्थः। कियत्यस्ताः सयोग्यन्तिकाः? नामत्रयोदशरहिता नामनवतिरुच्चैर्नीचैर्गोत्र-सातासातसहिताश्चतुर्णवतिः भवतीति। आह परः–तासां प्रकृतीनां समयाधिकावलिकाशेषायां स्थितावयोगिनि कस्मान्न जघन्यः संक्रमोऽभिधीयते क्षीणकषायस्येव स्वान्तवर्त्तिनीनाम्? अत्रोच्यते–स भगवान् अयोगी योगव्यापाररहितः निष्प्रकम्पो नाष्टानां करणानामेकमपि प्रवर्तयति, निष्क्रियत्वात्, केवलमुदयप्राप्तान्यनुभवति, अतः सयोगिन्येव जघन्यसंक्रम इति। पल्योपमासंख्येयभागस्त्वितरासां-भणितशेषाणाम्। कास्ताः? स्त्यानर्द्धित्रिकमिथ्यात्वसम्यग्मिथ्यात्वानन्तानुवन्धिमध्यमाष्टकषायस्त्रीनपुंसकवेदनामत्रयोदशकानां द्वात्रिंशत्प्रकृतिनां स्वक्षपणकालेऽन्त्यसंछोभः पल्योपमासंख्येयभागमात्रो यः सर्वापवर्तनेन जातः स द्वात्रिंशत्प्रकृतीनामपि जघन्यसंक्रम इति। यत्स्थितिस्तु स एवावलिकायुक्तस्तत्कालस्थितिरित्यर्थः। नपुंसकवेदस्त्रीवेदयोः पुनः सान्तर्मुहूर्तः, यतोऽन्तरकरणस्थः तौ संक्रामयति, शेषकर्मप्रकृतीनामन्तरकरणं न भवति, अत उदयावलिकायुक्ता यत्स्थितिरिति। अनन्तानुवन्धिनां स्वक्षपणान्ते चतुर्गतिकानामन्यतमः। मिथ्यात्वसम्यग्मिथ्यात्वयोरविरतदेशविरतप्रमत्ताप्रमत्तानामन्यतमः। शेषाणां षड्त्रिंशतिप्रकृतीनां वादरक्षपकः स्वसंक्रमान्तसमये जघन्यसंक्रमस्वामीति गाथार्थः ॥४९॥

(मलय०)—पुरुषवेदस्य सञ्ज्वलनानां च या जघन्यस्थितिः—जघन्यस्थितिबन्धः प्रागुक्तस्वरूपः, तद्यथा—पुरुषवेदस्याष्टौ संवत्सराणि, सञ्ज्वलनक्रोधस्य मासद्वयम्, सञ्ज्वलनमानस्य मासः, सञ्ज्वलनमायाया अर्द्धमासः, एषैव जघन्यस्थितिरन्तर्मुहूर्तोना जघन्यस्थितिसंक्रमः। अन्तर्मुहूर्तोनत्वं कथमिति चेद्,उच्यते—इह अबाधारहिता स्थितिरन्यत्र संक्रामति, तत्रैव कर्मदलिकसम्भवात्, 'अबाधाकालोना कर्मस्थितिः कर्मनिषेकः' इति वचनात्। जघन्यस्थितिबन्धे चाबाधा अन्तर्मुहूर्तप्रमाणा, ततोऽन्तर्मुहूर्तोनो जघन्यस्थितिबन्ध एतेषां पुरुषवेदादीनां जघन्यः स्थितिसंक्रमः, तदानीं च यत्स्थितिरबाधाकालसहिता सर्वा स्थितिरावलिकाद्विकोना वेदितव्या। कथमावलिकाद्विकोनत्वमिति चेद्, उच्यते—बन्धव्यवच्छेदानन्तरं बन्धावलिकायामतीतायां चरमसमयबद्धाः पुरुषवेदादिप्रकृतिलताः संक्रमयितुमारभ्यन्ते, आवलिकामात्रेण च कालेन ताः संक्रम्यन्ते, संक्रमावलिकाचरमसमये च जघन्यस्थितिसंक्रमः प्राप्यते, ततो बन्धावलिकासंक्रमावलिकारहित एवाबाधाकालसहितो जघन्यस्थितिबन्धो जघन्यस्थितिसंक्रमकाले यत्स्थितिः, स्वामी चानिवृत्तिबादरः क्षपकः। केवलं पुरुषवेदस्य पुरुषवेदारूढ एव, न शेषवेदारूढः। तथाहि—शेषेण वेदेन क्षपकश्रेणिं प्रतिपन्नो हास्यादिषट्केन सह पुरुषवेदं क्षपयति, पुरुषवेदेन तु क्षपकश्रेणिं प्रतिपन्नो हास्यादिषट्कक्षयानन्तरम्, ततः पुरुषवेदेन क्षपकश्रेणिप्रतिपत्तौ काले बाहुल्यं लभ्यते। यस्य च वेदस्योदयस्तस्योदीरणापि प्रवर्तते इति पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नस्य पुरुषवेदस्य महती स्थितिस्त्रुट्यति। ततः पुरुषवेदारूढस्यैव पुरुषवेदस्य जघन्यस्थितिसंक्रमः, न शेषवेदारूढस्य। तथा 'अन्तो जोगंतीणं' ति—योगिनि सयोगिकेवलिनि संक्रममाश्रित्यान्तः—पर्यन्तो यासां ता योग्यन्तिकाः—नरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतवर्जाः शेषा नाम्नो नवतिप्रकृतयः, सातासातवेदनीयोच्चैर्गोत्रनीचैर्गोत्राणि च, तासां जघन्यस्थितिसंक्रमोऽन्तर्मुहूर्तप्रमाणः। तथाहि—एतासां सयोगिकेवलिचरमसमयेऽन्तर्मुहू-

र्त्तप्रमाणा स्थितिर्विद्यते, सा च तस्मिन्नेव समये सर्वापवर्त्तनया अपवर्त्यायोग्यवस्थाप्रमाणीकृत्य, अयोग्यवस्था चान्तर्मौहूर्त्तिकी, केवलमिदमन्तर्मुहूर्त्तं लघुतरमवसेयम्, सर्वापवर्त्तनया चापवर्त्यते स्थितिः उदयावलिकया रहिता, उदयावलिकायाः सकलकरणायोग्यत्वेनापवर्त्तनायोगात्, उदयावलिकासहिता च यत्स्थितिः, स्वामी सयोगिकेवली। नन्वेतासां प्रकृतीनामयोगिकेवलिनि समयाधिकावलिकाशेषायां स्थितौ वर्त्तमाने जघन्यः स्थितिसंक्रमः कस्मान्नाभिधीयते क्षीणकषाय इव मतिज्ञानावरणीयादीनामिति ? उच्यते—अयोगिकेवली भगवान् सकलसूक्ष्मबादरयोगरहितो मेरुरिव निष्प्रकम्पो नैकमप्यमीषां करणानां मध्ये करणं प्रवर्त्तयति, निष्क्रियत्वात्, केवलमुदयप्राप्तानि कर्माणि वेदयते। ततः सयोगिकेवलिन एवैतासां जघन्यस्थितिसंक्रमः। 'पलियासंखंसइयराणं ति' इतरासामुक्तशेषाणां प्रकृतीनां स्त्यानर्द्धित्रिकमिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणकषायस्त्रीवेदनपुंसकवेदनरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतरूपाणां द्वात्रिंशत्सङ्ख्यानामात्मीयात्मीयक्षपणकाले यश्चरमपल्योपमासङ्ख्येयभागमात्रः संछोभः स जघन्यस्थितिसंक्रमः।

तत्र स्वामिनश्चिन्त्यन्ते—मिथ्यात्वसम्यग्मिथ्यात्वयोर्मनुष्योऽविरतसम्यग्दृष्टिर्देशविरतः प्रमत्तोऽप्रमत्तो वा क्षपणकाले सर्वापवर्त्तनेनापवर्त्त्य पल्योपमासङ्ख्येयभागमात्रं चरमखण्डं प्रक्षिपन् जघन्यस्थितिसंक्रमस्वामी। तथा चतुर्गतिकानामन्यतमः सम्यग्दृष्टिरनन्तानुबन्धिनो विसंयोजयन् अपवर्त्तनाकरणेनापवर्त्य चरमं पल्योपमासङ्ख्येयभागमात्रं खण्डं प्रक्षिपन् तेषां जघन्यस्थितिसंक्रमस्वामी। शेषाणां तु षड्विंशतिप्रकृतीनामनिवृत्तिबादरः क्षपकः क्षपणपरिपाट्या स्वस्वचरमखण्डं पल्योपमासङ्ख्येयभागमात्रं संक्रमयन् जघन्यस्थितिसंक्रमस्वामी। तदानीं च यत्स्थितिः स्त्रीनपुंसकवेदवर्जानां स एव जघन्यस्थितिसंक्रम आवलिकायुक्तः, स्त्रीनपुंसकवेदयोस्त्वन्तर्मुहूर्त्तयुक्तः।

कथमेतदवसीयते ? इति चेत्, उच्यते–इह स्त्रीनपुंसकवेदवर्जानां शेषप्रकृतीनामेकामधस्तादावलिकां मुक्त्वा शेषमुपरितनं पल्योपमासंख्येय-भागमात्रं संक्रमयति । ततस्तासां जघन्यस्थितिसंक्रमकाले यत्स्थितिः, स एव जघन्यस्थितिसंक्रम आवलिकयाऽभ्यधिको वेदितव्यः । स्त्रीनपुंसकवेदयोस्तु चरमं स्थितिखण्डमन्तरकरणे स्थितः सन् संक्रमयति, अन्तकरणे च कर्मदलिकं न विद्यते किन्तु तत ऊर्ध्वम्, अन्तकरणं चान्तर्मुहूर्तप्रमाणम्, ततोऽन्तर्मुहूर्तयुक्तो जघन्यस्थितिसंक्रमस्तयोर्यत्स्थितिरवसेया । तदेवमुक्तं जघन्यस्थितिसंक्रमपरिमाणं स्वामित्वं च ॥

जघन्यस्थितिसंक्रमप्रमाणयन्त्रम् ।

| प्रकृतीनां | जघ० स्थि० संक्रमप्रमाणं | जघ० यत्स्थिति प्रमाण | कदा ? |
|---|---|---|---|
| ज्ञाना० ५ दर्शना० ४ विघ्न ५ सं० लोभ सम्य० ४ आयुषां | १ समयमात्र | समयाधिकावलिका १ १ | समयाधिकावलिकाशेषे सत्ताविच्छेदसमये (अपवर्तनया) |
| निद्रा-प्रचलयोः | १ समयमात्र | २ आवलिका आव० असं० भागाधिका | आ० असंख्येयभागाधिके आव-लिकाद्विकशेषे संक्रमान्ते (अपवर्तनया) १२ मे गु० |

| | | | |
|---|---|---|---|
| हास्या० ६<br>पुंवेदस्य<br>सं० क्रोधस्य<br>सं० मानस्य<br>सं० मायायाः | संख्येयवर्षाणि<br>अबाधोन ८ वर्षा०<br>अबाधोन २ मास०<br>अबाधोन १ मास०<br>अबाधोन ०॥ मास० | अन्तर्मु० अधिकसंख्येयव०<br>२ आव० ऊन ८ वर्षे<br>,, २ मास०<br>,, १ मास०<br>,, ०॥ मास० | स्वसंक्रमावलिकान्त्यसमय<br>एता दशापि परप्रकृतौ |
| नरक २-तिर्य० २-कुजाति ४-स्था० सू०-साधा०-आत० उद्योत इति १३ वर्ज नाम ९० वेदनीय २ गोत्राणां २ | उदयावलिकारहितं अन्तर्मुहूर्तं | उदयाव० सहान्तर्मुहूर्तं | सयोगिकेवलिगुणस्थानान्ते (सर्वापवर्त्तनया) |
| उक्तशेषाणां ३० | पल्योपमाऽसंख्येयभागः | पल्योपमाऽसं० भाग० संक्रमाव० सहितः | स्वक्षपणकाले |
| स्त्री-नपुंसकयोः | पल्योपमासंख्येयभागः | अन्तरकरणारूपमन्तर्मु० अधिकपल्योपमासंख्येयभागः | ,, |

जघन्यस्थितिसंक्रमस्वामिनः

| | | | |
|---|---|---|---|
| ज्ञाना० ५ नाम् विघ्न ५ नाम् दर्श० ४ नाम् | १२ मे समयाधिकावलिकाशेषे | १ समयमात्रा | अपवर्तनया |
| निद्राद्विकस्य | १२ मे असं० भा० सह २ आव० शेषे | १ समयमात्रा | अपवर्तनया |
| मिथ्यात्वस्य मिश्रस्य | ४-५-६-७ गुणस्थाः स्वस्वक्षपणकाले | पल्यासं० भा० | सर्वापवर्तनया |
| सं० लोभस्य | सू० समयाधिकाव०शेषे क्ष० | १ समयमात्रा | अपवर्तनया |
| अनंता० ४ | ४ गतिकाः सम्यग्दृशः | पल्यास० भा० | उद्वलनया |
| सम्यक्त्वस्य | ४ गतिकाः कृतकरणाः समयाधिकाव० शेषे | १ समयमात्रा | अपवर्तनया |
| सयोगिसत्ताक ९५ नाम् | १३ मान्ते | आवलिकोनान्तर्मुहूर्ता | चरमापवर्तनया |

| | | | |
|---|---|---|---|
| स्त्रीवेदस्य | स्त्रीवेदोदयेन श्रेणिगताः | पल्योपमासंख्येय भा० | |
| पुंवेदस्य | पुंवेदोदयेन ,, | अबाधोन ८ वर्षा | |
| नपुंवेदस्य | नपुंवेदोदयेन ,, | पल्यासंख्येयभागमात्रा | |
| आयूंषि ४ | स्वस्वभवस्थाः | १ समयमात्रा | भवविच्छेदकाले अपवर्त्तनया |
| २३ उक्तशेषाणां | ९ मस्थाः स्वस्वक्षयकाले | पल्यासं० | उद्वलनया |

स्वामित्वानन्तरं साद्यनादिप्ररूपणा सुगमा भवत्यतः सोच्यते—

**मूलठिईण अजहण्णो सत्तण्ह तिहा चउव्विहो मोहे। सेसविगप्पा साई अधुवा ठितिसंकमे होंति ॥५०॥**

(स्वो०)–मूलप्रकृतीनामजघन्यस्थितिसंक्रमः सप्तानां त्रिधा भवति, कथम्? ज्ञानदर्शनावरणान्तरायाणां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यः स्थितिसंक्रमः, अघातिकर्मणां सयोग्यन्तसमये जघन्यस्थितिसंक्रमः, अन्तर्मुहूर्त्तमात्रस्थितित्वात् तेषाम्। अतः सादिरध्रुवो जघन्यः। तदन्यः सर्वोऽप्यजघन्यः, स च सादिर्न भवति, तयोरप्रतिपातात्, तत्स्थानमप्राप्तानामनादिः, ध्रुवाध्रुवौ प्राग्वत्। मोहनीयस्य चतुर्विधः, कथम्? क्षपकश्रेण्यां सूक्ष्मसम्परायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यः, स च सादिरध्रुवः, तदन्योऽजघन्यः, स च क्षायिकदृष्टेरुपशान्तस्योपशमश्रेणीतः प्रतिपततः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत्। शेषविकल्पाः साद्यध्रुवाः सर्वकर्मणाम्। जघन्यस्य कारणमुक्तम्। उत्कृष्टस्थितिबन्धकानां मिथ्यादृष्टीनां उत्कृष्टः स्थितिसंक्रमः सादिः,

तीव्रपरिणामात् पततामध्रुवः, अनुत्कृष्टस्तु तदा सादिः, सोऽप्युत्कृष्टबन्धे सत्यध्रुव इति गाथार्थः ॥५०॥

(मलय०)–सम्प्रति साद्यादिप्ररूपणावसरः, सा द्विधा, मूलप्रकृतीनामुत्तरप्रकृतीनां च। तत्र प्रथमतो मूलप्रकृतीनां साद्यादिप्ररूपणार्थमाह—इह जघन्यादन्यत्सर्वमजघन्यं यावदुत्कृष्टम्, तथा उत्कृष्टादन्यत्सर्वमपि जघन्यं यावदनुत्कृष्टम्। तत्र मोहनीयवर्जानां सप्तानां मूलप्रकृतीनामजघन्यस्थितिसंक्रमस्त्रिधा–त्रिप्रकारस्तद्यथा–अनादिर्ध्रुवोऽध्रुवश्च। तथाहि–ज्ञानावरणदर्शनावरणान्तरायाणां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्त्तमानस्य जघन्यः स्थितिसंक्रमः, नामगोत्रवेदनीयायुषां तु सयोगिकेवलिचरमसमये, स च सादिरध्रुवश्च, तस्मादन्यः सर्वोऽपि स्थितिसंक्रमोऽजघन्यः, स चाऽनादिः, ध्रुवोऽभव्यानाम्, अध्रुवो भव्यानाम्। 'चउव्विहो मोहे'त्ति–मोहनीये अजघन्यः स्थितिसंक्रमश्चतुर्विधः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथा मोहनीयस्य जघन्यः स्थितिसंक्रमः सूक्ष्मसंपरायस्य क्षपकस्य समयाधिकावलिकाशेषायां स्थितौ वर्त्तमानस्य, ततोऽसौ सादिरध्रुवश्च, तस्मादन्यः सर्वोऽप्यजघन्यः, स च क्षायिकसम्यग्दृष्टेरुपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया। तथा शेषा विकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणाः स्थितिसंक्रमे साद्योऽध्रुवाश्च भवन्ति। तथाहि–य एवोत्कृष्टां स्थितिं बध्नाति, स एवोत्कृष्टं स्थितिसंक्रमं करोति, उत्कृष्टां च स्थितिं बध्नाति उत्कृष्टे संक्लेशे वर्त्तमानः, न चोत्कृष्टः संक्लेशः सर्वदैव प्राप्यते, किन्त्वन्तरान्तरा, शेषकाल त्वनुत्कृष्टः, तत एतौ द्वावपि साद्यध्रुवौ, जघन्यस्तु प्रागेव भावितः ॥ ५० ॥

## मूलप्रकृतिषु स्थितिसंक्रमस्य साद्यादिभङ्गयन्त्रम्।

| मूलप्रकृतयः | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः |
| ज्ञाना० दर्श० अन्त० | — | जघन्यसंक्रमकाले व्यवच्छे० | भव्यस्य | अभव्यस्य | १२ मे गु० समयाधिका ऽऽव०शेषे | विच्छेदभावात् | परावर्त्तमानत्वात् | परावर्त्तमानत्वात् | पराव० | पराव० |
| नाम-गोत्र-वेदनीय-आयु० | — | ,, | ,, | ,, | १३ मान्ते | ,, | ,, | ,, | ,, | ,, |
| मोहनीय० | क्षायिकोपशमकस्य ११ तः प्रतिपततः | भव्यानां | साद्यप्राप्तस्य | अभव्यस्य | क्ष० १० मे | ,, | ,, | ,, | ,, | ,, |

उत्तरप्रकृतिषु स्थितिसंक्रमस्य साद्यादिभङ्गयन्त्रम् ।

| उत्तरप्रकृतयः | अजघन्याः | | | | जघन्याः | | अनुत्कृष्टः | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अनादिः | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः |
| २५ चारित्र-मोहनीयानाम् | ११ त पतितस्य | भव्यानां | तत्स्था-नामा-प्तस्य | अभ० | स्वक्षय-काले | भव्यानां | उत्कृष्टेन परावर्त-मानत्वात् | परावर्त मानत्वात् | अनुत्कृष्टे-न परा० त्वात् | परावर्त-मानत्वात् |
| २८ अध्रुवस-त्ताकानां | अध्रु० स-त्ताकत्वात् | अध्रु० स-त्ताकत्वात् | — | — | अध्रु० स त्ताकत्वात् | अध्रुवस-त्ताकत्वात् | अध्रुवस-त्ताकत्वात् | अध्रुवस-त्ताकत्वात् | अध्रुव सत्ता० | अध्रुव सत्ता० |
| १०५ उक्त-शेषाणां | — | भव्यानां क्षयिष्य-माणत्वात् | अजघन्य स्थानमा प्तस्य | अभ० | स्वक्षय-समये | भव्यानां | परावर्त-मानत्वात् | परावर्त-मानत्वात् | परावर्त-मानत्वात् | परावर्त मानत्वात् |

उत्तरप्रकृतीनामाह—

तिविहो धुवसतीणं, चउव्विहो तह चरित्तमोहीणं । अजहन्नो सेसाणं दुविहो सेसा वि दुविगप्पा ॥५१॥

(स्वो०)–ध्रुवं–नित्यं सत्कर्म यासां ता ध्रुवसत्यः, तासां ध्रुवसतीनां त्रिंशदुत्तरशतप्रमाणानां त्रिविधो भवत्यजघन्यसंक्रमः, किं सर्वासाम् ? नेत्याह । चारित्रमोहनीयप्रकृतीनां कषायनोकषायरूपाणां चतुर्विधो भवत्यजघन्यसंक्रम इति । कथम् ? नामत्रयोदशकस्त्यानर्द्धित्रिकाणां बादरक्षपकः, ज्ञानान्तरायदर्शनषट्कानां क्षीणकषायः, शेषध्रुवसतीनां सयोगी स्वान्तसमये जघन्यं स्थितिसंक्रमं करोति। स च सादिरध्रुवः । तदन्यः सर्वोऽप्यजघन्यः, तेषामप्रतिपातात्, स च सादिर्न भवति। तत्स्थानमप्राप्तानामनादिः, ध्रुवाध्रुवौ प्राग्वत् । कषायनोकषायाणां चतुर्विधः, कथम् ? स्वस्वक्षपकाणां जघन्यः, स च सादिरध्रुवः, तच्छेषोऽजघन्यः, क्षीणदृष्टेरुपशान्तदृष्टेर्वोपशान्तस्योपशान्तानामसंक्रमात् प्रतिपततःसादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । अध्रुवसतीनामजघन्यो द्विधा। शेषाः सर्वासामपि द्विधा भवन्ति । कथम् ? देवनारकमनुजद्विकवैक्रियाहारकसप्तकायुश्चतुष्कोच्चैर्गोत्रसम्यक्त्वसम्यग्मिथ्यात्वतीर्थङ्कराणामष्टाविंशत्यध्रुवप्रकृतीनां अध्रुवत्वादेव सर्वेऽपि संक्रमाः साद्यध्रुवाः । ध्रुवसतीनां जघन्यस्य कारणं प्रागुक्तम् , उत्कृष्टानुत्कृष्टौ मिथ्यादृष्टौ भवतः, अतः सुगमाविति गाथार्थः ॥५१॥

(मलय०)–सम्प्रत्युत्तरप्रकृतीनां साद्यनादिप्ररूपणार्थमाह—ध्रुवं सत्–सत्ता यासां ता ध्रुवसत्ताकास्त्रिंशदुत्तरशतसङ्ख्याः, तथाहि–नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरनामसम्यक्त्वसम्यग्मिथ्यात्वोच्चैर्गोत्रायुश्चतुष्टयलक्षणा अष्टाविंशतिसङ्ख्या अध्रुवसत्ताकाः, ता अष्टपञ्चाशदधिकात् शतादपनीयन्ते, ततः शेषं त्रिंशदुत्तरमेव शतं ध्रुवसत्ताकानां भवति, तस्मादपि च चारित्रमोहनीयप्रकृतयः पञ्चविंशतिसङ्ख्या अपनीयन्ते, तासां पृथग्वक्ष्यमाणत्वात् । ततः शेषस्य पञ्चोत्तरशतस्य स्वस्वक्षपणपर्यवसाने जघन्यः स्थितिसंक्रमो भवति, स च सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यजघन्यः, स चानादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया । चारित्रमोहनीयप्रकृतीनां पञ्च-

विंशतिर्संख्यानामजघन्यः स्थितिसंक्रमश्चतुर्विधः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–उपशमश्रेण्यामुपशान्तौ सत्यां न भवति, उपशमश्रेणितः प्रच्यवने भूयोऽपि भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ भव्याभव्यापेक्षया। तथा शेषास्तु अध्रुवसत्ताकात्तु अष्टाविंशतिसङ्ख्यासु सर्वेऽपि जघन्याजघन्योत्कृष्टानुत्कृष्टा विकल्पा द्विविधा भवन्ति। तद्यथा–सादयोऽध्रुवाश्च, सा च साद्यध्रुवता अध्रुवसत्ताकत्वादेव परिभावनीया। 'सेसा वि दुविगप्प'त्ति–शेषा अपि जघन्योत्कृष्टानुत्कृष्टा ध्रुवसत्ताकानां द्विविकल्पाः–द्विभेदा ज्ञातव्याः, तद्यथा–सादयोऽध्रुवाश्च। तत उत्कृष्टानुत्कृष्टयोर्यथा मूलप्रकृतिषु भावना कृता तथा अत्रापि कर्त्तव्या। जघन्यश्च स्थितिसंक्रमः स्वक्षयावसरे प्राप्यते, ततोऽसौ सादिरध्रुवश्च ॥५१॥

उक्तः स्थितिसंक्रमः, अधुनाऽनुभागसंक्रममाह—

ठितिसंकमो व्व तिविहो रसम्मि उव्वट्टणाइ विन्नेओ। रसकारणओ नेयं घाइत्तविसेसणभिहाणं ॥५२॥

(च्वो०)–स्थितिसंक्रमवत्प्रसंगे–अनुभागे तद्विषये यः संक्रमः सोऽपि त्रिविध उद्वर्तनादिभेदात् ज्ञेयः। रसकारणतो रसहेतुकं ज्ञेयं घातित्वविशेषणाभिधानं प्रकृतीनामिति गाथार्थः ॥५२॥

(मलय०)–तदेवमुक्तः स्थितिसंक्रमः, संप्रत्यनुभागसंक्रमाभिधानावसरः, तत्र च सप्त अनुयोगद्वाराणि, तद्यथा–भेदः, विशेषलक्षणम्, स्पर्द्धकप्ररूपणा, उत्कृष्टानुभागसंक्रमप्रमाणम्, जघन्यानुभागसंक्रमप्रमाणम्, स्वामित्वम्, साद्यादिप्ररूपणा च। तत्र प्रथमतो भेदः प्ररूप्यते–अनुभागसंक्रमो द्विधा, तद्यथा–मूलप्रकृत्यनुभागसंक्रमः, उत्तरप्रकृत्यनुभागसंक्रमश्च। मूलप्रकृत्यनुभागसंक्रमोऽष्टधा, तद्यथा–ज्ञानावरणीयस्य दर्शनावरणीयस्येत्यादि। उत्तरप्रकृत्यनुभागसंक्रमोऽष्टपञ्चाशच्छतधा, तद्यथा–मतिज्ञानावरणीयस्य श्रुतज्ञानावरणी-

यस्य यावद्वीर्यान्तरायस्य । कृता भेदप्ररूपणा । सम्प्रति विशेषलक्षणप्ररूपणार्थमाह—स्थितिसंक्रमवद्रसेऽपि—रसस्यापि संक्रम उद्वर्त्तनादिकस्त्रिविधः—त्रिप्रकारो विज्ञेयः, उद्वर्त्तनासंक्रमः, अपवर्त्तनासंक्रमः, प्रकृत्यन्तरनयनसंक्रमश्च । तत्र स्तोकस्य रसस्य प्रभूतीकरणमुद्वर्त्तनासंक्रमः, प्रभूतस्य सतः स्तोकीकरणमपवर्त्तनासंक्रमः, विवक्षितायाः प्रकृतेः समाकृष्य प्रकृत्यन्तरे नीत्वा निवेशनं प्रकृत्यन्तरनयनसंक्रमः । कृता विशेषलक्षणप्ररूपणा । सम्प्रति स्पर्द्धकप्ररूपणा कर्त्तव्या, सा चैवं—त्रिविधानि रसस्पर्द्धकानि, तद्यथा—सर्वघातीनि, देशघातीनि अघातीनि च । तत्र स्वघात्यं केवलज्ञानादिलक्षणगुणं सर्वं घातयन्तीत्येवंशीलानि सर्वघातीनि । स्वघात्यज्ञानादेर्गुणस्य देशं मतिज्ञानादिलक्षणं घातयन्तीत्येवंशीलानि देशघातीनि । यानि च न किमपि घातयन्ति तान्यघातीनि, केवलं सर्वघातिरसस्पर्द्धकसंबन्धात्तानि सर्वघातीनि भवन्ति, यथेह लोके स्वयमचौराणामपि चौरसंबन्धाच्चौरता । याश्च पूर्वं सर्वघातिन्यादयः प्रकृतयोऽभिहितास्ता एतेषामेव सर्वघात्यादिरसस्पर्द्धकानां संबन्धादवसेयाः, तथा चाह—'रसकारणतः' । सर्वघात्यादिरसरूपं कारणमधिकृत्य घातित्वविशेषणाभिधानम्—घातित्वरूपं यद्विशेषणं—सर्वघातिन्यो देशघातिन्य इत्येवंरूपं यद्विशेषणमित्यर्थः, तस्याभिधानं ज्ञेयम् ॥५२॥

एतदेव स्पष्टयति—

**देसग्घाइरसेणं पगईओ होन्ति देसघाईओ । इयरेणियरा एमेव ठाणसन्ना वि नेयव्वा ॥ ५३॥**

(स्वो०)—देशघातिरसेन बन्धोदयोदीरणसंक्रमेषु हेतुभूतेन देशघात्यभिधानाः प्रकृतयो भवन्ति, ताश्च पञ्चविंशतिः 'नाणावरणचउक्कं' इत्यादिना कथिता एव । इतरेण—सर्वघातिना सर्वघातिन्यः प्रकृतयो भवन्ति, ता अपि 'केवलियणाणदंसण' इत्यादिना कथिता ॥५७॥

१ तृतीयद्वारे गा० १९। २ तृ० द्वा० गा० १७.

एषाथः। एवमेव स्थानसंज्ञापि घातिसंज्ञावद्विज्ञेया, 'आवरणमसव्वग्घं' इत्यादिना सप्तदशानामेकद्वित्रिचतुःस्थानिकसंज्ञा विहिता, शेषाणां तु द्वित्रिचतुःस्थानिकसंज्ञामिहितेति गाथार्थः ॥५३॥

(मलय०)—एतदेवभावयति—देशघातिरसेन देशघातिरसस्पर्द्धकसम्बन्धेन प्रकृतयो मतिज्ञानावरणादिरूपाः पञ्चविंशतिसङ्ख्या देशघातिन्यो भवन्ति, देशघातिन्यो व्यवह्रियन्ते। इतरेण सर्वघातिना रसेन योगादितराः सर्वघातिन्यः। 'अघातिन्यः' इति तु व्यपदेशः सर्वदेशघातिरसस्पर्द्धकाभावनिमित्तः। 'एमेव ठाणसन्ना वि नेयव्व'त्ति—एवमेव रसकारणतः स्थानसंज्ञापि वेदितव्या। मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणपुरुषवेदसंज्वलनचतुष्टयान्तरायपञ्चकरूपाः सप्तदशप्रकृतय एकद्वित्रिचतुःस्थानकसंज्ञाः, शेषास्तु द्वित्रिचतुःस्थानकसंज्ञा इति। या स्थानसंज्ञा प्रकृतीनां प्रागभिहिता सापि रसकारणादेवावगन्तव्या इत्यर्थः। तथाहि—यासां मतिज्ञानावरणादीनां प्रकृतीनामेकद्वित्रिचतुःस्थानकरससम्भवः, ता एकद्वित्रिचतुःस्थानकसंज्ञाः, यासां तु शेषाणां द्वित्रिचतुःस्थानकरससम्भवस्ता द्वित्रिचतुःस्थानकसंज्ञाः ॥५३॥

सम्यक्त्वसम्यग्मिथ्यात्वयोर्न तत्र संज्ञा विहिता, तत्संज्ञार्थं सङ्क्रममविकृत्य कासांचिद्विशेषार्थमाह—

सव्वग्घाइदुठाणो मीसायवमणुयतिरियआऊणं। इगदुट्ठाणो सम्मंमि तदियरोण्णासु जह हेट्ठा ॥५४॥

(स्वो०)—सर्वघाती जघन्यमध्यमोत्कृष्टोऽपि यः कश्चिद्रसः स सम्यग्मिथ्यात्वातपमनुष्यतिर्यगायुषां भवति, द्विस्थानिकश्च। प्रागुक्तौ नेह त्रिचतुःस्थानिकौ। एकस्थानिकरसस्पर्द्धकविशेषाः सर्वेऽपि द्विस्थानिकस्य केचित् सम्यक्त्वे 'तदितर' त्ति—सर्वघातिरसादन्यो

१ सू० प्रा० गा० ३०

देशघातिरसो भवति, किमुक्तं भवति? सम्यक्त्वं एकद्विस्थानिकदेशघातिरससंज्ञम्। शेषास्वन्यासु प्रकृतिषु यथाऽधस्तृतीयद्वारे बन्धमधिकृत्य अभिहितं तथा संक्रमेऽपि भवतीति गाथार्थ ॥५४॥

(मलय०)-तत्र सम्यक्त्वसम्यग्मिथ्यात्वयोः स्थानसंज्ञा प्राक् न प्रतिपादिता, ततस्तयोः स्थानसंज्ञाप्रतिपादनार्थं कासाञ्चित्प्रकृतीनां संक्रममधिकृत्य विशेषोपदर्शनार्थं चाह—इह संक्रमे चिन्त्यमाने सम्यग्मिथ्यात्वातपमनुष्यतिर्यगायुषां रसः सर्वघाती द्विस्थानकश्च वेदितव्यः, न शेषः। तत्र सम्यग्मिथ्यात्वस्य रसः सर्वोऽपि सर्वघाती द्विस्थानकश्च विद्यते न शेष इति शेषसंक्रमप्रतिषेधः। आतपमनुष्यतिर्यगायुषां तु यद्यपि 'दुतिचउठाणाउ सेसाउ' इति वचनात् द्विस्थानकस्त्रिस्थानकश्चतुःस्थानकश्च रसो विद्यते, तथाप्येतेषां द्विस्थानक एव रसः संक्रामति, न त्रिस्थानकचतुःस्थानकौ, तथास्वाभाव्यात्। सर्वघातिप्रकृत्यन्तररससंबन्धाच्चैतेषां रसः सर्वघाती, न त्वघाती, ततो देशघातिरसप्रतिषेधः। तथा सम्यक्त्वे तदितरः-तस्मात्सर्वघातिनो रसादितरोऽन्यस्तदितरो देशघातीत्यर्थः, एकस्थानको द्विस्थानकश्च संक्रामति न शेषः, असंभवात्। अन्यासु शेषासु प्रकृतिषु पुनर्यथाधस्तात्तृतीयद्वारे बन्धमधिकृत्योक्तं तथा संक्रमेऽपि द्रष्टव्यम्। इदमुक्तं भवति-शेषाणां प्रकृतीनां यतिविध एकस्थानकादिको रसो यादृशश्च देशघाती सर्वघाती वा बन्धमधिकृत्य प्रागुक्तस्तथेहापि संक्रमे द्रष्टव्यः ॥५४॥

उत्कृष्टजघन्यविधेः संशयापनोदायाह—

**दुट्ठाणो च्चिय जाणं ताणं उक्कोसओ वि सो चेव। संकमइ वेयगे वि हु सेसासुक्कोसओ परमो ॥५५॥**

(स्वो०)-याः प्रकृतयो द्विस्थानिकरसविषया एव नान्यविषयाः सम्भवन्ति, तासां स एव द्विस्थानिक उत्कृष्टः संक्रामति, यतस्त-

स्य स्पर्द्धकान्यमंख्येयभेदभिन्नानि। वेदकसम्यक्त्वेऽपि द्विस्थानिक एवोत्कृष्टः। शेषप्रकृतिपूत्कृष्टश्चतु'स्थानिको रस इति गाथार्थः॥५५॥

(मलय०)–सम्प्रति यासां यादृश उत्कृष्टः सङ्क्रमो यादृशश्च जघन्यस्तासां त प्रतिपिपादयिषुराह—यासां प्रकृतीनां सम्यग्मिथ्यात्वातपमनुष्यायुस्तिर्यगायूरूपाणां द्विस्थानक एव रसः सङ्क्रामति, न शेषोऽसंभवात्, तथास्वाभाव्यात्, तासामुत्कृष्टोऽपि रसः सङ्क्रामन् द्विस्थानक एव वेदितव्यो न शेषोऽसभवात्। तथा वेदकेऽपि–वेदकसम्यक्त्वेऽपि उत्कृष्टो रसः सङ्क्रामन् द्विस्थानकोऽवसेयो, न शेषः, एकस्थानकस्य जघन्यत्वात्, त्रिस्थानकचतुःस्थानकयोश्चाभावात्। तथा 'शेषासु'–शेषाणां प्रकृष्टो रसः सङ्क्रामन् परमश्चतुस्थानको वेदितव्यः ॥५५॥

एकट्ठाणजहण्णं संकमइ पुरिससम्मसंजलणे। इयरासु दोट्ठाणि य जहण्णरससंकमे फड्डं ॥५६॥

(स्वो०)–एकस्थानिकस्य रसस्य सर्वजघन्यस्पर्द्धकं सङ्क्रामति, किं सर्वासाम्? नेत्याह—पुरुषवेदसम्यक्त्वसंज्वलनानां जघन्यानुभागसङ्क्रमे। इतरासाम्–एतच्छेषाणां प्रकृतीनां त्रिस्थानिकजघन्यरसस्पर्द्धकं जघन्यसङ्क्रमे सङ्क्रामति। यद्यपि ज्ञानावरणचतुष्कदर्शनत्रिकान्तरायाणां एकस्थानिकस्पर्द्धकानि बन्धेऽभिहितानि तथापि जघन्यसंक्रमे तानि न सङ्क्रामन्तीति गाथार्थः ॥५६॥

(मलय०)–जघन्यरससंक्रमप्रतिपादनार्थमाह—पुरुषवेदसम्यक्त्वसंज्वलनक्रोधमानमायालोभानां एकस्थानकस्य रसस्य सर्वजघन्यं यत्स्पर्द्धकं तत् यदा सङ्क्रामति तदा तेषां जघन्यानुभागसंक्रमः। 'इतरासु'–इतरासां शेषप्रकृतीनां जघन्यरससङ्क्रमे द्विस्थानकं स्पर्द्धकमवसेयम्। किमुक्तं भवति? सर्वजघन्यं द्विस्थानकरसस्पर्द्धकं यदा सङ्क्रामति तदा स तासां जघन्यानुभागसंक्रमः। इह यद्यपि मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणान्तरायपञ्चकानामेकस्थानकोऽपि रसो बन्धे प्राप्यते तथापि क्षयकाले प्राग्बद्धो

द्विस्थानकोऽपि रसः संक्रामति, नैकस्थानकः केवलः, इति जघन्यसंक्रमविषयतया नैतेषां एकस्थानको रस उक्तः ॥५६॥

उत्कृष्टानुभागसंक्रमप्रमाणम् — जघन्यानुभागसंक्रमप्रमाणम्

| प्रकृतीनां | स्थानप्रमाणं | घातिप्रमाणं | प्रकृतीनां | स्थानप्रमाणं | घातिप्रमाणं |
|---|---|---|---|---|---|
| सम्यक्त्वस्य | २ | देशघाति | सम्य० पुं० संज्व० ४ | १ | देशघाति |
| मिश्रस्य नरायुस्तिर्यगायुरातपानां च | २ | सर्वघाति | उक्तशेषाणां | २ | सर्वघाति |
| उक्तशेषाणां | ४ | ,, | | | |

उत्कृष्टरससंक्रमस्वामित्वमाह—

**बंधिय उक्कोसरसं आवलियाओ परेण संकामे। जावंतमुहू मिच्छो असुभाणं सव्वपयडीणं ॥५७॥**

(स्वो०)–बद्ध्वा सर्वोत्कृष्टरसस्पर्द्धकं बन्धावलिकायां गतायां तदुत्कृष्टरसं मनुष्योपपातिदेवाऽसंख्येयवर्षायुस्तिर्यग्मनुष्यान् मुक्त्वाऽन्यश्चतुर्गतिको मिथ्यादृष्टिः सर्वाऽशुभप्रकृतीनां संक्रामयति उत्कृष्टेनापि अन्तर्मुहूर्तम्, यतस्तस्मिन्नतीतेऽवश्यं तद्रसं शुभपरिणामेनान्यथा करोतीति गाथार्थः ॥५७॥

(मलय०)–तदेवमुक्तं जघन्यसंक्रमपरिमाणम्, सम्प्रति स्वामी प्रतिपादयितव्यः, तत्र उत्कृष्टानुभागसंक्रमस्वामिनमाह— सर्वासामशुभ-

प्रकृतीनां पञ्चविधज्ञानावरणनवविधदर्शनावरणासातवेदनीयाष्टाविंशतिविधमोहनीयनरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जैकेन्द्रियजातिच-तुष्टयप्रथमवर्जसंस्थानप्रथमवर्जसंहननकुवर्णादिनवकोपघाताप्रशस्तविहायोगतिस्थावरसूक्ष्मसाधारणापर्याप्तास्थिराशुभदुर्भगदुःस्वरानादेया-यशःकीर्तिनीचैर्गोत्रान्तरायपञ्चकलक्षणानामष्टाशीतिप्रकृतीनां सूक्ष्मापर्याप्तमादिं कृत्वा सर्वोऽपि चतुर्गतिको मिथ्यादृष्टिः, केवलमसंख्येय-वर्षायुष्कतिर्यङ्मनुष्यान् आनतादींश्च देवान् वर्जयित्वा—एते हि मिथ्यादृष्टयोऽपि सन्तो नाशुभप्रकृतीनामुक्तरूपाणामुत्कृष्टमनुभागं बध्न-न्ति, तीव्रसंक्लेशाऽभावात्, ततश्चोत्कृष्टानुभागसंक्रमाभाव इति तेषां वर्जनम्। उत्कृष्ट रस उत्कृष्टमनुभागं बद्ध्वा आवलिकायाः परतस्तं बद्धमुत्कृष्टं रसं संक्रमयति, तावच्च संक्रमयति यावदन्तर्मुहूर्तम्, परतोऽवश्यं शुभपरिणामभावतस्तस्योत्कृष्टानुभागस्य विनाशसंभवात्। उत्कृष्टं ह्यनुभागं बद्धं सन्तमन्तर्मुहूर्तात्परतोऽवश्यं मिथ्यादृष्टिः शुभप्रकृतीनां संक्लेशेनाशुभप्रकृतीनां तु विशुद्ध्या विनाशयति ॥५७॥

आयावुज्जोवोरालपढमसंघयणमणुदुगाऊणं। मिच्छा सम्मा य सामी सेसाण जोगि सुभियाणं ॥५८॥

(व्यो०)—आतपोद्योतौदारिकसप्तकप्रथमसंहननमनुजद्विकानामासां द्वादशप्रकृतीनां मिथ्यादृष्टयः सम्यग्दृष्टयो वा स्वामिनः। यद्यप्या-तपोद्योतयोः मिथ्यादृष्टिना सताऽनुभाग उत्कृष्टः कृतस्तथापि सम्यग्दृष्टित्वे तयोरन्यासां च शुभप्रकृतीनां नानुभागमपवर्तयति। च-तुर्णामपि आयुषामुत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परतः यावत्समयाधिकावलिका शेषा तावदुत्कृष्टानुभागसंक्रमो भवति, शेषशु-भप्रकृतीनां वैक्रियाहारककार्मणसप्तकानि त्रसादिदशक शुभवर्णैकादशक समचतुरस्रशुभविहायोगतिसातोच्चैर्गोत्रदेवद्विकपञ्चेन्द्रियजात्य-गुरुलघुपराघातोच्छ्वासनिर्माणतीर्थङ्कराणां चतुष्पञ्चाशत्प्रकृतीनां सयोगी स्वान्तसमयं यावत् उत्कृष्टानुभागं संक्रामयति, चशब्दाद-न्येऽपि स्वबन्धव्यवच्छेदादुपरिगुणस्था जीवा इति गाथार्थः ॥५८॥

(मलय०)–आतपोद्योतौदारिकसप्तकप्रथमसंहननमनुजद्विकानां सर्वसंख्यया द्वादशप्रकृतीनां मिथ्यादृष्टयः सम्यग्दृष्टयश्चोत्कृष्टानुभागसंक्रमस्वामिनः। तथाहि–सम्यग्दृष्टिः शुभप्रकृतीनामनुभागं न विनाशयति किन्तु विशेषतो द्वे षट्षष्टी सागरोपमाणां यावत्परिपालयति, तत उत्कर्षत एतावन्तं कालं यावदुत्कृष्टमनुभागमविनाश्य पश्चात्सर्वत्रोत्पद्यते, ततो मिथ्यादृष्टिष्वप्यनन्तरोक्तप्रकृतीनामुत्कृष्टानुभागसंक्रमोऽवाप्यते। आतपोद्योतयोश्चोत्कृष्टानुभागो मिथ्यादृष्टिनैव बध्यते, ततो न तत्र तयोरुत्कृष्टानुभागसंक्रमाभावः। मिथ्यात्वाच्च प्रतिपत्य सम्यक्त्वं गते सम्यग्दृष्टावपि प्राप्यते। न च सम्यग्दृष्टिः सन् तयोरनुभागं विनाशयति, शुभप्रकृतित्वात्। तथा चतुर्णामप्यायुषां सम्यग्दृष्टयो मिथ्यादृष्टयो वा उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायामतीतायां संक्रमयन्ति, तं च तावत् यावत्समयाधिकावलिकाशेषः, तत्र आयुषामुत्कृष्टानुभागसंक्रमस्वामिनः सम्यग्दृष्टयो वा मिथ्यादृष्टयो वा प्राप्यन्ते। तथा शेषाणां शुभप्रकृतीनां सातवेदनीयदेवद्विकपञ्चेन्द्रियजातिवैक्रियसप्तकाहारकसप्तकतैजससप्तकसमचतुरस्रसंस्थानशुभवर्णाद्येकादशकप्रशस्तविहायोगत्युच्छ्वासागुरुलघुपराघातत्रसादिदशकनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणानां चतुःपञ्चाशत्संख्यानामात्मीयात्मीयबन्धव्यवच्छेदसमये उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परतस्तावदुत्कृष्टमनुभागं संक्रमयन्ति यावत्सयोगिकेवलिचरमसमयः। तत एतासामुत्कृष्टानुभागसंक्रमस्वामिनः सयोगिकेवलिनः, चशब्दादन्येऽपि स्वबन्धव्यवच्छेदस्योपरि गुणस्थानस्था जीवाः ॥५८॥

| प्रकृतयः | स्वामिनः | उत्कृष्टसंक्रमसततकालः |
| --- | --- | --- |
| नरकायुर्वर्जं ८८ अशुभानां | युगलिकानतादिवर्जमिथ्यादृष्टयः सर्वेजीवभेदाः | अन्तर्मुहूर्तं यावत् |
| आत०-उद्यो० मनु०२-औदा०७-वज्रर्ष०(१२) | सम्यग्दृशो मिथ्यादृशो वा सर्वे जीवभेदाः | १३२ सागराणि पर्यन्तम् |
| ४ आयुषाम् | उ०अनुभागबन्धकाः सम्यग्दृशो मिथ्यादृशोऽपि | समयाधिकावलिकाशेषपर्यन्तम् |
| ५४ उत्तमोपाणां | क्षपकाः स्वस्वक्षयकाले | क्षयकालादारभ्य सयोगिपर्यन्तम् |

भणितमुत्कृष्टसंक्रमस्वामित्वम्, जघन्यसंक्रमपरिज्ञानार्थमाह—

खवगस्संतरकरणे अकए घाईण जो उ अणुभागो । तस्स अणंतो भागो सुहुमेगिंदिय कए थोवो ॥५९॥

(स्वो०)—क्षपकस्यान्तरकरणेऽकृते सर्वघातिदेशघातिप्रकृतीनां योऽनुभागः सम्भवति तस्मादनन्तभाग सूक्ष्मैकेन्द्रियस्य भवति, कृतेऽन्तरकरणे पुनः सूक्ष्मैकेन्द्रियानुभागादपि स्तोकतरो भवतीति गाथार्थः ॥५९॥

(मलय०)—उदेशमुक्त उत्कृष्टानुभागसंक्रमस्वामी, सम्प्रति जघन्यानुभागसंक्रमस्वामी प्रतिपादयितव्यः। तत्र प्रथमतो जघन्यानुभागसंक्रमसमयपरिज्ञानार्थमाह—यावदद्याप्यन्तरकरणं न विधीयते तावत्क्षपकस्य सर्वघातिनीनां देशघातिनीनां च प्रकृतीनां योऽनुभा-

गस्तदनन्तभागः—तदनन्तभागकल्पः सूक्ष्मैकेन्द्रियस्य भवति। किमुक्तं भवति? यावदद्याप्यन्तरकरणं न विधीयते तावत्सूक्ष्मैकेन्द्रियसत्कादनुभागात्क्षपकस्य सर्वघातिनीनां देशघातिनीनां च प्रकृतीनामनुभागोऽनन्तगुणः। 'कए थोवो' त्ति—अन्तरकरणे तु कृते सूक्ष्मैकेन्द्रियसत्कादप्यनुभागात्तासामनुभागः स्तोको भवति ॥५९॥



**सेसाणं असुभाणं केवलिणो जो उ होइ अणुभागो। तस्स अणंतो भागो असण्णिपंचेंदिए होइ ॥६०॥**

(स्वो०)—शेषाणामघात्यशुभानाम्—असाताद्यवर्जसंहननसंस्थानदशककुवर्णनवकास्थिरादिषट्कोपघातापर्याप्तकनीचैर्गोत्राशुभविहायोगतीनां त्रिंशत्प्रकृतीनां यः केवलिनः—सयोगिनोऽनुभागस्तस्यानन्तभागोऽसंज्ञिनि पञ्चेन्द्रिये भवतीति गाथार्थः ॥ ६० ॥

(मलय०)—'शेषाणाम्'—अघातिप्रकृतीनामशुभानाम्—असातवेदनीयप्रथमवर्जसंस्थानप्रथमवर्जसंहननकुवर्णादिनवकोपघाताप्रशस्तविहायोगतिदुर्भगदुःस्वरानादेयास्थिराशुभापर्याप्तायशःकीर्त्तिनीचर्गोत्ररूपाणां त्रिंशत्संख्यानामनुभागो यो भवति केवलिनस्तदनन्तभागकल्पोऽसंज्ञिपञ्चेन्द्रियस्य भवति, असंज्ञिपञ्चेन्द्रियसत्कादनुभागादुक्तरूपाणामशुभप्रकृतीनामनुभागः केवलिनोऽनन्तगुणो भवतीत्यर्थः। यो हि यदनन्तभागकल्पस्तस्मात्सोऽनन्तगुणो भवतीति एवं च सति सर्वघातिनीनां देशघातिनीनां च प्रकृतीनां जघन्यानुभागसंक्रमसंभवः क्षपकस्यान्तरकरणे कृते सति वेदितव्यः, शेषाणां त्वशुभप्रकृतीनामुक्तस्वरूपाणां न सयोगिकेवलिनि, ततस्तासां हतप्रभूतानुभागसत्कर्मणः-सूक्ष्मैकेन्द्रियादेर्द्रष्टव्यः, तस्यैव वक्ष्यमाणत्वात्। इह मिथ्यादृष्टयः शुभप्रकृतीनां संक्लेशेनाशुभप्रकृतीनां तु विशुद्ध्या नियमादन्तर्मुहूर्त्तात्परतोऽनुभागं विनाशयन्ति ॥६०॥ ॥६१॥

सम्यग्दृष्टयो मिथ्यादृष्टयो वा किलान्तर्मुहूर्त्तात्परतः सर्वप्रकृतीनामनुभागघातं कुर्वन्ति, तन्निवारणार्थमाह—

सम्मद्दिट्ठी न हणइ सुभाणुभाग दु चेव दिट्ठीणं । सम्मत्तमीसगाणं उक्कोस हणइ खवगो उ ॥६१॥

(स्वो०)—सम्यग्दृष्टिः शुभप्रकृतीनां—देवमनुजद्विकौदारिकवैक्रियाहारककार्मणसमचतुरस्रत्रसादिदशकशुभवर्णैकादशकपराघातपञ्चकसातपञ्चेन्द्रियजातिप्रथमसंहननसंस्थानागुरुलघुप्रशस्तविहायोगत्युच्चैर्गोत्राणां पञ्चत्रिंशत्प्रकृतीनां यावद् द्वे षट्षष्टी सागरोपमाणां तावच्छुभानुभागं न विनाशयति। सम्यग्दृष्टयो मिथ्यादृष्टयश्च सम्यक्त्वसम्यग्मिथ्यात्वयोरशुभयोरपि नोत्कृष्टानुभागं विनाशयन्ति, अपि तु क्षपकः सम्यग्दृष्टिर्विनाशयत्युभयोरपि द्वयोरिति गाथार्थः ॥ ६१ ॥

(मलय०)—सम्यग्दृष्टयस्त्वशुभप्रकृतीनां शुभप्रकृतीनां च यत्कुर्वन्ति तदाह—सम्यग्दृष्टिः शुभप्रकृतीनां—सातवेदनीयदेवद्विकमनुजद्विकपञ्चेन्द्रियजातिप्रथमसंस्थानप्रथमसंहननौदारिकसप्तकवैक्रियसप्तकाहारकसप्तकतैजससप्तकशुभवर्णाद्येकादशकागुरुलघुपराघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसादिदशकनिर्माणतीर्थकरोच्चैर्गोत्ररूपाणां षट्षष्टिसंख्यानामुत्कृष्टमनुभागं न विनाशयति, किन्तूत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत्परिपालयति। तथा द्वावपि—मिथ्यादृष्टिः सम्यग्दृष्टिश्चेत्यर्थः, 'द्वयोः-सम्यक्त्वमिश्रयोः'—सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टमनुभागं न विनाशयतः, किन्तु क्षपक एव, अपिरवधारणे, तथा हि—क्षपकः क्षपणकाले तयोरुत्कृष्टमनुभागं विनाशयति। उक्तं च—[1]"सम्मद्दिट्ठि न हणइ सुभाणुभाग असम्मदिट्ठीवि सम्मत्तमीसगाण उक्कस्स वज्जिया खवणं" ॥६१॥

[भावितमतेः] साम्प्रतं जघन्यस्वामित्वमाह—

घाईणं जे खवगो जहण्णरससंकमस्स ते सामी। आऊण जहण्णठिई बंधाओ आवलीसेसा ॥६२॥

---

१ कर्मप्रकृतिः संक्रमकरणे गा० ५१

(स्वो०)—घातिकर्मप्रकृतीनां ये यासां क्षपकास्ते तासां जघन्यरससंक्रमस्वामिनः। नवनोकषायसंज्वलनानां कृतान्तरकरणो बादरक्षपकः स्वक्षपकक्रमेण जघन्यसंक्रमं करोति। जघन्यस्थितिसंक्रमकाले ज्ञानान्तरायदर्शनषट्कानां क्षीणकषायः स्वामी। सम्यक्त्वसम्यग्मिथ्यात्वयोरपि यः स्वस्थितिवत् जघन्यसंक्रमं करोति। आयुषां सर्वजघन्यस्थित्यनुभागबन्धाद्बन्धावलिकायाः परतश्चतुर्णामपि समयाधिकावलिकाशेषा तावज्जघन्यानुभागसंक्रमो भवतीति गाथार्थः ॥ ६२ ॥

(मलय०)—तदेवं जघन्यानुभागसंक्रमस्वामित्वप्रतिपादनाय भावना कृता, संप्रति जघन्यानुभागसंक्रमस्वामित्वमेवाह—घातिकर्मप्रकृतीनामन्तरकरणादूर्ध्वं यो यासां क्षपकः स तासां जघन्यस्थितिसंक्रमणकाले जघन्यरससंक्रमस्वामी। इदमुक्तं भवति—अन्तरकरणे कृते सति अनिवृत्तिबादरसंपरायः क्षपकः नवनोकषायसंज्वलनचतुष्टयानां क्षपणक्रमेण जघन्यस्थितिसंक्रमणकाले जघन्यानुभागसंक्रमं करोति, ज्ञानावरणपञ्चकान्तरायपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणनिद्राप्रचलारूपदर्शनावरणषट्कानां[1] क्षीणकषायः समयाधिकावलिकाशेषायां स्थितौ वर्त्तमानः, तथा सम्यक्त्वसम्यग्मिथ्यात्वयोर्यः क्षपकः स निजनिजचरमखण्डसंक्रमणकाले जघन्यानुभागसंक्रमस्वामी, तथा चतुर्णामप्यायुषां जघन्यां स्थितिं बद्ध्वा, जघन्यां हि स्थितिं बध्नन् जघन्यमनुभागं बध्नाति ततो जघन्यस्थितिग्रहणम्, जघन्यां च स्थितिं बद्ध्वा आवलिकायाः परतो जघन्यमनुभागं तावत्संक्रमयति यावत्समयाधिकावलिका शेषा भवति ॥६२॥

**अणतिरथुव्वलणाणं संभवओ आवलिए परएणं। सेसाणं इगिसुहुमो घाइयअणुभागकम्मंसो ॥६३॥**

१ सामान्यतः कथनमेतद्, निद्राद्विकस्य त्वसंख्येयभागाधिकावलिकाद्विकशेषायां क्षीणकषाये जघन्योऽनुभागसंक्रमो भवति इति विशेषः स्वयमेव परिभावनीयः।

(स्वो०)—अनन्तानुबन्धिनां तीर्थङ्करस्य च उद्वलनप्रकृतीनां च—नरकमनुजदेवद्विकवैक्रियाहारकसप्तकोच्चैर्गोत्राणामेकविंशतिसंख्यानां जघन्यरसबन्धसम्भवाद् बन्धावलिकायाः परतो जघन्यरससंक्रमं करोति एकं समयम्। कोऽसाविति ? वैक्रियैकादशकस्यासंज्ञिपञ्चेन्द्रियः, मनुष्यद्विकोच्चैर्गोत्रयोः सूक्ष्मनिगोदः, आहारकसप्तकस्याप्रमत्तः, तीर्थङ्करस्याविरतसम्यग्दृष्टिः, अनन्तानुबन्धिनां पश्चात्कृतसम्यक्त्वो मिथ्यादृष्टिः, उक्तशेषाणां सप्तनवतिप्रकृतीनामेकेन्द्रियसूक्ष्मत्रसः—वाय्वग्निकायिको हि तत्सत्कर्मा घातितानुभागकर्मांशः—विनाशितानुभागसत्कर्मा तदधोऽनुभागबन्धकः तद्भवस्थोऽन्यभवस्थो वा जघन्यरससंक्रमं करोतीति गाथार्थः ॥ ६२ ॥

(मलय०)—अनन्तानुबन्धिनां तीर्थकरस्य उद्वलनप्रकृतीनां च नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्ररूपाणामेकविंशतिसंख्यानां जघन्यरसबन्धसंभवादारभ्य आवलिकायाः—बन्धावलिकायाः परतो जघन्यमनुभागं संक्रमयति। कः संक्रमयतीति चेद्, वैक्रियसप्तकदेवद्विकनरकद्विकानामसंज्ञिपञ्चेन्द्रियः, मनुष्यद्विकोच्चैर्गोत्रयोः सूक्ष्मनिगोदः, आहारकसप्तकस्याप्रमत्तः, तीर्थकरस्याविरतसम्यग्दृष्टिः, अनन्तानुबन्धिनां पश्चात्कृतसम्यक्त्वो मिथ्यादृष्टिः। एतासां च षड्विंशतिप्रकृतीनां जघन्योऽनुभागसंक्रम एकं समयं यावदवगन्तव्यः, परतोऽजघन्यसंक्रमस्य प्राप्यमाणत्वात्। शेषाणामुक्तव्यतिरिक्तानां सप्तनवतिसंख्यानां प्रकृतीनां सूक्ष्मैकेन्द्रियो वायुकायिकोऽग्निकायिको वा घातितानुभागकर्मांशः—हतप्रभूतानुभागसत्कर्मा सूक्ष्मैकेन्द्रियसत्कस्यानुभागसत्कर्मणोऽधस्तात्स्तोकतरमनुभागं बध्नन् तस्मिन् भवे वर्तमानोऽन्यस्मिन् वा द्वीन्द्रियादिभवे वा यावदन्यं बृहत्तरमनुभागं न बध्नाति, तावज्जघन्यमनुभागं संक्रमयन् जघन्यानुभागसंक्रमस्वामी ॥६२॥

जघन्यानुभागसंक्रमस्वामिनो यन्त्रम् ।

| प्रकृतयः | स्वामिनः | प्रकृतयः | स्वामिनः |
|---|---|---|---|
| घातिनः | ज० स्थि० संक्रमका अन्तरकरणादूर्ध्वं | नरक०२-देव०२-वै०७ | ज० अनु० बन्धकाः असं० पञ्चे० |
| ९ नोक० ४ संज्व० | क्षपकाः ज० स्थि० संक्रमकाः ९ माः | मनु० २-उच्चैः० | सूक्ष्मनिगोदाः |
| ज्ञा०५-अं०५-दर्श०४ | क्षीणमोहाः समयाधिकाव० शेषे | आहा० ७ | अप्रमत्ताः |
| निद्रा २ | क्षी० आ० २ आ० असं० शेषे | जिननाम्नः | अविरतसम्यग्दृशः |
| सम्य० मिथ्यो० | क्षयकालेऽन्त्यखण्डसंक्रमकाः | अनन्ता० ४ | पश्चात्कृतसम्यक्त्वाः मिथ्यादृशः |
| आयु ४ र्णाम् | ज० स्थि० बन्धकाः | ९७ उक्तशेषाणां | हतप्रभृतानुभागसत्ताकावग्निवायुकायिकौ, अन्यभवेऽपि तावेव यावद् गृहदनुभागं न वर्धात |

उक्तं जघन्यस्वामित्वम्, तदनन्तरं साधनादिप्ररूपणामपि मूलप्रकृतीनामाह—

**साइयवज्जो अजहण्णसंकमो पढमदुइयचरिमाणं । मोहस्स चउविगप्पो आउसणुक्कोसओ चउहा ॥६४॥**

(स्वो०)—सादिवर्जो जघन्यसंक्रमो ज्ञानदर्शनावरणान्तरायाणामनादिध्रुवाध्रुवभेदात् त्रिविधो भवति। कथम्? यतः क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यानुभागसंक्रमो भवति, स च सादिरध्रुवः, तच्छेषोऽजघन्यः, तत्स्थानमप्राप्तानामनादिः, ध्रुवाध्रुवौ प्राग्वत्। मोहनीयस्याजघन्यः चतुर्विधः, कथम्? सूक्ष्मरागक्षपकस्य समयाधिकावलिशेषायां स्थितौ जघन्योऽनुभागसं- ॥६३॥

क्रमः, स च सादिरध्रुवः, तच्छेषोऽजघन्यः, क्षायिकदृष्टेरुपशान्तदृष्टेर्वा सर्वमोहनीयोपशमकस्य प्रतिपततः सादिः, तत्स्थानमप्राप्तस्या-नादिः, ध्रुवाध्रुवौ प्राग्वत्। आयुषश्चतुर्विधोऽनुत्कृष्ट संक्रमः, कथम्? अप्रमत्तो देवायुष्कस्योत्कृष्टानुभागं बद्ध्वा बन्धावलिकायाः परतः संक्रमयितुमारब्धो यावदुदयावलिकाशेषा तावदुत्कृष्टानुभागं संक्रामयति, ततस्तस्मिन्नष्टेऽनुत्कृष्टः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् इति गाथार्थः ॥६४॥

(मलय०)—तदेवमुक्तं जघन्यानुभागसंक्रमस्वामित्वम्, सम्प्रति साद्यादिप्ररूपणा कर्त्तव्या, सा च द्विधा—मूलप्रकृतिसाद्यादिप्ररूपणा उत्तरप्रकृतिसाद्यादिप्ररूपणा च। तत्र प्रथमतो मूलप्रकृतिसाद्यादिप्ररूपणार्थमाह—प्रथमद्वितीयचरमाणां—ज्ञानावरणदर्शनावरणान्तरायाणामजघन्योऽनुभागसंक्रमः सादिवर्जस्त्रिविधो भवति, तद्यथा—अनादिर्ध्रुवोऽध्रुवश्च। तथाहि—क्षीणकषायस्यैतेषां कर्मणां समयाधिकावलिकाशेषायां स्थितौ जघन्योऽनुभागसंक्रमो भवति, स च सादिरध्रुवश्च, ततोऽन्यः सर्वोऽप्यजघन्यः, स चाऽनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया। तथा मोहस्य मोहनीयस्याऽजघन्योऽनुभागसंक्रमश्चतुर्विकल्पः, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि—सूक्ष्मसंपरायस्य क्षपकस्य मोहनीयस्य समयाधिकावलिकाशेषायां स्थितौ जघन्योऽनुभागसंक्रमो भवति, स च सादिरध्रुवश्च, ततोऽन्यः सर्वोऽप्यजघन्यः, स च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्योपशान्तमोहगुणस्थानके न भवति, उपशान्तमोहगुणस्थानकाच्च प्रतिपततः सतः पुनरपि भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ पूर्ववत्। आयुषस्त्वनुभागसंक्रमश्चतुर्धा, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि—अप्रमत्तो देवायुष उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परतः संक्रमयितुमारभते, तं च तावत्संक्रमयति यावदनुत्तरसुरभवे स्थितस्य त्रयस्त्रिंशत्सागरोपमाण्यतिक्रामन्ति, आवलिकामात्रस्थितिरवतिष्ठते। ततोऽन्योऽनुभागसंक्रम आयुषः सर्वो-

ऽप्यनुत्कृष्टः, स च सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया ॥ ६४॥

**साइयवज्जो वेयणियनामगोयाण होइ अणुकोसो। सव्वेसु सेसभेया साई अधुवा य अणुभागे ॥६५॥**

(स्वो०)—सादिवर्जस्त्रिविधो वेदनीयनामगोत्राणामनुत्कृष्टानुभागसंक्रमो भवति। कथम्? सूक्ष्मरागक्षपकेन वेदनीयनामगोत्राणां स्वान्तसमये यः सर्वोत्कृष्टोऽनुभागो बद्धः स बन्धावलिकायाः परतो यावत्सयोगिचरमसमयः तावत्संक्रामयत्यतः सादिरध्रुवः, तच्छेषोऽनुत्कृष्टः, तेषामनादिसद्भावादनादिः, ध्रुवाध्रुवौ प्राग्वत्। शेषाः मूलप्रकृतिषु ये भेदास्ते द्विविधाः—सादिरध्रुवा भवन्ति, कथम्? घातिकर्मणां जघन्यभावना कृतैव, उत्कृष्टानुत्कृष्टयोः मिथ्यादृष्टौ परावर्त्तमानतया भावना सुगमैव, अघातिकर्मणामपि उत्कृष्टस्य भावनोक्ता, जघन्याजघन्यौ सूक्ष्मपर्याप्तकैकेन्द्रियस्य भवतोऽतः साद्यध्रुवौ तौ भावितावेवेति गाथार्थः ॥ ६५ ॥

(मलय०)—वेदनीयनामगोत्राणामनुत्कृष्टोऽनुभागसंक्रमः सादिवर्जस्त्रिप्रकारो भवति, तद्यथा—अनादिर्ध्रुवोऽध्रुवश्च। तथाहि—सूक्ष्मसंपरायेण क्षपकेण स्वगुणस्थानकस्य चरमसमये तेषां वेदनीयनामगोत्राणां सर्वोत्कृष्टोऽनुभागो बध्यते। स च बद्धः सन् बन्धावलिकायामतीतायां यावत्सयोगिचरमसमयस्तावत्संक्रामति। स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्टः, स चानादिः, आदेरभावात्। ध्रुवाध्रुवौ पूर्ववत्। तथा सर्वेषु मूलप्रकृतिभेदेषु उक्तशेषा भेदा अनुभागे—अनुभागविषये साद्योऽध्रुवाश्च वेदितव्याः। तत्र चतुर्णां घातिकर्मणामुत्कृष्टानुत्कृष्टजघन्येषु जघन्यः सादिरध्रुवश्च भावित एव। उत्कृष्टः कदाचिन्मिथ्यादृष्टेर्भवति, अन्यदा त्वनुत्कृष्टः, तत एतौ साद्यध्रुवौ। शेषाणां चतुर्णामघातिकर्मणां जघन्याजघन्योत्कृष्टेषु मध्ये उत्कृष्टो भावित एव। जघन्यः सूक्ष्मस्यापर्याप्तस्यैकेन्द्रियस्य लभ्यते, नान्यस्य, अजघन्योऽपि तस्य, तत एतावपि साद्यध्रुवौ ॥६५॥ ॥६४॥

मूलप्रकृतिष्वनुभागसंक्रमस्य साद्यादिप्ररूपयन्त्रम् ।

| प्रकृतीनां | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रु० | अना० | ध्रु० | सादिः | अध्रु० |
| ज्ञाना० दर्शना० विघ्नानां | — | भव्यानां | अक्षी-णमो हानां | अभ-व्या० | १२ मे समयाधि काव० शेषे | सादित्वात् | उत्कृष्टत्वा गतानां प्र थमसमये | सादि-त्वात् | — | — | नियतका लत्वात् | सादित्वात् |
| मोहस्य | ११ तः प-तितस्यापि कसम्य० | ” | सादि त्वाना प्राप्तौ | ” | क्षप० १०मे समयाधि-काय० शेषे | ” | ” | ” | — | — | ” | ” |
| आयुषः | अहतप्रभू तानुभा-गानां | सादित्वात् | — | — | हतप्रभूता-नुभाग-क्षीयानां | ” | उत्कृष्टा-बन्धेनां बन्धका० | भव्यानां | साप्र-प्राप्ता नां | अभ व्यानां | उ० सत्ताका नां मनुष्या-णामनुत्तरा-णां च | ” |
| नामगोत्र-वेदनीयानां | ” | ” | — | — | ” | ” | ” | ” | प्राप्तेरभा-वात् | ” | क्षपकाणां १२-१३ मे | ” |

अजहण्णो चउभेओ पढमगसंजलणनोकसायाणं। साइयवज्जो सो च्चिय जाणं खवगो खवियमोहो ॥६६॥

(स्वो०)—अजघन्यानुभागसंक्रमोऽनन्तानुबन्धिसञ्ज्वलननोकपायाणां सप्तदशप्रकृतीनां चतुर्विधो भवति। अनन्तानुबन्धिवर्जानां स्वक्षपकाणां जघन्यस्थितिसंक्रमकाले जघन्यानुभागसंक्रमो भवति, अनन्तानुबन्धिनां तूद्वलितबद्धानां बन्धावलिकायां गतायां जघन्यो भवति, तच्छेपोऽजघन्यः, उपशमश्रेण्यां उपशान्तकपायस्थानात् प्रतिपततः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत्। सादिवर्ज्जस्त्रिविधोऽजघन्यानुभागसंक्रमो भवति ज्ञानान्तरायदशकदर्शनपट्कानां पोडशानां प्रकृतीनाम्। कथम्? क्षीणकपायस्य समयाधिकावलिकाशेपायां स्थितौ जघन्यानुभागसंक्रमः, स च सादिरध्रुवः, तच्छेपोऽजघन्यः, तेपामनादिसद्भावादनादिः, ध्रुवाध्रुवौ प्राग्वदिति गाथार्थः ॥ ६६ ॥

(मलय०)—कृता मूलप्रकृतीनां साद्यादिप्ररूपणा, सम्प्रत्युत्तरप्रकृतीनां तां चिकीर्पुराह—प्रथमानामनन्तानुबन्धिनां संज्वलनानां नोकपायाणां च, सर्वसंख्यया सप्तदशप्रकृतीनामजघन्योऽनुभागसंक्रमश्चतुर्भेदः, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि—एतेपामनन्तानुबन्धिवर्जानां त्रयोदशप्रकृतीनां स्वस्वक्षयपर्यवसानावसरे जघन्यस्थितिसंक्रमकाले जघन्योऽनुभागसंक्रमः प्राप्यते। अनन्तानुबन्धिनां पुनरुद्वलनासंक्रमेणोद्वल्य भूयोऽपि मिथ्यात्वप्रत्ययतो बद्धानां बन्धावलिकायामतीतायां द्वितीयावलिकायाः प्रथमसमये जघन्योऽनुभागसंक्रमः। एतदन्य पुनः सर्वोऽप्येतासां सप्तदशप्रकृतीनामजघन्यः, स चोपशमश्रेण्यामुपशान्तानामेतासां न भवति, ततः प्रतिपाते च पुनर्भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया। तथा यासां प्रकृतीनां पञ्चविधज्ञानावरणस्त्यानर्द्धित्रिकवर्जपट्दर्शनावरणपञ्चविधान्तरायरूपाणां पोडशानां क्षपकः—क्षपितमोहो भवति तासां स एवाजघन्यानुभागसंक्रमः

सादिवर्जस्त्रिप्रकारो भवति, तद्यथा—अनादिर्ध्रुवोऽध्रुवश्च। तथाहि—एतेषां षोडशकर्मणां जघन्यानुभागसंक्रमः क्षीणकषायस्य गुणस्थानकस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य प्राप्यते, ततोऽन्यः सर्वोऽप्यजघन्यः, तस्य चादिर्न विद्यते इत्यनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया ॥६६॥

सुभधुवचउवीसाए होइ अणुक्कोस साइपरिवज्जो। उज्जोयरिसभओरालियाण चउहा दुहा सेसा ॥६७॥

(स्वो०)—शुभाश्च ताः ध्रुवाश्च शुभध्रुवाः, तासां शुभध्रुवचतुर्विंशतेरनुत्कृष्टानुभागसंक्रमः सादिवर्ज्जस्त्रिविधो भवति। कास्ताः? त्रसादिदशकसातपञ्चेन्द्रियजात्यगुरुलघूच्छ्वासनिर्माणप्रशस्तविहायोगतिचतुरस्रसंस्थानपराघातकार्मणतैजसशुभवर्णचतुष्कमिति चतुर्विंशतिः, शुभवर्णैकादशकं कार्मणसप्तकं ये तु गृह्णन्ति तेषां षड्विंशत् भवति, उभयत्राप्यविरोधः। कथं त्रिविधः संक्रमो भवति? एतद्भावयति—आसां क्षपकश्रेण्यां स्वबन्धकैः स्वान्तसमये उत्कृष्टानुभागो बद्धस्तं बन्धावलिकायाः परतस्तदुपरितनाः सयोग्यन्तसमयं यावदुत्कृष्टानुभागं संक्रामयन्ति, अतोऽसौ सादिरध्रुवः,तदन्यः सर्वोऽप्यनुत्कृष्टः, तासां ध्रुवसत्ताकत्वादनादिः, ध्रुवाध्रुवौ प्राग्वत्। उद्योतप्रथमसंहननौदारिकसप्तकानां चतुर्द्धा भवति। कथम्? उद्योतवर्जानामेतासां सम्यग्दृष्टिरत्यन्तविशुद्ध्यमानपरिणामो देव उत्कृष्टमनुभागं बध्नाति, बन्धावलिकायाः परतः स एव संक्रामयति। उद्योतस्य तु सप्तमपृथिव्यां नारकः सम्यक्त्वं प्रतिपत्तुकामः मिथ्यादृष्टिरुत्कृष्टमनुभागं बध्नाति, बन्धावलिकायाः परतः स एव संक्रामयति, जघन्यतोऽन्तर्मुहूर्त्तम्, उत्कृष्टे द्वे षट्षष्टी सागरोपमाणाम्, ततोऽनुत्कृष्टः सादिः, तत्स्थानमप्राप्तस्यानादिः,ध्रुवाध्रुवौ प्राग्वत्। 'दुहा सेस' त्ति—उक्तानामुक्तशेषाः संक्रमाः, अनुक्तानां प्रकृतीनां चत्वारोऽपि संक्रमा द्विधाः—साद्यध्रुवा भवन्ति। कथं? सप्तदशानां षोडशानां च जघन्यानुभागसंक्रमः प्रागेवाभिहितः, उत्कृष्टानुत्कृष्टौ मिथ्यादृष्टौ भवतः, अतः

परावर्त्तकत्वात् साद्यध्रुवौ भावितौ। एवमेव षट्त्रिंशत्प्रकृतीनामुत्कृष्टः प्रागुक्तः, जघन्याजघन्यौ सूक्ष्मैकेन्द्रिये हतानुभागसत्कर्म्मणि भवतोऽतः साद्यध्रुवौभावितौ। एवं शेषाणां–सप्तदशषोडशनवषट्त्रिंशद्वर्जितानामशीतिप्रकृतीनाम्। पञ्चेन्द्रियपर्याप्ते शुभपरिणामेन वैक्रियनवकोच्चैर्गोत्रातपतीर्थङ्कराहारकसप्तकमनुजद्विकायुस्त्रिकाणां चतुर्विंशतिशुभप्रकृतीनां उत्कृष्टानुभागबन्धो भवति, अशुभपरिणामेन अशुभशेषपट्पञ्चाशत्प्रकृतीनां उत्कृष्टानुभागबन्धो भवति। सर्वासामपि जघन्यः सूक्ष्मैकेन्द्रिये हतानुभागसत्कर्मणि[जघन्योऽपि] भवति। अतश्चत्वारोऽप्यनुभागसंक्रमाः साद्यध्रुवा भाविता एव ॥ ६७ ॥ समाप्तोऽनुभागसंक्रम इति ॥

(मलय०)—शुभाश्च ता ध्रुवाश्च शुभध्रुवाः, तासां चतुर्विंशतिः शुभध्रुवचतुर्विंशतिः, तस्याः त्रसादिदशकसातवेदनीयपञ्चेन्द्रियजात्यगुरुलघूच्छ्वासनिर्माणप्रशस्तविहायोगतिसमचतुरस्रसंस्थानपराघाततैजसकार्मणशुभवर्णादिचतुष्करूपायाः, इह यदा तैजसकार्मणग्रहणात्तैजससप्तकं गृह्यते शुभवर्णादिचतुष्कस्थाने तु शुभवर्णाद्येकादशकं तदा एषा चतुर्विंशतिः षट्त्रिंशद्भवति, अत एव चैतस्याश्चतुर्विंशतेः स्थाने कर्मप्रकृतौ षट्त्रिंशदुपात्ता, 'तिविहो छत्तीसाए णुक्कोसो' इति विवक्षावशाच्च बन्धनवर्णादिभेदग्रहणे न विरोधः, एतस्याः शुभध्रुवचतुर्विंशतेरनुत्कृष्टोऽनुभागसंक्रमः सादिपरिवर्जस्त्रिधा भवति, तद्यथा–अनादिर्ध्रुवोऽध्रुवश्च। तथाहि–एतासां क्षपकश्रेण्यां क्षपक आत्मीयात्मीयबन्धव्यवच्छेदकाले उत्कृष्टमनुभागं बध्नाति, बद्ध्वा च बन्धावलिकायामतीतायां संक्रमयितुमारभते, तं च तावत्संक्रमयति यावत्सयोगिकेवलिचरमसमयः। ततः क्षपकसयोगिकेवलिवर्जस्य शेषस्यानुत्कृष्ट एवानुभाग एतासां संक्रामति। तस्य चादिर्न विद्यते इत्यनादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया। तथा उद्योतवज्रर्षभनाराचसंहननौदारिकसप्तकानामनुत्कृष्टोऽनुभागसंक्रमश्चतुर्विधस्तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–एतेषामुद्योतवर्जानामष्टानां कर्मणां सम्यग्दृष्टिर्देवोऽत्यन्तविशुद्धपरिणाम उत्कृष्टमनुभागं

मनुष्या बन्धावलिकायामतीतायां संक्रमयति, उद्योतनाम्नः सप्तमनरकपृथिव्यां वर्तमानो नारकी मिथ्यादृष्टिः सम्यक्त्वं प्रतिपत्तुकाम उत्कृष्टमनुभागबन्धं करोति, ततो बन्धावलिकायामतीतायां संक्रमयति, स च जघन्येनान्तर्मुहूर्त्तम्, उत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत्। यद्यपि सप्तमनरकपृथिव्यां चरमेऽन्तर्मुहूर्तेऽवश्यं मिथ्यात्वं गच्छति तथाप्यग्रेतनभवे अन्तर्मुहूर्त्तानन्तरं यः सम्यक्त्वं प्रतिपद्यते स इह गृह्यते, ततोऽपान्तराले स्तोको मिथ्यात्वकालो भवन्नपि चिरन्तनग्रन्थेषु न विवक्षित इत्यस्माभिरपि द्वे षट्षष्टी सागरोपमाणां यावदित्युक्तम्। तत उत्कृष्टात्प्रतिपतितस्यानुत्कृष्टः, स च सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया। 'दुहा सेसत्ति'—उक्तानां प्रकृतीनामुक्तशेषाः संक्रमाः, अनुक्तानां तु प्रकृतीनां चत्वारोऽपि संक्रमा द्विधा, तद्यथा—साद्योऽध्रुवाश्च। तथाहि—सप्तदशानां षोडशानां च उत्कृष्टोऽनुभागसंक्रमो मिथ्यादृष्टेः संक्लिष्टे वर्तमानस्य प्राप्यते, शेषकालं तु तस्याप्यनुत्कृष्टः, तत एतौ द्वावपि साद्यध्रुवौ। जघन्यो भावित एव। तथा शुभध्रुवचतुर्विंशतेश्च जघन्योऽनुभागसंक्रमः सूक्ष्मैकेन्द्रिये हतप्रभूतानुभागसत्कर्मणि प्राप्यते, प्रभूतानुभागसत्कर्मघाताऽभावे तु तस्मिन्नप्यजघन्यः, तत एतौ साद्यध्रुवौ, उत्कृष्टो भावित एव। शेषाणां प्रकृतीनां संज्ञिनि पञ्चेन्द्रिये पर्याप्ते शुभानां प्रकृतीनां विशुद्धौ अशुभानां च संक्लेशे उत्कृष्टोऽनुभागबन्धो लभ्यते, शेषकालं त्वनुत्कृष्टः, एवं संक्रमोऽपि, तत एतौ साद्यध्रुवौ। जघन्योऽनुभागसंक्रमः पुनः सूक्ष्मैकेन्द्रिये हतप्रभूतानुभागसत्कर्मणि प्राप्यते, प्रभूतानुभागसत्कर्मघाताऽभावे तु तस्मिन्नप्यजघन्यः, तत एतावपि साद्यध्रुवौ ॥६७॥ समाप्तोऽनुभागसंक्रमः ॥

उत्तरप्रकृतिष्वनुभागसंक्रमस्य साद्यादिभङ्गयन्त्रम् ।

| प्रकृतीनाम् | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रु० | अना० | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रु० |
| ९नोक० संज्व० ४ नाम् | उप० श्रेणितः पतितानां | भ० | साद्य-प्राप्ता-नां | अभ-व्या० | स्वस्वक्षय-समये | सादि-त्वात् | उत्कृष्टानु-भागसंक्रमा-त्पतितानां | सादि-त्वात् | — | — | उत्कृ० सं-क्लेशानां मिथ्यादृशां | सादित्वात् |
| अनन्तानु० ४ नाम् | " | " | " | " | पुनर्बन्धप्रि-तीयावलि-काद्यसमये | " | " | " | — | — | " | " |
| ज्ञाना० ५–दर्श० ६–अन्त० ५ नाम् | — | " | आदेरभावा-त् | " | १२ मे समयाधि-काव० शेषे | " | " | " | — | — | " | " |
| सात–पंचें–तै० ७–समच–शुभ वर्णादि ११–अ-गु०-उच्छ्वा०– | अहतप्रभू-तानुभाग-सत्ताकानां | सादित्वात् | — | — | हतप्रभूता नुभाग-सत्कर्म सूक्ष्मे- | " | — | भव्यानां | क्षपक सयो-गिव-र्जशे- | अभ-व्यानां | स्वस्वक्षप-ककालात् सयोगिगु-णपर्यन्तव- | " |

उक्तोऽनुभागसंक्रमः, अधुना प्रदेशसंक्रममाह तल्लक्षणमादावेवोच्यते—

विज्झाउव्वलणअहापवत्तगुणसव्वसंकमेहि अणू। जं नेइ अण्णपगइं पएससंकामणं एयं ॥६८॥

(स्वो०)—विध्यातसंक्रम उद्वलनासंक्रमो यथाप्रवृत्तसंक्रमो गुणसंक्रमः सर्वसंक्रमश्च, एतैः पञ्चभिः संक्रमैः कर्मपरमाणून् यन्न-यन्त्यन्यप्रकृतिं—तत्स्वरूपेण व्यवस्थापयति, प्रदेशसंक्रमणमेतदुच्यत इति गाथार्थः ॥६८॥

(मलय०)—तदेवमुक्तोऽनुभागसंक्रमः,सम्प्रति प्रदेशसंक्रमाभिधानावसरः, तत्र चैते अर्थाधिकाराः—भेदो, लक्षणम्, साद्यादिप्ररूपणा, उत्कृष्टप्रदेशसंक्रमस्वामी, जघन्यप्रदेशसंक्रमस्वामी च। तत्र भेदलक्षणप्रतिपादनार्थमाह—इह प्रदेशसंक्रमः पञ्चधा, तद्यथा—विध्यातसंक्रमः, उद्वलनासंक्रमः, यथाप्रवृत्तसंक्रमः, गुणसंक्रमः, सर्वसंक्रमश्च। एतैः पञ्चभिः संक्रमणैरणून्—कर्मपरमाणून्—अन्यां प्रकृतिं नयति, अन्यस्यां पतद्ग्रहप्रकृतौ नीत्वा निवेशयति, यत एतत्कर्मपरमाणूनां विध्यातसंक्रमादिभिरन्यप्रकृतौ नयनं—प्रदेशसंक्रमणं—प्रदेशसंक्रम उच्यते। विध्यातसंक्रमादिभिरणून् अन्यप्रकृतिं यन्नयति स प्रदेशसंक्रम इत्युक्तम्॥ ६८॥

विध्यातसंक्रमस्य लक्षणमाह—

जाण न बंधो जायइ आसज्ज गुणं भवं व पगईणं। विज्झाओ ताणंगुलअसंखभागेण अण्णत्थ॥६९॥

(स्वो०)—यासां प्रकृतीनां गुणं वा भवं वाऽऽश्रित्य बन्धो न जायते—नोत्पद्यते तासां विध्यातसंक्रमो भवति। एतद्भावयति—वैक्रि-यैकादशकैकेन्द्रियविकलेन्द्रियजातयः सूक्ष्मत्रिकस्थावरातपप्रकृतयो मिथ्यात्वहेतौ सत्यपि नारकाः भवप्रत्ययं न बध्नन्ति, संहननषट्कं

नतुरस्त्ररहितसंस्थानानि नपुंसकवेदमनुजद्विकौदारिकसप्तकतिर्यगेकान्तयोग्यादशदुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतितीर्थङ्कराणां मिथ्यात्वाविरतिसम्यक्त्वहेतुभिर्युक्तास्तथाऽप्यसंख्येयवर्षायुष्कस्तद्भवस्थाः तद्भवप्रत्ययं न बन्धका भवन्ति, एवं देवेष्वपि भावना कर्त्तव्या। स च विध्यातसंक्रमः प्रायो यथाप्रवृत्तावसाने एवंविधप्रकृतीनां भवति। तस्य प्रमाणं यावन्मात्रं प्रथमसमये (परप्रकृतौ) दलप्रक्षेपः तत्प्रमाणप्रक्षेपः प्रक्षिप्यमाणं प्रकृतेः क्षेपदलं अङ्गुलासंख्येयभागेनान्यत्र संक्रामयति। किमुक्तं भवति ? अङ्गुलासंख्येयभागमात्रक्षेत्रप्रदेशप्रमाणैः प्रक्षेपैरसंख्येयोत्सर्पिण्यवसर्पिणीप्रमाणैर्वा समयैः सर्वप्रकृतिदलमन्यप्रकृतौ संक्रामयतीति गाथार्थः ॥६९॥

(मलय०)—तत्र प्रथमतो विध्यातसंक्रमस्य लक्षणमाह—यासां प्रकृतीनां गुणं वा भवं वा समाश्रित्य बन्धो न जायते—न भवति तासां विध्यातसंक्रमः प्रवर्त्तते। कासां भवतो गुणतो वा बन्धो न भवतीति चेत्, उच्यते—इह या मिथ्यादृष्टिगुणस्थानान्ताः षोडशप्रकृतयस्तासां सासादनादिषु गुणप्रत्ययतो बन्धो न भवति, सासादनान्तानां पञ्चविंशतिप्रकृतीनां सम्यग्मिथ्यादृष्ट्यादिषु, अविरतसम्यग्दृष्ट्यन्तानां दशानां देशविरतादिषु, देशविरतान्तानां चतसृणां प्रमत्तादिषु, प्रमत्तान्तानां षण्णामप्रमत्तादिषु गुणप्रत्ययाद्बन्धो न भवति, ततस्तासां तत्र विध्यातसंक्रमः प्रवर्त्तते, तथा वैक्रियसप्तकाहारकसप्तकदेवद्विकनरकद्विकैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणापर्याप्तातपलक्षणानां सप्तविंशतिप्रकृतीनां नैरयिका भवप्रत्ययतो बन्धका न भवन्ति, एकेन्द्रियजात्यातपस्थावरनाम्नामपि सनत्कुमारादयः, तिर्यग्द्विकोद्योतयोरपि आनतादयः, संहननषट्कसमचतुरस्रवर्जसंस्थानपञ्चकनपुंसकवेदमनुजद्विकौदारिकसप्तकतिर्यगेकान्तप्रायोग्यप्रकृतिदशकदुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतिप्रकृतीनां त्वसंख्येयवर्षायुषः, एवं यस्य यस्य यत् यत् कर्म गुणप्रत्ययतो भवप्रत्ययतो वा न बन्धमायाति तत्तस्य विध्यातसंक्रमयोग्यं वेदितव्यम्। दलिकप्रमाणनिरूपणार्थमाह—'अंगुलअसंखभागेण अन्नत्थ'। यावत् प्र-

माणं कर्मदलिकं प्रथमसमये विध्यातसंक्रमेण परप्रकृतिषु प्रक्षिप्यते तेन मानेन शेषं दलिकं प्रक्षिप्यमाणं अंगुलस्यासंख्येयतमेन भागेन सर्वं निक्षिप्यते। इयमत्र भावना—यावत्प्रमाणं प्रथमसमये कर्मदलिकं विध्यातसंक्रमेण प्रकृत्यन्तरे प्रक्षिप्यते तावत्प्रमाणैर्दलिकैः शेषं सर्वमपि तत्प्रकृतिगतं दलिकमपह्रियमाणमंगुलमात्रस्य क्षेत्रस्य असंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्संख्याकैरपह्रियते, इयं क्षेत्रतो मार्गणा, कालतस्त्वसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपहारः। अयं च विध्यातसंक्रमः प्रायो यथाप्रवृत्तसंक्रमावसाने वेदितव्यः॥६९

उद्वलनसंक्रमलक्षणमाह—

**पलियस्ससंखभागं अंतमुहुत्तेण तीए उव्वलइ। एवं पलियासंखियभागेणं कुणइ निल्लेवं ॥७०॥**

(स्वो०)—पल्योपमासंख्येयभागमात्रस्थितेः खण्डमुत्किरति—विनाशयत्यन्तर्मुहूर्त्तेन आहारकादीनां प्रकृतीनाम्। एवम्—अनेन विधिना पल्योपमासंख्येयभागमात्रेण कालेन करोति निर्लेपं—सर्वदलसंक्रममिति गाथार्थः ॥ ७० ॥

(मलय०)—संप्रत्युद्वलनासंक्रमस्य लक्षणमाह—उद्वलनयोग्यानां प्रकृतीनां प्रथमतः पल्योपमासंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तेन कालेनोत्किरति। ततः पुनरपि द्वितीयं स्थितिखण्डं पल्योपमासंख्येयभागमात्रमेवान्तर्मुहूर्त्तेन कालेनोत्किरति। एवमन्तर्मुहूर्त्तेनान्तर्मुहूर्त्तेन पल्योपमासंख्येयभागमात्रं स्थितिखण्डं खण्डयन् पल्योपमासंख्येयभागमात्रेण कालेन तत्तदुद्वल्यमानं कर्म निर्लेपं करोति—सामस्त्येन निःसत्ताकं करोतीत्यर्थः ॥७०॥

विशेषमाह—

**पढमाओ बीयखण्डं विसेसहीणं ठिईए अवणेइ। एवं जाव दुचरिमं असंखगुणियं तु अंतिमयं ॥७१॥**

(स्वो०)—प्रथमस्थितिखण्डाद् द्वितीयं स्थितिखण्डं विशेषहीनमन्तर्मुहूर्त्तेनापनयति—विनाशयति। एवमनेन विधिना यावद् द्विचरम स्थितिखण्डम्। एव कानिचित्स्थितिखण्डानि प्रथमादसख्येयभागहीनानि, कानिचित्संख्येयभागहीनानि, कानिचित्संख्येयगुणहीनानि, कानिचिदसंख्येयगुणहीनानि। तुशब्दाद्दलमाश्रित्यान्तिमस्थितिखण्डं प्रथमादसख्येयगुणम्, स्थितिस्थानमाश्रित्यासख्येयभागमिति गाथार्थः ॥७१॥

(मलय०)—अत्रैव विशेषमाह–'पढमाओ बीय' इत्यादि। प्रथमात्स्थितिखण्डाद् द्वितीय स्थितिखण्ड स्थितेरपेक्षया विशेषहीनमपनयति–खण्डयति, द्वितीयादपि स्थितिखण्डात्तृतीयं स्थितिखण्ड स्थित्यपेक्षया विशेषहीन खण्डयति, एव तावद्वाच्यं यावद् द्विचरम स्थितिखण्डम्। इयमत्र भावना–इह द्विधा प्ररूपणा, अनन्तरोपनिधया परम्परोपनिधया च। तत्रानन्तरोपनिधया प्ररूपणा कृता, परम्परोपनिधया पुनरियम्–प्रथमस्थितिखण्डापेक्षया कानिचित्स्थितिखण्डानि स्थित्यपेक्षया असंख्येयभागहीनानि, कानि चित्सख्येयभागहीनानि, कानिचित्संख्येयगुणहीनानि, कानिचिदसंख्येयगुणहीनानि। यदा तु प्रदेशपरिमाण चिन्त्यते तदा प्रथमस्थितिखण्डाद् द्वितीयं स्थितिखण्डं दलिकापेक्षया विशेषाधिकम्, एव तावद्वाच्य यावद् द्विचरमं स्थितिखण्डम्। इयमनन्तरोपनिधया प्ररूपणा। परंपरोपनिधया पुनरियं–प्रथमात्स्थितिखण्डाद् दलिकमपेक्ष्य किञ्चिदसख्येयभागाधिकम्, किञ्चित्संख्येयभागाधिकम्, किञ्चित्सख्येयगुणाधिकम्, किञ्चिदसख्येयगुणाधिकम्। 'असखगुणिय तु अतिमय'ति अन्तिमं–खण्ड द्विचरमखण्डात् स्थित्यपेक्षया असख्येयगुणम्। तुशब्दस्याधिकार्थसमूचनादन्तिमं स्थितिखण्डं प्रथमस्थितिखण्डापेक्षया दलमधिकृत्याऽसख्येयगुणम्, स्थित्यपेक्षया त्वसख्येयभागकल्पम् ॥७१॥

अतस्तस्यैव दलस्य प्रक्षेपविधिरुच्यते—

**खंडदलं सट्ठाणे समए समए असंखगुणणाए। सेढीए परठाणे विसेसहीणाए संछुभइ ॥७२॥**

(स्वो०)—उत्कीर्यमाणस्थितीनां प्रथमसमये स्तोकं दलमुत्किरति, तस्माद् द्वितीयसमयेऽसंख्येयगुणम्, एवं तृतीयादिष्वप्यसंख्येयगुणवृद्ध्या नेयम्। तच्च प्रथमसमयोत्कीर्णं कुत्र दीयते? तदाह–परस्थाने स्तोकं, स्वस्थाने तस्मादसंख्येयगुणम्, द्वितीयादिषु स्वस्थानेऽसंख्येयगुणं परस्थाने विशेषहीनं दलं प्रक्षिपति, अनेन विधिना पल्योपममात्रस्थितीनां दलमन्तर्मुहूर्त्तेन निर्लेपयति, तच्छेषाण्यपि स्थितिखण्डान्येवमेव संक्रामयतीति गाथार्थः ॥७२॥

(मलय०)—स्थितिखण्डानां च द्विचरमपर्यन्तानामुत्किरणविधिरयम्–प्रथमे समये स्तोकं दलिकमुत्किरति, द्वितीये समये ततोऽसंख्येयगुणम्, ततोऽपि तृतीये समये असंख्येयगुणम्, एवं तावद्वाच्यं यावदन्तर्मुहूर्त्तस्य चरमसमयः, गुणकारश्च पल्योपमासंख्येयभागलक्षणो वेदितव्यः। एष प्रथमखण्डस्योत्किरणविधिः। एवं सर्वेष्वपि द्विचरमपर्यन्तेषु स्थितिखण्डेषु द्रष्टव्यम्। उत्कीर्य दलिकं क्व प्रक्षिपतीति चेद्, उच्यते–'खण्डदलं'इत्यादि। खण्डानां–स्थितिखण्डानां दलं–दलिकं स्वस्थाने समये समये असंख्येयगुणनया श्रेण्या संछुभति–प्रक्षिपति, परस्थाने तु विशेषहीनया श्रेण्या, तद्यथा–प्रथमे स्थितिखण्डे प्रथमे समये यत्कर्मदलिकमन्यप्रकृतिषु प्रक्षिपति तत्सर्वस्तोकम्, यत् स्वस्थान एवाधस्तात्प्रक्षिपति तत्ततोऽसंख्येयगुणम्, ततोऽपि यद् द्वितीये समये स्वस्थाने प्रक्षिप्यते तदसंख्येयगुणम्, परप्रकृतिषु पुनः प्रक्षिप्यमाणं प्रथमसमयपरस्थानप्रक्षिप्ताद्विशेषहीनम्। ततोऽपि यत्तृतीये समये स्वस्थाने प्रक्षिप्यते, तद् द्वितीयसमयस्वस्थानप्रक्षिप्तादसंख्येयगुणम्, यत्पुनः परप्रकृतिषु प्रक्षिप्यते तद् द्वितीयसमयपरस्थानप्रक्षिप्ताद्विशेषहीनम्, एवं तावद्वाच्यं यावद- ||७०||

न्तर्मुहूर्तचरमसमयः। एवं सर्वेष्वपि स्थितिखण्डेषु द्विचरमस्थितिखण्डपर्यवसानेषु द्रष्टव्यम्। चरमस्थितिखण्डेषु पुनर्यत्प्रदेशाग्रं तदुदयावलिकागतं मुक्त्वा शेषं सर्वमपि परस्थाने प्रक्षिपति। तथैवम्—प्रथमसमये स्तोकम्, द्वितीयसमये असंख्येयगुणम्, ततोऽपि तृतीयसमये असंख्येयगुणम्, एवं तावद्वाच्यं यावदन्तर्मुहूर्तचरमसमयः। चरमसमये तु यत्परप्रकृतिषु प्रक्षिप्यते दलिकं स सर्वसंक्रम उच्यते ।।७२।।

दुचरिमखंडस्स दलं चरिमे जं देइ सपरट्ठाणंमि। तम्माणेणस्स दलं पल्लंगुलसंखभागेहिं ।।७३।।

(चूर्णि०)—द्विचरमस्थितिखण्डकचरमसमये यत्प्रदेशाग्रं स्वकीयचरमस्थितिखण्डके संक्रमयतीति तन्मानेन चरमस्थितिखण्डस्य दलं प्रक्षिप्यमाणं २ पल्योपमासंख्येयभागसमयैरन्यत्र नयति, परस्थाने यदीयते तन्मानेन असंख्येयोत्सर्पिण्यवसर्पिणीसमयैरङ्गुलासंख्येयभागमात्रैः क्षेत्रप्रदेशैर्वा अन्यत्र तद्दलं नयति। तदपि चरमस्थितिखण्डकदलमसंख्येयगुणवृद्धया परस्थाने उदयावलिकाबाह्यं नयति। चरमस्थितिखण्डकस्य यश्चरमप्रक्षेपः स सर्वसंक्रम इति गाथार्थः ॥ ७३ ॥

(मलय०)—द्विचरमस्थितिखण्डस्य चरमसमये यत्प्रदेशाग्रं स्वस्थाने एव—स्वकीयचरमस्थितिखण्डरूपे ददाति—प्रक्षिपति तेन मानेन 'अस्य' चरमस्थितिखण्डस्य दलिकं प्रतिसमयमपह्रियमाणमपह्रियमाणं पल्योपमासंख्येयभागमात्रेण कालेन निःशेषमपह्रियते। परस्थाने परप्रकृतिरूपे यत्प्रक्षिपति दलिकं तेन मानेनापह्रियमाणमपह्रियमाणमङ्गुलमात्रक्षेत्रासंख्येयतमेन भागेनापह्रियते। अङ्गुलमात्रस्य क्षेत्रस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्ति चरमस्थितिखण्डे यथोक्तप्रमाणानि दलिकखण्डानि भवन्तीत्यर्थः। इयं क्षेत्रतो मार्गणा। कालतः पुनरियं—यावत्प्रमाणं द्विचरमस्थितिखण्डस्य कर्मदलिकं चरमसमये परप्रकृतिषु प्रक्षिपति तावत्प्रमाणं चेच्चरमस्थितिखण्डस्य दलिकं प्रतिसमयमपह्रियते तर्हि तच्चरमं स्थितिखण्डमसंख्येयाभिरुत्सर्पिणीभिर्निर्लेपीभवति। ।।७३।।

उद्वलनविधिरुक्तः, उद्वलनप्रकृतीनां स्वामिनमाह—

**एवं उव्वलणासंकमेण नासेइ अविरओहारं। सम्मोऽणमिच्छमीसे छत्तीसऽनियट्टि जा माया ॥७४॥**

(स्वो०)—अनेनोद्वलनविधिना विनाशयत्यविरतो अन्तर्मुहूर्त्तात्परतः तत्सत्कर्माहारकसप्तकं उद्वलयति, सम्यग्दृष्टिर्देशविरतिसर्वविरतिगुणयुक्तो वा अनन्तानुबन्धिमिथ्यात्वसम्यग्मिथ्यात्वानि पूर्वविधिना, षट्त्रिंशत्प्रकृतीरनिवृत्तिबादर उद्वलयति, मध्यमाष्टकषायनवनोकषायसंज्वलनत्रिकस्त्यानर्द्धित्रिकनामत्रयोदशकाख्या इति गाथार्थः ॥७४॥

(मलय०)—तदेवमुक्तमुद्वलनासंक्रमलक्षणम्, सम्प्रत्युद्वल्यमानप्रकृतीनां स्वामिन आह—एवमनेन प्रकारेण उद्वलनासंक्रमेणाविरत आहारकसप्तकसत्कर्मा अविरतिभावगमनादारभ्यान्तर्मुहूर्त्तात्परत आहारकसप्तकं नाशयति—उद्वलयति। तथा 'सम्मो'—सम्यग्दृष्टिः—अविरतसम्यग्दृष्टिर्देशविरतः सर्वविरतो वा अनन्तानुबन्धिमिथ्यात्वसम्यग्मिथ्यात्वानि पूर्वप्रकारेणोद्वलयति। तथा मध्यमाष्टकषायनवनोकषायस्त्यानर्द्धित्रिकनामत्रयोदशकसंज्वलनक्रोधमानमायारूपाः षट्त्रिंशत्प्रकृतीरनिवृत्तिबादर उक्तप्रकारेणोद्वलयति। 'जा माय' त्ति—यावत्संज्वलनमाया तावदनिवृत्तिबादर उद्वलयति। संज्वलनमायापर्यन्ताः षट्त्रिंशत्प्रकृतीरनिवृत्तिबादर उद्वलयतीत्यर्थः ॥७४॥

**सम्ममीसाइं मिच्छो सुरदुगवेउव्विछक्कमेगिंदी। सुहमतसुच्चमणुदुगं अंतमुहुत्तेण अणियट्टी ॥७५॥**

(स्वो०)—सम्यक्त्वसम्यग्मिथ्यात्वे मिथ्यादृष्टिरुद्वलयति, पश्चान्नवतिसत्कर्मा देवद्विकमेकेन्द्रिय उद्वलयति, ततः स एव वैक्रियसप्तकं चतुष्कं वा सनरकद्विकमुद्वलयति, सूक्ष्मत्रसो—वाय्वग्निकायिकः उच्चैर्गोत्रमुद्वलयति, पश्चान्मनुजद्विकमुद्वलयति प्रागुक्तविधिना।

कलापवादमाह–पल्योपमासंख्येयभागमात्रेण कालेन प्रागुद्वलनं कथितम्, अन्तर्मुहूर्तेनानिवृत्तिबादरः पट्त्रिंशत्प्रकृतीरुद्वलयतीति गाथार्थः ॥ ७५ ॥

(मलय०)—सम्यक्त्वसम्यग्मिथ्यात्वे मिथ्यादृष्टिरष्टाविंशतिसत्कर्मा पूर्वप्रकारेण उद्वलयति, पश्चात्सप्तविंशतिसत्कर्मा देवद्विकमेकेन्द्रियः, ततोऽनन्तरं स एव वैक्रियपट्क—वैक्रियशरीरवैक्रियाङ्गोपाङ्गवैक्रियबन्धनवैक्रियसंघातननरकद्विकरूपं युगपदुद्वलयति। तथा सूक्ष्मत्रस —ते-जस्कायिको वायुकायिको वा उक्तप्रकारेणोच्चैर्गोत्रमुद्वलयति, ततः स एव पश्चान्मनुजद्विकम्। 'पलियासंखियभागेण कुणइ निल्लेवं' इति यत्प्राक्कालप्रमाणमुक्तं तत्रापवादमाह—'अंतमुहुत्तेण अनियट्टी'—अनिवृत्तिबादरः पट्त्रिंशत्प्रकृतीः प्रागुक्तस्वरूपा उक्तप्रकारेणान्तर्मुहूर्तेन का-लेन निःक्षेपा उद्वलयति। उपलक्षणमेतत्, तेन क्षपकस्यानन्तानुबन्धिमिथ्यात्वसम्यग्मिथ्यात्वानामप्युद्वलना आन्तर्मौहूर्तिकी द्रष्टव्या॥७५॥

यथाप्रवृत्तसंक्रमलक्षणमाह—

संसारत्था जीवा सबंधजोगाण तद्दलपमाणा। संकामे तणुरूवं अहापवत्तीऍ तो णाम ॥७६॥

(स्वो०)—संसारे तिष्ठन्तीति संसारस्थाः, के? जीवाः, ध्रुवबन्धिनीनां स्वबन्धयोग्यानां प्रकृतीनाम्, अध्रुवबन्धिन्यस्तु सर्वा अपि योग्या एव, तासां दलं, तत्प्रमाणेन स्तोकात्स्तोकं तदनुरूपं संक्रामयन्ति, यथाप्रवृत्त्या—यथा हीनमध्यमोत्कृष्टयोगानां प्रवृत्तिस्तथा तथा संक्रामयन्ति कर्मदलम्, अतोऽस्यैतन्नाम इति गाथार्थः ॥ ७६ ॥

(मलय०)—तदेवमुक्त उद्वलनासंक्रमः, सम्प्रति यथाप्रवृत्तसंक्रमस्य लक्षणमाह—'संसारत्था'—संसारान्तर्वर्तिनो जन्तवः स्वबन्धयोग्या-नां ध्रुवबन्धिनीनामध्रुवबन्धिनीनां च प्रकृतीनां यद्दलं तद्दलप्रमाणात्, अत्र षष्ठ्यर्थे पञ्चमी, ततश्चायमर्थः—तद्दलप्रमाणस्यानुरूपं सं-

क्रमयन्ति। इदमुक्तं भवति—ध्रुवबन्धिनीनामध्रुवबन्धिनीनां च यदि तत्काले प्रभूतं दलिकं बध्यते, कासाञ्चिदध्रुवबन्धिनीनां तद्बन्धयोग्यानां तदानीमबन्धे यदि प्रभूतं प्राग्बद्धं दलिकमास्ते, तर्हि प्रभूतं संक्रमयन्ति, स्तोकं चेत् तर्हि स्तोकमिति। कथं संक्रमयन्तीति चेदाह—यथाप्रवृत्त्या—यथा यथा जघन्यमध्यमोत्कृष्टानां योगानां प्रवृत्तिस्तथा तथा संक्रमयन्ति। एतदुक्तं भवति—जघन्ये योगे वर्त्तमानो जघन्यं दलिकं संक्रमयति, मध्यमे मध्यमम्, उत्कृष्टे चोत्कृष्टमिति। अत एव चास्य संक्रमस्यैतदेव नाम यदुत यथाप्रवृत्तसंक्रम इति। स्वबन्धयोग्यानामिति च ब्रुवाण आचार्य इदमुपलक्षयति—यद्यपि कासाञ्चिदध्रुवबन्धिनीनां प्रकृतीनां तत्काले बन्धो न विद्यते तथापि यासां तद्भवबन्धयोग्यता विद्यते तासां बन्धाभावेऽपि यथाप्रवृत्तसंक्रमः प्रवर्त्तते इति, अन्यथा 'बज्झमाणीणं' इति ब्रूयात् ॥ ७६ ॥

गुणसंक्रमलक्षणमाह—

**असुभाण पएसग्गं बज्झंतीसुं असंखगुणणाए। सेढीए अपुव्वाई छुभंति गुणसंकमो एसो ॥७७॥**

(स्वो०)—अशुभप्रकृतीनां प्रदेशाग्रं असंख्येयगुणवृद्ध्या अपूर्वकरणप्रवृत्तेरपूर्वकरणाद्या अबध्यमानानां बध्यमानासु यत् कर्मदलं संक्रामयन्त्येष गुणसंक्रम इति। कास्ताः? मिथ्यात्वातपनरकायुर्वर्जानां मिथ्यादृष्टियोग्यानां त्रयोदशानाम्, अनन्तानुबन्धितिर्यगायुरुद्योतवर्ज्जितानामेकोनविंशतेः सास्वादनयोग्यानाम्, यतो मिथ्यात्वानन्तानुबन्धिनस्तदारत एव अविरताद्याः क्षपयन्ति, आतपोद्योते शुभे, आयुषां परप्रकृतौ संक्रम एव नास्ति, अतस्तद्वर्ज्जनं कृतम्, अविरतस्याप्रत्याख्यानावरणचतुष्कम्, देशविरतस्य प्रत्याख्यानावरणचतुष्कम्, प्रमत्तस्य षट्कं—अस्थिराशुभायशःकीर्त्यसातारतिशोकाख्यम्, आसां षट्चत्वारिंशत्प्रकृतीनां अपूर्वकरणादेरेव गुणकृतः संक्रमो भवति। निद्राद्विकोपघातकुवर्णनवकहास्यरतिभयजुगुप्सानां स्वबन्धव्यच्छेदादारभ्य गुणसंक्रमो भवतीति गाथार्थः ॥७७॥ ॥७२॥

(मलय०)—सम्प्रति गुणसंक्रमलक्षणमाह—अबध्यमानानामशुभप्रकृतीनां संबन्धि प्रदेशाग्रं प्रतिसमयमसंख्येयगुणनया श्रेण्या बध्यमानासु प्रकृतिष्वपूर्वकरणाद्यः—अपूर्वकरणगुणस्थानकादयो यत् क्षिपन्ति—संक्रमयन्ति स गुणसंक्रमः, गुणेन प्रतिसमयमसंख्येयलक्षणेन गुणकारेण संक्रमो गुणसंक्रमः। तथाहि—मिथ्यात्वक्षपणारम्भायुर्वर्जानां मिथ्यादृष्टियोग्यानां त्रयोदशानाम्, अनन्तानुबन्धितिर्यगायुरुद्योतवर्जानां सासादनयोग्यानामेकोनविंशतिप्रकृतीनाम्, यतो मिथ्यात्वमनन्तानुबन्धिनश्चापूर्वकरणादारत एवाविरतसम्यग्दृष्ट्यादयः क्षपयन्ति, आतपोद्योते च शुभे, अशुभप्रकृतीनां च गुणसंक्रमः, आयुषां च परप्रकृतौ संक्रमो न भवति, ततो मिथ्यात्वादिप्रकृतीनामिह वर्जनम्। तथा अप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकास्थिराशुभायशःकीर्तिशोकारत्यसातवेदनीयानां सर्वसंख्यया षट्चत्वारिंशत्प्रकृतीनामशुभानां अबध्यमानानामपूर्वकरणगुणस्थानकादारभ्य गुणसंक्रमो भवति। निद्राद्विकोपघाताशुभवर्णादिनवकहास्यरतिभयजुगुप्सानां त्वपूर्वकरणस्वबन्धव्यवच्छेदादारभ्य गुणसंक्रमः प्रवर्तते। अपरोऽर्थः—अपूर्वादयः—अपूर्वकरणसंज्ञकरणप्रवृत्तप्रभृतयोऽशुभप्रकृतीनामबध्यमानानां दलिकमसंख्येयगुणनया श्रेण्या बध्यमानासु यत्प्रक्षिपन्ति स गुणसंक्रमः। तेन क्षपणकाले मिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्धिनामपूर्वकरणरूपात्करणादारभ्य गुणसंक्रमः प्रवर्तमानो न विरुध्यते ॥७७॥

## उद्वलनासंक्रमस्य चित्रम्।




⊙—प्रदेशोपचितं स्थितिस्थानं, लतागतानि दर्शितानि स्थितिस्थानानि क्रमेण विशेषप्रदेशोपचितानीति कृत्वा क्रमेण गुरुगुरुतराणि।

उद्वलनाङ्कमस्य यन्त्रम्।

| प्रकृतीनाम् | उद्वलनस्वामिनः | उद्वलनकालः | प्रकृतीनाम् | उद्वलनस्वामिनः | उद्वलनकालः |
|---|---|---|---|---|---|
| (मिथ्यादृष्टौ २३ तीर्नां तत्रापि आहा० ७ र्नां | अविरताः | पल्यासंख्येयभागः | स्था०-सू०-तिर्य०२ नरक २-आतप-उद्योत-एके०-विकल-३-साधा० (१३) | ९ मे क्षपकाः | अन्तर्मुहूर्तं |
| सम्यक्त्वस्य | २८ मोहसत्ताकमिथ्यादृशः | „ | | | |
| मिश्रस्य | २८, २७ सत्ताको वा | „ | अप्रत्याख्यानकषाय ८ | „ | „ |
| देव २ कस्य (युगपत्) | आहा०त्रिनवर्जे९५ नामसत्ताका एकेन्द्रियाः | „ | नोकषाय ९ | „ | „ |
| वैक्रिय ७ नरक २ } युगपत् | „ | „ | सं० क्रो०-मान-माया | „ | „ |
| उच्चैर्गोत्रस्य | अग्नितेजोवायुकायिकौ | „ | मिथ्यात्वस्य | ४-५-६-७गुणस्थाः | „ |
| नरत्रिकस्य | „ | „ | मिश्रस्य | „ | „ |
| सम्यग्दृष्टौ ४२ तत्रापि स्त्यानर्द्धि ३ | ९ मे क्षपकाः | अन्तर्मुहूर्तम् | अनन्ता० ४ र्णाम् | „ | „ |

विध्यातसंक्रमस्य यन्त्रम् । (गुणप्र० भवप्र० वाऽबध्यमानानाम्)

| | | |
|---|---|---|
| मिथ्यात्व नरकायुर्वर्जाः १४ मिथ्यात्वान्तानाम् | सास्वादनादयः | गुणप्रत्ययतः |
| तिर्यगायुर्वर्जाः २४ सास्वादनान्ता० | मिश्राद्याः | „ |
| (२)मिथ्यात्वमिश्रयोः | अविरतादयः | „ |
| चतुर्थान्तानाम् मनुष्यायुर्वर्जाः ९ | देशविरतादयः | „ |
| पञ्चमान्तानाम् ४ | प्रमत्तादयः | „ |
| प्रमत्तान्तानाम् ६ | अप्रमत्तादयः | „ |
| वै०७-देव २-नरक २-कुजाति ४-स्था०-सू०-साधा०-अपर्या०-आतपानां (२०) | सर्वे नारकाः सनत्कुमारादयो देवाश्च | भवप्रत्ययतः |

| गुणस्थाने | सर्वाग्रम् | |
|---|---|---|
| मिथ्यात्वे | ०-१ | |
| सासादने | १४ | |
| मिश्रे | ३८ | |
| अविरते | ४० | |
| देशविरते | ४९ | ५४ |
| प्रमत्ते | ५३ | ५८ |
| अप्रमत्ते | ५ | ६४ |

| | | | | | | |
|---|---|---|---|---|---|---|
| नरक२-देव२-वै०७-विकल३-सू०-अपर्या०-साधा० (१७) | ईशानान्ता देवाः | प्रथमस्ययता | | अपूर्वक० प्र ६ | १४ | |
| तिर्य० २-उद्यो० पूर्वोक्तानां (२०) च | आनतान्त्या देवाः | " | | अपूर्वक० ७ | २९ | ६'५ |
| संघ०६-कुखस्या० ५-नपुं०-मनु०२-स्त्री०७-ति०प्रा०१०-अप०-नरक २-दुर्भ० ३-नी० गो०-प्रथ० नाग० (३९) | युगलिकतिर्यङ्नराः | " | | अनिवृ० | २० | ३५ |
| | | | | सूक्ष्मसं० | २९ | ६'५ |

यथाप्रवृत्तसंक्रमः । गुणसंक्रमः । अबध्यमानाशुभानामेव स्यात् ।

| | | | |
|---|---|---|---|
| ध्रुवबन्धिनीनाम् | तद्बन्धकाः | मिथ्यात्वान्तानां१३ अप्र० तिर्यगायुरुद्योतवर्ज११सास्वादनान्तानां | ८ मादयः |
| तद्भुवयोन्यपरावर्तमानानां | तद्बन्धका अबन्धका वा | ८ मध्यमकषाया० अस्थिराशुभायशोऽरत्यसातानां च | " |
| अथ योगानुरूपः संक्रमः स्यात्, अस्य बाधको विध्यातो गुणसंक्रमो वा भवति | | निद्रा २-उप०-कुवर्णादि ९-हास्यरतिभयकुत्सानाम् | " |
| | | मिथ्या०-मिश्रानन्तानुबन्धि ४ योम् | ४र्थेताऽप्रमत्ताः |

चरमठिईए रइयं पइसमयमसंखियं पएसग्गं। ता छुभइ अण्णपगइं जावंते सव्वसंकामो ॥७८॥

(स्वो०)—चरमस्थितौ उद्वलनसंक्रमेण यद्रचितं दलं—प्रदेशाग्रं तत् प्रतिसमयमसंख्येयगुणश्रेण्या परप्रकृतौ तावच्छुभति—संक्रामति, यावद्द्विचरमः प्रक्षेपः, उद्वलनसंक्रमस्यान्तिमः पुनः सर्वसंक्रम उच्यत इति गाथार्थः ॥७८॥

(मलय०)—तदेवमुक्तं गुणसंक्रमस्य लक्षणम्, सम्प्रति सर्वसंक्रमलक्षणं प्रतिपिपादयिषुराह—उद्वलनं संक्रमणं कुर्वता स्वस्थानप्रक्षेपेण चरमस्थितौ—चरमे स्थितिखण्डे यद्रचितं प्रदेशाग्रं—कर्मदलिकं तदन्यप्रकृतिं—परप्रकृतौ प्रतिसमयमसंख्येयम्—असङ्ख्येयगुणं तावत् छुभति—संक्रमयति यावद्द्विचरमः प्रक्षेपः। यस्त्वन्ते सर्वान्तिमः संक्रमः स सर्वसंक्रम इति। एष च उद्वलनसंक्रमं भावयता प्रागेव भावित इति न भूयो भाव्यते ॥ ७८ ॥

बाहिय अहापवत्तं सहेउणाहो गुणो व विज्झाओ। उव्वलणसंकमस्स वि कसिणो चरिमम्मि खंडम्मि ॥७९॥

(स्वो०)—स्वहेतुना विबाध्य यथाप्रवृत्तसंक्रमं विध्यातसंक्रमो गुणसंक्रमो वा भवति, उद्वलनसंक्रमचरमखण्डस्य द्विचरमसंक्रमाच्चरमक्षेपः सर्वसंक्रमो भवतीति गाथार्थः ॥७९॥

(मलय०)—सम्प्रति कः संक्रमः कं संक्रमं बाधित्वा प्रवर्त्तते? इति विचारयन्नाह—यथाप्रवृत्तं संक्रमं प्रवर्त्तमानं 'स्वहेतुना'—स्वहेतुसंपर्कसामर्थ्येन बाधित्वा विध्यातसंक्रमो गुणसंक्रमो वा भवति। तथा 'उव्वलणसंकमस्स वि'—अत्रापिशब्दो भिन्नक्रमः, स चैवं योजनीयः—'कृत्स्नोऽपि'—कृत्स्नसंक्रमोऽपि, सर्वसंक्रमोऽपीत्यर्थः, उद्वलनासंक्रमस्य चरमे खण्डे चरमप्रक्षेपरूपः, तत एषोऽपि उद्वलनासंक्रमं बाधित्वा प्रवर्त्तते इति वेदितव्यम् ॥ ७९ ॥

यद्यपि नायं संक्रमकरणे सम्बध्यते तथाऽपि संक्रमाऽधिकारेऽनुवर्त्तमाने स्तिबुकसंक्रमस्य लक्षणमाह—

पिंडपगईण जा उदयसंगया तीए अणुदयगयाओ । संकामिऊण वेयइ जं एसो थिबुगसंकामो ॥८०॥

(स्वो०)—पिण्डप्रकृतीनां—गत्यादीनां चतुर्दशानां या अन्यतरा उदयसङ्गता—उदयप्राप्ता तस्यामुदयगतायामनुदयप्राप्तां स्वपक्षप्रकृतौ संक्रमय्यानुभवति, यथा मनुजगतौ शेष गतित्रयम्, एकेन्द्रियजातौ जातिचतुष्कम्, एष स्तिबुकसंक्रमः प्रदेशानुभव इति गाथार्थः ॥

(मलय०)—इहान्योऽपि पश्च स्तिबुकसंक्रमो विद्यते, स च न संक्रमकरणे सम्बध्यते, करणलक्षणाऽयोगात्, करणं हि सलेश्यं वीर्यमुच्यते । एष च स्तिबुकसंक्रमो लेश्यातीतस्याप्ययोगिकेवलिनस्त्रिसप्ततिसंख्यानां प्रकृतीनां द्विचरमसमये प्रवर्त्तते, ततो नासौ करणान्तःपाती, केवलमेषोऽपि संक्रम, इति संक्रमाधिकारे तु वर्त्तमाने तस्यापि लक्षणं प्रतिपादयितुमाह—पिंडप्रकृतीनां—गतिजातिशरीराङ्गोपाङ्गबन्धनसंघातसंहननसंस्थानवर्णगन्धरसस्पर्शविहायोगत्यानुपूर्वीरूपाणां चतुर्दशानां मध्ये या सा सा अन्यतमा उदयसङ्गता—उदयप्राप्ता, तस्यां समानकालस्थितयानुदयगताः—अनुदयप्राप्ताः संक्रमय्य वेद्यते—अनुभवति । यथा मनुजगतावुदयप्राप्तायां शेष गतित्रयम्, एकेन्द्रियजातौ शेष जातिचतुष्टयमित्यादि । एष स्तिबुकसंक्रमः, एष एव च प्रदेशानुभवः । इह पिण्डप्रकृतीनामिति यदुक्तं तद्बाहुल्यापेक्षया, तेनान्यासामपि यथागमं स्तिबुकसंक्रमो वेदितव्यः । तथा च क्षपणकाले संज्वलनक्रोधादीनामावलिका शेषीभूताः स्तिबुकसंक्रमेणैव संज्वलनमानादौ प्रक्षिप्यन्ते ॥८०॥

गुणमाणेण दलिअं हीरंतं थोवएण निट्ठाइ । कालोऽसंखगुणेणं अह विज्झाउव्वलणगाण ॥८१॥

(स्वो०)—चरमखण्डस्य गुणसंक्रममानेन यद्यपहारः क्रियते ततोऽन्तर्मुहूर्त्तमात्रेण कालेन निष्ठां याति क्षीयत इत्यर्थः, तदेव दलं यथाप्रवृत्तसंक्रमप्रमाणेन ह्रियमाणं पल्योपमासंख्येयभागमात्रेण कालेन क्षयं याति, गुणसंक्रमादसंख्येयगुणकालेनेति कृत्वा । विध्यातसंक्रमप्रमाणेनापि ह्रियमाणं तदेव दलं क्षेत्रतोऽङ्गुलासंख्येयभागाकाशप्रदेशैः कालतोऽसंख्येयाभिरवसर्पिण्युत्सर्पिणीभिः क्षयं याति, यथाप्रवृत्तकालादसंख्येयगुण इति कृत्वा । द्विचरमखण्डकस्यान्तोद्वलनक्षेपप्रमाणेनापह्रियमाणं चरमखण्डकदलं अङ्गुलासंख्येयभागमात्रेण कालेन निष्ठां याति यद्यपि तथापि विध्यातकालादसंख्येयगुण उद्वलनसंक्रमकालः, निजत्वादङ्गुलासंख्येयभागस्येति गाथार्थः ॥८१॥

(मलय०)—तदेवमुक्तं स्तिबुकसंक्रमस्यापि लक्षणम्, साम्प्रतं तेषामेव विध्यातसंक्रमोद्वलनासंक्रमयथाप्रवृत्तसंक्रमगुणसंक्रमाणामपहारकालस्याल्पबहुत्वमभिधित्सुराह—उद्वलनसंक्रमाभिधानावसरे यत्प्रागभिहितं चरमखण्डं तद्रूपं दलिकं यदि गुणसंक्रममानेनापह्रियते तर्हि तत् स्तोकेन कालेनान्तर्मुहूर्त्तप्रमाणेन निष्ठां याति—सर्वात्मना निर्लेपीभवति, ततो गुणसंक्रमेणापहारकालः सर्वस्तोकः । तथा तदेव चरमखण्डरूपं दलिकं यथाप्रवृत्तविध्यातोद्वलनसंक्रमाणां मानेनापह्रियमाणं यथोत्तरमसंख्येयगुणेन कालेनापह्रियते, तत एतेषां यथोत्तरमसंख्येयगुणापहारकालो वेदितव्यः । तथाहि—तदेव चरमखण्डं यथाप्रवृत्तसंक्रमेणापह्रियमाणं पल्योपमासंख्येयभागमात्रेण कालेनापह्रियते, ततो गुणसंक्रमेणापहारकालादस्यापहारकालोऽसंख्येयगुणः । तथा तदेव चरमखण्डं विध्यातसंक्रमेणापह्रियमाणमसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियते, ततो यथाप्रवृत्तसंक्रमेणापहारकालाद्विध्यातसंक्रमेणापहारकालोऽसंख्येयगुणः । तथा तदेव चरमखण्डं द्विचरमस्थितिखण्डस्य चरमसमये यत्परप्रकृतौ प्रक्षिप्यते तेन मानेनोद्वलनासंक्रमेणापह्रियमाणमतिप्रभूताभिरसंख्येयोत्स-

पिंप्यवसार्पिणीभिरपह्रियते, ततो विध्यातसंक्रमेणापहारकालादप्युद्वलनासंक्रमेणापहारकालोऽसख्येयगुणः । विध्यातसंक्रमेणोद्वलनासंक्रमेण चापहारः क्षेत्रतोऽङ्गुलासंख्येयभागेन द्रष्टव्य., केवलमुद्वलनासंक्रमेणापहारो वृहत्तमेनाङ्गुलासख्येयभागेन ॥८१॥

**ज दुचरिमस्स चरिमे सपरट्ठाणेसु देइ समयम्मि । ते भागे जहकमसो अहापवत्तुव्वलणमाणे ॥८२॥**

(स्वो०)—उद्वलनसंक्रमे द्विचरमखण्डकस्य चरमप्रक्षेपे यद्ददाति स्वस्थाने दल तद्यथाप्रवृत्तस्य प्रमाणम्, यत्पुनः परस्थाने ददाति तदुद्वलनसंक्रमस्य प्रमाणमिति गाथार्थः ॥८२॥

(मलय०)—इह उद्वलनासंक्रमो द्विचरमखण्डस्य द्विधा प्रवर्तते, तद्यथा—स्वस्थाने परस्थाने च । तत्रेह परस्थाने एव ग्राम इत्यावेदयन् यथाप्रवृत्तसंक्रमस्यापि मानमभिधित्सुराह—द्विचरमखण्डस्य चरमसमये यत्स्वपरस्थानयोर्ददाति तौ भागौ यथाक्रम यथाप्रवृत्तसंक्रमोद्वलनसंक्रमयोर्माने । इयमत्र भावना—उद्वलनासंक्रमे द्विचरमखण्डस्य चरमे प्रक्षेपे यत्स्वस्थाने दलिक प्रयच्छति तत् यथाप्रवृत्तसंक्रमस्य प्रमाणम् । अत एव यथोक्तस्वस्थानप्रक्षेपरूपेणोद्वलनासंक्रमेण यथाप्रवृत्तसंक्रमस्तुल्योऽन्यत्राभिधीयते । यत्पुनः परस्थाने ददाति तदुद्वलनासंक्रमस्य मानम्, एवंभूत एव प्रागुद्वलनासंक्रमो ग्राह्य इत्यर्थः ॥८२॥

प्रदेशसंक्रमस्य साद्यादिभङ्गयन्त्रम्।

| प्रकृतीनाम् | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रु० |
| अनन्तरोक्त२१ वर्ज१०५ ध्रुवसत्ताकानां | उपशम श्रेणितः पतितानां | भव्यानाम् | साद्यप्राप्तानां | अभव्या० | क्षपणोद्यतक्षपितकर्मांशानाम् | सादित्वात् | उप० श्रे० तः पतितानाम् | भव्यानाम् | साद्यप्राप्तानाम् | अभव्यानाम् | क्षपणोद्यतगुणितकर्मांशानाम् | सादित्वात् |
| ज्ञाना० ५-दर्श० ४-अं० ५-औ-दा० ७ (२१) ध्रु०सत्ताकानां | " | " | " | " | " | " | गुणितकर्मांशमिथ्यादृशाम् कादाचित्कत्वात् | सादित्वात् | — | — | गुणितकर्मांशमिथ्यादृशां कादाचित्कत्वात् | " |
| शेषाणाम्(२८) | अध्रुवसत्ताकत्वात् | अध्रु० | — | — | अध्रुव सत्ता० | अध्रु० | अध्रुवसत्ताकत्वात् | अध्रु० | — | — | अध्रुवसत्ताकत्वात् | अध्रुव० |
| मिथ्यात्वस्य | पतद्ग्रहाध्रौव्यत्वात् | पतद्ग्र० | — | — | पतद्ग्र० | पतद्ग्र० | पतद्ग्र० | पतद्ग्र० | — | — | पतद्ग्र० | पतद्ग्र० |
| नीचैः-सात-असातानाम् | परावर्त्तमानत्वात् | परा० | — | — | परा० | परा० | परा० | पराव० | — | — | परा० | परा० |

शेषस्यापहारकालाल्पबहुत्वम् ।

| गुणसंक्रमेण | अन्तर्मुहूर्त्तं | सर्वाल्पः | पल्यस्यासंख्येयतमया (उप०श्रेण्यन्तस्य) | असंख्य०कालचक्राणि | ततोऽसंख्येयगुणः |
|---|---|---|---|---|---|
| यथाप्रवृत्तेन | पल्य०सं० भा० | ततोऽसंख्येयगुणः | स्वस्थानोपल्योद्वलनया | पल्यासंख्येयभागः | यथा०कालतुल्यः |
| मिथ्यात्वेन | असं० कालचक्राणि | " | | | |
| उत्क्रमायां योऽल्पबहुः स शेष इति | | | | | |

मूलप्रकृतीनां परस्परसंक्रमाभावादुत्तरप्रकृतीनां साद्यनादिप्ररूपणामाह—

चउहा धुवछव्वीसगसयस्स अजहन्नसंकमो होइ । अणुक्कोसो वि हु वज्जिय उरालियावरणनवविग्घं ॥८३॥

(स्वो०)—मिथ्यात्वनीचैर्गोत्रयोः प्रतिग्रहाभावात् सातासातयोः परावर्तकत्वात् ध्रुवाणामप्यासां सर्वेऽपि प्रदेशसंक्रमाः सादि-अध्रुवा भवन्ति, शेषध्रुवषड्विंशोत्तरशतस्याजघन्यः प्रदेशसंक्रमश्चतुर्द्धा भवति। कथं ? आसां सर्वासां प्रकृतीनां क्षपितकर्मांशस्य क्षपणायोरिथतस्य जघन्यः प्रदेशसंक्रमो भवति, स च सादिरध्रुवः । तस्यैव क्षपितकर्मांशस्योपशमश्रेण्यां अबन्धकस्य सर्वासां प्रकृतीनां संक्रमाभावः, तस्मात्प्रतिपततोऽजघन्यः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । अनुत्कृष्टसंक्रमोऽपि चतुर्द्धा भवति; किं सर्वासां ? नेत्याह—वर्जयित्वौदारिकसप्तक ज्ञानान्तरायदशक दर्शनचतुष्क; शेषषण्णोत्तरशतस्य चतुर्विधः प्रदेशसंक्रमो भवति। कथं ? गुणि-

तकर्मांशस्य क्षपणायोत्थितस्योत्कृष्टः प्रदेशसंक्रमो भवति, स च सादिरध्रुवः, अबन्धकस्य तस्यैवोपशमश्रेणीतः प्रतिपततोऽनुत्कृष्टः प्रदेशसंक्रमः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वदिति गाथार्थः ॥ ८३ ॥

(मलय०)—तदेवमुक्तं सप्रपञ्चं लक्षणम्, सम्प्रति साद्यादिप्ररूपणा कर्त्तव्या, तत्र मूलप्रकृतीनां परस्परं संक्रमो न भवति । तत उत्तरप्रकृतीनामेव साद्यादिप्ररूपणार्थमाह—प्रागुक्तानां ध्रुवसत्कर्मणां षड्विंशत्युत्तरशतसंख्यानामजघन्यः प्रदेशसंक्रमश्चतुर्धा—चतुष्प्रकारो भवति, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तत्र क्षपितकर्मांशो वक्ष्यमाणलक्षणः क्षपणार्थमभ्युद्यतो ध्रुवसत्कर्मप्रकृतीनां सर्वासामपि जघन्यं प्रदेशसंक्रमं करोति, स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः, स चोपशमश्रेण्यां बन्धव्यवच्छेदे सति सर्वासामपि प्रकृतीनां न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया। अनुत्कृष्टोऽपि संक्रमो ध्रुवसत्कर्मप्रकृतीनां चतुर्धा भवति। किं सर्वासां? नेत्याह—'औदारिकावरणनवविघ्नम्'। औदारिकसप्तकम्, आवरणनवकं—ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयरूपम्, पञ्चप्रकारं च विघ्नम्—अन्तरायं वर्जयित्वा शेषस्य पञ्चोत्तरप्रकृतिशतस्य चतुर्द्धा भवति। तत्र सर्वासामपि प्रकृतीनां गुणितकर्मांशे वक्ष्यमाणलक्षणे क्षपणार्थमभ्युद्यते उत्कृष्टः प्रदेशसंक्रमः प्राप्यते, नान्यत्र, ततोऽसौ सादिः, तस्मादन्यः सर्वोऽप्यनुत्कृष्टः, स चोपशमश्रेण्यां व्यवच्छिद्यते, ततः प्रतिपाते च भूयोऽपि भवति, ततोऽसौ सादिः, तत् स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ पूर्ववत् ॥ ८३ ॥

**सेसं साई अधुवं जहन्नसामी य खवियकम्मंसो । ओरालाइसु मिच्छो उक्कोसगस्स गुणियकम्मो ॥८४॥**

(स्वो०)—उक्तप्रकृतीनां यन्नोक्तं प्रदेशसंक्रमजातं अनुक्तप्रकृतीनां च तत्सर्वमपि साद्यध्रुवं भवति । कथम्? षड्विंशत्युत्तरशते

जघन्यस्य कारणमुक्तम्, उत्कृष्टानुत्कृष्टयोरपि पञ्चोत्तरशतस्य कारणमुक्तम् , औदारिकैकविंशतेरुत्कृष्टानुत्कृष्टौ मिथ्यादृष्टौ भवतः, अत सर्वासां साद्यध्रुवत्वं सुगमम् । अध्रुवसत्तीनां चाध्रुवत्वादेव चत्वारोऽपि प्रदेशसंक्रमा साद्यध्रुवा भवन्ति । प्रदेशसंक्रमस्य जघन्यस्वामी सर्वप्रकृतीनां क्षपितकर्मांश', उत्कृष्टः प्रदेशसंक्रमस्य तु गुणितकर्मांशः स्वामी । औदारिकैकविंशतेः स एव गुणितकर्मांशो मिथ्यादृष्टिरिति गाथार्थः ॥८४॥

(मलय०)—'सेसम्'इत्यादि । शेष उक्तप्रकृतीनां तु सकलमपि जघन्यादि साद्यध्रुव ज्ञेयम्, तथा पञ्चोत्तरशतस्यानुक्तौ विकल्पौ जघन्य उत्कृष्टश्च, तौ च साद्यध्रुवतया भावितावेव । औदारिकसप्तकादीनां चोत्कृष्टः प्रदेशसंक्रमो गुणितकर्मांशे मिथ्यादृष्टौ प्राप्यते, शेषकाल त्वनुत्कृष्ट', तत एतौ द्वावपि साद्यध्रुवौ, जघन्यस्तु साद्यध्रुवतया भावित एव । शेषप्रकृतीनां च सर्वेऽप्युत्कृष्टानुत्कृष्टजघन्याजघन्यविकल्पा अध्रुवसत्कर्मत्वात्, मिथ्यात्वस्य ध्रुवसत्कर्मणोऽपि सदैव पतद्ग्रहाभावे', नीचैर्गोत्रसातासातवेदनीयानां तु परावर्त्तमानत्वात्सादयोऽध्रुवाश्चावगन्तव्या. ॥८४॥

तस्यैव गुणितकर्मांशस्य स्वरूपकथनायाह—

बायरतसकालूणं कम्मठिइ जो उ बायरपुढवीए । पज्जत्तापज्जत्तदीहेयरआउगो वसिउ ॥ ८५॥

(स्वो०)—बादरत्रसग्रहणं सूक्ष्मत्रसव्युदासार्थम्। बादरत्रसानां कायस्थितिकालेन पूर्वकोटिपृथक्त्वाधिकसागरोपमद्विसहस्रप्रमाणेनोनां कर्मस्थितिं सागरोपमसप्ततिकोटाकोटिप्रमाणां यः कश्चिज्जीवो बादरपृथिवीपर्याप्तकत्वे दीर्घायुषा अपर्याप्तकत्वे ह्रस्वायुषा उषित्वा उच्यमानविधिं करोति स गुणितकर्मांशो भवतीति क्रिया सम्बन्धनीया । शेषैकेन्द्रियेभ्यो बादरपृथिवीकायिकस्य प्रभूतमायु' तेनान्य-

वच्छिन्नं प्रभूतकर्मपुद्गलग्रहणं वेदनासहिष्णुत्वं च तेन चामाटः; अपर्याप्तकग्रहणं दीर्घकायस्थितिप्रापणार्थं; तस्य ह्रस्वस्थितिग्रहणं हीनयोगस्थानज्ञापनार्थम् ; अत इतरस्य तैरुत्कृष्टैः प्रबलकर्मबन्धार्थं दीर्घायुर्ग्रहणम्। सूक्ष्माणां स्वल्पजीवितत्वात्प्रभूतजन्ममरणानि भवन्ति तद्वेदनया चासकृत् कर्मपुद्गलसाटः, अतो बादरग्रहणं कृतमिति गाथार्थः ॥ ८५ ॥

(मलय०)—तदेवं कृता साद्यादिप्ररूपणा, सम्प्रति स्वामी वक्तव्यः। स च द्विधा, जघन्यप्रदेशसंक्रमस्य, उत्कृष्टप्रदेशसंक्रमस्य च। तत्र जघन्यप्रदेशसंक्रमस्य स्वामी सर्वासां प्रकृतीनां क्षपितकर्मांशः, उत्कृष्टप्रदेशसंक्रमस्य तु स्वामी गुणितकर्मांशः। तत्रापि औदारिकादिषु—औदारिकसप्तकज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकरूपासु एकविंशतिप्रकृतिषु स एव गुणितकर्मांशो मिथ्यादृष्टिरिति। संप्रत्यस्यैव गुणितकर्मांशस्य स्वरूपं व्याचिख्यासुराह—इह द्विविधास्त्रसाः सूक्ष्मा बादराश्च। तत्र बादरा द्वीन्द्रियादयः, सूक्ष्मास्तेजोवायुकायिकाः। तत्र सूक्ष्मव्यवच्छेदार्थं बादरग्रहणम्। बादरत्रसानां द्वीन्द्रियादीनां यः कालः—स्थितिकालः पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयप्रमाणः, तेनोनां—हीनां कर्मस्थितिं—मोहनीयकर्मस्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणां यावत्, यो बादरपृथिव्यां—बादरपृथिवीकायभवेषूषित्वा, किंविशिष्टः सन्नुषित्वेत्यत आह—'पज्जत्तापज्जत्तगदीहेयरआउगो'त्ति। अत्र दीर्घेतरशब्दाभ्यां पर्याप्तापर्याप्तयोर्यथासंख्येन योजना ततोऽयमर्थः—पर्याप्तभवेषु दीर्घायुः, अपर्याप्तभवेष्वितरायुः—स्तोकायुः,प्रभूतेषु पर्याप्तभवेषु स्तोकेषु चापर्याप्तभवेषु उषित्वेत्यर्थः। इह शेषैकेन्द्रियापेक्षया बादरपृथिवीकायस्य प्रभूतमायुः तेनाव्यवच्छिन्नं तस्य प्रभूतकर्मपुद्गलोपादानम्, बलवत्तया च तस्यातीववेदनासहिष्णुत्वम्, तेन तस्य प्रभूतकर्मपुद्गलपरिशाटो न भवति, ततो बादरपृथिवीकायिकग्रहणम्। अपर्याप्तभवग्रहणं परिपूर्णकायस्थितिपरिग्रहार्थम्। तेषां चापर्याप्तकभवानां स्तोकानां पर्याप्तकभवानां च प्रभूतानां ग्रहणं प्रभूतकर्म-

पुद्गलपरिशाटाभावप्राप्त्यर्थम्। अन्यथा हि निरन्तरमुत्पद्यमानम्रियमाणेषु बहव पुद्गलाः परिशटन्ति, न च तेन प्रयोजनमिति ॥८५॥

जोगकसाउक्कोसो बहुसो आउ जहन्नजोगेणं। बंधिअ उवरिल्लासुं ठिइसु निसेगं बहु किच्चा ॥८६॥

(स्वो०)—पर्याप्तकभवबाहुल्याद्योगैः कषायैश्चोत्कृष्टो बहुशो भूत्वा, आयुष्क जघन्ययोगेन बन्धयित्वा, उपरितनासु कर्मस्थितिषु निषेक प्रभूतं कृत्वा अधस्तनस्थितिषु स्तोक तथापि विशेषहीनं विशेषहीनमपरित्यजन् यो वक्ष्यमाणविधिं करोति, स गुणितकर्मांशः। उत्कृष्टयोगकषायग्रहण प्रबलकर्मदलग्रहणार्थमिति गाथार्थः ॥८६॥

(मलय०)—पुनरपि कथभूत. सन्नुषित्वेत्यत आह–'जोग'इत्यादि। बहुशोऽनेकवारान् योगकषायोत्कृष्टः–उत्कृष्टेषु योगस्थानेषु उत्कृष्टेषु च काषायिकेषु सङ्क्लेशपरिणामेषु उषित्वेत्यर्थः। इहोत्कृष्टेषु योगस्थानेषु वर्त्तमानः प्रभूत कर्मदलिकमादत्ते, उत्कृष्टसंक्लेशपरिणतश्चोत्कृष्टां स्थितिं बध्नाति, प्रभूत चोद्वर्त्तयति, स्तोक चापवर्त्तयति, ततो योगकषायोत्कृष्टग्रहणम्। तथा भवे भवे आयुर्बन्धकाले जघन्येन योगेनायुर्बद्ध्वा, उत्कृष्टे हि आयुःप्रायोग्ये योगे वर्त्तमानः प्रभूतानायुःपुद्गलानादत्ते, तथास्वाभाव्याच्च ज्ञानावरणीयस्य प्रभूतान् पुद्गलान् परिसाटयति, न च तेन प्रयोजनम्, अतो जघन्ययोगेनेत्युपात्तम्। तथा उपरितनीषु स्थितिषु निषेक–कर्मदलिकन्यासरूपं बहु–स्वभूमिकानुसारेणातिशयेन प्रभूत कृत्वा। एव बादरपृथिवीकायिकेषु मध्ये पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयन्यूनाः सप्ततिसागरकोटीकोटीरुषित्वा ततो विनिर्गच्छति। विनिर्गत्य बादरत्रसकायिकेषु मध्ये समुत्पद्यते ॥८६॥

बायरतसकालमेव वसित्तु अंते य सत्तमखिईए। लहुपज्जत्तो बहुसो जोगकसायाहिओ होउं ॥८७॥

(स्वो०)—एवं पृथिवीकायिकविशेषणसमग्रं पृथिवीकायादुद्वृत्य त्रसकायस्थितिपूपित्वा त्रसेषु तदन्ते च सप्तमपृथिव्यां लघुपर्याप्तकः–स्तोककालपर्याप्तो, बहुशः–अनेकशो, योग्यत्वप्राप्तौ तत्र भूत्वा अथवा तस्मिन्नेव भवे अनेकशो योगकषायाधिको भूत्वा दीर्घजीवितत्वयोगकषायोत्कटत्वख्यापकं सप्तमीग्रहणमिति गाथार्थः ॥८७॥

(मलय०)—एवं पूर्वोक्तेन विधिना "पज्जत्तापज्जत्तगदीहेयरआउगो वसिउं॥ जोगकसाउक्कोसो बहुसो आउं जहन्नजोगेणं। बंधिय उवरिल्लासुं ठिइसु निसेगं बहुं किच्चा॥" इत्येवंरूपेण बादरत्रसकालं–बादरत्रसकायस्थितिकालं पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयप्रमाणं बादरत्रसेषु मध्ये उषित्वा यावतो वारान् सप्तमीं नरकपृथिवीं गन्तुं योग्यो भवति तावतो वारान् गत्वा, अन्ते च–अन्तिमे च सप्तमनरकपृथिवीभवे–सप्तमनरकपृथिव्यां सर्वलघुपर्याप्तः–सर्वेभ्योऽप्यन्येभ्यो नारकेभ्यः शीघ्रं पर्याप्तभावमुपगतः। तथा बहुशः–अनेकवारं योगकषायाधिको–योगाधिकः कषायाधिकश्च भूत्वा, किमुक्तं भवति? अनेकश उत्कृष्टानि योगस्थानानि उत्कृष्टांश्च काषायिकान् परिणामविशेषान् गत्वा। इह सप्तमपृथिवीनारकभवे वर्त्तमानस्य दीर्घजीविता कषायोत्कटता च लभ्यते इति यावत्संभवसप्तमनरकपृथिवीगमनग्रहणम्। तथा अपर्याप्तापेक्षया पर्याप्तस्य योगोऽसंख्येयगुणो भवति, तथा च सति तस्यातीवप्रभूतकर्मपुद्गलोपादानसंभवः, तेन चेह प्रयोजनम्, अतः सर्वलघुपर्याप्त इत्युक्तम्॥ ८७॥

**जोगजवमज्झउवरिं मुहुत्तमच्छित्तु जीवियावसाणे। तिचरिमदुचरिमसमए पूरित्तु कसायमुक्कोसं ॥८८॥**

(स्वो०)—योगस्थानविषये यवमध्यं–कालमाश्रित्योत्कृष्टकालं तस्मादष्टसामयिकादुपर्यन्तर्मुहूर्त्तं स्थित्वा जीवितावसाने साधिकान्तर्मुहूर्त्तायुः यवमध्योपर्यसंख्येयगुणवृद्ध्या वर्द्धितः, त्रिचरिमे द्विचरमे च समये भवस्य कषायाननन्तगुणवृद्ध्यापूर्य कर्मदलेन प्रकृ-

तीरिति गाथार्थः ॥८८॥

(मलय०)—योगयवमध्यस्योपरि अष्टसामयिकानां योगस्थानानामुपरीत्यर्थः, अन्तर्मुहूर्त्तं कालं यावदवस्थित्वा, जीवितावसाने अन्तर्मुहूर्त्ते आयुषि शेषे। एतदुक्तं भवति—अन्तर्मुहूर्त्तावशेषे आयुषि योगयवमध्यस्योपरि असंख्येयगुणवृद्ध्या अन्तर्मुहूर्त्तं कालं यावत्प्रवर्द्धमानो भूत्वा। ततः किमित्याह—'तिचरिम'इत्यादि। प्रथमरूपा यस्मात्स त्रिचरमः, यत आरभ्यान्तिमः समयस्तृतीयो भवति स त्रिचरम इत्यर्थः, यस्मिन् भवस्य त्रिचरमे द्विचरमेऽपि च समये वर्त्तमान उत्कृष्टकाषायिकं संक्लेशस्थानं पूरयित्वा चरमे द्विचरमे च समये योगस्थानमपि चोत्कृष्टं पूरयित्वा, इहोत्कृष्टो योग उत्कृष्टश्च संक्लेशो युगपदेकमेव समयं यावत् प्राप्यते, नाधिकमिति विषमसमयतया उत्कृष्टयोगोत्कृष्टकषायस्थानग्रहणम्। त्रिचरमे द्विचरमे च समये उत्कृष्टसंक्लेशग्रहणं प्रभूतोद्वर्त्तनास्वल्पापवर्त्तनार्थम् ॥८८॥

जोगुक्कोसं दुचरिमे चरिमसमए उ चरिमसमयम्मि। संपुन्नगुणियकम्मो पगयं तेणेह सामित्ते ॥८९॥

(स्वो०)—तत्र्यादिचरिमे चरिमे च समये च योगोत्कृष्टं, कषाययोगोत्कृष्टं तु एकसमये तदुभयद्विचरमे भवति, तुशब्दात्प्रभूतोद्वर्त्तनं स्वल्पापवर्त्तनं च यस्य कर्मस्थितीनां स नारकभवान्त्यसमये गुणितकर्मांशः तेनेह प्रकृतम्—अत्राधिकारः उत्कृष्टस्वामित्वे इति गाथार्थः ॥८९॥

(मलय०)—चरमे द्विचरमे च समये उत्कृष्टयोगग्रहणं परिपूर्णप्रदेशोपचयसम्भवार्थम्। इत्थंभूतो नारकभवस्य चरमसमये वर्त्तमानः संपूर्णगुणितकर्मांशो भवति। तेन च संपूर्णगुणितकर्मांशेन इह—उत्कृष्टप्रदेशसंक्रमस्वामित्वे प्रकृतम्—अधिकारः ॥८९॥

तत्तो तिरियागय आलिगोवरिं उरलएक्कवीसाए। सायं अणंतर बन्धिऊण आलीपरमसाए ॥९०॥

(स्वो०)—तस्मान्नारकभवात्तिर्यक्ष्वागतः पञ्चेन्द्रियः पर्याप्तकः तिर्यक्षूत्पन्नस्तद्भवावलिकोपरितनसमये ज्ञानान्तरायदर्शनचतुष्कौदारिकसप्तकानामुत्कृष्टप्रदेशसंक्रमं करोति, यतो नारकभवान्तसमये यद्बद्धं तत्तिर्यग्भवावलिकायाः उपरि संक्रामयति, इयन्मात्रदलसञ्चयो नान्यत्र लभ्यत इति। तस्मान्नारकभवादनन्तरभवे सातं स्वोत्कृष्टकालं बद्ध्वा बन्धावलिकापरतो बध्यमानासाते यथाप्रवृत्तसंक्रमेण संक्रामयति। स चोत्कृष्टः सातस्य प्रदेशसंक्रम इति गाथार्थः ॥९०॥

(मलय०)—तदेवमुक्तो गुणितकर्मांशः, सम्प्रति स्वामित्वमभिधीयते—स गुणितकर्मांशस्ततः सप्तमपृथिवीरूपान्नरकादुद्वृत्य पर्याप्तपञ्चेन्द्रियतिर्यक्षु मध्ये आगतः—समुत्पन्नः सन् तद्भवावलिकाया उपरि चरमे समये 'औदारिकैकविंशतेः'—औदारिकसप्तकज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकलक्षणानामेकविंशतिप्रकृतीनामुत्कृष्टं प्रदेशसंक्रमं करोति। एतासां हि कर्मप्रकृतीनां नारकभवचरमसमये उत्कृष्टयोगवशात्प्रभूतं कर्मदलिकमात्तम्, तच्च बन्धावलिकायामतीतायां संक्रमयति, नान्यथा। अन्यत्र एतावत्प्रभूतकर्मदलिकं न प्राप्यते इति 'तत्तो तिरियागयआलिगोवरिं' इत्युक्तम्। तथा ततो नारकभवानन्तरभवे समागतः प्रथमसमयादारभ्य सातवेदनीयमुत्कृष्टं बन्धकालं यावद् बद्ध्वा असातवेदनीयं बध्नन् असातवेदनीयस्य बन्धावलिकान्तसमये सातवेदनीयं सकलमपि बन्धावलिकातीतं भवतीति कृत्वा तस्मिन् समये असातवेदनीये बध्यमाने सातं यथाप्रवृत्तसंक्रमेण संक्रमयन् सातस्योत्कृष्टं प्रदेशसंक्रमं करोति ॥९०॥

**कम्मचउक्के असुभाण बज्झमाणीण सुहुमरागंते। संछोभणंमि नियगे चउवीसाए नियट्टिस्स ॥ ९१ ॥**



(स्वो०)—कर्मचतुष्के—दर्शनावरणीयवेदनीयनामगोत्राख्ये या अशुभाः प्रकृतयः तासां निद्राप्रचलाऽसाताशुभसंहननसंस्थानकुवर्णनवकोपघाताशुभविहायोगत्यपर्याप्तकास्थिरादिषट्कनीचैर्गोत्राणां द्वात्रिंशतामबध्यमानानां क्षपकसूक्ष्मरागस्य गुणितकर्मांशस्यान्तसमये

गुणसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति। स्वे स्वे चरमसंच्छोमे अशुभचतुर्विंशतिप्रकृतीनां–मध्यमाष्टकषायस्त्यानर्द्धित्रिकनामत्रयोदश-कानां (तिर्यग्द्विकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मसाधारणनोकषायषट्करूपाणां त्रयोदशानाम्) सर्वसंक्रमेण क्षपकनावरे गुणितकर्मांशे प्रदेशसंक्रम उत्कृष्टो भवतीति गाथार्थः ॥९१॥

(मलय०)—कर्मचतुष्के–दर्शनावरणवेदनीयनामगोत्रलक्षणे या अशुभाः सूक्ष्मसंपरायावस्थायामबध्यमानाः प्रकृतयो निद्राद्विका-सातवेदनीयप्रथमवर्जसंस्थानपञ्चकप्रथमवर्जसंहननपञ्चकाऽशुभवर्णादिनवकोपघाताप्रशस्तविहायोगतिदुर्भगदुःस्वरानादेयापर्याप्तास्थिराशु-भायशःकीर्तिनीचैर्गोत्रलक्षणा द्वात्रिंशत्प्रकृतयः, तासां गुणितकर्मांशस्य क्षपकस्य सूक्ष्मसंपरायस्य अन्ते–चरमसमये उत्कृष्टः प्रदेशसं-क्रमो भवति । तथा अनिवृत्तिबादरसंपरायस्य क्षपकस्य गुणितकर्मांशस्य मध्यमकषायाष्टकस्त्यानर्द्धित्रिकतिर्यग्द्विकद्वित्रिचतुरि-न्द्रियजातिसूक्ष्मसाधारणनोकषायषट्करूपाणां चतुर्विंशतिप्रकृतीनामात्मीये आत्मीये चरमे सच्छोभे–चरमसंक्रमे उत्कृष्टः प्रदेश-संक्रमो भवति ॥९१॥

सछोभणाए दोण्हं मोहाणं वेयगस्स खणसेसे। उप्पाइय सम्मत्त मिच्छत्तगए तमतमाए ॥९२॥

(स्वो०)—मिथ्यात्वसम्यग्मिथ्यात्वयोः स्वचरमसछोभे क्षपकस्य सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति, वेदकस्य 'खणसेस' त्ति–अन्तर्मुहूर्तावशेषायुषि सप्तमनारके उत्पाद्य सम्यक्त्वं गुणसंक्रमेणापूर्य स्वपुञ्जं मिथ्यात्वं गते उत्कृष्टः प्रदेशसंक्रमो लभ्यत इति गाथार्थः ॥९२॥

(मलय०)—क्षपकस्य द्वयोर्मोहनीययोर्मिथ्यात्वसम्यग्मिथ्यात्वयोरात्मीयात्मीयचरमसच्छोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भ-

वति। तथा क्षीणशेषे अन्तर्मुहूर्त्तावशेषे आयुषि तमस्तमाभिधानायां सप्तमपृथिव्यां वर्त्तमान औपशमिकं सम्यक्त्वमुत्पाद्य दीर्घेण च गुणसंक्रमकालेन वेदकसम्यक्त्वपुञ्जं समापूर्य सम्यक्त्वात्प्रतिपतितो मिथ्यात्वं च प्रपद्य तत्प्रथमसमय एव वेदकसम्यक्त्वस्योत्कृष्टं प्रदेशसंक्रमं करोति ॥ ९२ ॥

भिन्नमुहुत्ते सेसे जोगकसाउक्कसाइ काऊण। संजोअणाविसंजोयगस्स संछोभणा एसिं ॥९३॥

(स्वो०)—स गुणितकर्मांशो नारकोऽन्तर्मुहूर्त्तावशेषे जीविते योगकषायोत्कृष्टत्वादिकानि पूर्वोपदिष्टानि कृत्वा ततः प्राप्तसम्यक्त्वस्तस्य संयोजनावियोजकस्य चरमसंछोभे तेषां अनन्तानुबन्धिनां सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवतीति गाथार्थः ॥ ९३ ॥

(मलय०)—तस्य गुणितकर्मांशस्य सप्तमपृथिव्यां वर्त्तमानस्य भिन्नमुहूर्त्ते—अन्तर्मुहूर्त्ते शेषे आयुषि योगकषायोत्कृष्टानि—उत्कृष्टानि योगस्थानानि उत्कृष्टानि च कषायस्थानानि कृत्वा तस्याश्च सप्तमनरकपृथिव्या उद्वृत्य सम्यक्त्वं चोत्पाद्य वेदकसम्यग्दृष्टेः सतः संयोजनान्—अन्तानुबन्धिनो विसंयोजयत एषामनन्तानुबन्धिनां चरमसंच्छोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति ॥९३॥

ईसाणागयपुरिसस्स इत्थियाए व अट्ठवासाए। मासपुहुत्तब्भहिए नपुंसगस्स चरिमसंछोभे ॥९४॥

(स्वो०)—ईशानदेवो गुणितकर्मांशः संक्लिष्टं एकेन्द्रियप्रायोग्येन बन्धेन सह नपुंसकवेदं भूयो बद्ध्वा तस्माच्च्युतः, ततो मनुजलोके पुरुषत्वं स्त्रीत्वं वा प्रतिपन्नः, तस्य मासपृथक्त्वाभ्यधिकाष्टवार्षिकस्य क्षपणायोत्थितस्य चरमसंछोभे सर्वसंक्रमेण नपुंसकवेदस्योत्कृष्टप्रदेशसंक्रमो लभ्यत इति गाथार्थः ॥ ९४ ॥

(मलय०)—य ईशानदेवो गुणितकर्मांश० सङ्क्लेशपरिणामेनैकेन्द्रियप्रायोग्यं बध्नन् नपुंसकवेदं भूयो भूयो बद्ध्वा तत ईशानाच्च्युत० सन् स्त्री वा पुरुषो वा जातः, ततो मासपृथक्त्वाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु क्षपणायोद्यतते, तस्य नपुंसकवेदं क्षपयतश्चरमसंच्छोभे सर्वसंक्रमेण नपुंसकवेदस्योत्कृष्ट० प्रदेशसंक्रमो भवति ॥ ९४ ॥

पूरित्तु भोगभूमीसु जीविय वासाणिसंखियाणि तओ। हस्सठिइ देवागय लहुछोभे इत्थिवेयस्स ॥९५॥

(स्वो०)—भोगभूमिषु यो भूयो भूयः स्त्रीवेदं बद्ध्वा संक्लेशादापूर्यासंख्येयवर्षाणि ततः—पल्योपमासंख्येयभागे गते अकालमृत्युना मृत्वा स्वोकस्थितिषु देवेषूत्पन्नस्तत्रापि तमेव स्त्रीवेदमापूर्य मनुजेषूत्पन्नो लघुक्षपणायोत्थितो गुणितकर्मांशः चरमसंछोभे सर्वसंक्रमेणोत्कृष्टप्रदेशसंक्रमं स्त्रीवेदस्य करोतीति गाथार्थः ॥ ९५ ॥

(मलय०)—भोगभूमिषु भूयो भूयोऽसंख्येयानि वर्षाणि यावत्स्त्रीवेदं संक्लेशेन बद्ध्वा आपूर्य च—प्रकृत्यन्तरदलिकसंक्रमेण भृत्वा च तावन्त्येव वर्षाणि जीवित्वा ततः—पल्योपमासंख्येयभागे गते सत्यकालमृत्युना ह्रस्वस्थितिं—दशवर्षसहस्रप्रमाणां देवायुषो बद्ध्वा देवत्वेनोत्पन्न०। तत्रापि तमेव स्त्रीवेदमापूर्य स्वायुषः पर्यन्ते मनुजेषु मध्ये अन्यतरवेदसहितो जातः, ततो लघु—शीघ्रं क्षपणायोद्यतः, ततस्तस्य स्त्रीवेदक्षपणसमये चरमसंच्छोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति। इह एवमेव स्त्रीवेदस्योत्कृष्टमापूरणमुत्कृष्टश्च प्रदेशसंक्रमः केवलज्ञानेनोपलब्धो नान्यथेत्येषैव युक्तिरनुसर्तव्या, न युक्त्यन्तराणि, युक्त्यन्तराणां चिरन्तनग्रन्थेष्वदर्शनतो निर्मूलतया अन्यथापि कर्तुमशक्यत्वात्। एवमुत्तरत्रापि यथायोगं तथैव केवलज्ञानेनोपलम्भादित्युत्तरमनुसरणीयम् ॥९५॥

वरिसवरित्थिं पूरिय सम्मत्तमसंखवासियं लभिय। गन्तु मिच्छत्तमओ जहन्नदेवट्ठिइं भोच्चा ॥ ९६ ॥

(स्वो०)—वरिसवरो—नपुंसकवेदः, तमीशाने प्रभूतकालं भूयो भूयो बद्ध्वाऽऽपूर्य ततः स्तोकसंख्येयवर्षाण्यापूर्य ततः स्तोकसंख्यायुष्केषु भूत्वाऽसंख्येयवर्षायुष्केषु गत्वा स्त्रीवेदमसंख्येयवर्षाण्यापूर्य ततस्तत्रैवासंख्येयानि वर्षाणि सम्यक्त्वं लब्ध्वा तद्धेतुकं पुरुषवेदं बद्ध्वा स्त्रीवेदनपुंसकयोर्दलं संक्रम्य ततोऽन्ते मिथ्यात्वं गत्वा मृतो जघन्यदेवस्थितिं भुक्त्वेति गाथार्थः ॥ ९६ ॥

(मलय०)—वर्षवरो—नपुंसकवेदः, तमीशानदेवलोके प्रभूतकालमापूर्य भूयो भूयो बन्धेन दलिकान्तरसंक्रमणेन च स्वायुःक्षये ततश्च्युत्वा संख्येयवर्षायुष्केषु मध्ये समागत्य पुनरसंख्येयवर्षायुष्केषु मध्ये समुत्पन्नः। तत्र संख्येयवर्षाणि यावत् स्त्रीवेदमापूर्य ततोऽसंख्येयवर्षाणि यावत्सम्यक्त्वं लब्ध्वा—आसाद्य तद्धेतुकं पुरुषवेदं तावन्ति वर्षाणि यावद् बध्नन् तत्र स्त्रीवेदनपुंसकवेदयोर्दलिकं निरन्तरं संक्रमयति। ततः पल्योपमासंख्येयभागमात्रं सर्वायुःप्रमाणं जीवित्वा, पर्यन्ते च मिथ्यात्वमासाद्य, ततो जघन्यस्थितिषु—दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये समुत्पन्नः, तत्र च समुत्पन्नः सन् अन्तर्मुहूर्त्तेन कालेन सम्यक्त्वं प्रतिपद्यते ॥९६॥

आगंतुं लहु पुरिसं संछुभमाणस्स पुरिसवेअस्स। तस्सेव सगे कोहस्स माणमायाणमवि कसिणो ॥९७॥

(स्वो०)—लघुस्थितिकदेवत्वादागतो लघुक्षपणायोत्थितो गुणितकर्मांशः स्वोपचितदलस्य यश्चरमक्षेपः तस्मिन् पुरुषवेदस्योत्कृष्टः प्रदेशसंक्रमो लभ्यते, न त्वावलिकाबद्धस्यान्ते, यतस्तत्र स्तोकमिति। तस्यैव स्वके संछोभे क्रोधमानमायानामपि यदा कृत्स्नसंक्रमो भवति तदा पुरुषवेदक्रमेणोत्कृष्टः प्रदेशसंक्रम इति गाथार्थः ॥ ९७ ॥

(मलय०)—ततो देवभवाच्च्युत्वा मनुष्येषु मध्ये समुत्पन्नः, ततो माससप्तकाभ्यधिकेषु अष्टसु वर्षेष्वतिक्रान्तेषु शीघ्रं क्षपणायोद्यतते, केवलं बन्धव्यवच्छेदादर्वागावलिकाद्विकेन कालेन यद्बद्धं पुरुषवेददलिकं तदतीवस्तोकमिति कृत्वा तत्परित्यज्य शेषस्य चरमसं-

च्छोमे उत्कृष्ट' प्रदेशसंक्रमो वेदितव्य.। तथा तस्यैव पुरुषवेदोत्कृष्टप्रदेशसंक्रमस्वामिन' संज्वलनक्रोधस्य संसारं परिभ्रमता उपचितस्य क्षपणकाले प्रकृत्यन्तरदलिकानां गुणसंक्रमेण प्रचुरीकृतस्य स्वके आत्मीये चरमसंच्छोमे कृत्स्न उत्कृष्टः प्रदेशसंक्रमो भवति। अत्रापि बन्धव्यवच्छेदादर्वाक् आवलिकाधिकेन कालेन यद्बद्धं तन्मुक्त्वा शेषस्य चरमसच्छोमे उत्कृष्टः प्रदेशसंक्रमो द्रष्टव्यः, एव मानमाययोरपि वाच्यम् ॥९७॥

चउरुवसमित्तु खिप्पं लोभजसाणं ससंकमस्सते। चउसमगो उच्चस्सा खवगो नीया चरिमबन्धे ॥९८॥

(स्वो०)—चतस्रो वारा मोहनीयमुपशमय्य क्षिप्र-शीघ्र सञ्ज्वलनलोभयशःकीर्त्योः स्वसंक्रमस्यान्ते गुणितकर्मांश उत्कृष्टं प्रदेशसंक्रमं करोति। उपशमश्रेणीग्रहणं तस्यां गुणसंक्रमेण ते द्वेऽपि प्रकृती आपूर्येते। स्वसंक्रमान्तविशेषण लोभस्यान्तरकरणादारतः संक्रमः, न परतोऽस्ति। अपूर्वकरणगुणस्थाने यावद्यशःकीर्तेरेव केवलाया न बन्धस्तावत्संक्रमः, परःस्वस्या एव प्रतिग्रहत्वेति। यो गुणितकर्मांशो मोहनीयस्य चतस्रो वारा उपशामकः स क्षोपशमो भवद्वयेन भवति, ततस्तृतीयभवे मिथ्यात्व गतः सन् उच्चैर्गोत्रं गुणसंक्रमेण दलापूरित तस्मिन्नपि भवे परावर्त्य परावर्त्य बद्ध ततः क्षपकश्रेणीं कर्तुकामो नीचैर्गोत्रस्य बन्धान्तसमये उच्चैर्गोत्रस्य उत्कृष्टप्रदेशसंक्रमं करोतीति गाथार्थः ॥ ९८ ॥

(मलय०)—अनेकभवभ्रमणेन चतुरो वारान् मोहनीयमुपशमय्य चतुर्थोपशमनानन्तरं शीघ्रमेव क्षपकश्रेणिं प्रतिपन्नस्य तस्यैव गुणितकर्मांशस्य स्वसंक्रमस्यान्ते चरमसच्छोम इत्यर्थः, सञ्ज्वलनलोभयशःकीर्त्योरुत्कृष्टः प्रदेशसंक्रमो भवति। इहोपशमश्रेणिं प्रतिपन्नेन सता प्रकृत्यन्तरदलिकानां प्रभूतानां गुणसंक्रमेण तत्र प्रक्षेपात्, द्वे अपि सञ्ज्वलनलोभयशःकीर्तिप्रकृती निरन्तरमापूर्येते, तत

उपशमश्रेणिग्रहणम्। आसंसारं च परिभ्रमता जन्तुना मोहनीयस्य चतुर एव वारान् यावदुपशमः क्रियते, न पञ्चममपि वारम्, ततश्चतुरुपशमग्येत्युक्तम्। तथा संज्वलनलोभस्य चरमसंछोभोऽन्तरकरणचरमसमये द्रष्टव्यो, न परतः, परतस्तस्य संक्रमाऽभावात्, 'अंतरकरणंमि कए। चरित्तमोहेणुपुव्विसंकमण' इति वचनात्। यशःकीर्त्तेरपूर्वकरणगुणस्थानके त्रिंशत्प्रकृतिबन्धव्यवच्छेदसमये अवगन्तव्यः, परतस्तस्याः संक्रमाभावात्। इह मोहोपशमं कुर्वन्नुच्चैर्गोत्रमेव बध्नाति, न नीचैर्गोत्रम्। नीचैर्गोत्रसत्कानि च दलिकानि गुणसंक्रमेण उच्चैर्गोत्रे संक्रमयति, ततश्चतुष्कृत्वो मोहोपशमग्रहणमवश्यं कर्त्तव्यम्। तत्र चतुरो वारान् मोहनीयमुपशमयन् उच्चैर्गोत्रं बध्नन् नीचैर्गोत्रं गुणसंक्रमेण उच्चैर्गोत्रे संक्रमयति। चतुष्कृत्वो मोहोपशमः किल भवद्वयेन भवति,ततस्तृतीयभवे मिथ्यात्वं गतः सन् नीचैर्गोत्रं बध्नाति, तच्च बध्नन् तत्रोच्चैर्गोत्रं संक्रमयति, ततः पुनरपि सम्यक्त्वमासाद्य उच्चैर्गोत्रं बध्नन् तत्र नीचैर्गोत्रं संक्रमयति, एवं भूयो भूय उच्चैर्गोत्रं नीचैर्गोत्रं च बध्नन् नीचैर्गोत्रबन्धव्यवच्छेदानन्तरं शीघ्रमेव सिद्धिं गन्तुकामो नीचैर्गोत्रबन्धचरमसमये उच्चैर्गोत्रस्य गुणसंक्रमेण बन्धेन चोपचितीकृतस्योत्कृष्टं प्रदेशसंक्रमं करोति ॥ ९८ ॥

**परघायसकलतसचउसुसरादितिसासखगतिचउरंसं। सम्मधुवा रिसभजुया संकामइ विरचिया सम्मो ॥**

(स्वो०)-पराघातपञ्चेन्द्रियजातित्रसादिचतुष्कसुस्वरादित्रिकोच्छ्वासशुभविहायोगतिचतुरस्रसंस्थानाख्याः एता द्वादश सम्यग्दृष्टिशुभध्रुवसंज्ञाः प्रथमसंहननयुक्ताः संक्रामयन्ति। विरचिताः-सागरोपमद्वात्रिंशदधिकशतबद्धाः सम्यग्दृष्टिर्गुणितकर्मांश उत्कृष्टप्रदेशसंक्रमं गुणसंक्रमेण करोति। कथं? षट्षष्टिसागरोपमाणि सम्यक्त्वमनुपालयन् एता बध्नाति,ततोऽन्तर्मुहूर्त्तं सम्यग्मिथ्यात्वे स्थित्वा भूयः सम्यक्त्वमनुपालयन् षट्षष्टिसागरोपमाणि बध्नाति, एवं द्वात्रिंशदभ्यधिकमुदधिशतं बद्धाश्रिताः पूरिता एकार्थाः, ततोऽपूर्वकरणे यदा ॥ ८४ ॥

बन्धस्य व्यवच्छेदो भवति तदा बन्धावलिकापरतः यशःकीर्त्यां गुणसंक्रमेणासामुत्कृष्टः प्रदेशसंक्रमो भवति । प्रथमसंहननं तु देवभवे सदा बध्नाति, मनुजभवोनोऽतः तावन्मात्रो बन्धकालोऽस्य भवति, देवत्वाच्च्युतस्यावलिकापरतो देवप्रायोग्यं बध्नानस्योत्कृष्टः प्रदेशसंक्रमो भवतीति गाथार्थः ॥ ९९ ॥

(मलय०)–पराघातनाम, 'सगल'त्ति–पञ्चेन्द्रियजातिः, त्रसादिचतुष्कं–त्रसबादरपर्याप्तप्रत्येकलक्षणम्, सुस्वरादित्रिकं–सुस्वरसुभगादेयरूपम्, उच्छ्वासः, प्रशस्तविहायोगतिः, समचतुरस्रसंस्थानम्, एता द्वादशप्रकृतयः सम्यग्दृष्टिशुभध्रुवसंज्ञा । तत एताः सम्यग्दृष्टिशुभध्रुवा वज्रर्षभनाराचसंहननयुताः, वज्रर्षभनाराचं हि देवभवे नारकभवे वा वर्त्तमानाः सम्यग्दृष्टयो बध्नन्ति, न मनुजतिर्यग्भवे, मनुजतिर्यग्भवे वर्त्तमानानां सम्यग्दृष्टीनां देवगतिप्रायोग्यबन्धसंभवेन संहननबन्धाभावात्, ततो नैतत्सम्यग्दृष्टेः शुभध्रुवबन्धीति पृथगुपात्तम्, कथंभूता एतास्त्रयोदशापि प्रकृतीरित्याह–'चिरचिता'–द्वात्रिंशदधिकसागरोपमशतचिताः, तथाहि–षट्षष्टिसागरोपमाणि यावत् सम्यक्त्वमनुपालयन् एता बध्नाति, ततोऽन्तर्मुहूर्त्तं कालं यावत्सम्यग्मिथ्यात्वमनुभूय पुनरपि सम्यक्त्वं प्रतिपद्यते, ततो भूयोऽपि सम्यक्त्वमनुभवन् षट्षष्टिसागरोपमाणि यावत् एताः प्रकृतीर्बध्नाति। तत एवं द्वात्रिंशदधिकं सागरोपमशतं यावत्सम्यग्दृष्टिः सन् सम्यग्दृष्टिशुभध्रुवा आपूर्य, वज्रर्षभनाराचसंहननं तु मनुष्यतिर्यग्भवहीनं यथासंभवमुत्कृष्टं कालमापूर्य, ततः सम्यग्दृष्टिशुभध्रुवा अपूर्वकरणगुणस्थानके बन्धव्यवच्छेदानन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्त्तौ सङ्क्रामयन् तासामुत्कृष्टं प्रदेशसंक्रमं करोति। तदानीं प्रकृत्यन्तरदलिकानामप्यतिप्रभूतानां गुणसंक्रमेण लब्धानां संक्रमावलिकातिक्रान्तानां संक्रमसंभवात्; वज्रर्षभनाराचसंहननस्य तु देवभवाच्च्युत' सन् सम्यग्दृष्टिर्देवगतिप्रायोग्यं बध्नन् आवलिकामात्रं कालमतिक्रम्योत्कृष्टं प्रदेशसंक्रमं करोति ॥ ९९ ॥

नरयदुगस्स विछोभे पुव्वकोडीपुहुत्तनिचियस्स । थावरउज्जोयायवएगिंदीणं नपुंससमं ॥१००॥

(स्वो०)—पूर्वकोटिपृथक्त्वनिचितस्य–पूर्वकोट्यायुस्तिर्यक्सप्तभवबद्धस्य नरकद्विकस्य अष्टमभवे क्षपकश्रेण्यां चरमसंछोभे सर्वसंक्रमेणोत्कृष्टप्रदेशसंक्रमो लभ्यते। स्थावरातपोद्योतैकेन्द्रियजातीनां यथा नपुंसकस्य तथा तत्रैव मन्तव्य इति गाथार्थः ॥१००॥

(मलय०)—नरकद्विकस्यापि नरकगतिनरकानुपूर्वीरूपस्य पूर्वकोटिपृथक्त्वं यावन्निचितस्य–सप्तसु पूर्वकोट्यायुष्केषु तिर्यग्भवेषु भूयो भूयो बद्धस्येत्यर्थः, अष्टमे भवे मनुष्यो भूत्वा क्षपकश्रेणिं प्रतिपन्नः, तस्य अन्यत्र तन्नरकद्विकं संक्रमयतश्चरमसंछोभे सर्वसंक्रमेण तस्योत्कृष्टः प्रदेशसंक्रमो भवति। स्थावरनाम उद्योतनाम आतपनामैकेन्द्रियजातिरित्येतासां चतसृणां प्रकृतीनां नपुंसकसमं वेदितव्यम्, नपुंसकस्येव आसामपि प्रकृतीनामुत्कृष्टः प्रदेशसंक्रमो भावनीय इत्यर्थः ॥ १०० ॥

तेत्तीसयरा पालिय अंतमुहुत्तूणगाइं सम्मत्तं। बन्धित्तु सत्तमाओ निग्गम्म समए नरदुगस्स ॥१०१॥

(स्वो०)—अन्तर्मुहूर्त्तोनानि त्रयस्त्रिंशत्सागरोपमाणि सम्यक्त्वमनुपाल्य तत्प्रत्ययं मनुजद्विकं सम्पिण्ड्य ततः सप्तमपृथिव्यां अन्तर्मुहूर्त्ते मिथ्यात्वनिमित्ते तिर्यग्द्विके बद्ध्यमाने मनुजद्विकस्य स्वबन्धावलिकापरतः उत्कृष्टप्रदेशसंक्रमो भवतीति गाथार्थः ॥१०१॥

(मलय०)—अन्तर्मुहूर्त्तोनानि त्रयस्त्रिंशत्सागरोपमाणि यावत् सम्यक्त्वमनुपाल्य सम्यक्त्वप्रत्ययं तावन्तं कालं मनुजद्विकं–मनुष्यगतिमनुष्यानुपूर्वीरूपं बद्ध्वा नारकः सप्तमक्षितौ वर्त्तमानश्चरमे अन्तर्मुहूर्त्ते मिथ्यात्वं गतः, ततस्तन्निमित्तं तिर्यग्द्विकं बध्नन् गुणितकर्मांशः सप्तमपृथिव्याः सकाशाद्विनिर्गत्य प्रथमसमय एव मनुजद्विकं यथाप्रवृत्तसंक्रमेण तस्मिन् तिर्यग्द्विके बध्यमाने संक्रमयन् तस्य मनुजद्विकस्योत्कृष्टं प्रदेशसंक्रमं करोति ॥ १०२ ॥

तित्थयराहाराणं सुरगइनवगस्स थिरसुभाण च। सुभधुवबन्धीण तहा सगबन्धा आलिग गन्तु ॥ १०२ ॥

(स्तो०)–तीर्थकराहारकाणां देवद्विकस्य वैक्रियसप्तकस्य स्थिरशुभयोश्च शुभध्रुवबन्धिनीनां च तैजससप्तकशुभवर्णैकादशकागुरुलघु-निर्माणाख्यानां नवपञ्चाशदध्रुवप्रकृतीनां च स्वबन्धावलिकापरत आसां यशःकीर्त्यामुत्कृष्टः प्रदेशसंक्रमो भवतीति गाथार्थः ॥१०२॥

(मलय०)–तीर्थकराहारकसप्तकयोः, सुरगतिनवकस्य–देवद्विकवैक्रियसप्तकरूपस्य, स्थिरशुभयोश्च शुभध्रुवबन्धिनीनां च नामप्रकृतीनां तैजससप्तकशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धोष्णागुरुलघुनिर्माणलक्षणानां सर्वसंख्यया एकोनचत्वारिंशत्प्रकृतीनाम्, तथैव चतसृणामपि सप्तकस्य स्वबन्धावलिकां गत्वा स्वबन्धावलिकायाः परतो यशःकीर्त्तौ सङ्क्रम्यमाणानामुत्कृष्टः प्रदेशसंक्रमो भवति। इयमत्र भावना–आहारकसप्तकं तीर्थकरनाम च उत्कृष्टं स्वबन्धकालं यावद्बद्ध्वा, तत्राहारकसप्तकस्योत्कृष्टं स्वबन्धकालं देशोनां पूर्वकोटिं यावत् संयममनुपालयतो यावान् अप्रमत्ताकालस्तावान् भवो वेदितव्यः। तीर्थकरनाम्नश्च स्वबन्धकाल उत्कृष्टो देशोनपूर्वकोटिद्वयाभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि, तत एतावन्तं कालं यावद्बद्ध्वा क्षपकश्रेणिं प्रतिपन्नो यदा बन्धव्यवच्छेदादनन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ संक्रमयति, तदा तयोरुत्कृष्टः प्रदेशसंक्रमः। तथा शुभध्रुवबन्धिनीनां स्थिरशुभयोश्च सर्वसंख्यया द्वाविंशतिप्रकृतीनां चतुष्कृत्वो मोहोपशमानन्तरं बन्धव्यवच्छेदादूर्ध्वमावलिकायाः परत उत्कृष्टः प्रदेशसंक्रमो लभ्यते। गुणसंक्रमेण हि संक्रान्तं दलिकमावलिकायामतीतायां सत्यामन्यत्र संक्रमयोग्यं भवति, नान्यथेत्यत आवलिकायाः परत इत्युच्यते। देवगतिनवकं तु यदा पूर्वकोटिपृथक्त्वं यावद्बद्ध्वाऽष्टमे भवे क्षपकश्रेणिं प्रतिपन्नः सन् स्वकबन्धव्यवच्छेदानन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ संक्रमयति, तदा तस्योत्कृष्टः प्रदेशसंक्रमो भवति। तदानीं हि प्रकृत्यन्तरदलिकानामपि गुणसंक्रमेण लब्धानां संक्रमावलिकातिक्रान्ततयेन संक्रमं प्राप्यत इति कृत्वा ॥ १०२ ॥

उत्कृष्टप्रदेशसंक्रमस्वामिनः ।

| | |
|---|---|
| ज्ञाना०५-दर्श०४-विघ्न५-औदा०७ (२१) | सप्तम्या उद्वृत्य प्राप्तपर्या० पञ्चे० तिर्यग्भवो गुणितकर्मांशः प्रथमावलिकान्त्यसमये (नारकभवान्त्यसमयबद्धमप्यत्र संक्रामतीति) |
| निद्रा २-असात-अनाद्यसंस्थानसंहननानि १०-कुवर्णादि ९-उपघा०-कुखग०-अपर्या०-अस्थिरादि६-नी० (३२) | दशमान्ते गुणितक्षपकाः |
| मध्यकषाय८-स्त्यान०३-तिर्य०२-विकल ३-सू०-साधा०-नोक०६ (२४) | नवमे गुणितक्षपकाः स्वस्वचरमप्रक्षेपे |
| सातस्य | नरकादागत्य प्रथमसमयादुत्कृष्टबन्धकालेन सातं बद्ध्वा असातं बध्नन् असातस्य बन्धावलिकाऽन्त्यसमये |
| मिथ्यात्वमिश्रयोः | क्षपकः स्वचरमप्रक्षेपे (सर्वसंक्रमेण) |
| सम्यक्त्वस्य | सप्तम्यामन्तर्मु० शेषे औप० सम्य० लब्ध्वा दीर्घगुणसंक्रमेण सम्यक्त्वमापूर्य पुनर्मिथ्यात्वं प्राप्तानां प्रथमसमये |
| अनन्तानुबन्धिचतुर्णाम् | सप्तम्यामन्तर्मु० शेषे चरमावश्यकानि कृत्वाऽनन्तरभवे सम्यक्त्वं प्राप्य अनन्ता०नां विसंयोजकाः चरमप्रक्षेपे (सर्वसंक्रमेण) |

| | |
|---|---|
| वज्रर्षभस्य | मनुष्यभवहीनं १३२ सागरं यावदापूर्य सुरभवाच्च्युतः सम्यग्दृष्टिः सन् देवप्रा० बध्नन्नावलिकापरतो देवप्रायोग्ये प्रक्षेपकः |
| नरकद्विकस्य | सप्तवारानुत्कृष्टायुषाऽऽपूर्याष्टमे भवे मनुष्यत्वं प्राप्य जातक्षपकः (च० प्र० स० सं०) |
| देव २–वै० ७ कयोः | बन्धान्तावलिकापरतः नरकद्विकस्योत्कृ० प्र० संक्रमकविधिवत् |
| मनुष्यद्विकस्य | अन्तर्मु० हीन ३३ सा० यावत् सम्यक्त्वेन सह सप्तमनारकत्वेनापूर्यान्तिमान्तर्मुहूर्ते मिथ्यात्वं प्राप्तस्तन्निमित्तं तिर्यग्द्विकं बध्नन् गुणितकर्मांशः सप्तम्या निर्गत्य प्रथमे समये यथाप्रवृत्तेन तिर्यग्द्विके संक्रमकः |
| आहा० ७ कस्य | समुदितोत्कृष्टाप्रमत्तकालं यावद् आपूरकाः (शेषं स्थिरसमं) |
| जिननाम्नः | स्थिरसमं (परं स किंचिदूनपूर्वकोटिद्वयाधिक ३३ सागरमापूर्य जातक्षपकाणां बन्धान्तावलिकापरत यशसि संक्रमकः) |
| उच्चैर्गोत्रस्य | चतुर्मोहोपशमं कृत्वा पुनः पुनः उच्चैर्नीचैश्च परस्परं संक्रमयन् नीचैर्बन्धविच्छेदसमये नीचैर्गोत्रे संक्रमकः |

उक्त उत्कृष्टप्रदेशसंक्रम इति। जघन्यस्वामित्वे क्षपितकर्मांशः प्रागेवाभिहितः, तत्स्वरूपकथनायाह—

**सुहुमेसु निगोएसु कम्मठितिं पलियऽसंखभागूणं। वसिउं मंदकसाओ जहन्नजोगो उ जो एइ॥ १०३॥**

जोग्गेसु तो तसेसु सम्मत्तमसखवार सपप्प। देसविरइं च सव्व अणउव्वलणं च अडवारा ॥ १०४ ॥

चउरुवसमित्तु मोहं लहुं खवेंतो भवे खवियकम्मो। पाएण तेण पगय पडुच्च काओ वि सविसेस ॥१०५॥

(स्तो०)—'सूक्ष्मेषु निगोदेषु'साधारणजीवेषु कर्मस्थितिं सप्ततिसागरोपमकोटाकोटिप्रमाणां पल्योपमासंख्येयभागोनां'धमिउ'त्ति–स्थित्वा मन्दकषायो जघन्ययोगश्च तदन्तरादसंख्ययोग्यं जघन्यप्रदेशाग्रं कृत्वा य' कश्चिदागच्छति योग्येषु स्थानेष्विति । सूक्ष्मनिगोदग्रहणं स्वल्पायुर्ज्ञापनार्थम्। अल्पायुषो प्रभूतजन्ममरणानि तद्वेदनार्त्तस्य प्रभूतपुद्गलशाटः, अल्पबलकषायत्वे अल्पपुद्गलग्रहणं गुणितकर्मांशस्य विपरीतोऽयमिति गाथार्थः ॥ १०३ ॥

तस्मात्सूक्ष्मनिगोदकायादुद्वृत्तः सम्यक्त्वदेशविरतिसर्वविरतियोग्येषु त्रसेषु भूयो भूयो भूत्वेति वक्तव्यम्। तस्मिन् पल्योपमासंख्येयभागमात्रे काले सम्यक्त्वं सङ्ख्यातीता वाराः सम्प्राप्य, स्वल्पकालिकीं देशविरतिं चासङ्ख्येया वाराः सम्प्राप्य, स्वल्पकालिकीं सर्वविरतिं प्रथमकषायोद्वलनं चाष्टौ वारा विधाय य उपशमादि (उपशमश्रेणिं चतुरो वारान्) करोति (स क्षपितकर्मांश उच्यते)। सम्यक्त्वादिग्रहणं स्वल्पस्थितिबन्धज्ञापनार्थम्, अल्पस्थितौ स्वल्पाः पुद्गला भवन्ति, अशुभानां तस्मात्सौ पुद्गलाः शटन्ति चेति गाथार्थः ॥ १०४ ॥

चतस्र उपशमश्रेणीः कृत्वा ततोऽन्यस्मिन्भवे लघु–शीघ्रं कर्माष्टकं क्षपयन् क्षपितकर्मांश इत्यभिधीयते, प्रायेण–बाहुल्यतः, तेनेह जघन्यप्रदेशसक्रमे प्रकृतम्–अधिकारः काश्चित्प्रकृतीरधिकृत्य विशेषोऽपि वक्तव्य इति गाथार्थः ॥ १०५ ॥

(मलय०)—तदेवमुक्तं उत्कृष्टं प्रदेशसंक्रमस्वामित्वम्, संप्रति जघन्यप्रदेशसंक्रमस्वामित्वमभिधानीयम्, तच्च प्रायः क्षपितकर्मांशे प्राप्यते, इति तस्यैव स्वरूपमाह-यो जीवः सूक्ष्मेषु निगोदेषु—सूक्ष्मानन्तकायिकेषु मध्ये कर्मस्थितिं—सप्ततिसागरोपमकोटीकोटीप्रमाणां पल्योपमासंख्येयभागन्यूनां यावत्, किमुक्तं भवति ? पल्योपमासंख्येयभागहीनं सप्ततिसागरोपमकोटीकोटीप्रमाणं कालं यावदुषित्वा-स्थित्वा, सूक्ष्मनिगोदा हि स्वल्पायुषो भवन्ति, ततस्तेषां प्रभूतजन्ममरणभावेन वेदनार्त्तानां प्रभूतपुद्गलपरिशाट उपजायते इति सूक्ष्मनिगोदग्रहणम्। कथंभूत उषित्वेत्यत आह—मन्दकषायो जघन्ययोगश्च, मन्दः शेषनिगोदापेक्षयाप्यत्यल्पः कषायो यस्य स मन्दकषायः, जघन्यः शेषनिगोदजीवानपेक्ष्य निकृष्टो योगः सकरणं वीर्यं यस्य सः, तथा मन्दकषायतायां हि स्वल्पतरां स्थितिं बध्नाति, स्तोकां चोद्वर्त्तयति, तथा मन्दयोगतायामभिनवकर्मपुद्गलोपादानमतिस्तोकं भवति, ततो मन्दकषायजघन्ययोगग्रहणम्। मन्दकषायो जघन्ययोगश्च सन् अभव्यप्रायोग्यजघन्यकल्पं प्रदेशसंचयं कृत्वा 'तो'त्ति—तेभ्यः सूक्ष्मनिगोदेभ्यो विनिर्गत्य योग्येषु—सम्यक्त्वदेशविरतिसर्वविरतियोग्येषु त्रसेषु मध्ये एति—आगच्छति, आगत्य च पल्योपमासंख्येयभागमध्ये संख्यातीतान् वारान् यावत्सम्यक्त्वं, तावत एव च वारान् किञ्चिदूनान् देशविरतिं च लब्ध्वा, कथं लब्ध्वेति चेत्, उच्यते—सूक्ष्मनिगोदेभ्यो निर्गत्य बादरपृथिवीकायिकेषु मध्ये समुत्पन्नः, ततोऽन्तर्मुहूर्त्तेन कालेन विनिर्गत्य मनुष्येषु पूर्वकोट्यायुष्केषु मध्ये समुत्पन्नः, तत्रापि शीघ्रमेव माससप्तकानन्तरं योनेर्विनिर्गमनेन जातः, ततोऽष्टवार्षिकः सन् संयमं प्रतिपन्नः, ततो देशोनां पूर्वकोटिं यावत्संयममनुपाल्य स्तोकावशेषे जीविते सति मिथ्यात्वं प्रतिपन्नः, ततो मिथ्यात्वेनैव कालं गतः सन् दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये देवत्वेनोपजातः, ततोऽन्तर्मुहूर्त्तमात्रे गते सति सम्यक्त्वं प्रतिपद्यते, ततो दशवर्षसहस्राणि जीवित्वा तावन्तं कालं च सम्यक्त्वमनुपाल्य पर्यवसानावसरे मिथ्या-

त्वेन कालं गतः सन् बादरपृथिवीकायिकेषु मध्ये समुत्पन्नः, ततोऽन्तर्मुहूर्तेन ततोऽप्युद्वृत्य मनुष्येषु समुत्पद्यते। ततः पुनरपि सम्यक्त्वं वा देशविरतिं वा प्रतिपद्यते, एवं देवमनुष्यभवेषु सम्यक्त्वादि गृह्णन् मुञ्चश्च तावद्नन्वो यावत्पल्योपमासंख्येयभागमध्ये संख्यातीतान् वारान् यावत् सम्य क्त्वलाभः स्वल्पकालिकश्च देशविरतिलाभो भवति। इह यदा यदा सम्यक्त्वादिप्रतिपत्तिस्तदा तदा बहुप्रदेशाः प्रकृतीरल्पप्रदेशाः करोति, ततो बहुशः सम्यक्त्वादिप्रतिपत्तिग्रहणम्। एतेषु च सम्यक्त्वादिप्रायोग्येषु भवेषु मध्ये अष्टौ वारान् सर्वविरतिं प्रतिपद्यते, अष्टावेव च वारान् अनन्तानुबन्धिनां कषायाणामुद्वलनं करोति। तथा चतुरो वारान् मोहनीयमुपशमय्य, ततोऽन्यस्मिन् भवे लघु-शीघ्रं कर्माणि क्षपयन् क्षपितकर्मांश इत्यभिधीयते। एतेन च क्षपितकर्मांशेन इह जघन्यप्रदेशसंक्रमस्वामित्वे चिन्त्यमाने प्रायेण बाहुल्येन प्रकृतम्-अधिकारः, काश्चित्पुनः प्रकृतीरधिकृत्य सविशेषं भणिष्यामि। तदेवमुक्तः क्षपितकर्मांशः ॥ १०३-१०४-१०५ ॥

जघन्यस्वामित्वमाह—

हासदुभयकुच्छाणं खीणंताणं च बन्धचरिमम्मि। समए अहापवत्तेण ओहिजुगले अणोहिस्स ॥ १०६ ॥

(स्वो०)—हास्यरतिभयजुगुप्सानां क्षीणकषायान्ते (च) यासामन्तो विनाशः ताः षोडश क्षीणकषायान्ताः ज्ञानावरणान्तरायदर्शनषट्काख्याः, आसां विंशतेः स्वबन्धान्तसमये यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति। हास्यरतिभयजुगुप्सानिद्राप्रचलानां यतो बन्धे व्यवच्छिन्ने गुणसंक्रमेण संक्रमो भवति, तत्र च प्रभूतदलमिति। अन्तरायस्य परतः संक्रम एव नास्ति। अवधिज्ञानदर्शनवतो यदि (अवधिद्विकरहितानां) शेषाणां सत्तानां बन्धव्यवच्छेदो भवति, तदा संक्रम एव न भवतिः कुतो जघन्यः प्रदेशसं-

क्रमः ? तस्मात् (बन्धान्तसमये अवधिमतः) प्रबलक्षयोपशमत्वेन रूक्षत्वाद्बहुपुद्गलशाटः, क्षीणशेषाः स्तोकाः संक्रामन्ति । अवधिद्विके असति तद्द्विकस्यैव जघन्यः संक्रमः । बन्धान्तसमयग्रहणं अधस्तनस्थिति (तो संक्रमस्य) व्यपगमख्यापनार्थमिति गाथार्थः ॥१०६॥

(मलय०)—तत्र जघन्यप्रदेशसंक्रमस्वामित्वमाह—हास्यद्विकं हास्यरतिरूपं तस्य, भयजुगुप्सयोः, तथा क्षीणे-क्षीणकषाये अन्तः पर्यन्त यासां ताः क्षीणकषायान्ताः, अवधिज्ञानावरणरहितज्ञानावरणचतुष्टयचक्षुरचक्षुःकेवलदर्शनावरणनिद्राद्विकान्तरायपञ्चरूपाः, तासां सर्वसंख्यया अष्टादशप्रकृतीनां बन्धचरमसमये यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति । इयमत्र भावना-योऽवधिज्ञानसमन्वितो जीवस्तस्यावधिज्ञानावरणरहितशेषज्ञानावरणचतुष्टयावधिदर्शनावरणरहितशेषचक्षुरचक्षुःकेवलदर्शनावरणरूपाणां सप्तानां प्रकृतीनामात्मीयात्मीयबन्धव्यवच्छेदसमये यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमः । अवधिज्ञानं ह्युत्पादयन् प्रभूतान् कर्मपुद्गलान् परिशाटयति स्म । तत एतासां स्वबन्धव्यवच्छेदसमये स्तोका एव पुद्गलाः प्राप्यन्ते । अत्रापि च जघन्यप्रदेशसंक्रमेणाधिकारः, ततो योऽवधिज्ञानसमन्वित इति भावितम् । तथा निद्राद्विकहास्यरतिभयजुगुप्सानां बन्धव्यवच्छेदानन्तरं गुणसंक्रमेण संक्रमो जायते, ततः प्रभूतं दलिकं लभ्यते, अन्तरायपञ्चकस्य प्रागुक्तानां च प्रकृतीनां बन्धव्यवच्छेदानन्तरं संक्रम एव न भवति, पतद्ग्रहाभावप्राप्तेरिति बन्धचरमसमये इत्युक्तम् । तथा अनवधेः-अवधिज्ञानावधिदर्शनरहितस्यावधियुगले अवधिज्ञानावरणावधिदर्शनावरणरूपे स्वस्वबन्धचरमसमये जघन्यः प्रदेशसंक्रमो भवति । इह अवधिज्ञानमवधिदर्शनं चोत्पादयतः प्रबलक्षयोपशमभावतोऽवधिज्ञानावरणावधिदर्शनावरणयोरतीवरूक्षाः कर्मपुद्गला जायन्ते, ततो बन्धव्यवच्छेदकालेऽपि प्रभूताः परिशटन्ति, तथा च सति जघन्यप्रदेशसंक्रमो न लभ्यते इति 'अणोहिस्स' इत्युक्तम् ॥

थीणतिगइत्थिमिच्छाण पालिय वेछसट्ठि सम्मत्तं । सगखवणाए जहन्नो अहापवत्तस्स चरमम्मि ॥ १०७ ॥

(स्वो०)–स्त्यानर्द्धित्रिकस्त्रीवेदमिथ्यात्वानां सम्यक्त्व द्वे षट्षष्टी सागरोपमाणामनुपाल्य, यतः तस्मिन् तेषामबन्धोऽनुपचयश्च, ततः किञ्चिच्छेषाणां क्षपणायोत्थिते यथाप्रवृत्तकरणान्तसमये यथाप्रवृत्तसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति, अपूर्वकरणे गुणसङ्क्रमसम्भवात् स न लभ्यत इति गाथार्थः ॥ १०७ ॥

(मलय०)—स्त्यानर्द्धित्रिकस्त्रीवेदमिथ्यात्वानां द्वे षट्षष्टी सागरोपमाणां यावत् सम्यक्त्वमनुपाल्य सम्यक्त्वप्रभावतस्तेषां सम्बन्धि प्रभूत दलिकं परिशाट्य किञ्चिच्छेषाणां सतां क्षपणायां समुद्यतस्य यथाप्रवृत्तकरणान्तिमसमये विध्यातसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति। परतोऽपूर्वकरणे गुणसङ्क्रमेण प्रभूतकर्मदलिकसङ्क्रमसम्भवात् जघन्यः प्रदेशसङ्क्रमो न प्राप्यते इति यथाप्रवृत्तचरमसमयग्रहणम् ॥ १०७ ॥

अरइसोगट्ठकसायअसुभधुवबन्धिअथिरतियगाण ।अस्सायस्स य चरिमे अहापवत्तस्स लहु खवगे ॥१०८॥

(स्वो०)–अरतिशोकमध्यमाष्टकषायाशुभध्रुवबन्धिकवर्णनवकोपघातास्थिराशुभायशःकीर्त्त्यसातानां देशोनपूर्वकोटिकृततीव्रसयमस्य क्षपकश्रेण्यां यथाप्रवृत्तकरणान्तसमये यथाप्रवृत्तसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति, अपूर्वकरणे गुणसङ्क्रमसम्भवात् स न लभ्यत इति गाथार्थः ॥ १०८ ॥

(मलय०)—अरतिशोकयोरष्टानामप्रत्याख्यानप्रत्याख्यानावरणसंज्ञितानां कषायाणामशुभध्रुवबन्धिनीनां—कृष्णवर्णादिनवकोपघातरूपाणां अस्थिरत्रिकस्य—अस्थिराशुभायशःकीर्त्तिरूपस्यासातवेदनीयस्य सर्वसंख्यया चतुर्विंशतिप्रकृतीनां, तत्रापि कषायाष्टकरहितानां लघुक्षपके सर्वेभ्योऽप्यन्येभ्यः शीघ्रमेव क्षपणायोत्थितस्य मासपृथक्त्वाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु क्षपणाय समभ्युद्यतस्येत्यर्थः।

अष्टौ कषायान् प्रति देशोनां पूर्वकोटिं यावत्संयममनुपाल्य, मूलटीकायां पुनः सर्वा अप्येताः प्रकृतीरधिकृत्य देशोनां पूर्वकोटिं यावत् संयममनुपाल्येत्युक्तम्। क्षपकश्रेणिं प्रतिपन्नस्य यथाप्रवृत्तकरणचरमसमये कषायाष्टकस्य विध्यातसंक्रमेण, शेषाणां यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति ॥ १०८ ॥

[1]हस्सद्धं गुणपूरिय सम्मं मीसं च धरिय उक्कोसं। कालं मिच्छत्तगए चिरउव्वलगस्स चरिमम्मि ॥१०९॥

(स्वो०)–सम्यक्त्वप्राप्तौ ह्रस्वं–स्तोकं कालं गुणसंक्रमेण सम्यक्त्वसम्यग्मिथ्यात्वे मिथ्यात्वदलेनापूर्य ततो द्वे षट्षष्टी सागरोपमाणामनुभूय ततो मिथ्यात्वं गतः चिरोद्वलनं–मन्दोद्वलनं, ततः द्विचरमखण्डकान्तसमये यः परस्थाने क्षेपः स सम्यक्त्वसम्यग्मिथ्यात्वयोर्जघन्यसंक्रम इति गाथार्थः ॥ १०९ ॥

(मलय०)—सम्यक्त्वमुत्पाद्य ह्रस्वगुणाद्धां–स्तोकां गुणसंक्रमाद्धाम्, किमुक्तं भवति? स्तोककालेन गुणसंक्रमेण सम्यक्त्वं मिश्रं च मिथ्यात्वदलेन पूरयित्वा, सम्यक्त्वं चोत्कृष्टं कालं धृत्वा द्वे षट्षष्टी सागरोपमाणां यावत् सम्यक्त्वमनुपाल्य मिथ्यात्वं गतस्य चिरोद्वलनस्य पल्योपमासंख्येयभागमात्रकालेन सम्यक्त्वसम्यग्मिथ्यात्वे उद्वलयतो यद् द्विचरमखण्डस्य चरमसमये सम्यक्त्वसम्यग्मिथ्यात्वयोर्दलिकं परस्थाने मिथ्यात्वप्रकृतिरूपे प्रक्षिप्यते, स तयोर्जघन्यः प्रदेशसंक्रमः ॥ १०९ ॥

संजोयणाण चउरुवसमित्तु संजोयइत्तु अप्पद्धं। छावट्ठिदुगं पालिय अहापवत्तस्स अंतम्मि ॥ ११० ॥

[1] 'हस्सगुणद्धं पूरिय' इति मलय० टीकासंमतः पाठः।

(स्वो०)—चतस्रो वारा मोहनीयमुपशमय्य शुभभावात् पुद्गलशाटार्थम्, ततो मिथ्यात्वं गत्वाऽल्पकालं संयोजयित्वा-अनन्तानुबन्धिनो बद्ध्वा, स्वल्पं चारित्रमोहनीयदलं संक्राम्य सम्यक्त्वं प्रतिपन्नः, ततः द्वे षट्षष्टी सागरोपमाणां सम्यक्त्वमनुपाल्य क्षपणायोत्थित', तस्य यथाप्रवृत्तकरणान्त्यसमयेऽनन्तानुबन्धिनां जघन्यः प्रदेशसंक्रमो भवतीति गाथार्थः ॥ ११० ॥

(मलय०)—चतुरो वारान् मोहनीयमुपशमय्य, चतुष्कृत्वो मोहनीयोपशमनेन किं प्रयोजनमिति चेद् ,उच्यते–प्रभूतपुद्गलपरिशाट' । तथाहि–चारित्रमोहनीयप्रकृतीनामुपशमं कुर्वन् स्थितिघातरसघातगुणश्रेणिगुणसंक्रमैः प्रभूतान् पुद्गलान् परिशाटयतीति, ततश्चतुष्कृत्वो मोहनीयोपशमं कृत्वा मिथ्यात्वं गच्छति । मिथ्यात्वं गत' सन् अल्पाद्धां–अल्पं कालं यावत् संयोजनान् संयोज्य–अनन्तानुबन्धिनो बद्ध्वा, तदानीं च चारित्रमोहनीयदलिकं स्वल्पमेव विद्यते, चतुष्कृत्वो मोहोपशमकाले स्थितिघातादिभिर्घातितत्वात्, ततोऽनन्तानुबन्धिनो बध्नन्, तेषु यथाप्रवृत्तसंक्रमेण स्तोकमेव चारित्रमोहनीयदलिकं संक्रमयति । ततोऽन्तर्मुहूर्ते गते सति पुनरपि सम्यक्त्वं प्रतिपद्यते । तत्र द्वे षट्षष्टी सागरोपमाणां यावदनुपाल्यानन्तानुबन्धिनां क्षपणाय समुद्यतस्य यथाप्रवृत्तकरणान्त्यसमये तेषामनन्तानुबन्धिनां विध्यातसंक्रमेण जघन्य' प्रदेशसंक्रमो भवति । परतोऽपूर्वकरणे गुणसंक्रमः प्रवर्तते इति स न प्राप्यते ॥ ११० ॥

हस्सं कालं बंधिय विरओ आहारमविरइं गंतु । चिरओव्वलणे थोवो तित्थं बंधालिगा परओ ॥१११॥

(स्वो०)—ह्रस्वं–स्तोकं कालमप्रमत्तो बद्ध्वाहारकसप्तकं ततोऽविरतिं गत्वा अन्तर्मुहूर्तात् परतः चिरोद्वलनेन–पल्योपमासंख्येयभागकालोद्वलनेन उद्वलयतो यो द्विचरमखण्डकान्त्यसमये परस्थाने क्षेपः स जघन्यसंक्रम आहारकस्येति । तीर्थकरस्यापि बन्धावलिकापरतो जघन्य' प्रदेशसंक्रमो भवति, यतो बन्धावलिप्रथमसामयिकं दलं तस्य तदा संक्रामतीति गाथार्थः ॥ १११ ॥

(मलय०)—ह्रस्वं कालं—स्तोकं कालं यावद्विरतोऽप्रमत्तसंयतः सन् आहारकसप्तकं बद्ध्वा कर्मोदयपरिणतिवशात्पुनरप्यविरतिं गतोऽविरतिं च गत्वा ततोऽन्तर्मुहूर्तात्परतश्चिरोद्वलने पल्योपमासंख्येयभागप्रमाणेन कालेनोद्वलनया उद्वलयता सता यत्स्तोकं संक्रम्यते, किमुक्तं भवति ? द्विचरमखण्डस्य चरमसमये यत्कर्मदलिकं परप्रकृतिषु संक्रम्यते स आहारकसप्तकस्य जघन्यप्रदेशसंक्रमः । तथा तीर्थकरनामकर्म बध्नता यत्प्रथमसमये बद्धं दलिकं तद् बन्धावलिकातीतं सत् यदा परप्रकृतिषु यथाप्रवृत्तसंक्रमेण संक्रमयति, तदा तीर्थकरनाम्नो जघन्यप्रदेशसंक्रमः ॥ १११ ॥

वेउव्वेक्कारसगं उव्वलियं बंधिऊण अप्पद्धं । जेट्ठट्ठितिनरयाओ उव्वट्टित्ता अबंधित्ता ॥ ११२ ॥
थावरगसमुव्वलणे मणुदुगउच्चाणसुहुमबद्धाणं । एमेव समुव्वलणे तेऊवाऊसुवगयस्स ॥ ११३ ॥

(स्वो० )–देवद्विकं नरकद्विकं वैक्रियसप्तकं एतद् वैक्रियैकादशकं एकेन्द्रियेणोद्वलितं पञ्चेन्द्रियत्वेऽल्पकालं बद्ध्वा ततः सप्तम्यां त्रयस्त्रिंशत्सागरोपमाण्यनुभूय तत उद्वृत्तः पञ्चेन्द्रियतिर्यक्ष्वबद्ध्वेति गाथार्थः । ततस्तस्मात् स्थावरकायगतः, तत्र चिरोद्वलनस्य द्विचरमखण्डकान्तसमये यः परस्थाने क्षेपः स वैक्रियैकादशकस्य जघन्यप्रदेशसंक्रमः । मनुजद्विकोच्चैर्गोत्रयोरपि सूक्ष्मैकेन्द्रियबद्धयोः एवमेव –तेनैव विधिना उद्वलने तेजस्कायिकेषु वायुकायिकेषु वा गतस्य जघन्यः प्रदेशसंक्रमो भवतीति गाथार्थः ॥ ११२–११३ ॥

(मलय०)—देवद्विकनरकद्विकवैक्रियसप्तकलक्षणं वैक्रियैकादशकमेकेन्द्रियभवे वर्त्तमानेनोद्वलितम्, पुनरपि पञ्चेन्द्रियत्वमुपगतेनाल्पाद्धामल्पं कालमन्तर्मुहूर्त्तं कालं यावदित्यर्थः, बद्ध्वा ततो ज्येष्ठस्थितिरुत्कृष्टस्थितिस्त्रयस्त्रिंशत्सागरोपमस्थितिक इत्यर्थः, सप्तमनरकपृथिव्यां नारको जातः, ततस्तावन्तं कालं यावत् यथायोगं तद्वैक्रियैकादशकमनुभूय, ततो नरकादुद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नः,

तत्र च तद्वैक्रियैकादशकमबद्ध्वा स्थावरेष्वेकेन्द्रियेषु मध्ये समुत्पन्नः, तस्य पल्योपमासंख्येयभागप्रमाणयोद्वलनया तदुद्वलयतो द्विचरमखण्डस्य चरमसमये प्रकृत्यन्तरे दलिकं संक्रामति, स तस्य वैक्रियैकादशकस्य जघन्यः प्रदेशसंक्रमः । एवमेवानन्तरोक्तेन प्रकारेण मनुष्यद्विकोच्चैर्गोत्रयोः सूक्ष्मेण सता पद्वयोस्तेजोवायुषु मध्ये समागतस्य समुद्वलने–चिरोद्वलने जघन्यः प्रदेशसंक्रमः । इय-मत्र भावना–मनुजद्विकमुच्चैर्गोत्रं च प्रथमतस्तेजोवायुभवे वर्तमानेनोद्वलितम्, पुनरपि सूक्ष्मैकेन्द्रियभवमुपागतेनान्तर्मुहूर्तं कालं यावद् बद्धम्, ततः पञ्चेन्द्रियभवं गत्वा सप्तमनरकपृथिव्यामुत्कृष्टस्थितिको नारको जातः, तस्मात् स्थानादुद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नः, एतावन्तं कालमबद्ध्वा प्रदेशसंक्रमेण चानुभूय तेजोवायुषु मध्ये समुत्पन्नः, तस्य मनुजद्विकोच्चैर्गोत्रे चिरोद्वलनयोद्वल-यतो द्विचरमखण्डस्य चरमसमये परप्रकृतौ यद्दलिकं संक्रामति, स तयोर्जघन्यः प्रदेशसंक्रमः ॥ ११२–११३ ॥

अणुवसमित्ता मोह सायस्स असायअतिमे बधे । पणतीसा य सुभाणं अपुव्वकरणालिगा अते ॥११४॥

(स्वो०)–मोहनीयमनुपशमय्य–उपशमश्रेणीमकृत्वा सातस्य जघन्यः प्रदेशसंक्रमो भवति असातबन्धान्त्यसमये, तत्परतः सातस्यैव प्रतिग्रहता यतः स्यात् । पञ्चत्रिंशत्प्रकृतीनां शुभानां–त्रसादिदशकशुभवर्णैकादशकतैजससप्तकशुभविहायोगतिचतुरस्रागुरुलघूच्छ्वासनि-र्माणपञ्चेन्द्रियजातिपराघातानां चाकृत्वोपशमश्रेणीं स क्षपितकर्मांशः पूर्वविधिना भूत्वा क्षपणायोत्थितोऽपूर्वकरणस्यावलिकान्तसमये जघन्यप्रदेशसंक्रमं करोति, यतः परतो गुणसंक्रमो भवति, प्रथमसंहननस्यापि स्वबन्धान्तसमये तस्यैव भवतीति गाथार्थः ॥ ११४ ॥

(मलय०)—अनुपशमय्य मोहं–मोहनीयोपशममकृत्वा उपशमश्रेणिमकृत्वेत्यर्थः, असातबन्धानां मध्ये योऽन्तिमोऽसातस्य बन्धस्त-स्मिन् चरमे असातबन्धे अन्तिमे समये वर्तमानस्य क्षपणायोद्यतस्य सातस्य जघन्यः प्रदेशसंक्रमो भवति । परतो हि सातस्य पतद्ग्रहता, न

संक्रमः। पञ्चत्रिंशत्प्रकृतीनां-पञ्चेन्द्रियजातिसमचतुरस्रसंस्थानतैजससप्तकप्रशस्तविहायोगतिशुक्लोहितहारिद्रसुरभिगन्धकषायाम्लमधुर-मृदुलघुस्निग्धोष्णागुरुलघुपराघातोच्छ्वासत्रसादिदशकनिर्माणलक्षणानामुपशमश्रेणिमकृत्वा शेषैर्विधिभिः क्षपितकर्मांशसत्कैर्जघन्यं प्रदेशाग्रं कृत्वा क्षपणायोत्थितस्य क्षपितकर्मांशस्य अपूर्वकरणसत्कायाः प्रथमावलिकाया अन्ते चरमे समये तासां जघन्यः प्रदेशसंक्रमो भवति, तत ऊर्ध्वं तु गुणसंक्रमेण लब्धस्यातिप्रभूतस्य दलिकस्य संक्रमावलिकातिक्रान्तत्वेन संक्रमसंभवात्स न प्राप्यते। वज्रर्षभनाराचसंहननस्य तूपशमश्रेणिव्यतिरिक्ताभिः शेषाभिः क्षपितकर्मांशक्रियाभिर्जघन्यं प्रदेशाग्रं कृत्वा क्षपणायोत्थितस्य स्वबन्धव्यवच्छेदसमये जघन्यः प्रदेशसंक्रमः। एतच्च सूत्रेऽनुक्तमपि मूलटीकायामभिधानाद् द्रष्टव्यम् ॥ ११४ ॥

तेवट्ठं उदधिसयं गेविज्जाणुत्तरे सऽबंधित्ता। तिरिदुगउज्जोयाइं अहापवत्तस्स अंतंमि ॥ ११५ ॥

(स्वो०)-त्रिषष्ट्याभ्यधिकं सागरोपमशतं ग्रैवेयकानुत्तरदेवेष्वबद्ध्वा, कथं? स क्षपितकर्मांशः त्रिपल्योपमायुष्केषु मनुजेषु देवद्विकं बध्नाति, ततः पल्योपमायुर्देवोऽप्रतिपतितसम्यक्त्वो मनुष्यभवानन्तरं ग्रैवेयकेष्वेकत्रिंशत्सागरोपमायुस्तत्र मिथ्यादृष्टित्वेन स्थित्वा ततोऽवशेषेऽन्तर्मुहूर्त्ते सम्यक्त्वं गृहीत्वा द्वात्रिंशदभ्यधिकं शतं सागरोपमाणामनुत्तरादिषु सुरेषु स्थित्वा ततस्तिर्यग्द्विकोद्योतानि यथाप्रवृत्तकरणान्तसमये विध्यातसंक्रमेण संक्रामयति, तदा जघन्यसंक्रमस्तेषां भवतीति गाथार्थः ॥ ११५ ॥

(मलय०)—त्रिषष्टं-त्रिषष्ट्यधिकं उदधिशतं-सागरोपमाणां शतं चतुष्पल्याधिकं चेति शेषः, स क्षपितकर्मांशः सर्वजघन्यतिर्यग्द्विकोद्योतसत्कर्मा ग्रैवेयकानुत्तरसुरभवेषु तिर्यग्द्विकं-तिर्यग्गतितिर्यगानुपूर्वीरूपमुद्योतं चाऽबद्ध्वा यथाप्रवृत्तकरणस्यान्ते चरमसमये उद्योततिर्यग्द्विकयोर्जघन्यं प्रदेशसंक्रमं करोति। कथं त्रिषष्ट्यधिकं सागरोपमाणां शतं चतुष्पल्याधिकं च यावदबद्ध्वा इति चेद्, उच्यते—

स क्षपितकर्मांशस्त्रिपल्योपमायुष्केषु मनुजेषु मध्ये समुत्पन्न', तत्र देवद्विकमेव बध्नाति, न तिर्यग्द्विक नाप्युद्योतम्। तत्र चान्तर्मुहूर्ते शेषे सत्यायुषि सम्यक्त्वमवाप्य, ततोऽप्रतिपतितसम्यक्त्व एव पल्योपमस्थितको देवो जातः, ततोऽप्रतिपतितसम्यक्त्वो देवमान्च्युत्वा मनुष्येषु मध्ये समुत्पन्न', ततस्तेनैवाऽप्रतिपतितसम्यक्त्वेन सहित एकत्रिंशत्सागरोपमस्थितिको ग्रैवेयकेषु मध्ये देवो जातः, तत्र चोत्पत्त्यनन्तरमन्तर्मुहूर्तादूर्ध्वं मिथ्यात्वं गतः, ततोऽन्तर्मुहूर्तावशेषे आयुषि पुनरपि सम्यक्त्वं लभते, ततो द्वे षट्षष्टी सागरोपमाणां यावन्मनुष्यानुत्तरसुरादिषु सम्यक्त्वमनुपाल्य तस्याः सम्यक्त्वाद्धाया अन्तर्मुहूर्ते शेषे शीघ्रमेव क्षपणाय तमुद्यतः, ततोऽनेन विधिना त्रिषष्टयधिकं सागरोपमाणां शतं चतुष्पल्याधिकं च यावत्तिर्यग्द्विकमुद्योतं च बन्धरहितं भवतीति ॥ ११५ ॥

इगिविगलायवथावरचउक्कमबंधिऊण पणसीयं। अयरसयं छट्ठीए बावीसयर जहा पुव्वं ॥११६॥

(स्वो०)–एकेन्द्रियविकलेन्द्रियातपस्थावरसूक्ष्मापर्याप्तकसाधारणप्रकृतीनां(पञ्चाशीत्यधिक)सागरोपमशतं यावदबद्ध्वा, कथं? षष्ठपृथिव्यां द्वाविंशत्यतराणि स्थित्वाऽन्तर्मुहूर्तावशेषायुर्लब्धसम्यक्त्वो मनुष्यो जातः, तेनाप्रतिपतितेनैव चतुष्पल्योपमायुर्देवो जात', ततोऽप्रतिपतितसम्यक्त्वो मनुष्यत्वे विरतिं लब्ध्वा ग्रैवेयकेष्वेकत्रिंशत्सागरोपमायुर्देवो जात'। स तत्र मिथ्यात्वोदयेन भवं स्थित्वा शेषेऽन्तर्मुहूर्ते सम्यक्त्वं लब्ध्वा तदप्युत्कृष्टस्थितिं प्रागवत् द्वात्रिंशदभ्यधिकमागरोपमशतं समनुपाल्य तदन्ते यथाप्रवृत्तकरणान्त्यसमये नवकस्यापि जघन्यप्रदेशसंक्रमं करोतीति गाथार्थः ॥ ११६ ॥

(मलय०)—एकेन्द्रियजातिः, 'विगल'त्ति द्वीन्द्रियजातिस्त्रीन्द्रियजातिश्चतुरिन्द्रियजातिरातपनाम स्थावरचतुष्क—स्थावरसूक्ष्मसाधारणापर्याप्तकलक्षणम्, एता नव प्रकृतीः पञ्चाशीत–पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्योपमाधिकं चेति शेषः, यावदबद्ध्वा,

तदन्ते यथाप्रवृत्तकरणस्यान्तिमे समये तासां नवानामपि प्रकृतीनां जघन्यं प्रदेशसंक्रमं करोति। कथं पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं यावदबद्ध्वेति चेद्, अत आह—'छट्ठीए' इत्यादि। द्वाविंशतिमितराणि—सागरोपमाणि षष्ठ्यां तमःप्रभाभिधायां पृथिव्यां शेषं त्रिषष्ट्यधिकं सागरोपमशतं यथा पूर्वं तथा अबद्ध्वा, इयमत्र भावना—इह क्षपितकर्मांशो द्वाविंशतिसागरोपमस्थितिकः षष्ठपृथिव्यां नारको जातः, तत्राप्यन्तर्मुहूर्त्तावशेषे आयुषि सम्यक्त्वं प्राप्तवान्, ततोऽप्रतिपतितसम्यक्त्व एव मनुष्यो जातः, तत्र तेनाप्रतिपतितेन सम्यक्त्वेन देशविरतिमनुपाल्य चतुष्पल्योपमस्थितिकः सौधर्मदेवलोके देवो जातः, ततस्तेनैवाप्रतिपतितेन सम्यक्त्वेन सह देवभवाच्च्युत्वा मनुष्यो जातः, तस्मिंश्च मनुष्यभवे संयममनुपाल्य ग्रैवेयकेष्वेकत्रिंशत्सागरोपमस्थितिको देवो जातः, तत्र चोत्पत्त्यनन्तरमन्तर्मुहूर्त्तादूर्ध्वं मिथ्यात्वं गतः, ततोऽन्तर्मुहूर्त्तावशेषे आयुषि भूयोऽपि सम्यक्त्वं प्रतिपद्यते। ततो द्वे षट्षष्टी सागरोपमाणां यावत्सम्यक्त्वमनुपाल्य तस्याः सम्यक्त्वाद्धाया अन्तर्मुहूर्त्ते शेषे क्षपणाय समुद्यतते। तदेवं पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं यावदधिकृतानां नवप्रकृतीनां बन्धाभावः ॥ ११६ ॥

**दुसराइतिण्णि णीयऽसुभखगइसंघयणसंठियपुमाणं। सम्माजोग्गाणं सोलसण्हं सरिसं थिवेएणं॥११७॥**

(स्वो०)—दुःस्वरदुर्भगानादेयनीचैर्गोत्राशुभविहायोगतिसंहननसंस्थानाशुभपञ्चकनपुंसकवेदानाममीषां षोडशानां प्रकृतीनां सम्यग्दृष्टिबन्धायोग्यानां स्त्रीवेदतुल्यम्, किन्तु त्रिपल्योपमायुर्मनुष्येषु प्रथममुत्पादः, तदन्ते च सम्यक्त्वलाभो वक्तव्य इति गाथार्थः ॥११७॥ 

(मलय)—दुःस्वरादित्रिकं—दुःस्वरदुर्भगाऽनादेयरूपम्, नीचैर्गोत्रम्, तथा अशुभविहायोगतिः, अशुभम्—प्रथमवर्जसंहननपञ्चकम्, अशुभं—प्रथमवर्जसंस्थानपञ्चकं 'अपुम' त्ति नपुंसकवेदः, एतासां षोडशानां प्रकृतीनां सम्यग्दृष्टिबन्धायोग्यानां स्त्रीवेदेन सदृशं जघन्यप्रदेश-

संक्रमस्वामित्वं वेदितव्यम्। नवरमेतासां जघन्यप्रदेशसंक्रमस्वामी प्रथमं त्रिपल्योपमायुष्केषु मनुष्येषु मध्ये समुत्पन्नो वक्तव्यः, अन्तर्मुहूर्तावशेषे चायुषि प्राप्तसम्यक्त्व, शेषं तथैव वक्तव्यम् ॥ ११७ ॥

समयाहिआवलीए आऊण जहण्णजोगबधाण । उक्कोसाऊ अंते नरतिरिया उरलसत्तस्स ॥ ११८ ॥

(स्वो०)–समयाधिकावलिका यदा अवशेषा सर्वायुषां जघन्ययोगबद्धानां भवति, तदा जघन्यप्रदेशसंक्रमो भवति स्वस्थाने, यतोऽन्यत्र तेषां संक्रम एव नास्ति। उत्कृष्टायुरन्ते–त्रिपल्योपमान्ते नराः तिर्यञ्चो वा औदारिकसप्तकस्य जघन्य प्रदेशसंक्रमं कुर्वन्तीति गाथार्थः ॥ ११८ ॥

(मलय०)–सर्वेषामप्यायुषां जघन्ययोगबद्धानां यदा समयाधिका आवलिका शेषा भवति, तदा जघन्यः प्रदेशसंक्रमः, स च स्वस्थाने एव द्रष्टव्यः, अन्यत्र तेषां संक्रमाभावात्। तथा नरास्तिर्यञ्चश्च उत्कृष्टायुषस्त्रिपल्योपमायुषः स्वायुःपर्यन्ते औदारिकसप्तकस्य जघन्य प्रदेशसंक्रमं कुर्वन्ति। इयमत्र भावना—यो जीवः सकलान्यजीवापेक्षया सर्वजघन्यौदारिकसप्तकसत्कर्मा सन् त्रिपल्योपमायुष्केषु तिर्यग्मनुष्येषु मध्ये समुत्पन्नः तस्यौदारिकसप्तकमनुभवतो विध्यातसंक्रमेण परप्रकृतौ संक्रमयतश्च स्वायुश्चरमसमये तस्यौदारिकसप्तकस्य जघन्यः प्रदेशसंक्रमो भवति ॥ ११८ ॥

पुंसजलणतिगाण जहण्णजोगिस्स खवगसेढीए । सगचरिमसमयबद्धं जं छुभइ सगंतिमे समए ॥११९॥

संक्रमकरण सम्मत्तम् ॥

(स्वो०)—पुंवेदसञ्ज्वलनत्रिकाणाम्–पुंवेदक्रोधमानमायारूपाणां स्वबन्धान्तसमये यद्बद्धं तच्छुभमानस्य क्षपकश्रेण्यां सर्वसंक्रमेण स्वस्यान्तिमे समये जघन्ययोगिनो जघन्यप्रदेशसंक्रमो भवति, कथं? आसां चतसृणामपि बन्धव्यवच्छेदे (समयोन) व्द्यावलिकाबद्धं मुक्त्वा नान्यत्प्रदेशाग्रमस्ति, तच्च प्रतिसमयं क्षीयते, एवं यावच्चरमसमयबद्धस्य असंख्येयभागः शेषो भवति, तत्संक्रमो यतो जघन्यः प्रदेशसंक्रमो भवतीति गाथार्थः ॥ ११९ ॥

(मलय०)—पुरुषवेदस्य संज्वलनत्रिकस्य–क्रोधमानमायारूपस्य 'जहण्णजोगिस्स'त्ति षष्ठी तृतीयार्थे। ततोऽयमर्थः–जघन्ययोगिना सता क्षपणकश्रेण्यां वर्तमानेन स्वस्वबन्धचरमसमये यद्बद्धं दलिकं तत्स्वान्तिमे समये तस्य चरमे संछोभे इत्यर्थः, यत्परप्रकृतौ प्रक्षिप्यते स जघन्यः प्रदेशसंक्रमः। इयमत्र भावना–आसां चतसृणामपि प्रकृतीनां बन्धव्यवच्छेदसमये समयोनावलिकाद्विकबद्धं मुक्त्वा अन्यत्प्रदेशसत्कर्म न विद्यते, तदपि च प्रतिसमयं संक्रमेण क्षयमुपगच्छति, तावद्यावच्चरमसमयबद्धस्यासंख्येयभागः शेषो भवति, ततस्तं सर्वसंक्रमेण संक्रमयतो जघन्यः प्रदेशसंक्रमः। तदेवमुक्तं जघन्यप्रदेसंक्रमस्वामित्वम्, तदभिधानाच्च समर्थितं संक्रमकरणम् ॥

इत्यचार्यश्रीमलयगिरिविरचितायां पञ्चसंग्रहवृत्तौ संक्रमकरणं समाप्तम्।

| | |
|---|---|
| ज्ञानाव० ४-दर्शना० ३ अवधिद्विकस्य | स्वस्वबन्धविच्छेदसमये अवधिलब्धिमताम् (यथाप्र० सं०)<br>" अवधिलब्धिरहितानाम् |
| निद्रा २-विघ्न ५-हास्य-रति-भय-कुत्सानाम् (११) | " यथाप्रवृत्तसंक्रमेण |
| सातस्य | असातस्यान्त्यबन्धसमये वर्तमानोऽनुपशमितमोहः क्षपणोद्यतः |
| सं० लोभस्य | क्षपणोद्यतानुपशमितमोहानामपूर्वकरणप्रथमावलिकान्त्यसमये |
| स्त्रीवेद-स्त्यानर्द्धित्रिकयोः | क्षपणोद्यतानां परिपालित १३२ सा० सम्यक्त्वानां यथाप्रवृत्तकरणान्ते विध्यातेन |
| मिथ्यात्वस्य | " " " " |
| सम्यक्त्व-मिश्रयोः | ह्रस्वगुणसंक्रमेणापूर्य १३२ सा० सम्यक्त्व [illegible]त्वा मिथ्यात्वप्राप्तानां उद्वलनेन उपान्त्यखण्डस्यान्तिमसमये परप्रक्षेपेण |

| | |
|---|---|
| अनन्तानुवन्धिचतुर्णाम् | चतुर्मोहोपशमं कृत्वा मिथ्यात्वं प्राप्य पुनः १३२ सा० सम्यक्त्वं प्राप्य क्षपणोद्यतानां यथाप्र० करणान्ते विध्यातेन |
| असात-कुवर्णादि ९-उपघात-अस्थिरअशुभ-अयशसां (१४) | देशोनपूर्वकोटिसंयमितानां क्षपकाणां यथाप्र० करणान्त्यसमये यथाप्रवृत्तसंक्रमेण |
| मध्यमाष्टकषायाणाम् | शीघ्रक्षपकाणां (पञ्चसं० मतेन देशोनपू० को० संयमितानां क्षपकाणां) यथाप्रं० करणान्ते (विध्यातेन) |
| संज्व० ३-पुंवेदानाम् | क्षपकाणां स्वस्ववन्धान्तसमये चरमप्रक्षेपे ( सर्वसं० ) |
| अरति-शोकयोः | असाताज० प्र० संक्रामकवत् |
| सुर २-नरक २-वै० ७ कानाम् (११) | पञ्चेन्द्रियत्वे सादिहस्ववन्धं कृत्वा उ० स्थि० नारकत्वं प्राप्य पं० तिर्यक्षु उत्पद्यैकेन्द्रियत्वं प्राप्तानां चिरोद्वलनयोपान्त्यखण्डान्तिमसमये परप्रक्षेपे. |
| मनुष्यद्विकोच्चैर्गोत्रयोः | पूर्वोक्त (सुरद्विकविधिना) विधिना अग्निवायुमध्ये प्राप्तानां (नवरं सू० एके० भवे वद्धं इति आदौ वक्तव्यं) |
| आहारकसप्तकस्य | ह्रस्वकालं वध्वा अविरतिं प्राप्तानां चिरोद्वलनयोपान्त्यखण्डस्यान्तिमसमये परप्रक्षेपे |
| तिर्यग् २-उद्योतयोः | १६३ सा० ४ पल्यं यावदवध्वा क्षपितकर्मांशः यथा प्र० करणान्ते |

| | |
|---|---|
| कुजाति ४-स्था०-आत०-सू०-साधारणानाम् अपर्याप्तानां च (९) | १८५ सा० ४ पल्यं ,, ,, ,, ,, |
| पंचे०-पर्याप्त०-समच०-तै० ७-सुखगति शुभवर्णादि ११-अगु०-परा०-उच्छ्वा०-निर्मा० त्रस १० (३६) | क्षपितकर्मांशानां क्षपकाणां ८ मे प्रथमावलिकान्ते (पञ्चस० मतेन यशःपमस्य स्वबन्धान्ते) |
| कुसंहननसंस्थान १०-कुखगति-दुर्भगदुःस्वर-अनादेय-नपुं०-नीचैः (१६) | स्त्रीवेदतुल्यं वाच्य (अयं त्रिपल्यायुर्नृयुगलमुत्पद्यान्तर्मु० शेषे प्राप्तसम्यक्त्वः, शेषं स्त्रीसम ) |
| औदारिकसप्तकस्य | सर्वअपर्याप्ता० ७ प्रदेशसत्ताकः त्रिपल्यायुर्नरतिर्यक्त्वं प्राप्यायुरन्त्यसमये मिथ्यात्वेन संक्रामकः |
| जिननाम्नः | प्रथमसमयबद्धदलिक यथाप्रवृत्तसंक्रमेण संक्रामकः |

संक्रमकरणं समाप्तम् ॥

## अथोद्वर्त्तनापवर्त्तनाकरणे ॥

उक्तं संक्रमकरणम् । तृतीयचतुर्थे उद्वर्त्तनापवर्त्तनकरणे साम्प्रतमभिधीयेते । ते द्वेऽपि स्थित्यनुभागविषये भवतः । तत्रापि प्रथमं स्थितेरुद्वर्त्तनापवर्त्तने भवतः । सूत्रक्रममाश्रित्य तावदुद्वर्त्तना भवति, सा चोच्यते—

**उदयावलिबज्झाणं ठिईण उव्वट्टणा उ ठितिविसया । सोक्कोसअबाहाओ जावावलि होइ अइत्थवणा ॥१॥**

(स्वो०)—उदयावलिकाबाह्यानां स्थितीनामुद्वर्तना स्थितिविषया भवति, यतः उदयावलिकाप्रविष्टं दलं सर्वकरणासाध्यम्, अतस्तद्बाह्याः स्थितय उद्वर्त्यन्ते । किं सर्वाः ? नेत्याह—स्वोत्कृष्टाया अबाधायाः परतो याः स्थितयः ता उद्वर्त्यन्ते । एषैवोत्कृष्टा 'अइत्थावण'त्ति—उल्लङ्घना, तदारतो यावज्जघन्याऽबाधा, तस्या अपि जघन्यतरा आवलिकामात्रा अइत्थावणा भवति, सा चोद्वर्त्तनास्थितीनामुपरि भवति, बध्यमानप्रकृतेर्याऽबाधा तया तुल्या वा हीना वा या स्थितिः सा सर्वप्रकृतीनां नोद्वर्त्यते, अबाधाप्रविष्टत्वात् इति गाथार्थः ॥ १ ॥

(मलय०)—तदेवमुक्तं संक्रमकरणम् । संप्रत्युद्देशक्रमेणोद्वर्त्तनापवर्त्तने वक्तुमवसर प्राप्ते । ते च द्वे अपि स्थित्यनुभागविषये । तत्र प्रथमतः स्थितेरुद्वर्त्तनापवर्त्तने वक्तव्ये, स्थितौ सत्यामनुभागसंभवात् । तत्राप्युद्देशक्रमप्रामाण्यानुसरणात्प्रथमतः स्थितेरुद्वर्त्तनामेवाह—उद्वर्त्तना स्थितिविषया भवति । 'उदयावलिकाबाह्यानां स्थितीनाम्', उदयावलिका हि सकलकरणायोग्येति तदन्तःस्थितीनां प्रतिषेधः । किं सर्वासामप्युदयावलिकाबाह्यानां स्थितीनामुद्वर्त्तना ? नेत्याह—स्वोत्कृष्टाया अबाधायाः स्थितयः (न) तासामुद्- ॥ ९६ ॥

र्त्तना, एषा स्वोत्कृष्टाऽबाधाप्रमाणा उत्कृष्टा अतीत्थापना। अतीत्थापना नाम उल्लङ्घना। तदारतो ह्रस्वा ह्रस्वतरा अतीत्थापना तावत् यावज्जघन्या अबाधा, ततोऽपि जघन्या अतीत्थापना भवति आवलिकाप्रमाणा। इयमत्र भावना—बध्यमानप्रकृतेर्यावती अबाधा तया तुल्या वा हीना वा पूर्वबद्धप्रकृतीनां या स्थितिः सा नोद्वर्त्यते, सा उत्पाट्य ततः स्थानादूर्ध्वं बध्यमानप्रकृतेरबाधाया उपरि न निक्षिप्यते, अबाधाकालान्तःप्रविष्टत्वात्। या पुनरबाधाया उपरितनी सा स्थितिपर्यन्तमुद्वर्त्यते। तदेवमबाधान्तः प्रविष्टाः सर्वा अपि स्थितय उद्वर्त्तनामधिकृत्यातिक्रमणीया भवन्ति। तथा च सति यैवोत्कृष्टा अबाधा सैव उत्कृष्टा अतीत्थापना, समयोना उत्कृष्टा अबाधा समयोना उत्कृष्टा अतीत्थापना, द्विसमयोना उत्कृष्टा अबाधा द्विसमयोना उत्कृष्टा अतीत्थापना, एवं समयसमयहान्या अतीत्थापना तावद्वक्तव्या यावज्जघन्या अबाधा अन्तर्मुहूर्तप्रमाणा, ततोऽपि जघन्यतरा अतीत्थापना आवलिकामात्रम्, तच्च उदयावलिकालक्षणमवसेयम्। न ह्युदयावलिकान्तर्गताः स्थितय उद्वर्त्यन्ते 'उव्वट्टणा ठिईए उदयावलियाए बाहिरा ठिईणं' इति वचनात्। ननु यदा तदा वा बन्धे सत्युद्वर्त्तना प्रवर्त्तते, 'आ बंधा उव्वट्टइ' इति वचनात्, तत उदयावलिकागताः स्थितयोऽबाधान्तर्गतत्वेन नोद्वर्त्यन्ते किमुदयावलिकाप्रतिषेधेन? तदयुक्तमभिप्रायाऽपरिज्ञानात्, अबाधान्तर्गताः स्थितयो नोद्वर्त्यन्ते इति किमुक्तं भवति? अबाधान्तर्गताः स्थितयः स्वस्थानादुत्पाट्य अबाधाया उपरि न निक्षिप्यन्ते, अबाधाया मध्ये पुनस्तासां वक्ष्यमाणक्रमेण उद्वर्त्तनानिक्षेपौ प्रवर्त्तमानौ न विरुध्येते, तत उदयावलिकान्तर्गता अपि उद्वर्त्तनीयाः प्राप्नुवन्तीति प्रतिषिध्यन्ते ॥ १ ॥

निक्षेपविधिमाह—

इच्छियठितिठाणाओ आवलियं लंघिऊण तद्दलियं। सव्वेसु वि निक्खिप्पइ ठितिठाणेसु उवरिमेसु ॥२॥

(स्वो०)—अबाधोपरि या काचिदीप्सिता स्थितिः, सा अइत्थावणावलिकोपरिमासु स्थितिषु सर्वास्वपि निक्षिप्यते, उपरितनास्वयं निक्षेपक्रम इति गाथार्थः ॥ २ ॥

(मलय०)—संप्रति निक्षेपप्ररूपणार्थमाह—इप्सितस्थितिस्थानात् यत् स्थितिस्थानमुद्वर्त्यते, तत ऊर्ध्वमित्यर्थः आवलिकां लङ्घयित्वा—अतिक्रम्य तद्दलिकम्—उद्वर्त्यमानस्थितिदलिकं सर्वेष्वपि उपरितनेषु स्थितिस्थानेषु निक्षिप्यते ॥ २ ॥

जघन्योत्कृष्टनिक्षेपप्रमाणकथनायाह—

**आवलिअसंखभागाइ जाव कम्मट्ठितित्ति निक्खेवो। समयोत्तरावलीए सावाहाए भवे ऊणो ॥ ३ ॥**

(स्वो०)—आवलिकाऽसङ्ख्येयभागमात्रासु स्थितिषु जघन्यः कर्मदलनिक्षेपः, कथं? उत्कृष्टस्थित्यग्रादवतीर्यावलिकाऽसङ्ख्येयभागं सावलिकं ततो यकाधस्तना स्थितिस्तस्या दलं अइत्थावणावलिकामुल्लङ्घ्य उपरितनास्वावलिकासङ्ख्येयभागमात्रासु निक्षिप्यते। जघन्योऽयं दलनिक्षेपः। किमुक्तं भवति—आवलिकाऽसङ्ख्येयभागमात्रासु सावलिकासु सर्वोपरितनासु स्थितिषूद्वर्त्तनं नास्तीति भावः। उत्कृष्टतः स आवलिकाऽसङ्ख्येयभागः समयवृद्ध्या कियद्वर्धते? समयोत्तरावलिकया साबाधया हीना यावदुत्कृष्टा कर्मस्थितिस्तावद्दलनिक्षेपो भवति, यतोऽबाधोपरिस्थस्थितीनामुद्वर्त्तना भवति, साऽप्यइत्थावणावलिकामुल्लङ्घ्य, उद्वर्त्यमानायामपि स्थितौ न दलनिक्षेपो भवति—अतः समयाधिकाऽबाधावर्जितासु शेषासु सर्वस्थितिषूत्कृष्टो दलनिक्षेपो भवतीति गाथार्थः ॥ ३ ॥ 

(मलय०)—एष निक्षेपविधिः, संप्रति निक्षेपविषयप्रमाणनिरूपणार्थमाह—इह निक्षेपविषयो द्विधा, जघन्य उत्कृष्टश्च। तत्रावलिकाया असंख्येयभागमात्रासु स्थितिषु यः कर्मदलिकनिक्षेपः स जघन्यः, तथाहि—सर्वोत्कृष्टात्स्थित्यग्रादध आवलिकामावलिकाया असंख्येयं

च भागमर्वाग्वर्तिनी या स्थितिस्तस्या दलिकमतीत्थापनावलिकामात्रमतिक्रम्योपरितनीष्वेवावलिकाया असंख्येयभागभाविनीषु निक्षिप्यते, नावलिकाया मध्येऽपि, तथास्वाभाव्यात्। ततोऽयमेवतावान् जघन्यो दलिकनिक्षेपविषयः। एवं च सति आवलिकाया असंख्येयतमेन भागेनाभ्यधिकासु आवलिकामात्रासु स्थितिषु उद्वर्तनं न भवतीति सिद्धम्। तथा च सत्युत्कृष्टे स्थितिबन्धे उद्वर्तनायोग्याः स्थितयो बन्धावलिकामबाधामुपरितनीं चावलिकामसंख्येयभागाधिकां मुक्त्वा शेषा एव द्रष्टव्याः, तथाहि—बन्धावलिकान्तर्गतं सकलकरणायोग्यमिति कृत्वा बन्धावलिकान्तर्गताः स्थितयो नोद्वर्त्यन्ते, अबाधान्तर्गता अपि नोद्वर्तनायोग्याः, तासामतीत्थापनात्वेन प्राक् प्रतिपादितत्वात्, असंख्येयभागाधिकावलिकामात्रभाविन्यश्च उपरितन्यः स्थितयः प्रागुक्तयुक्तेरेव नोद्वर्तनायोग्याः। सम्प्रत्युत्कृष्टो निक्षेपविषयश्चिन्त्यते—'जावुक्कस्सट्ठिई'त्ति इत्यादि। इयमत्र भावना—यदा आवलिकामावलिकाया असंख्येयं च भागमधोऽवतीर्य द्वितीयाऽधस्तनी स्थितिरुद्वर्त्यते तदा समयाधिक आवलिकाया असंख्येयभागो निक्षेपविषयः, यदा तु तृतीया स्थितिरुद्वर्त्यते तदा द्विसमयाधिकः, एवं समयसमयवृद्ध्या तावद्दलिकनिक्षेपविषयो वर्धते यावदुत्कृष्टो भवति। स च कियान् भवतीति चेद्, उच्यते—समयाधिकावलिकया अबाधया च हीना सर्वकर्मस्थितिः। तथाहि—अबाधोपरिस्थस्थितीनामुद्वर्तना भवति, तत्राप्यबाधाया उपरितने स्थितिस्थाने उद्वर्त्यमाने अबाधाया उपरि दलिकनिक्षेपो भवति, न अबाधाया मध्ये, उद्वर्त्यमानदलिकस्य उद्वर्त्यमानस्थितेरूर्ध्वं निक्षेपात्। तत्राप्युद्वर्त्यमानस्थितेरुपरि आवलिकामात्राः स्थितीरतिक्रम्योपरितनीषु स्थितिषु सर्वासु दलिकनिक्षेपो भवति। ततोऽतीत्थापनावलिकामुद्वर्त्यमानां स्थितिं समयमात्रामबाधां वर्जयित्वा शेषा सर्वापि कर्मस्थितिरुत्कृष्टो दलिकनिक्षेपविषयः। तदेवमबाधाया उपरितनं समयमात्रमुद्वर्त्यमानस्थितिस्थानमधिकृत्योत्कृष्टो दलिकनिक्षेपविषयः प्राप्यते, सर्वोपरितनं तु स्थितिस्थानमुद्वर्त्यमानमपेक्ष्य जघन्यो दलिकनिक्षेपविषयः ॥ ३ ॥

उद्वर्तनाऽपवर्तनाकरणे ।

**अब्बाहोवरिठाणगदलं पडुच्चेह परमनिक्खेवो । चरिमुव्वट्टणगाणं पडुच्च इह जायइ जहण्णो ॥ ४ ॥**

(स्वो०)—अबाधोपरिस्थितिस्थानं प्रतीत्य इहोद्वर्त्तनाकरणे उत्कृष्टो दलनिक्षेपः । चरमं स्थितिस्थानं यस्मात्परतो नोद्वर्त्त्यते तदाश्रित्य जघन्यो दलनिक्षेपो भवतीति गाथार्थः ॥ ४ ॥

(मलय०)—तथा चाह—अबाधाया उपरितनं यत्स्थितिस्थानं तद्दलिकं प्रतीत्य इहोद्वर्तनाकरणे परम उत्कृष्टो निक्षेपो भवति । चरमं तु स्थितिस्थानं यस्मात्परं नोद्वर्त्यते तदधिकृत्य जघन्यो दलिकनिक्षेपः ॥ ४ ॥

यावन्मात्राः स्थितय उद्वर्त्तनायोग्यास्ता आह—

**उक्कोसगठितिबंधे बंधावलिया अबाहमेत्तं च । निक्खेवं च जहण्णं मोत्तुं उव्वट्टए सेसं ॥ ५ ॥**

(स्वो०)—उत्कृष्टस्थितिबन्धे बन्धावलिकां अइत्थावणावलिकां अबाधामात्रं च चरिमनिक्षेपं च मुक्त्वा शेषं सर्वमप्युद्वर्त्तनायोग्यमुत्कृष्टस्थितिसमयसङ्घातं, यतो बन्धावलिकायां गतायां दलं करणगोचरीभवति, अबाधान्तर्गतमयोग्यम्, आवलिकाऽसङ्ख्येयभागमात्रं सावलिकमुत्कृष्टस्थित्यग्रस्थमप्युद्वर्त्तनाऽयोग्यम्, अतः शेषं स्थितिजातमुद्वर्त्तनायोग्यमिति गाथार्थः ॥ ५ ॥

(मलय०)—संप्रति यावन्मात्राः स्थितय उद्वर्त्तनयोग्यास्ताः प्रतिपादयति—उत्कृष्टे स्थितिबन्धे क्रियमाणे बन्धावलिकामबाधामात्रं निक्षेपं च जघन्यम्, इह जघन्यनिक्षेपग्रहणात्सर्वोपरितनी आवलिका असङ्ख्येयभागाधिका गृह्यते, ततस्तां च मुक्त्वा शेषं सर्वमपि स्थितिजातमुद्वर्त्यते । भावना चैतद्विषया प्रागेव कृता । एष निर्व्याघाते विधिः ॥ ५ ॥ ॥ ९८ ॥

निर्व्याघाते तावदयं विधिः, व्याघातस्वरूपं व्याघातविधिश्चात उच्यते—

निव्वाघाए एव वाघाओ सतकम्महिगवधो । आवलिअसंखभागो जावावलि तत्थइत्थवणा ॥ ६ ॥

(स्वो०)—निर्व्याघात तावदेवमेव विधि प्रागुक्तः । व्याघातस्तु प्राक्तनसत्कर्मस्थितेरधिको योऽभिनवः समयादिना बन्धो भवति स व्याघात इति । तत्रावलिकाऽसङ्ख्येयभागादारभ्य यावदावलिका अइत्थावणा भवति । कथ ? पूर्वस्थितेः समयाधिकेऽभिनवबन्धे प्राक्तनसत्कर्मणोऽन्त्या या द्विचरमा वा स्थितिर्नोद्वर्त्यते, एव यावत् (आवलिका अन्यथावलिकाया असंख्येयभागो नोद्वर्त्यते, एवं) द्वित्रिचतुःसमयाधिकां यावदावलिकाऽसंख्येयभागाधिकां (अभिनव)स्थितिं बध्नानस्यापि सत्कर्मणोऽन्त्या स्थितिर्नोद्वर्त्यते, एव यावत् द्वितीयोऽसंख्येयभागः प्राक्तनसत्कर्मणोऽभ्यधिको न बध्यते तावदन्त्या स्थितिः नोद्वर्त्यते, यदा तु द्वावसंख्येयभागाऽवधिकावभिनव-बन्धे बध्नाति तदा प्राक्तनसत्कर्मान्त्यस्थितिमुद्वर्तयति, अइत्थावणारूप प्रथमावलिकाऽसंख्येयभागमुल्लङ्घ्य द्वितीयासंख्येयभागे निक्षि-पति । इयं जघन्या अइत्थावणा निक्षेपश्च व्याघाते—ततोऽभिनवबन्धस्य समयादिवृद्धया अइत्थावणावृद्धिमुपयाति यावदावलिका सम्पूर्णा, ततस्तो निक्षेपो वर्द्धत इति गाथार्थः ॥ ६ ॥

(मलय०)—व्याघाते पुनरयम्—एवं पूर्वोक्तप्रकारेण दलिकनिक्षेपो निर्व्याघाते—व्याघाताभावे द्रष्टव्यः । व्याघाते पुनरन्यथा । अथ कोऽसौ व्याघात इत्याह—व्याघातः प्राक्तनस्थितिसत्कर्मापेक्षयाभ्यधिकाभिनवकर्मबन्धरूपः । तत्रातीत्थापना आवलिकाया असङ्ख्येय-तमो भागः, स च प्रवर्द्धमानस्तावदवसेयो यावदावलिका । इयमत्र भावना—प्राक्तनसत्कर्मस्थित्यपेक्षया समयादिनाभ्यधिको योऽभिन वकर्मबन्धः स व्याघात इहाभिप्रेत । तत्रातीत्थापना जघन्या आवलिकाया असङ्ख्येयभागमात्रा,तथा हि—प्राक्तनसत्कर्मस्थितेः सकाशा-त्समयमात्रेणाभ्यधिकेऽभिनवकर्मबन्धे सति प्राक्तनसत्कर्मणोन्त्या वा द्विचरमा वा स्थितिर्नोद्वर्त्यते, एवं यावदावलिका अन्यस्याभा-

वलिकाया असङ्ख्येयतमो भाग इति। एवं समयद्वयेन समयत्रयेण यावदावलिकाया असङ्ख्येयतमेनापि भागेनाभ्यधिके अभिनवकर्मबन्धे द्रष्टव्यम्। यदा पुनर्द्वाभ्यामावलिकाया असङ्ख्येयतमाभ्यां भागाभ्यामधिकोऽभिनवकर्मबन्ध उपजायते, तदा प्राक्तनसत्कर्मणो ऽन्त्यस्थितिरुद्वर्त्यते, उद्वर्त्य च आवलिकायाः प्रथममसङ्ख्येयतमं भागमतिक्रम्य द्वितीये असङ्ख्येयतमे भागे निक्षिप्यते–एतौ अतीत्थापनानिक्षेपौ जघन्यौ। यदा पुनः समयाभ्यधिकाभ्यां द्वाभ्यामावलिकाया [1]असङ्ख्येयतमाभ्यां भागाभ्यामधिकोऽभिनवकर्मबन्धः तदा आवलिकायाः प्रथममसङ्ख्येयतमं भागं समयाधिकमतिक्रम्य द्वितीये असङ्ख्येयतमे भागे निक्षिप्यते। एवमभिनवकर्मबन्धस्य समयादिवृद्धौ अतीत्थापना प्रवर्द्धते, सा च तावत् यावदावलिका परिपूर्णा भवति। निक्षेपस्तु सर्वत्रापि तावन्मात्र एव भवति। तत ऊर्ध्वं पुनरभिनवकर्मबन्धवृद्धौ निक्षेप एव केवलो वर्द्धते, नातीत्थापना॥ ६॥ उद्वर्तनाऽपवर्तनाकरणे।

अमुमेवार्थं सूत्रकारः सूत्रेण व्यक्तीकरोति—

**आवलिदोसंखंसा जइ वड्ढइ अहिणवो उ ठितिबंधो। उव्वट्टति तो चरिमा एवं जावलि अइत्थवणा॥७॥**
**अइत्थावणालियाए पुण्णाए वड्ढई तु निक्खेवो। ठितिउव्वट्टणमेवं एत्तो ओव्वट्टणं वोच्छं॥ ८॥**

(स्वो०)—आवलिकाऽसंख्येयभागाभ्यां द्वाभ्यां यदाभ्यधिकाभिनवबन्धो भवति पूर्वसत्कर्मणः तदा प्राक्तनसत्कर्मणोऽन्त्यस्थितिमुद्वर्तयत्यसंख्येयभागमुल्लङ्घ्य द्वितीयासंख्येयभागे निक्षिपति, एवमभिनवबन्धस्य समयादिवृद्ध्या अइत्थावणावृद्धिमुपयाति, यावदावलिका। इयमुत्कृष्टा अइत्थावणा व्याघात इति गाथार्थः। अइत्थावणावलिकायां पूर्णायां ततः कर्मदलनिक्षेपो वृद्धिमुपयाति। एवमनेन ॥ ९९ ॥

१ अत्र प्रारम्भाद् ग्रन्थाग्रम्: १४०००

विधिना स्थित्युद्वर्तना भवति। अतस्तस्या एव स्थितेरपवर्तनं वक्ष्येऽहमिति। तुशब्दाधिक्यादल्पबहुत्वं वक्तव्यम्—जघन्यातीत्थापनानिक्षेपौ तुल्यौ, यतो द्वावप्यावलिकाऽसंख्येयभागमात्रौ। ताभ्यामुत्कृष्टा अतीत्थापना असंख्येयगुणा, यतः सोत्कृष्टाबाधा। अस्या अपि उत्कृष्टो निक्षेपोऽसंख्येयगुणः, यतः समयाधिकावलिकया साबाधया न्यूनोत्कृष्टस्थितिमानः स भवतीति गाथार्थः ॥ ७–८ ॥

(मलय०)—एतदेवाह——यदा प्राक्तनस्थितिसत्कर्मापेक्षया अभिनवः स्थितिबन्धो वर्द्धते द्वावावलिकाया असङ्ख्येयांशौ—असङ्ख्येयतमौ भागौ ततः प्राक्तनस्थितिसत्कर्मणोऽन्त्या स्थितिरुद्वर्त्यते, उद्वर्त्य चावलिकायाः प्रथममसङ्ख्येयतम भागमतिक्रम्य द्वितीये असङ्ख्येयतमे भागे निक्षिपति। एतावतीत्थापनानिक्षेपौ जघन्यौ। ततोऽभिनवकर्मबन्धस्य समयादिवृद्धावतीत्थापना वर्द्धते तावद् यावदावलिका परिपूर्णा भवति। निक्षेपस्तु तत्र सर्वत्रापि तावन्मात्र एव। अतीत्थापनावलिकायां च परिपूर्णायां निक्षेपो वर्द्धते। इति शब्द उद्वर्तनावक्तव्यतापरिसमाप्तिसूचकः। यावच्चानेन नवकर्मबन्धः प्राक्तनस्थितिसत्कर्मणः सकाशाद् द्वाभ्यामावलिकाऽसङ्ख्येयतमाभ्यां भागाभ्यामभ्यधिको न भवति तावत्प्राक्तनस्थितिसत्कर्मणश्चरमस्थितेरध आवलिकामसङ्ख्येयभागाधिकामतिक्रम्य ततोऽधस्तनीरेव स्थितीरुद्वर्तयति। तत्रापि यदा आवलिकामसङ्ख्येयभागाधिकामतिक्रम्य ततोऽनन्तरमेवाधस्तनीं स्थितिमुद्वर्तयति, तदा आवलिकामतिक्रम्योपरितने आवलिकाया असङ्ख्येयतमे भागे निक्षिपति, यदा तु द्वितीयामधस्तनीं स्थितिमुद्वर्तयति तदा समयाधिके असङ्ख्येयतमे भागे निक्षिपति, एवं पूर्वप्रकारेण द्रष्टव्यम्। संप्रत्यल्पबहुत्वमुच्यते—या जघन्या अतीत्थापना यश्च जघन्यो निक्षेपः एतौ द्वावपि सर्वस्तोकौ परस्परं च तुल्यौ, यतो द्वावप्येतौ आवलिकासत्कासङ्ख्येयतमभागप्रमाणौ। ताभ्यामसङ्ख्येयगुणा उत्कृष्टा अतीत्थापना, तस्या उत्कृष्टाबाधारूपत्वात्। ततोऽप्युत्कृष्टो निक्षेपोऽसङ्ख्येयगुणः। यतोऽसौ समयाधिकावलिकया साबाधया हीना सर्वकर्मस्थितिः।

ततोऽपि सर्वकर्मस्थितिर्विशेषाधिका । संप्रति उद्वर्त्तनोपसंहारमपवर्त्तनोपक्षेपं चाह–एवमनेन प्रकारेण स्थितेरुद्वर्त्तना भवति, संप्रत्यत-ऊर्ध्वं स्थितेरपवर्त्तनां वक्ष्ये ॥ ७-८ ॥

उक्ता स्थित्युद्वर्त्तना, अपवर्त्तनामाह—

**ओव्वट्टन्तो य ठितिं उदयावलिबाहिरा ठिईठाणा । निक्खिवइ से तिभागे समयहिगे लंघिउं सेसं ॥९॥**

(स्वो०)—स्थितीरपवर्त्तयन् उदयावलिकाबाह्यानि स्थितिस्थानानि अपवर्त्तयति । तदपवर्त्तितदलं कुत्र निक्षिपति तदाह–निक्षिपति स्वे त्रिभागे समयाधिके शेषमुल्लङ्घ्य । किमुक्तं भवति ?–उदयावलिकोपरि या स्थितिस्तस्या दलं स्वाधस्तनौ द्वौ त्रिभागौ समयोनौ तावुल्लङ्घ्य शेषसमयाधिके त्रिभागे निक्षिपति । अयं जघन्यनिक्षेपो जघन्योल्लङ्घना चेति गाथार्थः ॥९॥

(मलय०)—प्रतिज्ञातमेव निर्वाहयति—स्थितिमपवर्त्तयन् उदयावलिकाया बाह्यानि स्थितिस्थानानि अपवर्त्तयति, नोदयावलिकामपि, उदयावलिकायाः सकलकरणायोग्यत्वात् । कुत्र निक्षिपतीति चेद् , अत आह–'निक्खिवइ' इत्यादि । निक्षिपति स्वे–आत्मीये त्रिभागे समयाधिके शेषमुल्लङ्घ्य । किमुक्तं भवति? उदयावलिकाया उपरितनी या समयमात्रा स्थितिः तस्या दलिकमपवर्त्तयन् उदयावलिकाया उपरितनौ द्वौ त्रिभागौ समयोनावतिक्रम्य अधस्तने समयाधिके तृतीये भागे निक्षिपति । एष जघन्यो निक्षेपो जघन्या चातीत्थापना । यदा तूदयावलिकाया उपरितनी द्वितीया स्थितिरपवर्त्यते तदा अतीत्थापना प्रागुक्तप्रमाणा समयाधिका भवति निक्षेपस्तु तावन्मात्र एव । यदा तु उदयावलिकाया उपरितनी तृतीया स्थितिरपवर्त्यते तदा अतीत्थापना प्रागुक्तप्रमाणा द्विसमयाधिका, निक्षेपस्तु तावन्मात्रः । एवमतीत्थापना प्रतिसमयं तावद्वृद्धिमुपनेतव्या यावदावलिका परिपूर्णा भवति ॥ ९ ॥

पूर्वलता— ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○

यदा प्राक्तनस्थित्यपेक्षया द्वाभ्यामावलिकाऽसंख्येयभागाभ्यामभ्यधिकोऽभिनवस्थितिबन्धो जायते तदा प्राक्तनसत्कर्मणोऽग्रस्थितिरुद्वर्त्यते, उद्वर्त्य चावलिकाया आद्यमतीत्थापनारूपमसंख्येयभागमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते । एतावन्तावतीत्थापनानिक्षेपौ जघन्यौ । अत्र स्थापना—

उद्वर्त्यमाना अग्रिमा स्थितिः

बध्यमानलता— ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ | ○ ○ ○ || ○ ○ ○ |

द्वाभ्यामावलिकासंख्येयभागाभ्यामभ्यधिकोऽभिनवबन्धः । अ० अतीत्था० अ० नि०

पूर्वलता— ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○

यदा समयाधिकाभ्यां द्वाभ्यामावलिकासंख्येयतमाभ्यां भागाभ्यामभ्यधिकोऽभिनवस्थितिबन्धस्तदावलिकायाः प्रथममसंख्येयतमं भागं समयाधिकमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते । अत्र स्थापना—

उद्वर्त्यमाना अग्रिमा स्थितिः

बध्यमानलता— ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ | ○ ○ ○ ○ || ○ ○ ○ |

समयाधिकाभ्यां द्वाभ्यामावलिकाऽसंख्येयभागाभ्यामभ्यधिकोऽभिनवबन्धः । समयाधि० अ० नि०स एव

वद्धलता--○ ○ ⊙ ○ ○ ○ ⊙ ○ ○ ○ ○ ○ ⊙ ○ ⊙ ○ ○

एवमभिनवकर्मवन्धस्य समयादिवृद्धावतीत्थापना वर्द्धते, सा च तावद्यावदावलिकापरिपूर्णा भवति । निक्षेपस्तु सर्वत्र तावन्मात्र एव भवति । अत्रापि स्थापना--

उद्वर्त्यमाना चर-
मा स्थितिः

वध्यमानलता--○ ⊙ ⊙ ○ ⊙ ○ ○ ○ ⊙ ○ ○ ⊙ ○ ○ ⊙ ○ ⊙ ○ ⊙ ⊙ ○ | ○ ○ ○ ○ ○ ○ ⊙ ○ ○ ⊙ | | ⊙ ○ ○ |

असंख्येयभागाधिकावलिकाभ्यधिकवन्धः । अतीत्था० तु परिपूर्णाऽऽवलिका नि०स एव

वद्धलता--○ ⊙ ○ ○ ⊙ ○ ⊙ ○ ○ ⊙ ○ ○ ○ ○ ○ ○ ○ ⊙

तत ऊर्ध्वं पुनरपि नवकर्मवन्धवृद्धौ निक्षेप एव केवलो वर्द्धते, नातीत्थापना ।

⊙ ⊙ ○ ○ ⊙ ○ ○ ○ ⊙ ○ ○ ○ ○ ⊙ ○ ⊙ ○ ○ ⊙ ○ ○ ○ ○ ⊙ | ○ ⊙ ○ ○ ⊙ ○ ⊙ ○ ○ ○ ○ | | ○ ⊙ ⊙ ⊙ |

वध्यमानसमयाधिकावलिकासंख्येयभागाधिकावलिकावन्धः । अतीत्थापना सैवावलिकामात्रा । समयाधिक० ज०नि०

उदयावलिउवरित्था एमेवोवट्टए ठिइट्ठाणा। जावावलियतिभागो समयहिगो सेसठितिण तु ॥ १० ॥

(स्वो०)—उदयावलिकोपरिस्थितान्येवमेवापवर्त्तयति स्थितिस्थानानि यावदावलिकात्रिभागं समयाधिकम् , किमुक्तं भवति? प्रतिसमय अइत्थावणावड्ढिमुपयाति यावदावलिकापूर्णा। अवशेषाणामपि स्थितीनां तुशब्दस्यैवकारार्थत्वात्तत्रैव समयाधिके आवलिकात्रिभागे निक्षेप इति गाथार्थः ॥ १० ॥

(मलय०)—तथा चाह—उदयावलिकाया उपरिस्थानि–उपरितनानि स्थितिस्थानानि एवमेव–पूर्वोक्तेन प्रकारेण तावदपवर्त्तयति यावदतीत्थापना परिपूर्णावलिकाप्रमाणा भवति। शेषाणां च स्थितीनां निक्षेपविषयाणां समयाधिकावलिकायास्त्रिभाग। अतः परं त्वतीत्थापना सर्वत्राप्यावलिकामात्रैव भवति, निक्षेपस्तु वर्द्धते, स च तावद् यावदतीत्थापनावलिकारहिता सर्वकर्मस्थितिः ॥ १० ॥

इच्छोवट्टणठिइठाणगाउ उल्लंघिऊण आवलियं। निक्खिवई तद्दलियं अह ठितिठाणेसु सव्वेसु ॥ ११ ॥

(स्वो०)—यस्या यस्याः स्थितेरपवर्त्तनं कर्तुमीहते जीवः तस्मात् तस्मात्स्थानात् एवाइत्थावणावलिकामुल्लङ्घ्य तत् स्थितिदलं निक्षिपति, तत्प्रभावस्थिताधःस्थितिस्थानेषु सर्वेष्विति गाथार्थः ॥ ११ ॥

(मलय०)—तथा चाह—ईप्सितादपवर्त्तनीयात्स्थितिस्थानात् , यत् यत् स्थितिस्थानमपवर्त्तयितुमिष्यते तस्मात्तस्मादित्यर्थः, अवस्तादावलिकाम्–अतीत्थापनावलिकामुल्लङ्घ्य तद्दलिकमधस्तात्सर्वेष्वपि स्थितिस्थानेषु निक्षिप्यते। ततो यदा सर्वोपरितन स्थितिस्थानमपवर्त्तयति तदा आवलिकामात्रमधोऽतीत्याधस्तनेषु निक्षिपति। कर्म च यद्बद्धं सत् बन्धावलिकायामतीतायामपवर्त्तयति, ततो बन्धावलिकायामतिक्रान्तायां सत्यां समयाधिकातीत्थापनावलिकारहिता सर्वा कर्मस्थितिरुत्कृष्टो निक्षेपविषयः, प्राक्तनस्तु जघन्यः ॥ ११ ॥

कर्मप्रकृति


उदयावलिउवरित्थं ठाणं अहिकिच्च होइ अइहीणो। निक्खेवो सव्वोवरि ठिइठाणवसा भवे परमो ॥१२॥ उद्वर्तनाऽपवर्तना करणे।

(स्वो०)—उदयावलिकोपरितनं स्थितिस्थानमधिकृत्य सर्वजघन्यो निक्षेपोऽपवर्त्तनायां भवति-समयाधिकावलिकात्रिभागरूपः सर्वोपरिस्थितिस्थानमधिकृत्य तद्वशात्परमः-उत्कृष्टो निक्षेपो भवतीति गाथार्थः ॥ १२ ॥

(मलय०)-एतदेवाह—उदयावलिकाया उपरितनं स्थितिस्थानमधिकृत्यापवर्त्तनायामतिहीनः सर्वजघन्यो निक्षेपः-समयाधिकावलिकात्रिभागरूपः प्राप्यते। सर्वोपरितनस्थितिस्थानवशात्तु सर्वोपरितनं तु स्थितिस्थानमधिकृत्य परमः-उत्कृष्टो यथोक्तरूपो निक्षेपः॥

समयाहियइत्थवणा बंधावलिया य मोत्तु निक्खेवो। कम्मठिइ बंधोदयआवलिया मोत्तु ओव्वट्टे ॥१३॥

(स्वो०)—समयाधिकां अइत्थापणां बन्धावलिकां च मुक्त्वा-परित्यज्य शेषासु कर्मस्थितिषु निक्षेपो भवति उत्कृष्टतोऽपवर्त्तनायाम्। यतो बद्धं यावद्बन्धावलिका न गता तावन्नापवर्त्तयति, अइत्थावणामुल्लङ्घ्य निक्षिपति, अपवर्त्त्यमानस्थितौ निक्षेपाभावात्समयाधिकआवलिकोना स्थितिः निक्षेपः उत्कृष्टो भवतीति। कर्म्मणो या उत्कृष्टा स्थितिः सा बन्धोदयावलिकाबाह्या सर्वाप्यपवर्त्तनायोग्या, यतो बन्धावलिकायां गतायां उदयावलिकाबाह्यां अपवर्त्तयति,अइत्थावणावलिकायाः प्रतिसमयमपसर्पणादिति गाथार्थः ॥१३॥

(मलय०)-संप्रति यावन्मात्रासु स्थितिषु निक्षेपः यावत्यश्चापवर्त्तयनीयास्तावतीर्निर्दिदिक्षुराह—समयाधिकामतीत्थापनावलिकां बन्धावलिकां च मुक्त्वा शेषासु सर्वास्वपि स्थितिष्वपवर्त्तनायामुत्कर्षतो निक्षेपो भवति। यतो बद्धं सत्कर्म बन्धावलिकायामतीतायां सत्यामपवर्त्तयति, न बन्धावलिकाया मध्येऽपि, अपवर्त्त्य च विवक्षितस्थितिस्थानं न तत्रैव निक्षिपति किन्तु ततोऽधस्तादावलिकाम- ॥१०३॥

तिक्रम्य, ततो यथोक्तरूप उत्कृष्टनिक्षेपो न विरुध्यते। तथा बन्धावलिकामुदयावलिकां च मुक्त्वा शेषां सकलामपि कर्मस्थितिमपवर्त्तयति, यतो बन्धावलिकायामतीतायां सत्याः स्थितीरपवर्त्तयति, तत्राप्युदयावलिकागताश्च इति कृत्वा। एष निर्व्याघाते अपवर्तनाविधिः ॥

निर्व्याघाते अपवर्तनोक्ता, साम्प्रतं व्याघातस्वरूपं व्याघातविधिं चाह—

निव्वाघाए एव ठिइघाओ एत्थ होइ वाघाओ। वाघाए समऊण कंडगमइत्थावणा होइ ॥ १४ ॥

(स्वो०)—व्याघात विना एवमेव पूर्वोक्तेन विधिनाऽपवर्त्तयति। व्याघातस्त्वत्र स्थितिघातः–स्थितिविनाशः, तं कुर्वाणः किमतित्थापयति ? व्याघाते समयोन कण्डकमइत्थापयतीति गाथार्थः ॥ १४ ॥

(मलय०)—आह च—एवं पूर्वोक्तेन प्रकारेण निर्व्याघाते—व्याघाताभावे अपवर्तनोक्ता, व्याघाते पुनरन्यथा। व्याघातोऽत्रापवर्त्तनायां स्थितिघातो वेदितव्यः, तस्मिन् व्याघाते सति, तं कुर्वाणे इत्यर्थः, समयोनं कण्डकमतीत्थापना भवति। कथं समयोनमिति चेद् ,उच्यते–उपरितनेन समयमात्रेण स्थितिस्थानेनापवर्त्यमानेन सह अधस्तात्कण्डकमतिक्रम्यते ततस्तेन विना कण्डकं समयोनमेव भवति ॥ १४ ॥

तस्यैव कण्डकस्य जघन्योत्कृष्टप्रमाणमाह—

उक्कोस डायठिई किंचूणा कंडगं जहण्णं तु। पल्लासंखंस डायठिईउ जतो परमबंधो ॥ १५ ॥

(स्वो०)—यतो यस्याः स्थितेरारभ्य उत्कृष्टं स्थितिबन्धं विधत्ते–निर्मापयति तस्या आरभ्योपरितनानि सर्वाण्यपि स्थितिस्थानानि

डायस्थितिसंज्ञानि भवन्ति, सा चोत्कृष्टतः किञ्चिदूनकर्म्मस्थितिप्रमाणा भवति, सा चोत्कृष्टं कण्डकमुच्यते, इयमुत्कृष्टा अइत्थावणा । तदुपरितनस्थितिदलं इयन्ति स्थितिस्थानान्युल्लंघ्याधस्तनासु स्थितिषु निक्षिपति, ततः समयादिहान्या क्षीयमाणं क्षीयमाणं पल्योपमासंख्येयभागमात्रं जघन्यं कण्डकं भवति,तदुल्लङ्घ्य स्थितिघातकाले उपरितनस्थितिदलं निक्षिपति । तुशब्दादल्पबहुत्वं निक्षेपाइत्थावणाविषयं वक्तव्यम् । अपवर्त्तनायां जघन्यनिक्षेपः सर्वस्तोकः,समयाधिकावलिकात्रिभागमात्रो यस्मात् । जघन्या अइत्थावणा तस्माद् द्विगुणा त्रिसमयोना, यतः सा आवलिकाया त्रिभागद्वयं समयोनम् । विघ्नं विना उत्कृष्टाऽइत्थावणा विशेषाधिका,यतः सा आवलिकामात्रा । कण्डकअइत्थावणा अस्या असंख्येयगुणा । उत्कृष्टो निक्षेपोऽस्या विशेषाधिकः,यतः–समयाधिकाद्यावलिकोनपरमस्थितिप्रमाण इति गाथार्थः॥

(मलय०)–कण्डकस्यैव जघन्योत्कृष्टप्रमाणमाह—यतो–यस्याः स्थितेरारभ्य परमः–उत्कृष्टो बन्धो भवति–उत्कृष्टां स्थितिं बध्नाति तस्याः प्रभृति सर्वापि स्थितिर्डायस्थितिरुच्यते । सा चोत्कर्षतः किञ्चिदूना–किञ्चिदूनकर्मस्थितिप्रमाणा वेदितव्या । तथाहि–अन्तःकोटीकोटीप्रमाणस्थितिबन्धमाधाय पर्याप्तसंज्ञिपञ्चेन्द्रिय उत्कृष्टामपि स्थितिं बध्नाति, तत उत्कर्षतः किञ्चिदूनकर्मस्थितिप्रमाणा डायस्थितिर्भवति, सा चोत्कृष्टं कण्डकमुच्यते । इयमुत्कृष्टा व्याघातेऽतीत्थापना । एतच्चोत्कृष्टं कण्डकं समयमात्रेणापि न्यूनं कण्डकमुच्यते । एवं समयद्वयेन, समयत्रयेण, एवं तावन्न्यूनं यावत्तत्पल्योपमासंख्येयभागमात्रं प्रमाणं भवति । तच्च जघन्यं कण्डकम् । इयं जघन्या व्याघातेऽतीत्थापना । संप्रत्यल्पबहुत्वमुच्यते–तत्रापवर्त्तनायां जघन्यो निक्षेपः सर्वस्तोकः, तस्य समयाधिकावलिकात्रिभागमात्रत्वात् । ततो जघन्यातीत्थापना द्विगुणा त्रिसमयोना । कथं त्रिसमयोनं द्विगुणत्वमिति चेद्,उच्यते–व्याघातमन्तरेण जघन्यातीत्थापना आवलिकात्रिभागद्वयं समयोनं भवति, आवलिका चाऽसत्कल्पनया नवसमयप्रमाणा कल्प्यते, ततस्त्रिभागद्वयं समयोनं पञ्चसमयप्रमाणमवग-

न्तम्यम्, निक्षेपोऽपि जघन्यः समयाधिकावलिकात्रिभागरूपोऽसत्कल्पनया चतुःसमयप्रमाणो द्विगुणीकृतस्त्रिसमयोनः सन् तावानेव
भवतीति। ततोऽपि व्याघात विना उत्कृष्टा अतीत्थापना विशेषाधिका, तस्याः परिपूर्णावलिकामात्रत्वात्। ततो व्याघाते उत्कृष्टा अती-
त्थापना असंख्येयगुणा, तस्या उत्कृष्टदायस्थितिप्रमाणत्वात्। ततोऽप्युत्कृष्टो निक्षेपो विशेषाधिक', तस्य समयाधिकावलिकाद्विकोन-
सकलकर्मस्थितिप्रमाणत्वात्। ततः सर्वा कर्मस्थितिर्विशेषाधिका। संप्रत्युद्वर्त्तनापवर्त्तनयो' सयोगेनाल्पबहुत्वमुच्यते–तत्रोद्वर्त्तनायां
व्याघाते जघन्यावतीत्थापनानिक्षेपो सर्वस्तो ै, स्वस्थाने तु परस्परं तुल्यो, आवलिकाऽसंख्येयभागमात्रत्वात्। ततोऽपवर्त्तनायां जघ-
न्यो निक्षेपोऽसंख्येयगुण', तस्य समयाधिकावलिकात्रिभागमात्रत्वात्। ततोऽप्यपवर्त्तनायामेव जघन्यातीत्थापना द्विगुणा त्रिसमयोना।
अत्र भावना प्रागेव कृता। ततोऽप्यपवर्त्तनायामेव व्याघात विना उत्कृष्टातीत्थापना विशेषाधिका, तस्याः परिपूर्णावलिकाप्रमाणत्वात्।
तत उद्वर्त्तनायामुत्कृष्टातीत्थापना संख्येयगुणा,तस्या उत्कृष्टाबाधारूपत्वात्। ततोऽपवर्त्तनायां व्याघाते उत्कृष्टा अतीत्थापना असंख्येय-
गुणा, तस्या उत्कृष्टदायस्थितिप्रमाणत्वात्। तत उद्वर्त्तनायां उत्कृष्टो निक्षेपो विशेषाधिकः। ततोऽप्यपवर्तनायां उत्कृष्टो निक्षेपो विशे-
षाधिकः। ततोऽपि सर्वा स्थितिर्विशेषाधिका ॥ १५ ॥

उक्ता स्थित्यपवर्त्तना। साम्प्रत अनुभागस्योद्वर्त्तनाऽभिधीयते—

**चरिम नोवट्टिज्जइ जाव अणताणि फड्डगाणि तओ। उस्सक्किय उव्वट्टइ उदया ओवट्टणा एव ॥१६॥**

(स्वो०)—चरमस्पर्द्धक नोद्वर्त्यते, एवं द्विचरमं त्रिचरम चतुश्चरम च नोद्वर्त्यंते,एव यावदनन्तानि स्पर्द्धकानि प्रथमाघोद्वर्त्यन्ते। किमुक्तं
भवति? जघन्यस्थितिनिक्षेप आवलिकासंख्येयभागमात्रस्थित्यग्रे, तदध• आवलिकामात्रा अतीत्थापना,तत्स्थितिगतानि स्पर्द्धकानि सर्वा-

ण्यपि नोद्वर्त्यन्ते, तदधःस्थितस्पर्द्धकान्युद्वर्त्यन्ते, तानि चावलिकास्थितिस्पर्द्धकान्यनन्तान्युल्लङ्घ्य आवलिकाऽसंख्येयभागमात्रस्थितिस्पर्द्धकेष्वनन्तेषु निक्षिपति, अयं जघन्यो निक्षेपः। ततो यथा स्थित्युद्वर्त्तने अइत्थावणावस्थिता प्रतिसमयं निक्षेपो वर्द्धते एवमनुभागोद्वर्त्तनेऽपि यावदुत्कृष्टो निक्षेपः। अपवर्तनामप्यत्रैवातिदिशति—यथोद्वर्तनास्थित्यग्रादवतीर्यते तथापवर्त्तना उदयावलिकातः स्थित्यपवर्त्तनावदनुभागापवर्त्तना ऊर्ध्वमुखी नीयत इति गाथार्थः ॥ १६ ॥

(मलय०)—तदेवमुक्ता स्थित्यपवर्त्तना—संप्रत्यनुभागोद्वर्त्तनापवर्त्तने वाच्ये, तत्र प्रथमतोऽनुभागोद्वर्त्तनामाह—चरमं स्पर्द्धकं नोद्वर्त्यते, नापि द्विचरमं, नापि त्रिचरमम्, एवं तावद्वाच्यं यावच्चरमात्स्पर्द्धकादधोऽनन्तानि स्पर्द्धकानि नोद्वर्त्यन्ते। इदमत्र तात्पर्य—यो जघन्यो निक्षेप आवलिकाया असंख्येयभागः सर्वोपरितनो या च तस्याध आवलिकामात्रातीत्थापना तत्स्थितिस्थानगतानि स्पर्द्धकानि सर्वाण्यपि नोद्वर्त्यन्ते किन्तु तेभ्योऽवष्वष्क्य—अधस्तादवतीर्य यानि स्पर्द्धकानि समयमात्रस्थितिगतानि तानि उद्वर्त्तयति। तानि चोद्वर्त्य आवलिकामात्रस्थितिगतानि अनन्तानि स्पर्द्धकानि अतिक्रम्योपरितनेष्वेवावलिकासत्कासंख्येयभागमात्रगतेषु स्पर्द्धकेषु निक्षिपति। यदा पुनरधोऽवतीर्य द्वितीयसमयमात्रस्थितिगतानि स्पर्द्धकानि उद्वर्त्तयति तदा आवलिकामात्रस्थितिगतानि स्पर्द्धकानि अतिक्रम्य उपरितनेषु समयाधिकावलिकासत्कासंख्येयभागमात्रगतेषु स्पर्द्धकेषु निक्षिपति। एवं यथा यथाधोऽवतरति तथा तथा निक्षेपो वर्द्धते। अतीत्थापना पुनः सर्वत्रापि आवलिकामात्रस्थितिगतान्येव स्पर्द्धकानि। कियान् पुनरुत्कृष्टो निक्षेपविषय इति चेद्, उच्यते—बन्धावलिकायामतीतायां समयाधिकावलिकामात्रगतानि स्पर्द्धकानि व्यतिरिच्य शेषाणि सर्वाण्यपि निक्षेपविषयः। तथाहि—उद्वर्त्यमानानि समयमात्रस्थितिगतानि स्पर्द्धकानि न तत्रैव निक्षिपति, आवलिकामात्रगतानि त्वतीत्थापना, ततो बन्धावलिकायामतीतायां समयाधिकावलिका-

मात्रगतानि व्यतिरिच्य शेषाणि स्पर्द्धकानि निक्षेपविषयः। सम्प्रत्यत्रैवाल्पबहुत्व चिन्त्यते—सर्वस्तोको जघन्यनिक्षेपः, तस्यावलिकास-त्कासख्येयभागगतस्पर्द्धकमात्रविषयत्वात्। ततोऽतीत्थापना अनन्तगुणा, निक्षेपविषयस्पर्द्धकेभ्य आवलिकामात्रस्थितिगतानां स्पर्द्धकाना-मनन्तगुणत्वात्। एव सर्वत्राप्यनन्तगुणता स्पर्द्धकापेक्षया द्रष्टव्या। तत उत्कृष्टो निक्षेपोऽनन्तगुणः। ततोऽपि सर्वोऽनुभागो विशेषाधिकः। तदेवमुक्ता अनुभागोद्वर्तना। सम्प्रत्यनुभागापवर्तनामतिदेशेनाह—'एवम्' उद्वर्तनाप्रकारेण अपवर्तनाप्यनुभागविषया वक्तव्या, केवलमुद्वर्त्या-दास्य स्थित्यपवर्तनावत्। तद्यथा—प्रथमं स्पर्द्धक नापवर्त्यते, नापि द्वितीयम्, नापि तृतीयम्, एव तावद्वक्तव्यं यावदावलिकामात्रस्थिति-गतानि स्पर्द्धकानि भवन्ति। तेभ्य उपरितनानि तु स्पर्द्धकान्यपवर्त्यन्ते। तत्र यदा उदयावलिकाया उपरि समयमात्रस्थितिगतानि स्पर्द्धकान्यपवर्तयति तदा समयोनावलिकात्रिभागद्वयगतानि अतिक्रम्याधस्तनेष्वावलिकासत्कसमयाधिकत्रिभागगतेषु स्पर्द्धकेषु निक्षि-पति। यदा तूदयावलिकाया उपरितनद्वितीयसमयमात्रस्थितिगतानि स्पर्द्धकान्यपवर्तयति तदा प्रागुक्ता अतीत्थापना समयोनावलि-कात्रिभागद्वयप्रमाणा समयमात्रस्थितिगतैः स्पर्द्धकैरधिकावगन्तव्या, निक्षेपस्तु तावन्मात्र एव। एव समयवृद्ध्या अतीत्थापना तावद् वृ-द्धिमुपनेतव्या यावदावलिका परिपूर्णा भवति। ततः परमतीत्थापना सर्वत्रापि तावन्मात्रैव, निक्षेपस्तु वर्द्धते। एव निर्व्याघाते द्रष्ट-व्यम्। व्याघाते पुनरनुभागकण्डक समयमात्रस्थितिगतस्पर्द्धकन्यूनमतीत्थापना द्रष्टव्या। कण्डकमानं समयन्यूनत्वं यथा प्राक् स्थि-त्यपवर्तनायामुक्त तथाऽत्रापि द्रष्टव्यम् ॥ १६ ॥

अइत्थावणाइयाओ सण्णाओ दुसु वि पुव्वुत्ताओ। किंतु अणंतभिलावणे फड्डगा तासु वत्तव्वा॥१७॥

(स्वो०)—अइत्थावणा जघन्या उत्कृष्टा च, जघन्यो निक्षेपः उत्कृष्टश्च, एवमाद्याः सज्ञा द्वयोरपि उद्वर्तनाऽपवर्तनयोः स्थितिविषये

या पूर्वं वर्णिता अत्रापि ता एव, किन्त्वनन्ताभिलापेन निक्षेपाइत्थावणासु स्पर्द्धकानि वक्तव्यानि। एतदेवोच्चारयति–उद्वर्त्तनायां स्तोको जघन्यनिक्षेपः। जघन्या अइत्थावणा तस्मादनन्तगुणा। तस्या उत्कृष्टनिक्षेपोऽनन्तगुणः। तस्मात्सर्वस्थित्यनुभागो विशेषाधिक इति। अपवर्त्तनायामपि प्रथमस्पर्द्धकं नापवर्त्यते,एवं तस्माद्यावदनन्तानि नापवर्त्यन्ते। किमुक्तं भवति? उदयावलिकायाः समयाधिकत्रिभागे निक्षेपः, तस्यानन्तानि स्पर्द्धकानि नापवर्त्यन्ते, तदुपरि समयोनमावलिकात्रिभागद्वयं अइत्थावणा, तस्याः अप्यनन्तानि रसस्पर्द्धकानि तान्यपि नापवर्त्यन्ते, उदयावलिकोपरि या स्थितिस्तस्याः स्पर्द्धकान्यपवर्त्तयन्ति, तस्याः प्रतिसमयमइत्थावणा वर्द्धते यावदावलिकापूर्णा, ततो निक्षेपो वर्द्धते, स्थित्यपवर्त्तनायामिव। जघन्यो निक्षेपः स्तोकः। तस्मादनन्तगुणा जघन्या अइत्थावणा। तस्या (व्याघातभावी) उत्कृष्टा अइत्थावणा विशेषाधिका (अनन्तगुणा)। उत्कृष्टमनुभागकण्डकं तस्या अनन्तगुणं (विशेषाधिकम्)। उत्कृष्टनिक्षेपो विशेषाधिकः। सर्वस्थित्यनुभागो विशेषाधिक इति गाथार्थः॥ १७॥

उद्वर्त्तनाऽपवर्तना करणे।

(मलय०)–एतदेवाह—अतीत्थापनाद्याः–जघन्याऽतीत्थापना, ऊत्कृष्टाऽतीत्थापना, आदिशब्दाज्जघन्यो निक्षेपः, उत्कृष्टो निक्षेपः, एवमाद्याः संज्ञाः–संज्ञेयानि वक्तव्यस्थानानि,द्वयोरपि–अनुभागोद्वर्त्तनापवर्त्तनयोः पूर्वोक्ता द्रष्टव्याः। स्थितिविषये यथा प्रागुक्तास्तथात्रापि वक्तव्या इत्यर्थः। किन्तु तासु निक्षेपातीत्थापनादिरूपासु संज्ञासु स्पर्द्धकान्यनन्ताभिलापेन वक्तव्यानि, तथैव च प्रागभिहितानीति। संप्रत्यस्यामेवानुभागापवर्त्तनायामल्पबहुत्वमुच्यते–सर्वस्तोको जघन्यनिक्षेपः, ततो जघन्यातीत्थापना अनन्तगुणा, ततो व्याघातेऽतीत्थापनाऽनन्तगुणा, तत उत्कृष्टमनुभागकण्डकं विशेषाधिकम्, तस्य एकसमयगतैः स्पर्द्धकैरतीत्थापनातोऽधिकत्वात्, तत उत्कृष्टो निक्षेपो विशेषाधिकः, ततोऽपि सर्वोऽनुभागो विशेषाधिकः॥ १७॥

इदानीं द्वयोरपि उद्वर्त्तनापवर्त्तनयोरल्पबहुत्वमाह–

थोव पएसगुणहाणि अंतरे दुसु वि हीणनिक्खेवो । तुल्लो अणंतगुणिओ दुसु वि अइत्थावणा चेवं ॥१८॥
तत्तो वाघायणुभागकंडग एक्कवग्गणाहीण । उक्कोसो निक्खेवो तुल्लो सविसेससंत च ॥ १९ ॥

(स्वो०)—स्तोकं–स्नेह एकस्यां स्थितौ प्रदेशगुणस्थानान्तरे वा स्पर्द्धकं जातम् ,अथवा स्नेहप्रत्ययस्पर्द्धकस्य एकस्मिन्ननुभाग-द्विगुणहानिस्थानान्तरेऽनुभागविशेषाः सर्वस्तोकाः । द्वयोरपि हीनो–जघन्यो निक्षेपोऽनन्तगुणः तुल्यश्च,उद्वर्त्तनायामपवर्त्तनायां च तुल्यः, प्रदेशगुणहान्यन्तरमाश्रित्यानन्तगुणः । द्वयोरपि अइत्थावणा तुल्या उद्वर्त्तनापवर्त्तनयोर्व्याघातादन्यत्र जघन्य निक्षेपादनन्तगुणेति गाथार्थः । ततस्तस्या अइत्थावणातो व्याघाते यदुत्कृष्टमनुभागकण्डकं एकवर्गणया हीनं तदुद्वर्त्तनोत्कृष्टाइत्थावणातोऽनन्तगुणम् , तस्माद-प्युद्वर्त्तनाऽपवर्त्तनयोः य उत्कृष्टो निक्षेपः स विशेषाधिकस्तुल्यश्च । तस्मादुत्कृष्टस्थितिबन्धानुभागः–उत्कृष्टसत्स्थित्यनुभागोपि विशेषा-धिको भवतीति गाथार्थः ॥ १८–१९ ॥

(मलय०)–सम्प्रति द्वयोरप्युद्वर्त्तनापवर्त्तनयोरल्पबहुत्वं ग्रन्थकृत्प्रतिपादयति–एकस्यां स्थितौ यानि स्पर्द्धकानि तानि क्रमशः स्था-प्यन्ते, तद्यथा–सर्वजघन्य रसस्पर्द्धकमादौ,ततो विशेषाधिकरसं द्वितीयम् ,ततोऽपि विशेषाधिकरसं तृतीय, एवं यावत्सर्वोत्कृष्टरसमन्ते । तत्रादिस्पर्द्धकादारभ्योत्तरोत्तरस्पर्द्धकानि प्रदेशापेक्षया विशेषहीनानि, अन्तिमस्पर्द्धकादारभ्य पुनरधोऽधः क्रमेण प्रदेशापेक्षया विशेषा-धिकानि विशेषाधिकानि । तेषां मध्ये एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा यत्स्पर्द्धकं जातं तत्सर्वस्तोकम् । अथवा स्नेहप्रत्यय-

उद्वर्तनाऽ-
पवर्तना
करणे ।

स्पर्द्धकस्य अनुभागद्विगुणवृद्ध्यन्तरे अनुभागद्विगुणहान्यन्तरे वा यदनुभागपटलं तत्सर्वस्तोकम्। ततो द्वयोरप्युद्वर्त्तनापवर्त्तनयोर्जघन्यो निक्षेपोऽनन्तगुणः, स्वस्थाने तु तुल्यः। तत्र यद्यप्युद्वर्त्तनायामावलिकासंख्येयभागगतानि स्पर्द्धकानि निक्षेपः, अपवर्त्तनायां समयाधिकावलिकात्रिभागगतानि स्पर्द्धकानि, तथाप्यादिमस्थितिषु स्पर्द्धकानि स्तोकान्येव प्राप्यन्ते, अन्तिमस्थितिषु प्रभूतानीति स्पर्द्धकसङ्ख्यापेक्षया द्वयोरपि निक्षेपस्तुल्यः।एवमतीत्थापनायामपि भावनीयम्। ततो द्वयोरपि अतीत्थापना एवं द्रष्टव्या, निक्षेपादनन्तगुणा स्वस्थाने तु परस्परं तुल्या इत्यर्थः। ततो व्याघाते यदुत्कृष्टमनुभागकण्डकं एकया वर्गणया समयमात्रस्थितिगतस्पर्द्धकसंहतिरूपया हीनं तदनन्तगुणम्। तत उद्वर्त्तनापवर्त्तनयोरुत्कृष्टो निक्षेपो विशेषाधिकः, स्वस्थाने तु परस्परं तुल्यः। ततः पूर्वबद्धं बध्यमानं वानुभागसत्कर्म विशेषाधिकम्, समयाधिकातीत्थापनावलिकागतैः पूर्वबद्धैर्बध्यमानैश्च स्पर्द्धकैरधिकत्वात् ॥ १८–१९ ॥

**आबंधं उव्वट्टइ सव्वत्थोवट्टणा ठितिरसाणं। किट्टीवज्जे उभयं किट्टीसु ओवट्टणा एक्का ॥ २० ॥**

॥ उव्वट्टणोवट्टणाओ ॥

(स्वो०)—'आबन्धं'–यावद्बन्धोऽस्ति तावदुद्वर्त्तना भवति,अपवर्त्तना पुनः सर्वत्र बन्धे वाऽबन्धे वा स्थित्यनुभागयोः स्यात् ।अथवा 'आबन्धं'ति–यावन्मात्रः स्थितिबन्धः तावन्मात्रस्य स्थितिसत्कर्मणः उद्वर्तना स्यात्, तदुपरितनस्य स्थित्युद्वर्तनाऽनुभागोद्वर्तना वा नेति। सर्वत्र अपवर्तना बध्यमाने तदारतः परतो वा स्थितेरनुभागस्य च भवति। किट्टीकृतवर्जदले उभयमपि भवति। किट्टीकृते त्वपवर्तना एवेति गाथार्थः ॥ २० ॥ ॥१०८॥

(मलय०)–संप्रत्युद्वर्त्तनापवर्त्तनयोः कालनियमं विषयनियमं च प्रतिपादयति—'आबन्धं'–यावद्बन्धस्तावदुद्वर्त्तयति स्थित्यनुभागान्,

अपवर्तना पुनः स्थितिस्थानां सर्वत्रापि प्रवर्त्तते, बन्धे अबन्धे वा प्रवर्त्तते इत्यर्थः, एष कालनियमः। अथवा आबन्ध इति—यावन्मात्रः स्थितिबन्धस्तावन्मात्रस्य च स्थितिसत्कर्मणः स्थित्युद्वर्तनाऽनुभागोद्वर्तना चोपजायते, उपरितनस्य तु कर्मणः स्थित्यनुभागोद्वर्तना न भवति। अपवर्तना पुनः सर्वत्र बन्धपरिमाणादर्वाक् परतो वा प्रवर्त्तते इत्यर्थः। तथा किट्टीकृतवर्जे कर्मदलिके उभय उद्वर्तनाऽपवर्तनारूपं भवति, किट्टीकृते त्वपवर्तनैवैका केवला, नोद्वर्तनेति, एष सर्वोऽपि विषयनियमः ॥ २० ॥

## उद्वर्त्तनाऽपवर्त्तनाकरणे समाप्ते

## उदीरणाकरणम् ।

साम्प्रतं उदीरणाकरणमाह–

**जं करणेणोकड्ढिय दिज्जइ उदए उदीरणा एसा । पगतिट्ठितिमाइचउहा मूलुत्तरभेयओ दुविहा ॥१॥**

(स्वो०)—यत्करणेनापकृष्य दीयते उदये उदीरणा, एषा प्रकृतिस्थित्यादिचतुर्द्धा, मूलोत्तरभेदतो द्विधेति पदानि। पदार्थस्तु यद्दलं परमाण्वात्मकं करणेन स्ववीर्यात्मकेनापकृष्य, अनुदितस्थितिभ्य इत्यवगम्यते–दीयते–प्रक्षिप्यते उदये–उदयप्राप्तस्थितौ, एषा उदीरणोच्यते। एतल्लक्षणम्, तस्या एव भेदानाह–प्रकृतिस्थित्यनुभागप्रदेशविभागाच्चतुर्द्धा भवति, मूलोत्तरप्रकृतिभेदात्पुनर्द्विधेति गाथार्थः ॥१॥

(मलय०)—तदेवमुक्ते उद्वर्त्तनाऽपवर्त्तने। सम्प्रति कर्मप्रकृतिगतक्रमप्रामाण्यानुसरणादुदीरणा वक्तव्या, तत्र चैते अर्थाधिकारास्तद्यथा–लक्षणं, भेदः, साद्यादिपरूपणा, स्वामित्वं च। तत्र प्रथमतो लक्षणभेदयोः प्ररूपणार्थमाह–इह पूर्वार्द्धेन लक्षणमभिहितम्, उत्तरार्द्धेन तु भेदः। तत्र यत्परमाण्वात्मकं दलिकं करणेन–योगसंज्ञिकेन वीर्यविशेषेण कषायसहितेन असहितेन वा उदयावलिकावहिर्वर्त्तिनीभ्यः स्थितिभ्योऽपकृष्य उदये दीयते–उदयावलिकायां प्रक्षिप्यते एषा उदीरणा। उक्तं च—"उदयावलिवाहिरिल्लठिईहिंतो कसायसहिएणं असहिएण वा जोगसण्णेणं करणेणं दलियमोकड्ढिय उदयावलियाए पवेसणं उदीरणत्ति॥" सा च प्रकृतिस्थित्यादिभेदाच्चतुर्धा, तद्यथा–प्रकृत्युदीरणा, स्थित्युदीरणा, अनुभागोदीरणा, प्रदेशोदीरणा च। एकैकापि द्विधा–मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषयाऽष्टधा, उत्तरप्रकृतिविषया चाष्टपञ्चाशदधिकशतप्रभेदा ॥ १ ॥

मूलप्रकृतीनां साद्यनादिप्ररूपणामाह—

**वेयणियमोहणीयाण होइ चउद्धा उदीरणाउस्स । साई अधुवा सेसाण साइवज्जा भवे तिविहा ॥ २ ॥**

(स्वो०)—वेदनीयमोहनीययोर्भवति चतुर्धा उदीरणा, आयुषः सादिरध्रुवा। शेषाणां सादिवर्ज्या भवेत् त्रिविधेति पदानि। पदार्थस्तु वेदनीयमोहनीययोः चतुर्धोदीरणा भवति, कथं ? अभव्येष्वनादिध्रुवा, प्रमत्तसूक्ष्मसम्परायातीतेष्वध्रुवा, तयोरेव प्रतिपित्सोः सादिरिति भावयितव्या । आयुषः सादिरध्रुवा, यतः—सर्वायुषामन्त्यावलिका उदयेनैवानुभूयते। शेषाणां ज्ञानदर्शनावरणनामगोत्रान्तरायाणां सादिशेषा त्रिधा भवति, कथं ? ज्ञानदर्शनावरणान्तरायाणां समयाधिकावलिकाशेषे क्षीणकषायकाले अध्रुवा भवत्युदीरणा, तत्स्थानमप्राप्तानां ध्रुवानादिश्चेति । सयोगिनोऽन्त्यसमये नामगोत्रयोरेवमेव, प्रतिपाताभावात् सादिर्न सम्भवतीति गाथार्थः ॥ २ ॥

(मलय०)—तदेवमुक्तौ लक्षणभेदौ। सम्प्रति साद्यादिप्ररूपणा कर्तव्या, सा च द्विधा, मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र प्रथमा मूलप्रकृतिविषया, तां करोति—वेदनीयमोहनीययोरुदीरणा चतुर्धा—चतुष्प्रकारा भवति, तद्यथा—सादिरनादिर्ध्रुवाऽध्रुवा च। तत्र वेदनीयस्य प्रमत्तगुणस्थानकं यावदुदीरणा, न परतः, मोहनीयस्य चरमावलिकाहीनसूक्ष्मसंपरायगुणस्थानकं यावत्, न परतः, ततोऽप्रमत्तादिगुणस्थानकेभ्यः प्रतिपततो वेदनीयस्य, उपशान्तमोहगुणस्थानकाच्च प्रतिपततो मोहनीयस्योदीरणा सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवा अभव्यानां, अध्रुवा भव्यानाम्। आयुषः पुनरुदीरणा सादिरध्रुवा च। तथाहि—आयुषः पर्यन्तावलिकायां नियमादुदीरणा न भवति, ततोऽध्रुवा, पुनरपि परभवोत्पत्तिप्रथमसमये प्रवर्तते ततः सादिरिति । शेषाणां मूलप्रकृतीनां ज्ञानावरणदर्शनावरण नामगोत्रान्तरायरूपाणामुदीरणा त्रिधा—त्रिप्रकारा, तद्यथा—अनादिर्ध्रुवाऽध्रुवा च। तथाहि—ज्ञानावरणदर्शनावरणान्तरायाणां यावत्क्षी

णमोहगुणस्थानकस्यावलिका शेषा न भवति तावत्सर्वजीवानामुदीरणाऽवश्यंभाविनी, नामगोत्रयोस्तु यावत्सयोगिचरमसमयस्तावत्, तत एषामनादिरुदीरणा, ध्रुवाऽध्रुवे पूर्ववत् ॥ २ ॥

साम्प्रतमुत्तरप्रकृतीनामाह—

**अधुवोदयाण दुविहा मिच्छस्स चउव्विहा तिहण्णासु । मूलुत्तरपगईणं भणामि उदीरगा एत्तो ॥३॥**

(स्वो०)—अध्रुवोदयानां द्विधा, मिथ्यात्वस्य चतुर्विधा, त्रिधा अन्यासु, मूलोत्तरप्रकृतीनां भणामि उदीरका अतः, इति पदानि। पदार्थस्तु दशोत्तरशतस्याध्रुवोदयस्य द्विधोदीरणा भवति, अध्रुवोदयत्वादेव भावितैव (भावनीया)। मिथ्यात्वस्य चतुर्द्धा, कथं ? सम्यक्त्वप्राप्तावधःप्रतिपततः सादिः, सम्यक्त्वमप्राप्तस्यानादि(रभव्यस्य ध्रुवा भव्यस्या)ध्रुवेति । 'अन्यास्वि'ति–सप्तचत्वारिंशतां ध्रुवोदयानां त्रिधेति, ज्ञानदर्शनावरणान्तरायप्रकृतीनां चतुर्दशानां मूलप्रकृतीनामिव भावनीया। वर्णादिविंशतिः अगुरुलघु निर्माणं स्थिरशुभे सेतरे कार्मणसप्तकं–कार्मणतैजसशरीरे तयोरेव त्रिणि बन्धनानि (द्वे संघातने च), एषा नाम्नस्त्रयस्त्रिंशत् ध्रुवोदयाः सयोगिनि नामवत्त्रिधा भावनीयेति, सादिर्न संभवति, तस्मादप्रतिपातात् । मूलप्रकृतीनामुत्तरप्रकृतीनां चातः 'उदीरकाः'–उदीरणास्वामिनो भणामीति गाथार्थः॥

(मलय०)—तदेवं कृता मूलप्रकृतिषु साद्यादिप्ररूपणा। सम्प्रत्युत्तरप्रकृतिषु तां चिकीर्षुराह—अध्रुवोदयानां वक्ष्यमाणमिथ्यात्वघातिचतुर्दशनामत्रयस्त्रिंशद्वर्जानां दशोत्तरशतसंख्यानामुदीरणा द्विविधा–द्विप्रकारा, तद्यथा–सादिरध्रुवा च, सा च साद्यध्रुवता अध्रुवोदयत्वादेव भावनीया। तथा मिथ्यात्वस्योदीरणा चतुर्विधा, तद्यथा–सादिरनादिर्ध्रुवा अध्रुवा च। तत्र सम्यक्त्वं प्रतिपन्नस्योदीरणा मिथ्यात्वस्य न भवति, उदयाऽभावात्, ततोऽध्रुवा। सम्यक्त्वाच्च प्रतिपतितस्य मिथ्यात्वं गतस्य पुनरपि भवति, ततोऽसौ सादिः, तत्स्था- ॥११०॥

प्रकृत्युदीरणायां साद्यादिभङ्गयन्त्रम् मूलप्रकृतिषु

| प्रकृतेर्नामानि | सादिः | अध्रुवा | अनादिः | ध्रुवा |
|---|---|---|---|---|
| ज्ञाना० दर्श० विघ्नानाम् | ० | भव्यानाम् | १२ मे समयाधिकाव० शेषं यावत् | अभव्यानाम् |
| नामगोत्रयोः | ० | ,, | सयोगुणचरमसमयं यावत् | ,, |
| वेदनीयस्य | अप्रमत्तात्प्रतिपतताम् | ,, | सादिस्थानमप्राप्तानां | ,, |
| मोहस्य | ११ तः प्रतिपतताम् | ,, | ,, | ,, |
| आयुषः | भवप्रथमसमये प्रवर्तमानत्वात् | भवान्त्यावलिकायामभवनात् | ० | ० |
| उत्तरप्रकृतिषु | | | | |
| मिथ्यात्वस्य | सम्यक्त्वात् प्रतिपतताम् | भव्यानाम् | सम्यक्त्वाप्राप्तानां (अनादिमिथ्यादृशां) | अभव्यानाम् |
| ज्ञाना० ५—दर्श० ४—विघ्न० ५ रूपाणाम् (१४) | ० | १२ मे समयाधिकाव० शेषे व्यवच्छेदात् | ध्रुवोदयत्वात् (विच्छेदात्प्राक्) | ,, |
| स्थिर-अस्थिर-शुभ-अशुभ-तै० ७—वर्णादि २०—अगु० निर्माणानाम् ३३ | ० | १३ मे व्यवच्छेदात् | ,, | ,, |
| शेषाणाम् (११०) | अध्रुवोदयत्वात् | अध्रुवोदयत्वात् | - | |

नमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत्। तथा अन्यासु प्रकृतिषु ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकस्थिरास्थिरशुभाशुभतजससप्तकागुरुलघुवर्णादिविंशतिनिर्माणरूपासु सर्वसंख्यया सप्तचत्वारिंशत्संख्याकासु उदीरणा त्रिधा, तद्यथा—अनादिर्ध्रुवा अध्रुवा च। तत्राऽनादिर्ध्रुवोदयत्वात्, ध्रुवा अभव्यानां, अध्रुवा भव्यानाम्। ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकानां क्षीणमोहगुणस्थानके, शेषाणां च सयोगिकेवलिचरमसमये व्यवच्छेदभावात् ॥ ३ ॥

मूलप्रकृत्युदीरणास्वामिन आह—

**घाईणं छउमत्था उदीरगा रागिणो उ मोहस्स । वेयाऊण पमत्ता सजोगिणो नामगोयाणं ॥४॥**

मूलप्रकृत्युदीरणा स्वामिनः

| | |
|---|---|
| ज्ञाना० दर्शना० विघ्नानाम् | क्षीणमोहान्ताः |
| मोहनीयस्य | दशमान्ताः |
| वेदनीयस्य | प्रमत्तान्ताः |
| आयुषः | अचरमावलिकप्रमत्तान्ताः |
| नाम गोत्रयोः | सयोग्यन्ताः |

(स्वो०)—घातिनां छद्मस्था उदीरकाः, रागिणस्तु मोहनीयस्य, वेदनीयायुषोः प्रमत्ताः, सयोगिनो नामगोत्रयोरिति पदानि । पदार्थस्तु घातिकर्मणां—ज्ञानावरणदर्शनावरणान्तरायाणां सर्वे छद्मस्था उदीरकाः, सकषायाः छद्मस्थास्त एव मोहनीयस्योदीरकाः, वेदनीयायुषोः सर्वे थेरा भगवन्तः प्रमत्ताः, नामगोत्रयोः ये सयोगिनो मनोवाक्कायव्यापारवन्तः ते सर्वेऽप्युदीरणास्वामिन इति गाथार्थः ॥ ४ ॥

(मलय०)—तदेव कृता साद्यादिप्ररूपणा। साम्प्रतमत ऊर्ध्वं मूलप्रकृतीनामुत्तरप्रकृतीनां च उदीरकान्—उदीरणास्वामिनो भणामि। तत्र प्रथमतो मूलप्रकृत्युदीरणास्वामिन आह—घातिप्रकृतीनां ज्ञानावरणदर्शनावरणान्तरायरूपाणां सर्वेऽपि छद्मस्थाश्चरमावलिकाहीनक्षीणमोहपर्यवसाना उदीरकाः, मोहनीयस्य तु रागिणः—सरागाः चरमावलिकाहीनसूक्ष्मसंपरायपर्यवसाना उदीरकाः, तथा वेद्यस्य—वेदनीयस्यायुषश्च प्रमत्ताः प्रमत्तगुणस्थानकपर्यन्ताः सर्वेऽप्युदीरकाः, केवलमायुषः पर्यन्तावलिकायां नोदीरका भवन्ति, तथा नामगोत्रयोः सयोगिनः—सयोगिकेवलिपर्यवसानाः सर्वेऽप्युदीरकाः ॥ ४ ॥

उत्तरप्रकृत्युदीरणास्वामिन आह—

उवपरघाय साहारण च इयर तणूइ पज्जत्ता । छउमत्था चउदसणनाणावरणंतरायाणं ॥५॥

(स्वो०)—उपघातं परघातं साधारणमितरच्च तन्वा पर्याप्ताः छद्मस्थाश्चतुर्दर्शनज्ञानावरणान्तरायाणामिति पदानि। पदार्थस्तूपघातपराघातसाधारणप्रत्येकनाम्नां तन्वा शरीरेण ये पर्याप्ता जीवास्ते उदीरका भवन्ति, यतः तासां चतसृणामपि शरीरभावात्वेवोदयो भवति। ज्ञानावरणान्तरायदशकदर्शन(नावरण)चतुष्कयोः सर्वे छद्मस्था उदीरका इति गाथार्थः ॥ ५ ॥

(मलय०)—तदेवं मूलप्रकृत्युदीरणास्वामिन उक्ताः, साम्प्रतमुत्तरप्रकृत्युदीरणास्वामिन आह—उपघातमित्यादौ षष्ठ्यर्थे प्रथमा, ततोऽयमर्थः—उपघातस्य पराघातस्य साधारणस्य, चशब्दो भिन्नक्रमः, इतरस्य च प्रत्येकनाम्नः, तन्वा पर्याप्ताः शरीरपर्याप्त्या पर्याप्ता उदीरकाः, केवलं साधारणस्य साधारणाः प्रत्येकस्य प्रत्येकशरीरिणः। तथा चतुर्विधदर्शनावरणज्ञानावरणपञ्चकान्तरायपञ्चकानां सर्वे छद्मस्थाः चरमावलिकावर्जक्षीणमोहनर्जा उदीरकाः ॥ ५ ॥

तसथावराइतिगतिगआउगईजातिदिट्ठिवेयाणं । तन्नामाणुपुव्वीण किंतु ते अंतरगईए ॥६॥

(स्वो०)—त्रसनाम्नस्त्रसाः, बादरनाम्नो बादराः, पर्याप्तकस्य पर्याप्ताः, स्थावरस्य स्थावराः, सूक्ष्मस्य सूक्ष्माः, अपर्याप्तकस्य अपर्याप्तकाः, देवगत्यायुषोर्देवाः, मनुजगत्यायुषोर्मनुजाः, एवं नरकतिर्यग्गत्यायुषोरपि वक्तव्यम्, पञ्चेन्द्रियादिजातीनां क्रमशः पञ्चेन्द्रियादिजीवा उदीरकाः, मिथ्यात्वस्य मिथ्यादृष्टयः, सम्यग्मिथ्यात्वस्य सम्यग्मिथ्यादृष्टयः, सम्यक्त्वस्य क्षायोपशमिकसम्यग्दृष्टयः, एवं पुंस्त्रीनपुंसकानां तद्वेदनामका एवोदीरकाः, गतिवदानुपूर्विकाणामपि, किन्तु तासां भवान्तरे नोभयत्रेति गाथार्थः ॥ ६ ॥

(मलय०)—त्रसादित्रिकस्य—त्रसबादरपर्याप्तरूपस्य, स्थावरादित्रिकस्य—स्थावरसूक्ष्मापर्याप्तरूपस्य, चतुर्णामायुषां, चतसृणां गतीनां, पञ्चानां जातीनां, तिसृणां दृष्टीनां मिथ्यात्वादीनां, त्रयाणां वेदानां नपुंसकवेदादीनां, तन्नामानः—तत्तत्कर्मानुयायिनामान उदीरकाः, तद्यथा—त्रसनाम्नस्त्रसाः, ते च शरीरेऽपान्तरालगतौ च वर्त्तमाना वेदितव्याः, एवं सर्वेषामपि भावनीयम् । आनुपूर्वीणामपि तत्तदानुपूर्व्यनुयायिनामान उदीरकाः, तद्यथा—नरकानुपूर्व्या नारकाः, एवं शेषाणामपि, किन्तु ते अपान्तरालगतौ वर्त्तमाना उदीरका वेदितव्या नान्यत्र ॥ ६ ॥

आहारी उत्तरतणु नरतिरितव्वेयए पमोत्तूणं । उद्दीरंती उरलं ते चेव तसा उवंगं से ॥७॥ ॥११२॥

(स्वो०)—'आहारी'ति—आहारकशरीरीति, 'उत्तरतन्नि'ति—वैक्रियशरीरिणो देवनारकास्तद्वेदिनो नरतिरश्चश्च मुक्त्वा शेषाः सर्वेऽपि जीवा एकद्वित्रिचतुष्पञ्चेन्द्रियाः औदारिकशरीरस्य सङ्घातनबन्धनस्योदीरकाः, एते चौदारिकशरीरोदीरका ये त्रसास्त एवौदारिकाङ्गो-

पाङ्गस्योदीरकाः, स्थावराणां तदुदयाभावादिति गाथार्थः ॥ ७ ॥

(मलय०)—'आहारी'ति आहारकशरीरिणः, 'उत्तरतणु'त्ति–वैक्रियशरीरिणो देवान् नारकांश्च नरतिरश्चोऽपि तद्वेदकान् प्रमुच्य शेषाः सर्वेऽपि जीवा एकद्वित्रिचतुष्पञ्चेन्द्रिया औदारिकम्, उपलक्षणमेतत्, औदारिकबन्धनचतुष्टयमौदारिकसंघातं च उदीरयन्ति। त एवौदारिकशरीरोदीरकाः ये त्रसास्ते 'से'–तस्यौदारिकस्य संबन्धिनोऽङ्गोपाङ्गनाम्न उदीरकाः, न शेषास्तदुदयाऽभावात् ॥ ७ ॥

आहारी सुरनारग सण्णी इयरेऽनिलो उ पज्जत्तो । लद्धीएँ बायरोदीरगो उ वेउव्वियतणुस्स ॥८॥

(स्वो०)—'आहारी'ति–आहारपर्याप्त्या पर्याप्तकाः, सुरा नारकाश्च, इतरे संज्ञिनो मनुष्यतिर्यञ्चः, तुशब्दादुत्तरवैक्रियसप्तकस्योदीरकाः', 'अनिल' त्ति–वायुकायिको लब्ध्या (वैक्रियलब्ध्या सम्पन्नः) पर्याप्तो बादरो वैक्रियषट्कस्योदीरको द्वितीयतुशब्दाद्दुर्भगनामोदयीति गाथार्थः ॥ ८ ॥

(मलय०)—'आहारी'ति–आहारपर्याप्त्यापर्याप्ता' सुरा नारकाश्च, इतरे मनुष्यास्तिर्यञ्चश्च संज्ञिनः, तुशब्दादुत्तरवैक्रियशरीरकारिणः, तथा अनिलो–वायुकायिकः पर्याप्तो लब्ध्या–वैक्रियलब्ध्या सपन्नो, बादरो दुर्भगनामोदयी, एते सर्वेऽपि वैक्रियतनोः–वैक्रियशरीरनाम्न', उपलक्षणमेतत्, वैक्रियबन्धनचतुष्टयस्य संघातस्य च उदीरकाः ॥ ८ ॥

तदुवगस्स वि तेच्चिय पवण मोत्तूण केइ नरतिरिया। आहारसत्तगस्स वि कुणइ पमत्तो विउव्वन्ता ॥९॥

(स्वो०)—वैक्रियोपाङ्गस्यापि त एव वायुकायिक मुक्त्वा नरतिर्यञ्चः केचन, यतः स्तोकाः उत्तरवैक्रियकारिणः। आहारकस्य तु

करोत्ति प्रमत्तः आहारपर्याप्त्या पर्याप्तः, तुशब्दाद्यस्तत्कारीति गाथार्थः ॥ ९ ॥

(मलय०)—तदुपाङ्गस्यापि–वैक्रियाङ्गोपाङ्गनाम्नोऽपि, त एव सुरादयो वायुकायिकं मुक्त्वा शेषाः सर्वेऽप्युदीरका द्रष्टव्याः, केवलं नरास्तिर्यञ्चश्च वैक्रियस्य–वैक्रियाङ्गोपाङ्गस्य उदीरकाः केचन स्तोका एव द्रष्टव्याः। यतः केचनैव तिर्यग्नरा वैक्रियलब्धिसंपन्ना भवन्ति। तथा आहारकसप्तकस्यापि विकुर्वन् आहारकशरीरं कुर्वन् प्रमत्तः–प्रमत्तसंयत उदीरणां करोति. ॥ ९ ॥

**तेत्तीसं नामधुवोदयाण उदीरगा सजोगीओ । लोभस्स उ तणुकिट्टीण होंति तणुरागिणो जीवा ॥१०॥**

( स्वो० )—त्रयस्त्रिंशतां नाम ध्रुवोदयानां उदीरकाः सर्वे सयोगिनो भवन्ति, वर्णादिविंशतिकार्मणसप्तकं स्थिरशुभे सेतरे अगुरुलघु निर्माणं चेति। लोभस्य तनुकिट्टीनां सूक्ष्मविभागानां, तुशब्दस्यैवकारार्थत्वात्, तनुरागिण एव जीवा उदीरका न शेषा रागवन्तोऽपीति गाथार्थः ॥ १० ॥

(मलय०)—त्रयस्त्रिंशत्संख्याकानां नामप्रकृतीनां ध्रुवोदयानां तैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणरूपाणां सयोगिनः–सयोगिकेवलिपर्यन्ताः सर्वेऽप्युदीरकाः, तथा लोभस्य सरकानां तनुकिट्टीनां–सूक्ष्मकिट्टीनां तनुरागिणः–सूक्ष्मसंपराया जीवा यावत्सूक्ष्मसंपरायगुणस्थानकस्य चरमावलिका न भवन्ति, तावदुदीरका भवन्ति ॥ १० ॥

**पंचिंदियपज्जत्ता नरतिरिचउरंसउसभपुव्वाणं । चउरंसमेव देवा उत्तरतणुभोगभूमा य ॥११॥** ॥११३॥

(स्वो०)—पञ्चेन्द्रियाः शरीरपर्याप्त्या पर्याप्ता नरतिर्यञ्चः समचतुरस्रवज्रर्षभनाराचाद्यानां संस्थानसंहनननानां उदीरकाः, देवाः

समचतुरस्रसंस्थानस्यैवोदीरका, 'उत्तरतणु'त्ति-आहारकोत्तरवैक्रियशरीरिणो मनुष्यतिर्यञ्चो भोगभूमिजाश्चोदीरका इति गाथार्थः ॥११॥

(मलय०)—पञ्चेन्द्रियाः शरीरपर्याप्त्या पर्याप्ता नरास्तिर्यञ्चश्च समचतुरस्रादीनां षण्णां संस्थानानां, वज्रर्षभनाराचादीनां षण्णां संहननानां उदीरका वेदितव्याः । इहोदयप्राप्तानामेवोदीरणा प्रवर्तते, नान्येषां, ततो यत् यदा संस्थान संहनन वा उदयप्राप्तं भवति तत्तदा उदीर्यते, नान्यदन्यदेति द्रष्टव्यम् । तथा देवा उत्तरतनवः-आहारकशरीरिणो वैक्रियशरीरिणश्च तिर्यग्मनुष्या भोगभूमिजाश्च समचतुरस्रमेवैकं संस्थानमुदीरयन्ति, न शेषम्, उदयाभावात् ॥ ११ ॥

आइमसंघयणं चिय सेढीमारूढगा उदीरेंति । इयरे हुंडं छेवट्ठगं तु विगला अपज्जत्ता ॥१२॥

(स्वो०)—क्षपकश्रेणीं प्रतिपन्नाः प्रथमसंहननमेवोदीरयन्ति न शेषाणि । इतरे-एकेन्द्रिया' तिर्यञ्चो मनुष्याश्च हुण्डमुदीरयन्ति, द्वीन्द्रियादित्रसा लब्ध्यपर्याप्तकाश्च अन्त्यसंहननमिति गाथार्थः ॥१२॥

(मलय०)—श्रेणिं-क्षपकश्रेणिमारूढाः सन्त आदिमसंहननमेव-वज्रर्षभनाराचसंहननमेवोदीरयन्ति, न शेषसंहननानि, उदयाभावात् । न हि शेषसंहननिनः क्षपकश्रेणिमारोहन्ति । तथा इतरे-एकेन्द्रियविकलेन्द्रियनैरयिकलब्ध्यपर्याप्तकाश्च पञ्चेन्द्रियतिर्यङ्मनुष्या हुण्डमेव संस्थानमुदीरयन्ति, तस्यैवोदयभावात् । तथा विकलेन्द्रियाः सर्वेऽप्येकेन्द्रियवर्जा लब्ध्यपर्याप्तकाश्च सेवार्तसंहननमेकैकमुदीरयन्ति, न शेषं संहननमुदयाऽभावात् ॥ १२ ॥

वेउव्वियआहारगउदए न नरा वि होंति संघयणी । पज्जत्तबायरे च्चिय आयवउद्दीरगो भोमो ॥१३॥

(स्वो०)—उत्तरवैक्रियाहारकयोरुदये न मनुष्याः, अपिशब्दात्तिर्यञ्चोऽपि संहननोदीरणावन्तो भवन्ति, पर्याप्तबादर एव पृथ्वीकायिक आतपस्योदीरको भवति, नान्यो जीव इति गाथार्थः ॥१३॥

(मलय०)—वैक्रियाहारकशरीरनाम्नोरुदये वर्त्तमाना नरा अपि--मनुष्या अपि, अपिशब्दात्तिर्यञ्चोऽपि वैक्रियशरीरिणः संहनिनो न भवन्ति संहननोदीरका न भवन्ति, उदयाभावात्। तथा पर्याप्तबादर एव भौमः-पार्थिवः, पृथ्वीकायिक आतपस्योदीरको भवति, न शेषः, शेषस्यातपनामोदयाऽभावात् ॥ १३ ॥

**पुढवीआउवणस्सइबायरपज्जत्त उत्तरतणूय । विगलपणिंदियतिरिया उज्जोवुद्दीरगा भणिया ॥१४॥**

(स्वो०)—पृथिव्यम्बुवनस्पतिकायिका बादरा लब्धिपर्याप्ताः उत्तरवैक्रियाहारकशरीरिणश्च विकलेन्द्रियाः पर्याप्ता उद्योतस्योदीरका भणिता इति गाथार्थः ॥१४॥

(मलय०)—पृथिव्यम्बुवनस्पतिकायिका बादरलब्धिपर्याप्ताः, तथा उत्तरतनवो वैक्रियशरीरिण आहारकशरीरिणश्च, तथा विकलेन्द्रियास्तिर्यक्पञ्चेन्द्रियाश्च पर्याप्ताः, एते सर्वेऽपि उद्योतस्योदीरकास्तीर्थकरगणधरैर्भणिताः, तेषामुद्योतनामोदयसंभवात् ॥ १४ ॥

**सगला सुगतिसराणं पज्जत्तासंखवासदेवा य । इयराणं नेरइया नरतिरि सुसरस्स विगला य ॥१५॥**

(स्वो०)—'सकलाः'–सम्पूर्णेन्द्रियाः पर्याप्तास्तिर्यग्मनुष्याः प्रशस्तविहायोगतिसुस्वरयोरसंख्येयवर्षायुषः, सर्वदेवाश्चोदीरका भवन्ति। इतरयोरप्रशस्तविहायोगतिदुःस्वरयोः सर्वेऽपि नारका उदीरकाः, नरतिर्यञ्चोऽपि, विकलाः पर्याप्ताः (केचन) सुस्वरस्योदीरकाः, भूयोऽपि नरतिर्यग्ग्रहणं पञ्चेन्द्रियाणामनियमार्थमिति गाथार्थः ॥१५॥ ॥११४॥

(मलय०)—सकलाः–सम्पूर्णाः पञ्चेन्द्रिया इत्यर्थः, केचन तिर्यग्मनुष्याः पर्याप्ताः, तथा असख्येयवर्षायुषः, सर्वे देवाः, प्रशस्तविहायोगतिसुस्वरयोरुदीरकाः, इतरयोः–अप्रशस्तविहायोगतिदुःस्वरयोर्नैरयिका नरतिर्यञ्चोऽपि केचन उदीरकाः। तथा विकलेन्द्रियाः पर्याप्ताः केचन सुस्वरस्योदीरका वेदितव्याः ॥ १५ ॥

ऊसासस्स सरस्स य पज्जत्ता आणुपाणभासासु । जा ण निरुंभइ ते ताव होंति उद्दीरगा जोगी॥१६॥

(स्वो०)—उच्छ्वासस्योदीरका योगिनो भवन्ति, ये उच्छ्वासस्य उच्छ्वासपर्याप्त्या पर्याप्ताः, स्वरस्य तु भाषापर्याप्त्या, यावद्यायोगित्वं मरणं वा गच्छन्ति (तावत्तदुदीरकाः) इति गाथार्थः ॥१६॥

(मलय०)—उच्छ्वासस्वरयोरानप्राणभाषाशब्दाभ्यां यथासंख्येन योजना, सा चैवं—उच्छ्वासनाम्नः प्राणापानपर्याप्त्या पर्याप्ताः सर्वेऽप्युदीरकाः। तथा स्वरस्य–सुस्वरस्य दुःस्वरस्य वा भाषकाः सर्वेऽप्युदीरकाः, भाषापर्याप्त्या पर्याप्ता वेदितव्याः। यद्यपि स्वरस्य पर्याप्ताः प्रागेवोदीरका उक्ताः तथापि भाषापर्याप्त्या पर्याप्ता इति विशेषोपदर्शनार्थं पुनरुपादानम्। तथा यावत्ते उच्छ्वासभाषे न निरुन्धेते तावद्योगिनः–सयोगिकेवलिनस्तयोरुदीरकाः, न परतः, परतस्तदुदयाऽभावात् ॥ १६ ॥

नेरइया सुहुमतसा वज्जिय सुहुमा य तह अपज्जत्ता। जसकित्तुदीरगाइज्जसुभगनामाण सण्णिसुरा ॥१७॥

(स्वो०)—सर्वेऽपि नारकाः, 'सूक्ष्मत्रसा' इति–वाय्वग्निकायिकाः, 'सूक्ष्मा' इति–सूक्ष्मनामकर्मोदयिनः, 'अपर्याप्ता' इति–सर्वेऽपि एकद्वित्रिचतुःपञ्चेन्द्रिया लब्ध्यपर्याप्तकाः, एतान् वर्जयित्वा यशःकीर्तेरुदीरका भवन्ति। आदेयसुभगनाम्नोः केचित् संज्ञिनो नर-

तिर्यञ्चो देवाश्च केचिदुदीरका इति गाथार्थः ॥१७॥

(मलय०)—नैरयिकाः, सूक्ष्मत्रसाः--अग्निकायिका वायुकायिकाः, सूक्ष्माः–सूक्ष्मनामकर्मोदयिनः, तथा अपर्याप्ताः–एकद्वित्रिचतुः पञ्चेन्द्रिया लब्ध्यपर्याप्तकाः, एतान् वर्जयित्वा शेषाः सर्वे यशःकीर्त्तेरुदीरकास्तदुदये वर्त्तमाना वेदितव्याः। तथादेयसुभगनाम्नोः केचित्संज्ञिनो नरास्तिर्यञ्चः केचन देवा उदीरकाः ॥ १७ ॥

**उच्चं चिय जइ अमरा केई मणुया व नीयमेवण्णे। चउगइया दुभगाई तित्थयरो केवली तित्थं ॥१८॥**

(स्वो०)—उच्चैर्गोत्रमेव यतयोऽमरा उदीरयन्ति, नेतरत्, केचित्प्राकृतनरा अपि किञ्चित्कालम्। तदवशिष्टाः सर्वेऽपि नारकतिर्यञ्चो नीचमेवोदीरयन्ति। चतुर्गतिका अपि जीवास्तिस्रः प्रकृतीर्दुर्भगानादेयायशःकीर्त्त्यभिधाना उदीरयन्ति। तीर्थकरो यदा प्राप्तकेवलज्ञानो भवति तदा तीर्थकरनाम उदीरयतीति गाथार्थः ॥१८॥

(मलय०)—सर्वे यतयः सम्यक् संयमानुष्ठानेषु यतमानाः, सर्वे भवनपतिव्यन्तरज्योतिष्कवैमानिकाः, केचन प्राकृतमनुष्याश्च, उच्चैःकुलसमासादितजन्मान उच्चैर्गोत्रमेव केवलमुदीरयन्ति, न नीचैर्गोत्रं, तेषां तदुदयाऽभावात्। अन्ये पुनरुक्तव्यतिरिक्ता नीचैर्गोत्रमेवोदीरयन्ति, नोच्चैर्गोत्रम्। तथा चतुर्गतिका अपि जीवा दुर्भगादीः–दुर्भगाऽनादेयाऽयशःकीर्त्त्यभिधानास्तिस्रः प्रकृतीरुदीरयन्ति। केवलं प्रागुक्तसुभगाद्युदीरकव्यतिरिक्ता दुर्भगाद्युदये वर्त्तमाना वेदितव्याः। तथा तीर्थकरः केवली–यदा समुत्पन्नकेवलज्ञानो भवति तदा तीर्थकरनामोदीरयति, न शेषकाले, उदयाऽभावात् ॥ १८ ॥

**मोत्तूण खीणराग इंदियपज्जत्तगा उदीरेंति । निद्दापयला सायासायाई जे पमत्तत्ति ॥१९॥**

(स्वो०)—मुक्त्वा क्षीणराग किमुक्तं भवति ? क्षीणकषायान्त्यावलिकाकालं मुक्त्वा शेष कालं तदारतो जीवा इन्द्रियपर्याप्त्या पर्याप्ता निद्राप्रचलयोरुदीरकाः । सातासातवेदनीये सर्वेऽपि ये प्रमत्तास्ते उदीरयन्तीति गाथार्थः ॥१९॥

(मलय०)—मुक्त्वा क्षीणराग अन्त्यावलिकामात्रकालावस्थायिनं, किमुक्तं भवति ? क्षीणरागावस्थायामावलिकामात्रं कालं मुक्त्वा शेषकालं तदारतो जीवा इन्द्रियपर्याप्त्या पर्याप्ता निद्राप्रचलयोरुदीरका वेदितव्याः । इह कर्मस्तवकारादयः क्षपकक्षीणमोहयोरपि निद्राद्विकस्योदयमिच्छन्ति, उदये च सत्यवश्यमुदीरणा ततस्तन्मतेनोक्तं क्षीणरागमन्त्यावलिकामात्रकालभाविनं मुक्त्वेति । ये पुनः सत्कर्मग्रन्थकारादयस्ते क्षपकक्षीणमोहान् व्यतिरिच्य शेषाणामेव निद्राद्विकस्योदयमिच्छन्ति । तथा च तद्ग्रन्थः—"निद्दादुगस्स उदओ । खीणखवगे परिच्चज्ज" तन्मतेनोदीरणापि निद्राद्विकस्य क्षपकक्षीणमोहान् व्यतिरिच्य शेषाणामेव वेदितव्या । तथा चोक्तं कर्मप्रकृतौ—"इन्दियपज्जत्तीए दुसमयपज्जत्तगाए पाउग्गा । निद्दापयलाण खीणरागखवगे परिच्चज्ज" ॥ इति । तथा ये प्रमत्ताः प्रमत्तगुणस्थानकपर्यन्ता मिथ्यादृष्टयादयस्ते सर्वेऽपि सातासाते उदीरयन्ति, नान्ये, अन्येषामतिविशुद्धत्वेन सातासातोदीरणायोग्याध्यवसायस्थानाभावात् ॥ १९ ॥

**अपमत्ताई उत्तरतणूयअस्संखयाउ वज्जेत्ता । ससानिद्दाण सामी सबंधगंता कसायाणं ॥२०॥**

(स्वो०)—अप्रमत्तादिगुणवन्तः, 'उत्तरतणूय'—त्ति वैक्रियाहारकशरीरिणोऽसंख्येयवर्षायुषश्च वर्जयित्वा शेषा जीवाः शेषनिद्राणां-

उदीरणाकरणगाथा १८

निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धीनामुदीरकाः । 'सबन्धगंता कसायाणं' ति–अनन्तानुबन्धिनां सास्वादनान्ताः, द्वितीयकषायाणामविरतान्ताः, तृतीयानां देशविरतान्ताः, सञ्ज्वलनानां स्वबन्धं यावत्, लोभस्याबन्धकोऽपि किञ्चित्कालमुदीरको भवतीति गाथार्थः ॥२०॥

(मलय०)—अप्रमत्तादीन् सर्वान्, उत्तरतनूंश्च–वैक्रियाहारकशरीरिणोऽसंख्येयवर्षायुषश्च वर्जयित्वा शेषाः सर्वेऽपि शेषनिद्राणां–निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरूपाणामुदीरका भवन्ति । तथा कषायाणां स्वबन्धकान्ताः स्वस्वबन्धकपर्यवसाना उदीरकाः, न शेषाः, तद्यथा–अनन्तानुबन्धिनां सासादनान्ताः, अप्रत्याख्यानकषायाणामविरतसम्यग्दृष्टयन्ताः, प्रत्याख्यानावरणकषायाणां देशविरतान्ताः, लोभवर्जानां संज्वलनानां स्वबन्धं यावत्, संज्वलनलोभस्य च बादरस्याऽनिवृत्तिबादरसंपरायान्ताः, किट्टीकृतस्य तु सूक्ष्मसंपरायाः, ते च "लोभस्स य तणुकिट्टीण होंति तणुरागिणो जीवा" इत्यनेन प्रागेवोक्ताः ॥ २० ॥

हासरईसायाणं अंतमुहुत्तं तु आइमं देवा । इयराणं नेरइया उड्ढं परियत्तणविहीए ॥२१॥

(स्वो०)—हास्यरतिसातवेदनीयानामाद्यमन्तर्मुहूर्त्तमवश्यमुदीरका देवाः, इतरासामरतिशोकासातवेदनीयानामवश्यं नारका उदीरकाः, तदूर्ध्वं षण्णामप्यनियम इति गाथार्थः ॥२१॥

(मलय०)—देवाः सर्वेऽपि आदिममन्तर्मुहूर्त्तं यावत्, उत्पत्तिप्रथमसमयादारभ्यान्तर्मुहूर्त्तं यावदित्यर्थः, हास्यरतिसातवेदनीयानामवश्यमुदीरका भवन्ति, तदा तेषामवश्यं तदुदयसंभवात् । इतरासामरतिशोकाऽसातवेदनीयप्रकृतीनामवश्यं नारका आदिममन्तर्मुहूर्त्तं यावदुदीरकाः, नारकाणामवश्यं तदानीं तासामेवोदयसंभवात् । आदिमादन्तर्मुहूर्त्तादूर्ध्वं तु देवा नारकाश्च प्रत्येकं परिवर्त्तनविधिना षण्णामपि प्रकृतीनामुदीरका भवन्ति । तत्र नारकाणां सातवेदनीयाद्युदयसंभवस्तीर्थकरजन्मादावसेयः, देवानां त्वसातवेदनीयाद्युदयसंभवो

मात्सर्याद्युदयप्रियविप्रयोगस्वच्यवनादौ, केचिदारकाः पुनः सकलामपि भवस्थितिं यावदसातवेदनीयादीनामेवोदयसंभवात्तेषामेवोदीरकाः

हासाई छक्कस्स उ जाव अपुव्वो उदीरगा सव्वे। उदओ उदीरणा इव ओघेण होइ नायव्वो ॥२२॥

(स्वो०)—हास्यादिषट्कस्य तु यावदपूर्वगुणस्थानं तावत्सर्वेऽप्युदीरकाः। सर्वासां प्रकृतीनां उदयोऽप्युदीरणावत् ओघतोऽविशेषेण भवति ज्ञातव्य इति गाथार्थः ॥२२॥

(मलय०)—हास्यादिषट्कस्य हास्यरत्यरतिशोकभयजुगुप्सारूपस्य यावदपूर्वकरणगुणस्थानं तावत्सर्वेऽप्युदीरका वेदितव्याः। यथा चैषा प्रकृत्युदीरणा सप्रपञ्चमुक्ता, तथा उदयोऽप्योघेनाऽविशेषेण वेदितव्यः, प्राय उदयोदीरणयोः समकं प्रवर्त्तनात् ॥ २२ ॥

पगइट्ठाणविगप्पा जे सामी होंति उदयमासज्ज। तेच्चिय उदीरणाए नायव्वा घातिकम्माण ॥२३॥

(स्वो०)—प्रकृतीनां स्थानविकल्पा ये स्वामिनोऽभिहिता उदयमाश्रित्य त एव उदीरणायामपि ज्ञातव्या घातिकर्मणाम्, किमुक्तं भवति? ज्ञानावरणीयस्य एकमुदयस्थानं पञ्चेति। दर्शनावरणस्य द्वे उदयस्थाने चत्वारि पञ्च वा। अन्तरायस्यैकं पञ्चप्रकृत्यात्मकम्। नव मोहनीयस्य एकद्विचतुःपञ्चषट्सप्ताष्टनवदशप्रकृत्यात्मकानि। उदीरणायामप्येतान्येव, एतेषामुदये यावन्तो विकल्पाः उदीरणायामपि तावन्त एव, ये (च) स्वामिनोऽभिहिताः गतिगुणाश्रयाः, उदीरणायामपि त एवेति गाथार्थः ॥२३॥

(मलय०)—घातिकर्मणां—ज्ञानावरणदर्शनावरणमोहनीयान्तरायाणामुदयमाश्रित्य यानि प्रकृतिस्थानानि, ये च तेषु तेषु प्रकृतिस्थानेषु यावन्तो विकल्पा—भेदाः, ये च तद्विकल्पानां मिथ्यादृष्ट्यादयः स्वामिनोऽग्रे वक्ष्यन्ते, ते एवान्यूनातिरिक्ताः प्रकृतिस्थानादय उदीरणायामपि ज्ञातव्याः 'जत्थ उदयो तत्थ उदीरणा इति वचनात्' ॥ २३ ॥

उत्तरप्रकृत्युदीरणास्वामिनः

| | |
|---|---|
| ५ विघ्न ९ आवरणानाम् | सर्वे छद्मस्थाः |
| तै० ७-वर्णादि २०-स्थिर-अस्थिर-शुभ-अशुभ-अगुरुलघु-निर्माणानां (३३) | सयोग्यन्ताः |
| उपघात-पराघातयोः | सर्वे देहपर्याप्ताः |
| लोभस्य | दशमान्ताः |
| त्रसादि ३-स्था० ३-४ गति-५ जाति-३ दर्श० मोह०-वेद ३-आयु ४ (२८) र्णाम् | तत्तन्नामोदयवर्तिनः यथा त्रसस्य त्रसाः बादरस्य बादराः (भवस्था अपांतरालगाश्च) |
| प्रत्येक-साधारणयोः | देहस्थाः तदुदयवन्तः |
| औदारिकषट्कस्य | आहारका नृतिर्यंचः वैक्रियाहारकदेहावेदकाः |
| औदा० उपांगस्य | औदारिकषट्कोदीरकास्त्रसाः |
| वैक्रियषट्कस्य | आहारका देवा नारकाश्च तल्लब्धिकाः संज्ञिनृतिर्यंचः लब्धिपर्याप्तबादरवायवोऽपि. |
| वैक्रियोपांगस्य | वैक्रियदेहषट्कोदीरका अपवनाः |
| आहारकसप्तकस्य | प्रमत्तगुणस्थाः |
| संघयणसंस्थानषट्कयोः | देहस्थास्तत्तन्नामोदयवर्तिनः |
| ४ आनुपूर्वीणाम् | भवापान्तराले तदुदयवन्तः |
| आतपस्य | पर्याप्तबादरपृथ्वीकायाः |
| उद्योतस्य | बा० पृथ्वी-अप्-वनस्पति-विकलेंद्रिय-लब्धिपर्याप्तपंचेन्द्रिया उत्तरदेहिनः देवा मुनयश्च. |
| सुखगतेः | देहपर्याप्ता अनारकपंचेन्द्रियाः (उत्तरवै०तिर्यग्मनुष्याणाम् युगलिकानां च नियमात्) |
| सुस्वरस्य | भाषापर्याप्तास्त्रसाः |
| कुखगति-दुःस्वरयोः | विकलेन्द्रियाः-केचन पंचे० तिर्यग्मनुष्याः सर्वेनारकाश्च. |

| | | | |
|---|---|---|---|
| उच्छ्वासस्य | उच्छ्वासपर्याप्ताः (सर्वेषां स्वनिरोधं यावत्) | स्त्यानर्द्धित्रिकस्य | युगलिकाहारकवैक्रियदेह-प्रमत्तादिवर्जाः |
| सुभगादेययोः | केचिद्देवाः केचिद्गर्भजाश्च | वेदनीयद्विकस्य | प्रमत्तान्ताः ( तत्रापि प्रथ-मान्तर्मुहूर्ते देवाः सात-स्यैव नारकास्त्वसातस्यैव नारकाणां सातोदयो जिनक ल्याणके केचित् नारकाः सकलमपि भवं यावदसातोदी रका एव |
| यशसः | सूक्ष्मैकेन्द्रियनारकाग्निवायुवर्जपर्याप्ताः | | |
| उच्चैर्गोत्रस्य | सर्वदेवाः कुलजा नरा यति नश्च | | |
| दुर्भगानादेययोः | अगर्भजा नारकाश्च नियमेन शेषा अनियमेन | | |
| अयशसः | सूक्ष्मनारकाग्निवायवोऽपर्याप्ताश्च नियमेन शेषा अनि-यमेन | अनन्ता० ४ णाम् | सास्वादनान्ताः |
| नीचैर्गोत्रस्य | नरेतराः (तत्र मनुष्या कुलजान् यतिनश्च विहाय) | अप्रत्या० ४ णाम् | अविरतसम्यग्दृष्ट्यन्ताः |
| जिननाम्नः | केवलिसयोगाः | प्रत्या० ४ णाम् | देशविरतान्ताः |
| निद्राप्रचलयोः | इन्द्रियपर्याप्त्यनन्तरमक्षपक-क्षीणरागाः (पंचसं० कर्म-स्तवाद्यौ क्षीणरागान्त्यावलि-कार्वाग्वर्तिनः) | अलोभसंज्वलनत्रिकस्य | ९ मान्ताः स्वस्वबन्ध यावत् |
| | | हास्यषट्कस्य | ८ मान्ताः (तत्र प्रथमान्त मुहूर्ते देवा हास्यरत्योरेव नारकास्तु शोकारत्योरेव) |

मोत्तुं अजोगिठाणं सेसा नामस्स उदयवण्णेया । गोयस्स य सेसाणं उदीरणा जा पमत्तो त्ति ॥२४॥

॥ पगइउदीरणा सम्मत्ता ॥

(स्वो०)—मुक्त्वा अयोगिस्थानोपलक्षितं उदयस्थानं अष्टप्रकृतिरूपं नवप्रकृतिरूपं वा, शेषाणि नाम्न उदयस्थानानि विंशत्यादीनि दश सविकल्पानि उदयवत् उदीरणायामपि भवन्ति, गतिगुणाश्रयाः स्वामिनोऽपि त एव । गोत्रस्यापि अयोगिनो यः उच्चैर्गोत्रोदयः तं विहाय शेषं उदयवदुदीरणायामपि भवति । शेषयोर्वेदनीयायुषोर्यावत् प्रमत्तस्तावदुदीरणा भवत्युदयतुल्या, अप्रमत्तादिषूदयः शुद्ध एव । इतिशब्दाधिक्यात्त्रयाणामप्यायुषां (मनुष्यायुषोऽपि च) पर्यन्तावलिकायां उदय एव शुद्धो नोदीरणा इति गाथार्थः ॥२४॥

(मलय०)—मुक्त्वा अयोगिस्थानं–अयोगिगुणस्थानोपलक्षितं अष्टप्रकृत्यात्मकं नवप्रकृत्यात्मकं वा प्रकृतिस्थानं मुक्त्वा शेषाणि विंशत्यादीनि नाम्नः प्रकृतिस्थानान्युदीरणायामुदयवत् ज्ञातव्यानि । अयोगिकेवली हि भगवान् न किञ्चिदपि कर्मोदीरयति, योगाऽभावात्, उदीरणायाश्च योगसव्यपेक्षत्वात् । तथा चोक्तं—'वट्टन्तो उ अजोगी । न किंचि कम्मं उदीरेइ' इति ततो यद्यप्यष्टप्रकृत्यात्मकं नवप्रकृत्यात्मकं च प्रकृतिस्थानमयोगिकेवलिनामुदये प्राप्यते, तथाप्युदीरणायां न प्राप्यते इति तत्प्रतिषेधः । शेषाणि तु विंशत्यादीनि प्रकृतिस्थानान्युदयवदुदीरणायामप्यविशेषेण सप्रभेदमवगन्तव्यानि । गोत्रस्यापि यत्र उच्चैर्गोत्राद्यनुदयस्तं वर्जयित्वा शेष उदय उदीरणासहितो वेदितव्यः। शेषयोर्वेदनीयायूरूपयोः कर्मणोः, किमुक्तं भवति ? सातासातवेदनीयमनुष्यायुषां यावत्प्रमत्तगुणस्थानं तावदुदीरणावगन्तव्या, न परतः, अतिविशुद्धत्वात्, वेदनीयायुषोरुदीरणायाश्च घोलनरूपपरिणामहेतुकत्वात् । इतिशब्दस्याधिकार्थसूचकत्वात् शेषाणां त्रयाणामायुषां मनुष्यायुषोऽपि च पर्यन्तावलिकायामुदय एव प्रवर्त्तते, नोदीरणेत्यवगन्तव्यम् ॥ २४ ॥

उक्ता प्रकृत्युदीरणा, स्थित्युदीरणामाह—

**पत्तादयाएँ इयरा सह वेयइ ठिइउदीरणा एसा। बेआवलिया हीणा जावुक्कोसत्ति पाउग्गा ॥२५॥**

(स्वो०)—प्राप्तोदयस्थित्या सहेतरा-अप्राप्तोदयाः स्थितीर्वीर्यप्रयोगेण यद्वेदयत्येषा स्थित्युदीरणोच्यते-यद्यपि स्थितिसमयानां प्रक्षेपोऽनुभवनं वा नास्ति, तथापि तत्स्थितिकर्मपुद्गलानामेव स्थित्यभिधान, यथा ग्रामपक्षकुले गते दण्डिते वा ग्रामो गतो दण्डितो वा भवति, न च तत्क्षेत्रस्य गमनं दण्डो वा सम्भवति। कियत्यः प्रकृतीनामुदीरणाप्रायोग्याः स्थितयो भवन्ति उत्कृष्टतः ? एतदाह-द्वाभ्यां आवलिकाभ्यां हीना यावदुत्कृष्टा स्थितिः, किमुक्तं भवति-उत्कृष्टस्थितौ यावन्तः स्थितिविशेषाः-कालविशेषाः आवलिकादि-कसमयैः हीना उत्कृष्टतः संभवन्ति। किं सर्वप्रकृतीनां ? ननु याऽनुत्पादेतदुच्यते, उदये यासामुत्कृष्टबन्धः तासामेव, यतः उदयाव लिकागतं नोदीर्यते दलं, नाभिनवबद्धं प्रथमावलिकाद्य भावनीयमिति गाथार्थः ॥२५॥

(मलय०)—तदेवमुक्ता प्रकृत्युदीरणा, सम्प्रति स्थित्युदीरणाऽभिधानावसरः। तत्र चैते अर्थाधिकारास्तद्यथा-लक्षणं, भेदः, साद्यादि प्ररूपणा, अद्धाच्छेदः, स्वामित्वं चेति। तत्र लक्षणभेदयोः प्रतिपादनार्थमाह-प्राप्तोदयस्थित्या सह इतरा अप्राप्तोदयावलिकातो बहिर्वर्तिनीः स्थितीर्वीर्यविशेषप्रयोगेण समाकृष्य यद्वेद्यते सा स्थित्युदीरणा, एष लक्षणनिर्देशः। कियत्यः प्रकृतीनामुदीरणाप्रायोग्याः स्थितयो भवन्तीत्यत आह-'बेआवलिया'इत्यादि। द्वाभ्यामावलिकाभ्यां हीना यावती उत्कृष्टा स्थितिस्तावती उत्कर्षत उदीरणाप्रायोग्या, एतावत्यां स्थितौ यावन्तः समया एतावन्ति स्थितिस्थानान्युदीरणायाः प्रायोग्यानि भवन्तीत्यर्थः। इयमत्र भावना-द्वयोदये सति यासां प्रकृतीनामुत्कृष्टो बन्धः संभवति, तासामुत्कर्षत आवलिकाद्विकहीना सर्वाप्युत्कृष्टा स्थितिरुदीरणाप्रायोग्या भवति। तथाहि—उदयो-

त्कृष्टबन्धानां प्रकृतीनां बन्धावलिकायामतीतायां उदयावलिकाया बहिर्वर्त्तिनीः स्थितीः सर्वा अप्युदीरयति। अनुदयोत्कृष्टबन्धानां तु यथासंभवमुदीरणाप्रायोग्याया आवलिकाद्विकहीनायाश्चोत्कृष्टस्थितेर्यावन्तः समयास्तावन्त उदीरणायाः प्रभेदाः। तथाहि—उदयावलिकाया उपरितनी समयमात्रा स्थितिः कस्याप्युदीरणाप्रायोग्या, यस्य तावत्येव शेषीभूता तिष्ठति। एवं कस्यापि द्विसमयमात्रा, कस्यापि त्रिसमयमात्रा, एवं तावद्वाच्यं यावत्कस्याप्यावलिकाद्विकहीना सर्वाप्युत्कृष्टा स्थितिरिति ॥ २५ ॥

साद्यनादिप्ररूपणामाह—

**वेयणियाऊण दुहा चउव्विहा मोहणीयअजहण्णा। पंचण्ह साइवज्जा सेसा सव्वेसु दुविगप्पा ॥२६॥**

(स्वो०)—वेदनीयायुषो द्विधा अजघन्या स्थित्युदीरणा भवति, कथं? सर्वजघन्यस्थितिका एकेन्द्रिया जघन्याया उदीरकाः, त एव प्रवर्द्धमानस्थितिका अजघन्यायाः, अतो द्वे अपि साद्यध्रुवे, सा समया(धिका)वलिकाशेषे आयुषो जघन्या सादिरध्रुवेति विशेषः। मोहनीयस्य चतुर्विधा अजघन्याः, कथं? क्षपकस्य समयाधिकावलिकाशेषायां सञ्ज्वलनलोभस्थितौ जघन्या सादिः, तत्समया(तत्स्थाना)भावे अध्रुवा, उपशान्तस्थानात् प्रतिपततोऽजघन्या, सापि सादिरध्रुवा भाविता च, उत्कृष्टानुत्कृष्टा च स्थित्युदीरणा परावर्त्तमानाध्यवसायेन भवति मिथ्यादृष्टौ, सापि सादिरध्रुवा, सङ्क्लेशविशुद्ध्योः प्रतिसमयमन्यथाभवनादिति। पञ्चानां ज्ञानदर्शनावरणनामगोत्रान्तरायाणां सादिवर्ज्जा त्रिधा अजघन्या स्थित्युदीरणा, कथं? घातिनां यदा क्षीणकषायस्य समयावलिकामात्रा स्थितिर्भवति तदा जघन्या, सा च सादिरध्रुवा, तस्याः याऽभ्यधिका साऽजघन्या, उत्कृष्टा मिथ्यादृष्टौ, उत्कृष्टायाः सद्भावात् (प्रतिपतत) अनुत्कृष्टा सापि सादिरध्रुवा, अजघन्या पुनः सादिर्न भवति, जघन्यायाः अप्रतिपातात्, तत्स्थानमप्राप्तस्यानादिः, अभव्यस्य ध्रुवा, (भव्यस्याध्रुवा)।

नामगोत्रयोरप्येवमेव, किन्तु सयोग्यन्त्यसमये भणितव्या, शेषविकल्पा यथाकर्म प्रतिपादिता एवेति गाथार्थः ॥२६॥

(मलय०)—एषा भेदप्ररूपणा, सम्प्रति साद्यादिप्ररूपणा कर्त्तव्या, सा च द्विधा, मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषयां तां चिकीर्षुराह—वेदनीयायुषोरजघन्या स्थित्युदीरणा द्विधा—द्विप्रकारा, तद्यथा—सादिरध्रुवा च। तथाहि—वेदनीयस्य जघन्या स्थित्युदीरणा एकेन्द्रियस्य सर्वस्तोकस्थितिसत्कर्मणो लभ्यते, ततस्तस्यैव समयान्तरे प्रवर्द्धमानसत्कर्मणोऽजघन्या, ततः पुनरपि जघन्या, इति जघन्याऽजघन्या च सादिरध्रुवा। आयुषस्त्वजघन्या स्थित्युदीरणा जघन्यवर्जा, सा च समयाधिकपर्यन्तावलिकायां न भवति, परभवोत्पत्तिप्रथमसमये च भवति, ततः सादिरध्रुवा च। तथा मोहनीयस्याजघन्या स्थित्युदीरणा चतुर्विधा, तद्यथा—सादिरनादिर्ध्रुवा अध्रुवा च। तथाहि—मोहनीयस्य जघन्या स्थित्युदीरणा सूक्ष्मसंपरायस्य क्षपकस्योपशमकस्य वा स्वगुणस्थानकसमयाधिकावलिकाशेषे वर्तमानस्य भवति, ततोऽन्यत्र सर्वत्राप्यजघन्या, सा चोपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवा अभव्यानाम्, अध्रुवा भव्यानाम्। तथा पञ्चानां ज्ञानावरणदर्शनावरणनामगोत्रान्तरायाणां अजघन्या स्थित्युदीरणा सादिवर्जा शेषा त्रिप्रकारा भवति। तद्यथा—अनादिर्ध्रुवा अध्रुवा च। तथाहि—ज्ञानावरणदर्शनावरणान्तरायाणां जघन्या स्थित्युदीरणा क्षीणकषायस्य स्वगुणस्थानकसमयाधिकावलिकाशेषे वर्तमानस्य भवति, शेषकाल त्वजघन्या, सा चाऽनादिः सदैवभावात्, ध्रुवाध्रुवे पूर्ववत्। नामगोत्रयोस्तु जघन्या स्थित्युदीरणा सयोगिकेवलिचरमसमये, सा च सादिरध्रुवा च। ततोऽन्या सर्वाप्यजघन्या, सा चानादिः, ध्रुवाध्रुवे पूर्ववत्। शेषा उक्तव्यतिरिक्ता उत्कृष्टानुत्कृष्टजघन्यरूपाः सर्वेष्वपि कर्मसु द्विविकल्पा प्रष्टव्याः। तद्यथा—सादयोऽध्रुवाश्च। तथाहि—सर्वेषामपि कर्मणामायुर्वर्जानामुत्कृष्टा स्थित्युदीरणा मिथ्यादृष्टेरुत्कृष्टे संक्लेशे वर्तमानस्य कियत्कालं प्राप्यते, ततः समयान्तरेऽस्याप्य-

नुत्कृष्टा, ततः पुनरपि समयान्तरे उत्कृष्टा, संक्लेशविशुद्ध्योः प्रायः प्रतिसमयमन्यथाभवनात्, ततो द्वे अपि साद्यध्रुवे। जघन्या च द्विधा प्रागेव भाविता। आयुषस्तूत्कृष्टस्थित्युदये उत्कृष्टा स्थित्युदीरणा, शेषकालमनुत्कृष्टा, समयाधिकावलिकाशेषे जघन्या, एताश्च तिस्रोऽपि कादाचित्क्य इति साद्यध्रुवाः ॥ २६ ॥

**मिच्छत्तस्स चउहा धुवोदयाणं तिहा उ अजहण्णा। सेसविगप्पा दुविहा सव्वविगप्पा उ सेसाणं ॥२७॥**

(स्वो०)—मिथ्यात्वस्य चतुर्धा अजघन्या स्थित्युदीरणा भवति, कथं? प्रथमसम्यक्त्वप्राप्तौ समयाधिकावलिकाशेषायां प्रथमस्थितौ जघन्या सादिः, तत्समयापगमे अध्रुवा, प्रतिपततोऽजघन्या सादिरध्रुवा, तत्स्थानमप्राप्तस्याऽनादिरभव्यस्य ध्रुवेति। ध्रुवोदयानां त्रिधा सादिवर्जा अजघन्योदीरणा, घातिध्रुवोदयानां घातिमूलप्रकृतिवत्, नामध्रुवोदयानां नामवदनादिर्ध्रुवाध्रुवेति। शेषविकल्पा द्विधा साद्यध्रुवास्ते च मूलप्रकृतिवद् भावनीयाः। शेषाणामध्रुवप्रकृतीनां सर्वे विकल्पाः साद्यध्रुवाः, उदये उदीरणासद्भावादुदयस्याप्यनियतत्वाद् भावित एवेति गाथार्थः ॥२७॥

(मलय०)—तदेवं कृता मूलप्रकृतिषु साद्यादिप्ररूपणा, सम्प्रत्युत्तरप्रकृतिविषयां तां चिकीर्षुराह—मिथ्यात्वस्याऽजघन्या स्थित्युदीरणा चतुर्विधा, तद्यथा—सादिरनादिर्ध्रुवा अध्रुवा च। तत्र मिथ्यादृष्टेः प्रथमं सम्यक्त्वमुत्पादयतो मिथ्यात्वस्य प्रथमस्थितौ समयाधिकावलिकाशेषायां जघन्या स्थित्युदीरणा, सा च सादिरध्रुवा च, सम्यक्त्वाच्च प्रतिपततोऽजघन्या, सा च सादिः। तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे अभव्यभव्यापेक्षया। तथा ध्रुवोदयानां—पंचविधज्ञानावरणचक्षुरचक्षुरवधिकेवलदर्शनावरणपंचविधान्तरायतैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणाख्यानां सप्तचत्वारिंशत्संख्याकानामजघन्या स्थित्युदीरणा त्रिधा—त्रिप्रकारा,

तद्यथा—अनादिर्ध्रुवा अध्रुवा च । तथाहि—ज्ञानावरणपञ्चकान्तरायपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणरूपाणां चतुर्दशप्रकृतीनां क्षीणकषायस्य स्वगुणस्थानस्य समयाधिकावलिकाशेषे वर्तमानस्य जघन्या स्थित्युदीरणा, सा च सादिरध्रुवा च, शेषा सर्वाप्यजघन्या, सा चाऽनादिः सदैव भावात्, ध्रुवाध्रुवे पूर्ववत् । तैजससप्तकादीनां त्रयस्त्रिंशत्सङ्ख्यानां नामप्रकृतीनां जघन्या स्थित्युदीरणा सयोगिकेवलिचरमसमये प्राप्यते, सा च सादिरध्रुवा च, ततोऽन्या सर्वाप्यजघन्या, सा चाऽनादिः, ध्रुवाध्रुवे पूर्ववत् । एतासामेव मिथ्यात्वादिप्रकृतीनामष्टचत्वारिंशत्संख्याकानां शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यरूपा द्विधा—द्विप्रकारास्तद्यथा—सादयोऽध्रुवाश्च, तथाहि—एतासामुत्कृष्टा स्थित्युदीरणा मिथ्यादृष्टेरुत्कृष्टे संक्लेशे वर्तमानस्य कियत्कालं प्राप्यते, ततः समयान्तरे तस्याप्यनुत्कृष्टा, ततो द्वे अपि साद्यध्रुवे, जघन्या च प्रागेव भाविता । शेषाणां च प्रकृतीनां दशोत्तरशतसंख्यानां सर्वेऽपि विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपा द्विविधास्तद्यथा—सादयोऽध्रुवाश्च, साद्यध्रुवत्वं चाध्रुवोदयत्वाद्भावनीयम् ॥२७॥

## मूलप्रकृतेः स्थित्युदीरणायाः साद्यादि भंगयन्त्रम्

| प्रकृतयः | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अना० | ध्रु० | सादिः | अध्रु० | सादिः | अध्रु० | सादिः | अध्रुवः |
| मोहनीयस्य | ११ तःपतितानां | भव्यानां | साद्यप्राप्तानां | अभ० | क्षपकाणां १० मे ० | विच्छेदत्वात् | उत्कृष्टोदीरणातः पतितमिथ्यादृशां | परावृत्तित्वात् | उत्कृष्टसंक्लेशेन मिथ्यादृशां | परावृत्तित्वात् |
| ज्ञाना० दर्श० विघ्नानाम् | —— | " | सादेरभावात् | " | क्षपकानां १२ मे ० | " | " | " | " | " |
| नामगोत्रयोः | —— | " | " | " | १३ मान्ते | " | " | " | " | " |
| वेदनीयस्य | सर्वाल्पस्थितिसत्तातः पतितानामेकेन्द्रियाणां | परावृत्तितः | — | — | सर्वाल्पस्थितिकेकेन्द्रियाणाम् | परावृत्तित्वात् | " | " | " | " |
| आयुषः | भवप्रथमसमये | अन्त्यावलिकायामभवनात् | — | — | भवप्रथमसमये | अन्त्यावलिकायामभवनात् | भवप्रथमसमये | अन्त्यावलिकायामभवनात् | भवप्रथमसमये | अन्त्यावलिकायामभवनात् |

सामित्तद्धाछेया इह ठिइसंकमेण तुल्लाओ। बाहुल्लेण विसेसं जं जाणं ताण तं वोच्छं ॥२८॥

(स्वो०)—उत्कृष्टोदीरणास्वामित्वं, जघन्योदीरणास्वामित्वं च, अद्धा–कालः, तच्छेदश्च–यस्याः प्रकृतेः यावत्यः स्थितयः उदीरणायोग्या इति, स्वामित्वम्, अद्धाछेदश्च यथास्थितिसंक्रमे भणितस्तथावसेयो बाहुल्येन, विशेषस्तु यो यासां तं तासां वक्ष्येऽहमिति गाथार्थः ॥२८॥

(मलय०)—कृता साद्यादिप्ररूपणा, संप्रत्यद्धाच्छेदस्य स्वामित्वस्य च प्रतिपादनार्थमाह—स्वामित्वाद्धाच्छेदौ इह स्थित्युदीरणाधिकारे स्थितिसंक्रमेण तुल्यौ बाहुल्येन वेदितव्यौ, यथा स्थितिसंक्रमे स्वामित्वमद्धाच्छेदश्च प्रागभिहितस्तत्रापि बाहुल्येनावगन्तव्य इत्यर्थः, विशेषस्तु यो यासां विद्यते तं तासां वक्ष्ये ॥२८॥

अंतोमुहुत्तहीणा सम्मे मिस्संमि दोहि मिच्छस्स। आवलिदुगेण हीणा बंधुक्कोसाण परमठिई ॥२९॥

(स्वो०)—सप्ततिकोटाकोटिप्रमाणा मिथ्यात्वस्थितिर्मिथ्यादृष्टिना सता या बद्धा तां तत्रैवान्तर्मुहूर्त्तं मध्यमपरिणामोऽनुभूय ततः सम्यक्त्वं गच्छति, सा च सम्यक्त्वस्थितौ संक्रामति, तस्योदयसंक्रमस्थितिकत्वादन्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणायोग्या। द्वितीयान्तर्मुहूर्त्तं सम्यक्त्वे स्थित्वा ततः सम्यग्मिथ्यात्वं गच्छति, ततोऽन्तर्मुहूर्त्तद्विकोनास्य भवति। उदये उत्कृष्टो बन्धो यासां भवति ता उदयबन्धोत्कृष्टाः, ताश्च षडशीतिसंख्याः–स्थिरशुभवर्जाः षट्चत्वारिंशद्ध्रुवोदयाः, षोडशकषायाः, त्रसदुःस्वरादिचतस्रो, वैक्रियसप्तकपञ्चेन्द्रियजातिहुण्डोपघातपराघातोच्छ्वासोद्योतासाताशुभविहायोगतिनीचैर्गोत्रमिति, आसां षडशीतिप्रकृतीनां उत्कृष्टस्थितिबन्धं ॥१२२॥

करोति, तस्याः स्थितेरुदयावलिकागतं नोदीरणायोग्यमभिनयचद्ध च, ततो द्व्यावलिकाहीना उत्कृष्टा स्थितिः उदीरणा योग्या इति गाथार्थः ॥२९॥

(मलय०)—एतदेव भावयति–मिथ्यात्वस्य स्थितिः सप्ततिसागरोपमकोटीकोटीप्रमाणा अन्तर्मुहूर्तोना सती सम्यक्त्वे उदीरणायोग्या, मिश्रे सम्यग्मिथ्यात्वे पुनः सैव मिथ्यात्वस्थितिर्द्वाभ्यामन्तर्मुहूर्ताभ्यां हीना उदीरणायोग्या। इयमत्र भावना–सप्ततिसागरोपमकोटीकोटीप्रमाणां मिथ्यात्वस्य स्थितिर्मिथ्यादृष्टिना सता बद्ध्वा, ततोऽन्तर्मुहूर्तं कालं यावत् तत्रैव मिथ्यात्वे स्थित्वा सम्यक्त्वं प्रतिपद्यते, ततः सम्यक्त्वे सम्यग्मिथ्यात्वे चान्तर्मुहूर्तोनां मिथ्यात्वस्थितिं सकलामपि संक्रमयति, संक्रमावलिकायां चातीतायामुदीरणायोग्या, तत्र संक्रमावलिकातिक्रमेऽपि सान्तर्मुहूर्तोनैव, ततः सम्यक्त्वस्यान्तर्मुहूर्तोनसप्ततिसागरोपमकोटीकोटीप्रमाणा उत्कृष्टा स्थितिरुदीरणायोग्या। ततः कश्चित्सम्यक्त्वेऽप्यन्तर्मुहूर्तं स्थित्वा सम्यग्मिथ्यात्वं प्रतिपद्यते ततः सम्यग्मिथ्यात्वमनुभवतः सम्यग्मिथ्यात्वस्यान्तर्मुहूर्तद्विकोना सप्ततिसागरोपमकोटीकोटीप्रमाणा उत्कृष्टा स्थितिरुदीरणायोग्या। तथा उदये सति बन्धोत्कृष्टानां-ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयतैजससप्तकवर्णादिविंशतिनिर्माणास्थिराशुभागुरुलघुमिथ्यात्वषोडशकषायत्रसबादरपर्याप्तप्रत्येकदुःस्वरदुर्भगानादेयायशःकीर्तिवैक्रियसप्तकपञ्चेन्द्रियजातिहुण्डसंस्थानोपघातपराघातोच्छ्वासासातवेदनीयोद्योताशुभविहायोगति-नीचैर्गोत्ररूपाणां षडशीतिप्रकृतीनां परमा उत्कृष्टा स्थितिरावलिकाद्विकेन हीना उदीरणायोग्या। तथाहि–आसां प्रकृतीनामुत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायामतीतायामुदयावलिकात उपरितनीं सकलामपि स्थितिमुदीरयति, तत आसामावलिकाद्विकहीना उत्कृष्टा स्थितिरुदीरणायोग्या। इह सम्यक्त्वस्यान्तर्मुहूर्तमबाधाच्छेदः, सम्यग्मिथ्यात्वस्यान्तर्मुहूर्तद्विकं, बन्धोत्कृष्टानां त्वावलिकाद्विकं, तच्च-

असंग्रहः ॥१२१॥

स्थित्युदीरणा ॥१२३॥

# उदीरणायामद्धाच्छेदस्य चित्राणि ।

स्वोदयबन्धोत्कृष्टानाम् उत्कृष्टस्थितिलता




उदयसंक्रमोत्कृष्टानाम् (२९)




मिथ्यात्वस्य उ० स्थितिलता



सम्यक्त्वस्योदीरणायास्थितिः आवलिकाधिकान्तर्मुहूर्तन्यून ७० को० को० सा० प्रमाणा

सम्यक्त्वस्यसत्ता (मिथ्या० संक्रमेण) अन्तर्मु० हीना ७० को० को० प्रमाणा |00000| |00000| |000000000000000000000000|

संक्रमा० उदयाव० (अबाधाच्छेदः) २ आव० न्यूनान्तर्मु०

सम्यक्त्वस्य उदीरणाप्रायोग्याः स्थितयः +उदयावलिकाधिकान्तर्मुहूर्त-न्यून ७० को० को० सा० प्रमाणाः

मिश्रस्य सत्ता (सम्यक्त्वसंक्रमेण) अन्तर्मुहूर्तहीन ७० को० को० सागरप्रमाणा |00000000000| |00000| |0000000000000000000000|

अन्तर्मुहूर्त (सम्यक्त्वोदय कालीन) उदयावलि०

अबाधाच्छेदः आवलिकाधिकान्तर्मुहूर्तम्

उदीरणाप्रा० स्थितयः ( +आवलिकाधिकान्तर्मुहूर्त-न्यून७०कोडाकोडीसागरप्रमाणाः )

इति पद्धत्या शेषाणामपि अबाधाच्छेदः स्वयमभ्यूह्यः

+प्रस्तुतकारेणोदयावलिकासत्कावलिकाधिकत्वं न कथित
परं पञ्चसंग्रहेणावलिकाधिकत्वग्रहणमावश्यकम्

दुदयवन्तश्च स्वामिनः ॥२९॥

**मणुयाणुपुव्विआहारदेवदुगसुहुमवियलतियगाणं। आयावस्स य परिवडणमंतमुहुहीणमुक्कोसा ॥३०॥**

(स्वो०)—मनुजानुपूर्विका आहारसप्तकं देवद्विकं सूक्ष्मत्रिकं विकलजातित्रिकं आतपमित्यासां सप्तदशप्रकृतीनां या उत्कृष्टा स्थितिः, सा अन्तर्मुहूर्त्तहीना उदीरणायोग्या, कथं ? आसामनुदये यदा बन्धो भवति तदा संक्रमेणान्याभ्यः स्थितिभ्यः स्थितिः संक्रामति, एतद्भावयति-यदा नरकगतेरुत्कृष्टबन्धं कृत्वा विंशतिसागरोपमकोटाकोटिमानं पुनः परावर्त्य शुभपरिणामादेवगतिं बध्नाति तदा देवगतौ बध्यमानायां नरकगतिस्थितिं संक्रामति, तां च देवगतिं जघन्येनापि अन्तर्मुहूर्त्तं बध्नाति, तच्च अन्तर्मुहूर्त्तं नरकगतेरतिक्रामति, ततो देवत्वेऽनुभवतोऽन्तर्मुहूर्तोना उदीरणायोग्या भवति, एवं शेषाणामपि भावनीया। आहारसप्तकं अप्रमत्तो बद्ध्वा चशब्दात् संक्लिष्टः तत्कालोत्कृष्टस्थितिकप्रकृतेः संक्रान्तस्थितिः सान्तर्मुहूर्त्तोनोदीरणायोग्या, यतोऽन्तर्मुहूर्त्तं स्थित्वा तदनुभवति। यदत्रातपग्रहणं करोति तद् ज्ञापयति यथाऽनुदयसंक्रमोत्कृष्टानामन्तर्मुहूर्त्तोनोत्कृष्टा स्थितिरुदीरणायोग्या तथानुदयबन्धोत्कृष्टानामपि, एतद् भावयति—देवः संक्लिष्टोऽनुदये आतपस्थावरैकेन्द्रियजातीनामुत्कृष्टस्थितिं बद्ध्वा तत्रैवान्तर्मुहूर्त्तं मध्यमपरिणामः स्थित्वा पृथिवीकायिकेषूत्पन्नः शरीरप्राप्तौ उत्कृष्टामुदीरणां करोतीति। नारकस्तिर्यग्द्विकौदारिकसप्तकान्त्यसंहननानां उत्कृष्टस्थितिं बद्ध्वा तत्रैवान्तर्मुहूर्त्तं मध्यमपरिणामः स्थित्वा तिर्यक्षूपपन्नः उत्कृष्टामुदीरणां करोति। निद्राणामनुदये उत्कृष्टस्थितिं बद्ध्वा एकं समयमन्तर्मुहूर्त्ते गते निद्रोदये उदीरणां करोति। एवं नरकद्विकस्य मनुष्यो बद्ध्वा परमां स्थितिमन्तर्मुहूर्त्ते व्यतीते पञ्चमाद्यासु गतः उत्कृष्टामुदीरणां करोति, आनुपूर्विकाणां तु तद्भवान्तरतृतीयसमये। उदयसंक्रमोत्कृष्टानां तु आवलिकात्रयेणोना उत्कृष्टा स्थितिरुदीरणायोग्या भवति, उद- ॥१२४॥

यावलिका बन्धावलिका संक्रमावलिका यतो विहाय उदीरयतीति गाथार्थः ॥२०॥

(मलय०)—मनुजानुपूर्व्याहारकसप्तक देवद्विक—देवगतिदेवानुपूर्वीलक्षणं, सूक्ष्मत्रिकं—सूक्ष्मापर्याप्तसाधारणरूप, विकलत्रिक—द्वित्रिचतुरिन्द्रियजातिरूप, आतपनाम, इत्येतासां सप्तदशप्रकृतीनां या उत्कृष्टा स्थितिः सा उत्कृष्टबन्धात्प्रतिपतने सति अन्तर्मुहूर्तेन हीना उदीरणायोग्या। इयमत्र भावना—इह कश्चित्तथाविधपरिणामविशेषतो नरकानुपूर्व्या उत्कृष्टां स्थितिं विंशतिसागरोपमकोटीकोटीप्रमाणां बद्ध्वा ततः शुभपरिणामविशेषतो मनुष्यानुपूर्व्याः पञ्चदशसागरोपमकोटीकोटीप्रमाणां बद्धुमारभते, ततस्तस्यां मनुष्यानुपूर्वीस्थितौ बध्यमानायामावलिकाया उपरि बन्धावलिकाहीनामावलिकात उपरितनीं सर्वामपि नरकानुपूर्वीस्थितिं संक्रमयति, ततो मनुष्यानुपूर्व्या अपि विंशतिसागरोपमकोटीकोटीप्रमाणा स्थितिरावलिकामात्रहीना जाता, मनुष्यानुपूर्वी च बध्नन् जघन्येनाप्यन्तर्मुहूर्त कालं यावद्बध्नाति। तथान्तर्मुहूर्तमावलिकोनविंशतिसागरोपमकोटीकोट्यानुभवति, बन्धानन्तरं च कालं कृत्वा अनन्तरसमये मनुष्यानुपूर्वीमनुभवतस्तस्या उत्कृष्टा स्थितिरन्तर्मुहूर्तोना विंशतिसागरोपमकोटीकोटीप्रमाणा उदीरणायोग्या। ननु मनुष्यगतेरपि पञ्चदशसागरोपमकोटीकोट्यो बन्धेनोत्कृष्टा स्थितिः प्राप्यते, तथा मनुष्यानुपूर्व्या अपि, न त्वेकस्या अपि विंशतिसागरोपमकोटीकोटयः, तत उभे अपि संक्रमोत्कृष्टे, संक्रमोत्कृष्टत्वाविशेषे च कथं मनुष्यगतेरिव मनुष्यानुपूर्व्या अपि आवलिकात्रिकहीना उत्कृष्टा स्थितिरुदीरणायोग्या न भवति? तदयुक्तं, मनुष्यानुपूर्व्या अनुदयसंक्रमोत्कृष्टत्वात्। उक्तं च प्राक्—"मणुयाणुपुव्विमीसग—आहारगदेवजुयलविगलाणि। सुहुमाइतिग तित्थ मणुयसंकमण उक्कोसा॥" अनुदयसंक्रमोत्कृष्टानां चोक्तयुक्त्यान्तर्मुहूर्तोनाया एवोत्कृष्टस्थितेरुदीरणायोग्यत्वात्, मनुष्यगतिस्तूदयसंक्रमोत्कृष्टा, ततस्तस्या आवलिकात्रिकहीनैवोत्कृष्टा स्थितिरुदीरणायोग्या। तथा आहारकसप्तकमप्रमत्तेन सता तद्योग्योत्कृ

ष्टसंक्लेशेनोत्कृष्टस्थितिकं बद्धं तत्कालोत्कृष्टस्थितिकस्वमूलप्रकृत्यभिन्नप्रकृत्यन्तरदलिकं च तत्र संक्रमितं, ततस्तत्सर्वोत्कृष्टान्तःसागरोपमकोटीकोटीस्थितिकं जातम्। बन्धानन्तरं चान्तर्मुहूर्त्तं स्थित्वा आहारकशरीरमारभते, तच्चारभमाणो लब्ध्युपजीवनेनौत्सुक्यभावतः प्रमादभाग्भवति, ततस्तस्य प्रमत्तस्य सत आहारकशरीरमुत्पादयत आहारकसप्तकस्यान्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणायोग्या। तथा कश्चित्तथाविधपरिणामविशेषभावतो नरकगतेरुत्कृष्टां स्थितिं विंशतिसागरोपमकोटीकोटीप्रमाणां बद्ध्वा ततः शुभपरिणामविशेषभावतो देवगतेरुत्कृष्टां स्थितिं दशसागरोपमकोटीकोटीप्रमाणां बद्धुमारभते, ततस्तस्यां देवगतिस्थितौ बध्यमानायां आवलिकाया उपरि बन्धावलिकाहीनामावलिकात उपरितनीं सर्वामपि नरकगतिस्थितिं संक्रमयति, ततो देवगतेरपि विंशतिसागरोपमकोटीकोटीप्रमाणा स्थितिरावलिकामात्रहीना जाता, देवगतिं च बध्नन् जघन्येनाप्यन्तर्मुहूर्त्तकालं यावद्बध्नाति, तच्चान्तर्मुहूर्त्तमावलिकोनविंशतिसागरोपमकोटीकोटयास्त्रुटयति। बन्धानन्तरं च कालं कृत्वा अनन्तरसमये देवो जातः, ततस्तस्य देवत्वमनुभवतो देवगतेरन्तर्मुहूर्त्तोना विंशतिसागरोपमकोटीकोटीप्रमाणा उत्कृष्टा स्थितिरुदीरणायोग्या भवति। ननूक्तयुक्त्यनुसारेणावलिकाधिकान्तर्मुहूर्त्तोनेति प्राप्नोति, कथमुच्यते अन्तर्मुहूर्त्तोनेति? नैष दोषः, यतश्चावलिकाप्रक्षेपेऽपि तदन्तर्मुहूर्त्तमेव, केवलं बृहत्तरमवगन्तव्यमिति। एवं देवानुपूर्व्या अपि वाच्यम्। एवं शेषाणामपि प्रकृतीनामुत्कृष्टा स्थितिरुदीरणायोग्या यथायोग्यं भावनीया। नन्वमूषामनुदयसंक्रमोत्कृष्टस्थितीनां प्रकृतीनामन्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणायोग्या भवतु, आतपनाम बन्धोत्कृष्टं, ततस्तस्य बन्धोदयावलिकाद्विकरहितैवोत्कृष्टा स्थितिरुदीरणाप्रायोग्या प्राप्नोति, कथमुच्यते अन्तर्मुहूर्त्तोनेति? तदयुक्तम्, आतपनाम्नोऽनुदयबन्धोत्कृष्टत्वात्। अनुदयबन्धोत्कृष्टानां चान्तर्मुहूर्त्तोनाया एवोत्कृष्टस्थितेरुदीरणायोग्यत्वात्। तत्रातपनाम्न इयं भावना—इह देव एवोत्कृष्टसंक्लेशे वर्त्तमान एकेन्द्रियप्रायोग्याणामा-

तपस्थावरैकेन्द्रियजातीनामुत्कृष्टां स्थितिं बध्नाति, नान्यः, स च तां च बद्ध्वा तत्रैव देवभवे अन्तर्मुहूर्त्तं कालं यावन्मध्यमपरिणामोऽवतिष्ठते, ततः कालं कृत्वा बादरपृथ्वीकायिकेषु मध्ये समुत्पद्यते । समुत्पन्नश्च सन् शरीरपर्याप्त्या पर्याप्त आतपनामोदये वर्त्तमानस्तदुदीरयति, तत एव सति तस्या अन्तर्मुहूर्त्तोनविंशतिसागरोपमकोटीकोटीप्रमाणोत्कृष्टा स्थितिरुदीरणायोग्या भवति । आतपग्रहणं चोपलक्षणम् । तेनान्यासामप्यनुदयबन्धोत्कृष्टानां स्थावरैकेन्द्रियजातिनरकद्विकतिर्यग्द्विकौदारिकसप्तकान्त्यसंहनननिद्रापञ्चकरूपाणामेकोनविंशतिसंख्यानां प्रकृतीनामन्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणायोग्या वेदितव्या । तत्र स्थावरैकेन्द्रियजात्योर्भावना प्रागेवोक्ता । नरकद्विकस्य तु तिर्यक्पञ्चेन्द्रियो मनुष्यो वा उत्कृष्टां स्थितिं बद्ध्वा उत्कृष्टस्थितिबन्धानन्तरं चान्तर्मुहूर्त्ते व्यतीते तिसृष्वधस्तनपृथिवीषु मध्ये अन्यतरस्यां पृथिव्यां समुत्पद्यते, तस्य च प्रथमसमये नरकगतेरन्तर्मुहूर्त्तेन हीना सर्वापि स्थितिर्विंशतिसागरोपमकोटीकोटीप्रमाणा उदीरणायोग्या भवति, नवरं नरकानुपूर्व्या अपान्तरालगतौ । तथा नारकस्तिर्यग्द्विकौदारिकसप्तकान्त्यसंहनननामोत्कृष्टां स्थितिं बद्ध्वा ततो मध्यमपरिणामः सन् तत्रैवान्तर्मुहूर्त्तं स्थित्वा तिर्यक्षूत्पन्नस्तासामुत्कृष्टां स्थितिमन्तर्मुहूर्त्तोनामुदीरयति । निद्रापञ्चकस्याप्यनुदये उत्कृष्टां स्थितिमुत्कृष्टेन संक्लेशेन बद्ध्वा ततोऽन्तर्मुहूर्त्ते गते सति निद्रोदये तामुत्कृष्टां स्थितिमन्तर्मुहूर्त्तोनामुदीरयति । उदयसंक्रमोत्कृष्टानां च प्रकृतीनां मनुजगतिसातवेदनीयस्थिरादिषट्कहास्यादिषट्कवेदत्रयशुभविहायोगतिप्रथमसंस्थानपञ्चकप्रथमसंहननपञ्चकोच्चैर्गोत्ररूपाणामेकोनत्रिंशत्संख्यानामावलिकात्रिकोना उत्कृष्टा स्थितिरुदीरणायोग्या वेदितव्या । आवलिकात्रिकं च बन्धावलिकासंक्रमावलिकोदयावलिकारूपमवगन्तव्यम् । सर्वत्रापि च यावता कालेन न्यूनत्वं तावान् अद्धाच्छेदः, उदयवन्तस्तदुदीरणास्वामिनः ॥३०॥

हयसेसा तित्थठिई पल्लासंखेज्जमेत्तिया जाया । तीसे सजोगिपढमे समए उदीरणुक्कोसा ॥३१॥

॥ उक्कोससामित्तं सम्मत्तं ॥

(स्वो०)—हतशेषा शुभाध्यवसायैर्या तीर्थकरनाम्नः स्थितिर्जाता पल्योपमासंख्येयभागमात्रा तस्याः सयोगिकेवली प्रथमसमये उदीरणामुत्कृष्टां करोति, यत इयन्मात्रा एवमुत्कृष्टोदीरणायोग्या इति गाथार्थः ॥३१॥

(मलय०)—इह पूर्वं तीर्थकरनाम्नः स्थितिः शुभैरध्यवसायैरपवर्त्यापवर्त्य पल्योपमासंख्येयभागमात्रा शेषीकृता। तस्या एतावन्मात्राया हतशेषायाः स्थितेः सयोगिकेवलिनः प्रथमे समये या उदीरणा सा उत्कृष्टा उदीरणा। यतः सर्वदैवोत्कर्षतोऽपि इयन्मात्रैव स्थितिरुत्कृष्टा तीर्थकरनाम्न उदीरणाप्रायोग्या प्राप्यते, नाधिकेति। आयुषां तु चतुर्णामपि स्वस्वोत्कृष्टस्थितिबन्धादूर्ध्वमुदयप्रथमसमये उत्कृष्टा स्थित्युदीरणा ॥३१॥

उत्कृष्टाद्धाछेदः स्वामित्वं चाभिहितम्। जघन्यमाह—

**भयकुच्छआयवुज्जोयसव्वघाईकसायनिद्दाणं। अतिहीणसंतबंधो जहण्णउद्दीरगो अतसो ॥३२॥**

(स्वो०)—भयजुगुप्सातपोद्योतसर्वघातिसञ्ज्वलनवर्जकषायनिद्रापञ्चकानामेकविंशतिप्रकृतीनामतिजघन्यसत्कर्म्मा जघन्यबन्धस्य बन्धकोऽत्रसः–स्थावर इत्यर्थः, जघन्योदीरणां करोति, यतो ध्रुवबन्धित्वान्निद्राकषायाणामन्यत्र न जघन्यतरा स्थितिरुपलभ्यते, आतपोद्योतयोरपि प्रतिपक्षाभावात्। बन्धावलिकाहीना जघन्यस्थितिरुदीरणायोग्या भवत्यासां प्रकृतीनामिति गाथार्थः ॥३२॥ 

(मलय०)—तदेवमुक्तमुत्कृष्टस्थित्युदीरणास्वामित्वं, सम्प्रतिजघन्यस्थित्युदीरणास्वामित्वमाह—अत्रसः–त्रसविपक्षः स्थावरः, भयजुगुप्साऽऽतपोद्योतानां, सर्वघातिनां च कषायाणां आद्यद्वादशानां, निद्रापञ्चकस्य च, सर्वसंख्यया एकविंशतिप्रकृतीनामतिजघन्य-

स्थितिसत्कर्मा अतिजघन्याभिनवकर्मबन्धश्च सत्कर्मापेक्षया समं मनाक् अधिकं वा अभिनवकर्म बध्नन्नित्यर्थः, जघन्योदीरको भवति, बन्धावलिकायामतीतायां जघन्यां स्थितिमुदीरयतीत्यर्थः। इहातपोद्योतवर्जानामेकोनविंशतिप्रकृतीनां ध्रुवबन्धित्वात्, आतपोद्योतयोस्तु प्रतिपक्षाभावात् अन्यत्र जघन्यतरा स्थितिर्न प्राप्यते इति स्थावर एवोक्तस्वरूप आसां प्रकृतीनां जघन्यस्थित्युदीरणास्वामी ॥३२॥

एगिंदियजोगाणं पडिवक्खा बंधिउण तव्वेई । बंधालिचरमसमए तदागए सेसजाईणं ॥३३॥

(चू०)—एकेन्द्रियस्य सदा योग्या उदयं प्रति एकेन्द्रिययोग्यास्तासामेकेन्द्रिययोग्यानामेकेन्द्रियजातिस्थावरसूक्ष्मसाधारणानां जघन्यस्थितिकश्च जीवास्तासां प्रतिपक्षा द्वित्रिचतुष्पञ्चेन्द्रियजातयः त्रसबादरप्रत्येकप्रकृतयस्ता बद्ध्वा वा एवमेकेन्द्रियजात्यादीर्बध्नन्ति, बन्धावलिकान्तसमये तद्वेदिनः तदुदयवन्तो जीवा जघन्योदीरणास्वामिनो भवन्ति। 'सेसजाईणं' ति एकेन्द्रियो जघन्यस्थिति-द्वीन्द्रियेषूपपन्नः प्रथमसमयादारभ्यैकत्रिचतुष्पञ्चेन्द्रियजातीः क्रमेण बध्नाति, द्वीन्द्रियस्थितेरनेन क्रमेण चत्वार्यन्तर्मुहूर्तान्यनुभवति, पश्चादनेन द्वीन्द्रियजातिं बध्नाति, ततो बन्धावलिकान्तसमये जघन्या द्वीन्द्रियजातेरुदीरणा, एवं शेषजातीनामपीति गाथार्थः ॥३३॥

(मलय०)—एकेन्द्रियाणामेवोदीरणां प्रति या योग्याः प्रकृतयस्ता एकेन्द्रिययोग्याः–एकेन्द्रियजातिस्थावरसूक्ष्मसाधारणनामानः, तासामेकेन्द्रियो जघन्यस्थितिसत्कर्मा प्रतिपक्षाः प्रकृतीर्बद्ध्वा तत्र एकेन्द्रियजातेर्द्वित्रिचतुष्पञ्चेन्द्रियजातीः, स्थावरसूक्ष्मसाधारणानां त्रसबादरप्रत्येकनामानि, ततस्ता एवैकेन्द्रियजात्यादिप्रकृतीर्बध्नन् तद्वेदी एकेन्द्रियजात्यादिप्रकृतिवेदी बन्धावलिकाचरमसमये जघन्यां स्थित्युदीरणां करोति। इयमत्र भावना–एकेन्द्रियः सर्वजघन्यस्थितिसत्कर्मा द्वीन्द्रियादिजातीः सर्वा अपि परिपाट्या बध्नाति, ततस्तद्-बन्धानन्तरमेकेन्द्रियजातिं बद्धुमारभते, ततो बन्धावलिकायाश्चरमसमये तस्या एकेन्द्रियजातेर्जघन्यां स्थित्युदीरणां करोति। इह बन्धावलि-

काया अनन्तरसमये बन्धावलिकाप्रथमसमये बद्धा अपि लता उदीरणामायाति, ततो जघन्या स्थित्युदीरणा न प्राप्यते, इति बन्धावलिकायाश्चरमसमये इत्युक्तम्। यावता कालेन प्रतिपक्षभूताः प्रकृतीर्बध्नाति तावता कालेन न्यूना एकेन्द्रियजातेः स्थितिर्भवति, ततः स्तोकतरा प्राप्यते, इति प्रतिपक्षभूतप्रकृतिबन्धोपादानम्। एवं स्थावरसूक्ष्मसाधारणनामापि भावना कर्त्तव्या, केवलमेतेषां प्रतिपक्षभूताः प्रकृतयस्त्रसबादरप्रत्येकनामानो बन्धयितव्याः। 'तदागए सेसजाइणं'ति–तस्मादेकेन्द्रियभवादागतः शेषजातीनां जघन्यां स्थित्युदीरणां करोति। अत्रापीयं भावना–एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य द्वीन्द्रियेषु मध्ये समुत्पन्नः, ततः पूर्वबद्धां द्वीन्द्रियजातिमनुभवितुमारभते, अनुभवप्रथमसमयादारभ्य एकेन्द्रियजातिं दीर्घकालं बद्धुं लग्नः, ततस्तत्रैव त्रीन्द्रियजातिं चतुरिन्द्रियजातिं पञ्चेन्द्रियजातिं च क्रमेण बध्नाति। एवं च महान्ति चत्वार्यन्तर्मुहूर्त्तान्यतिक्रान्तानि। ततो द्वीन्द्रियजातिं बद्धुमारभते। ततो बन्धावलिकायाश्चरमसमये तस्या द्वीन्द्रियजातेरेकेन्द्रियभवप्रायोग्यस्थितिसत्कर्मापेक्षया अन्तर्मुहूर्त्तचतुष्टयबन्धावलिकाया न्यूनाया जघन्यां स्थित्युदीरणां करोति। बन्धावलिकाचरमसमयग्रहणे च कारणं प्रागेवोक्तम्। एवं त्रीन्द्रियचतुरिन्द्रियजात्योरपि भावना कार्या ॥ ३३ ॥

**दुभगाइणीयतिरिदुगअसारसंघयणनोकसायाणं। मणुपुव्वऽपज्जतइयस्स सन्निमेवं इगागयगे ॥३४॥**

(स्वो०)—दुर्भगानादेयायशःकीर्त्तिनीचैर्गोत्रतिर्यग्गतितिर्यगानुपूर्वीप्रथमवर्ज्जसंहनननोकषायाणां मनुजानुपूर्व्यपर्याप्तक(योः) 'तइय' त्ति–सातासातयोः संज्ञिनि एकेन्द्रियेभ्य आगते एवमेव जघन्योदीरणा भवति। कथं? एकेन्द्रियो दुर्भगादीनां सर्वजघन्यस्थितिः संज्ञिषूपपन्नः, तद्वेदिनः तत्प्रतिपक्षाणि संज्ञित्वाद्दीर्घबन्धकाद्धां बद्धा तासामेव बन्धावलिकान्तसमये जघन्योदीरणा, यतो बन्धकाद्धा सावलिका जघन्यस्थितेरप्यतिक्रान्ता। अभिप्रेतसंहननस्यैवं पञ्च बन्धकाद्धाः सावलिका अपहरन्ति। हास्यरति(त्योः) अरतिशोकयोः

सातासातयोः दुर्भगवद्भावना । शेषनोकषाया वेदानां पृथग् भणनात् न गृह्यन्ते । अपर्याप्तमपर्याप्ते संज्ञिनि वक्तव्यम् । तिर्यग्गतेः वाय्वग्निकायिकेभ्यो बादरेभ्य उद्वृत्यातिशुभत्वाल्लघुस्थितिर्संज्ञितिर्यक्षु गतः, तत्समये मनुष्यगतिं बध्नाति दीर्घकालं भूयस्तां अनुभूयमानां बध्नाति, बन्धावलिकान्त्यसमये जघन्योदीरणा, आनुपूर्व्यास्तद्भवान्तरतृतीयसमये जघन्योदीरणां करोतीति गाथार्थः ॥२४॥

(मलय०)—दुर्भगादीनां–दुर्भगानादेयायशःकीर्तीनां नीचैर्गोत्रस्य तिर्यग्द्विकस्य–तिर्यग्गतितिर्यगानुपूर्वीरूपस्य असारसंहनानां प्रथमवर्जानां पञ्चानां संहननानां, नोकषायाणां–हास्यरत्यरतिशोकरूपाणां, वेदानां वक्ष्यमाणत्वात्, भयजुगुप्सयोस्तूक्तत्वादिह नोकषायशब्देन हास्यरत्यरतिशोका एव गृह्यन्ते, तथा मनुष्यानुपूर्व्या अपर्याप्तकनाम्नस्तृतीयस्य च वेदनीयस्य सातासातरूपस्य, सर्वसंख्यया एकोनविंशतिप्रकृतीनां सञ्ज्ञिनि पञ्चेन्द्रिये 'इगागयगे'त्ति–एकेन्द्रियभवादागते जघन्या स्थित्युदीरणा भवति । भावना त्वियं–एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्वृत्य पर्याप्तसञ्ज्ञिपञ्चेन्द्रियेषु मध्ये समुत्पन्नः, उत्पत्तिप्रथमसमयादारभ्य च दुर्भगनामकर्मानुभवन् सुभगनामकर्म बृहत्तरमन्तर्मुहूर्तं कालं यावद्बध्नाति, ततः पुनरपि दुर्भगनाम बद्धुमारभते । ततो बन्धावलिकायाश्चरमसमये पूर्वबद्धस्य दुर्भगनामकर्मणो जघन्यां स्थित्युदीरणां करोति । एवमनादेयायशःकीर्तिनीचैर्गोत्राणां बन्धो वाच्यः, नवरमिह प्रतिपक्षप्रकृतीनां यथासंख्यमादेययशःकीर्त्युच्चैर्गोत्राणां बन्धो वाच्यः । तथा तेजस्कायिको वायुकायिको वा बादरः सर्वजघन्यस्थितिसत्कर्मा पर्याप्तसञ्ज्ञितिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पन्नः, ततो बृहत्तरमन्तर्मुहूर्तं कालं यावन्मनुजगतिं बध्नाति, तद्बन्धानन्तरं च तिर्यग्गतिं बद्धुमारभते, ततो बन्धावलिकायाश्चरमसमये तस्यास्तिर्यग्गतेर्जघन्यां स्थित्युदीरणां करोति । एवं तिर्यगानुपूर्व्या अपि वक्तव्यम्, नवरमपान्तरालगतौ तृतीये समये जघन्यायाः स्थितेरुदीरणा वाच्या । तथा संहननपञ्चकस्य मध्ये वेद्यमानं संहननं मुक्त्वा शेषसंहननानां

पञ्चानामपि प्रत्येकं बन्धकालोऽतिदीर्घो वक्तव्यः, ततो वेद्यमानसंहननस्य बन्धो, बन्धावलिकाचरमसमये च जघन्या स्थित्युदीरणा । हास्यरत्योः सातबद्धावना, अरतिशोकयोरसातबद्धेदितव्या । तथा एकेन्द्रियः सर्वजघन्यमनुष्यानुपूर्वीस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य मनुष्येषु मध्ये उत्पद्यमानोऽपान्तरालगतौ वर्त्तमानो मनुष्यानुपूर्व्यास्तृतीयसमये जघन्यां स्थित्युदीरणां करोति । तथा एकेन्द्रियो जघन्यापर्याप्तकनामस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्याऽपर्याप्तसंज्ञिपञ्चेन्द्रियेषु मध्ये समुत्पन्नः, उत्पत्तिप्रथमसमयादारभ्य च पर्याप्तकनामबृहत्तरमन्तर्मुहूर्त्तं कालं यावद्बध्नाति, ततोऽपर्याप्तकनाम बद्धुमारभते, ततो बन्धावलिकाचरमसमये पूर्वबद्धस्याऽपर्याप्तकनाम्नो जघन्यां स्थित्युदीरणां करोति । तथा एकेन्द्रियो जघन्यसातवेदनीयस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य पर्याप्तकसंज्ञिपञ्चेन्द्रियेषु मध्ये समुत्पन्न उत्पत्तिप्रथमसमयादारभ्य च सातवेदनीयमनुभवन् असातवेदनीयं बृहत्तरमन्तर्मुहूर्त्तं कालं यावद्बध्नाति, ततः पुनरपि सातं बध्धुमारभते, ततो बन्धावलिकायाश्चरमसमये पूर्वबद्धस्य सातवेदनीयस्य जघन्यस्थित्युदीरणास्वामी । एवमसातवेदनीयस्यापि द्रष्टव्यं, केवलं सातवेदनीयस्थाने असातवेदनीयमुच्चारणीयं, अमातवेदनीयस्थाने सातवेदनीयमिति ॥३४॥

**अमणागयस्स चिरठिइअंते देवस्स नारयस्सा वा । तदुवंगगईणं आणुपुव्विणं तइयसमयंमि ॥३५॥**

(स्वो०)—देवद्विकनारकद्विकवैक्रियाङ्गोपाङ्गानां 'अमणे' त्ति–असंज्ञी जघन्यस्थितिं बद्ध्वा बन्धोपरमकालं दीर्घं स्थित्वा नरके देवलोके वा समुत्पन्नः, तद्भवमनुभूयान्तसमये त्रयाणां जघन्योदीरणां करोति, आनुपूर्व्योर्विग्रहगतौ तृतीयसमये स एवेति गाथार्थः ॥

(मलय०)—अमनस्कादसञ्ज्ञिपञ्चेन्द्रियादुद्धृत्य देवेषु नारकेषु वा मध्ये समागतस्य चिरस्थित्यन्ते स्वस्वदीर्घायुःस्थित्यन्ते वैक्रियाङ्गोपाङ्गदेवगतिनरकगतिरूपाणां तिसृणां प्रकृतीनां जघन्या स्थित्युदीरणा, देवनारकानुपूर्व्योश्च तृतीये समये । एतदुक्तं भवति–

असञ्ज्ञिपञ्चेन्द्रियः सर्वजघन्यां सुरगत्यादिस्थितिं बद्ध्वा बन्धानन्तरं च दीर्घकालं तत्रैव स्थित्वा देवो नारको वा पल्योपमासङ्ख्येयभागममाणायुर्जातः, ततस्तस्य देवस्य नारकस्य वा स्वस्वायुश्चरमसमये वर्तमानस्य यथायोग देवगतिनरकगतिवैक्रियाङ्गोपाङ्गनाम्नां च जघन्या स्थित्युदीरणा। तथा स एवासञ्ज्ञिपञ्चेन्द्रियो देवस्य नारकस्य वा भवस्यापान्तरालगतौ वर्तमानो यथासंख्य देवानुपूर्व्यां नारकानुपूर्व्यांश्च तृतीयसमये जघन्यां स्थित्युदीरणां करोति ॥३५॥

वेयतिग दिट्ठिदुग सजलणाणं च पढमट्ठिईए । समयाहिगालियाए सेसाए उवसमे वि दुसु ॥३६॥

(स्वो०)—त्रयाणां वेदानां–स्त्रीपुंनपुंसकाख्यानां, दृष्टिद्विकस्य–मिथ्यात्वसम्यक्त्वरूपस्य चान्तरकरणे कृते प्रथमस्थितेर्यदा समयाधिकावलिका शेषा तदा जघन्योदीरणा। 'उवसमेवि दुसु' त्ति–सम्यक्त्वसञ्ज्वलनलोभयोः क्षये उपशमेऽपि जघन्योदीरणा भवतीति गाथार्थः ॥३६॥

(मलय०)—इहान्तरकरणे कृते सति अधस्तनी स्थितिः प्रथमा स्थितिरुच्यते, उपरितनी तु द्वितीया। तत्र प्रथमस्थितेः समयाधिकायामावलिकायां शेषायां वेदत्रिकस्य–स्त्रीपुंनपुंसकाख्यस्य, दृष्टिद्विकस्य–मिथ्यात्वसम्यक्त्वरूपस्य, ग्रन्थे तु प्रथमा प्राकृतत्वात्, सञ्ज्वलनानां चतुर्णां जघन्या स्थित्युदीरणा भवति। नवरं द्वयोः सम्यक्त्वसञ्ज्वलनलोभयोरुपशमेऽपि, अपिशब्दात्क्षयेऽपि, जघन्या स्थित्युदीरणा वेदितव्या, शेषाणां तु क्षपकश्रेण्यामेव ॥३६॥

एगिंदागयअइहीणसत्तसण्णीसु मीसउदयंते । पवणोसठिइजहण्णगसमसत्तविउव्वियस्सते ॥३७॥

(स्वो०)—एकेन्द्रियेभ्य आगतस्य जघन्यसत्कर्मणः पल्योपमासंख्येयभागोनोदधिमात्रस्येति, संज्ञिषु सम्यग्मिथ्यात्वानुभवान्तसमये जघन्योदीरणां सम्यग्मिथ्यात्वस्य। पवनो–वायुकायिकः स्वस्थितेः–आत्मस्थितेः पल्योपमांमख्येयभागमात्रोनौ सागरस्य द्वौ सप्तभागौ तत्समसत्कर्म्मवैक्रियपट्कस्य तदुदयान्तसमये जघन्योदीरणां करोतीति गाथार्थः ॥ ३७ ॥

(मलय०)—अतिहीनसत्ताकः—पल्योपमासंख्येयभागहीनैकसागरोपममात्रप्रमाणसम्यग्मिथ्यात्वसत्कर्म्मा एकेन्द्रियभवादुद्धृत्य सञ्ज्ञिपञ्चेन्द्रियेषु मध्ये समागतः यतः समयादारभ्यान्तर्मुहूर्त्तानन्तरं सम्यग्मिथ्यात्वस्योदीरणाऽपगमिष्यति तस्मिन् समये सम्यग्मिथ्यात्वं प्रतिपन्नोऽन्तर्मुहूर्त्तचरमसमये सम्यग्मिथ्यात्वस्य जघन्यां स्थित्युदीरणां करोति। एकेन्द्रियसत्कजघन्यस्थितिसत्कर्मणश्च सकाशादधो वर्त्तमानं सम्यग्मिथ्यात्वमुदीरणायोग्यं न भवति, तावन्मात्रस्थितिके तस्मिन्नेवावश्यं मिथ्यात्वोदयसंभवतस्तदुद्वलनसंभवात्। तथा पवनो–वायुकायिकः स्वस्थितेःआत्मस्थितेः प्रमाणं यज्जघन्यं पल्योपमासंख्येयभागमात्रहीनौ द्वौ सागरोपमसप्तभागौ, तत्समवैक्रियषट्कसत्कर्मा वैक्रियस्य वैक्रियषट्कस्य वैक्रियशरीरवैक्रियसंघातवैक्रियबन्धनचतुष्टयरूपस्यान्ते तदुदयान्तसमये जघन्यां स्थित्युदीरणां करोति। इयमत्र भावना-बादरवायुकायिकः पल्योपमासंख्येयभागहीनसागरोपमद्विसप्तभागप्रमाणवैक्रियषट्कजघन्यस्थितिसत्कर्मा बहुशो वैक्रियमारभ्य चरमे वैक्रियारम्भे चरमसमये वर्त्तमानो वैक्रियषट्कस्य जघन्यस्थित्युदीरणास्वामी ॥३७॥

चउरुवसामित्तुमोहं मिच्छं खविउं सुरोत्तमो होउं। उक्कोससंजमंते जहण्णगाहारगदुगाणं ॥३८॥

(स्वो०)—चतस्रो वारा मोहनीयमुपशमय्य मिथ्यात्वमित्येकस्यासम्भवात् सप्तकं क्षपयित्वा पुनः सर्वार्थदेवो भूत्वा पुनरुत्कृष्टसंयमान्ते देशोनपूर्वकोटिसंयमं कृत्वा आहारशरीराङ्गोपाङ्गयोरनुभवान्तसमये स जघन्योदीरणा स्थितिक्षयाल्लघुर्जायत इति गाथार्थः॥३८॥

(मलय०)—संसारं परिभ्रमन् चतुरो वारान् मोहनीयमुपशमय्य, ततो मिथ्यात्वं, उपलक्षणमेतत्, सम्यक्त्वं सम्यग्मिथ्यात्वं च क्षपयित्वा तदनन्तरं गुरुलघुः—सर्वार्धद्धियो भूत्वा मनुष्येषु मध्ये समुत्पन्नः, ततो वर्षाष्टकानन्तरमुत्कृष्ट काल देशोनपूर्वकोटिप्रमाणं संयमं परिपाल्य अन्ते कृताहारकशरीरस्य आहारकमसत्कानुभवान्तसमये 'आहारगद्गाण'ति—आहारकद्विकस्य, बहुवचनादाहारकसप्तकस्य, जघन्या स्थित्युदीरणा । आहारकसप्तकस्थितिसत्कर्म हि देशोनपूर्वकोटिप्रमाणेन कालेन प्रभूतं क्षयमुपयाति । ततो देशोनपूर्वकोटीपर्यन्ते एव जघन्या स्थित्युदीरणा लभ्यते इत्येतदुपादानम् ॥३८॥

खीणंताण खीणे मिच्छत्तकमेण चोद्दसण्ह पि । सेसाण सजोगते भिण्णमुहुत्तट्ठिईगाणं ॥३९॥

॥ ठिईउदीरणा सम्मत्ता ॥

(स्वो०)—क्षीणान्तानां क्षीणे-क्षीणकषाये चतुर्दशानां, मिथ्यात्वक्रमेण प्रथमस्थितेः समयाधिकावलिकायां जघन्योदीरणा । शेषाणां प्रकृतीनां सयोग्यन्त्यसमये भिन्नमुहूर्तस्थितिकानां जघन्योदीरणा भवति । कास्ता: शेषाः ? मनुजगतिः, पञ्चेन्द्रियजातिः, प्रथमसंहननं, विहायोगतियुग्मम्, उपघात, पराघात, संस्थानषट्कं, उच्छ्वास, प्रत्यादिचतुष्क, सुस्वरादिचतुष्कं, दुःस्वरं, औदारिकसप्तकं, उच्चैर्गोत्रं, तीर्थकरम्, एता द्वात्रिंशत्, नामध्रुवोदयास्त्रयस्त्रिंशत्, एवं पञ्चषष्टीनामपि सयोग्यन्त्यसमये जघन्योदीरणा भवतीति गाथार्थः ॥

(मलय०)—क्षीणान्तानां-क्षीणकषायान्तानां चतुर्दशानामपि प्रकृतीनां ज्ञानावरणपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणान्तरायपञ्चकरूपाणां क्षीणे-क्षीणकषाये मिथ्यात्वक्रमेण जघन्यस्थित्युदीरणा, यथा मिथ्यात्वस्य उदययोग्यायां समयाधिकावलिकाशेषायां स्थितौ जघन्या स्थित्युदीरणा प्रागुक्ता, तथा क्षीणकषायान्तानामपि चतुर्दशप्रकृतीनां समयाधिकावलिकाशेषायां स्थितौ जघन्या

स्थित्युदीरणा द्रष्टव्येतिभावः। तथा शेषाणां–मनुजगतिपञ्चेन्द्रियजातिप्रथमसंहननौदारिकसप्तकसंस्थानषट्कोपघातपराघातोच्छ्वासप्रशस्ताप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकसुभगसुस्वरदुःस्वरादेययशःकीर्तितीर्थकरोच्चैर्गोत्रलक्षणानां द्वात्रिंशत्प्रकृतीनां पूर्वोक्तानां च नामध्रुवोदीरणानां त्रयस्त्रिंशत्संख्यानां सर्वसंख्यया पञ्चषष्टिसंख्याकानां सयोगिकेवलिचरमसमये भिन्नमुहूर्त्तस्थितिकाला जघन्या स्थित्युदीरणा। आयुषामप्युदीरणान्ते जघन्या स्थित्युदीरणा वेदितव्या ॥३९॥

उक्ता स्थित्युदीरणा, अनुभागोदीरणामाह—

**अणुभागुदीरणाए घाईसण्णा य ठाणसण्णा य । सुहया विवागहेऊ जोत्थ विसेसो तयं वोच्छं ॥४०॥**

(स्वो)—अनुभागोदीरणायां घातिनां संज्ञा त्रिधा–सर्वघातिसंज्ञा, देशघातिसंज्ञा, अघातिसंज्ञा चेति। स्थानसंज्ञा चतुर्विधा–रसस्य चतुःस्थानिकत्रिस्थानिकद्विस्थानिकैकस्थानिकभेदात्। 'सुहय' त्ति–शुभसंज्ञा अशुभसंज्ञा। विपाकसंज्ञा चितुर्विधा–पुद्गलभवक्षेत्रजीवभेदात्। हेतवो द्रव्यक्षेत्रकालभवभावभेदात् पञ्चधा उदयमाश्रित्य, उदीरणायामपि त एव। योऽत्र विशेषः तकं वक्ष्येऽहमिति गाथार्थः ॥ ४० ॥

(मलय०)—तदेवमुक्ता स्थित्युदीरणा। सम्प्रत्यनुभागोदीरणावसरः, तत्र चैतेऽर्थाधिकाराः, तद्यथा–संज्ञाप्ररूपणा, शुभाशुभप्ररूपणा, विपाकप्ररूपणा, हेतुप्ररूपणा, साद्यादिप्ररूपणा, स्वामित्वप्ररूपणा च। तत्र संज्ञाशुभाशुभविपाकहेतुसूचनार्थमाह–इह संज्ञा द्विधा, घातिसंज्ञा, स्थानसंज्ञा च। तत्र घातिसंज्ञा त्रिधा, तद्यथा–सर्वघातिसंज्ञा, देशघातिसंज्ञा, अघातिसंज्ञा च। स्थानसंज्ञा चतुष्प्रकारा, तद्यथा–एकस्थानको द्विस्थानकस्त्रिस्थानकश्चतुःस्थानकश्च। 'सुभय' त्ति, शुभकाः, उपलक्षणमेतत्, अशुभाश्च। तत्र मतिज्ञानावरणीयाद-

योऽशुभाः, सातवेदनीयादयस्तु शुभाः । विपाकश्चतुर्विधः, तद्यथा–पुद्गलविपाकः, क्षेत्रविपाको, भवविपाको, जीवविपाकश्च । हेतवो द्रव्यक्षेत्रकालभवभावभेदात्पञ्चधा । एते च घातिसंज्ञाः स्थानसंज्ञाः शुभाशुभताविपाकहेतवः यथा प्राक् बन्धोदयावधीकृत्य प्रतिपादितास्तथा अस्यामप्यनुभागोदीरणायां द्रष्टव्याः, केवलं योऽत्र विशेषो–नानात्वं तमहं वक्ष्ये ॥४०॥

पुरिसित्थिविग्घअचक्खुचक्खुसम्माण इगि दुठाणो वा । मणपज्जवपुंसाणं वच्चासो सेस बंधसमा ॥४१॥

(चू०)—पुंवेदान्तरायपञ्चकचक्षुरचक्षुर्दर्शनावरणप्रकृतीनां चत्वार्यपि रसस्थानान्यभिहितानि बन्धं प्रति उदीरणायां त्वेकस्थानिको द्विस्थानिको वा भवति, न त्रिचतुःस्थानिको । स्त्रीवेदस्य चतुस्त्रिद्विस्थानिको बन्धेऽभिहितः, उदीरणायां तु द्विस्थानिक एकस्थानिको वेति । सम्यक्त्वस्य न किञ्चिदुक्तम्, तस्यापि द्विस्थानिक एकस्थानिको वा देशघाती चेति । मनःपर्यायज्ञाननपुंसकयोर्व्यत्यासो बन्धोक्तस्य, चतुस्त्रिद्विस्थानिको बन्धो यो नपुंसकस्योक्तः स मनोज्ञानावरणस्योदीरणायां भवति, चतुस्त्रिद्व्येकस्थानिको यो मनःपर्यायज्ञानस्य बन्धे उक्तः स नपुंसकस्योदीरणायामिति । 'शेषा' इति–देशघातिप्रकृतीनां, बन्धपरस्थानसंज्ञा, यथाबन्धे तथोदीरणायामपीति गाथार्थः ॥ ४१ ॥

(मलय०)—तत्र प्रथमतः संज्ञाविशेषमुपदर्शयन्नाह—पुरुषवेदस्त्रीवेदपञ्चप्रकारान्तरायाचक्षुश्चक्षुर्दर्शनावरणसम्यक्त्वानामनुभागोदीरणा एकस्थानके द्विस्थानके वा वेदितव्या। इयमत्र भावना–पुरुषवेदान्तरायपञ्चकाचक्षुर्दर्शनावरणचक्षुर्दर्शनावरणानां बन्धमधिकृत्य चत्वार्यपि रसस्थानानि प्रागुक्तानि, तद्यथा–एकस्थानको द्विस्थानकस्त्रिस्थानकश्चतुःस्थानकश्च, अनुभागोदीरणा त्वेषां जघन्या एकस्थानके द्विस्थानके वा कस्मिंश्चित्, उत्कृष्टा तु सर्वोत्कृष्टे द्विस्थानके, न तु त्रिस्थानके चतुःस्थानके वा । स्त्रीवेदस्य बन्धमधिकृत्य त्रिप्रकारो रसः,

तद्यथा—द्विस्थानकस्त्रिस्थानकश्चतुःस्थानकश्च। अनुभागोदीरणा तूत्कृष्टा द्विस्थानके, अनुत्कृष्टा त्वेकस्थानके द्विस्थानके वा। सम्यक्त्वस्य पुनर्न किमपि प्रागुक्तं, बन्धाभावात्, उदीरणा तु प्रवर्त्तते, तत इह तस्य विशेष उच्यते—सम्यक्त्वस्य उत्कृष्टानुभागोदीरणा द्विस्थानके, जघन्या त्वेकस्थानके, देशघाती च सम्यक्त्वस्य एकस्थानको द्विस्थानको वा रसः। तथा मनःपर्यायज्ञानावरणनपुंसकवेदयोर्बन्धोक्तस्य व्यत्यासो—विपर्यासो वेदितव्यः। यतिविधो नपुंसकवेदस्य बन्धमधिकृत्य रस उक्तस्ततिविधो मनःपर्यवज्ञानावरणस्योदीरणायामवसेयः, यतिविधश्च मनःपर्यवज्ञानावरणस्य बन्धमधिकृत्य रस उक्तः ततिविधो नपुंसकवेदस्योदीरणायामित्यर्थः। तद्यथा—मनःपर्यायज्ञानावरणस्य बन्धमधिकृत्य चतुष्प्रकारस्तद्यथा—एकस्थानको द्विस्थानकस्त्रिस्थानकश्चतुःस्थानकश्च, उदीरणां तूत्कृष्टामधिकृत्य चतुःस्थानको रसः, अनुत्कृष्टां त्वधिकृत्य चतुःस्थानकस्त्रिस्थानको द्विस्थानकश्च। नपुंसकवेदस्य बन्धमधिकृत्य रसस्त्रिप्रकारः, तद्यथा—चतुःस्थानकस्त्रिस्थानको द्विस्थानकश्च, उदीरणां तूत्कृष्टामधिकृत्य चतुःस्थानकः, अनुत्कृष्टां त्वधिकृत्य चतुःस्थानकस्त्रिस्थानको द्विस्थानक एकस्थानकश्च। ननु बन्धाभावे कथमुदीरणायामेकस्थानको रसो नपुंसकवेदस्य प्राप्यते? उच्यते-क्षपणकाले रसघातं कुर्वतस्तस्यैकस्थानकस्यापि रसस्य भावात्। शेषाणां तु देशघातिप्रकृतीनां बन्धसमकं, यथा बन्धे चतुष्प्रकारो रसस्तथाऽनुभागोदीरणायामपि वेदितव्य इत्यर्थः ॥६१॥

**देसोवघाइयाणं उदए देसो व होइ सव्वो य। देसो व घाइओ च्चिय अचक्खुसम्मत्तविग्घाणं ॥४२॥**

(स्वो०)—देशोपघातिप्रकृतीनां पूर्वोक्तानां घातिसंज्ञां प्रतीत्य देशघातिरसस्य सर्वघातिरसस्य चोदीरणा भवति। किं सर्वासां? नेत्याह—देशघातिन (देशघाती) एवाचक्षुर्दर्शनावरणसम्यक्त्वान्तरायाणां उदीरणा भवतीति गाथार्थः ॥४२॥

(मलय०)—सम्प्रति देशोपघातिनीनामेव घातित्वमधिकृत्य विशेषमुपदर्शयन्नाह—देशोपघातिनीनां ज्ञानावरणचतुष्टयचक्षुरवधिदर्शनावरणनवनोकषायसंज्वलनचतुष्टयरूपाणामुदये—उदीरणोदयरूपे, उदीरणायामित्यर्थः, देशो वा देशोपघाती वा, सर्वो वा सर्वोपघाती वा रसो वेदितव्यः। अचक्षुर्दर्शनावरणसम्यक्त्वपञ्चविधान्तरायाणां पुनरुदीरणायां देशोपघात्येव द्रष्टव्यः, न सर्वोपघाती ॥४२॥

घाय ठाणं च पडुच्च सव्वघाईण होइ जह बंधे। अग्घाईण ठाण पडुच्च भणिमो विसेसोत्थ ॥४३॥

(स्वो०)—घातं वा स्थानं वा प्रतीत्य सर्वघातिनीनां पूर्वोक्तविंशतिप्रकृतीनां यथा बन्धेऽभिहितः तथा भवतीति। अघातिप्रकृतीनां एकादशोत्तरशतमानानां रसस्य स्थानं प्रतीत्य यो विशेषः, तमुदीरणायां भणामीति गाथार्थः ॥४३॥

(मलय०)—सर्वघातिनीनां—केवलज्ञानावरणकेवलदर्शनावरणद्वादशकषायमिथ्यात्वनिद्रापञ्चकरूपाणां घातिसंज्ञां स्थानसंज्ञां च प्रतीत्य यथा बन्धे रसो भवति तथोदीरणायामपि वेदितव्यः। किमुक्तं भवति ? यथामूषां प्रकृतीनां बन्धे त्रिप्रकारो रस उक्तः, तद्यथा—चतुःस्थानकस्त्रिस्थानको द्विस्थानकश्च, यथा सर्वघाती तथोदीरणायामपि द्रष्टव्यः। केवलमुत्कृष्टोदीरणायां चतुःस्थानकः, अनुत्कृष्टोदीरणायां तु त्रिविधोऽपि। तथा अघातिनीनां प्रकृतीनामेकादशोत्तरशतसंख्यानामत्रोदीरणायां स्थानमधिकृत्य यो विशेषस्तं भणामः ॥

थावरचउ आयवउरलसत्ततिरिविगलमणुयतियगाणं। नग्गोहाइचउण्हं एगिंदिउसभाइछण्हं पि ॥४४॥

तिरिमणुजोगाण मीसगुरुयखरनरयदेवपुव्वीणं। दुट्ठाणिओ च्चिय रसो उदए उदीरणाए य ॥४५॥

(स्वो०)—स्थावरादिचतस्रः आतपौदारिकसप्तकतिर्यक्त्रिकविकलजातित्रिकमनुष्यत्रिकाणां मध्यमसंस्थानचतुष्काणां एकेन्द्रिय-

जातिवज्रर्षभनाराचादिसंहननषट्कानामपीत्यस्याः गाथायाः उत्तरगाथया सह सम्बन्धः। एता द्वात्रिंशत्प्रकृतयः उदयं प्रति तिर्यग्मनुष्ययोरेव योग्याः, सम्यग्मिथ्यात्वगुरुखरनामदेवनारकानुपूर्वीणामित्यासां सप्तत्रिंशत्प्रकृतीनां द्विस्थानिक एव रसो भवति उदयमुदीरणां वा प्रति, सम्यग्मिथ्यात्वस्य घातिसंज्ञामाश्रित्य सर्वघात्येव (शेषाणां त्वघाती) इति गाथार्थः। उक्तो घातिस्थाने प्रतीत्य विशेषः ॥४४-४५॥

(मलय०)—प्रतिज्ञातमेव निर्वाहयति—स्थावरचतुष्कस्य-स्थावरसूक्ष्मसाधारणापर्याप्तरूपस्य आतपस्यौदारिकसप्तकस्य, तिर्यक्त्रिकस्य-तिर्यग्गतितिर्यगानुपूर्वीतिर्यगायूरूपस्य, विकलत्रिकस्य-द्वित्रिचतुरिन्द्रियजातिरूपस्य, मनुष्यत्रिकस्य-मनुष्यगतिमनुष्यानुपूर्वीमनुष्यायूरूपस्य, तथा न्यग्रोधादीनां-न्यग्रोधसादिवामनकुब्जरूपाणां चतुर्णां संस्थानानां, एकेन्द्रियजातेर्वज्रर्षभनाराचादीनां षण्णां संहननानाम्, एतासां सर्वसंख्यया द्वात्रिंशत्प्रकृतीनामुदयमधिकृत्य तिर्यङ्मनुष्यप्रायोग्याणां, तथा सम्यग्मिथ्यात्वस्य गुरुखरस्पर्शनाम्नोः, देवनारकानुपूर्व्योश्च सर्वसंख्यया सप्तत्रिंशत्प्रकृतीनामुदये उदीरणायां च द्विस्थानक एव रसो वेदितव्यः। नवरं सम्यग्मिथ्यात्वस्य घातिसंज्ञामधिकृत्य सर्वघात्येव, शेषाणां त्वघाती। ॥४४-४५॥

**सम्मत्तमीसगाणं असुभरसो सेसयाण बंधुत्तं। उक्कोसुदीरणासंतयंमि छट्ठाणवडिए वि ॥४६॥**

(स्वो०)—सम्यक्त्वमिश्रयोरशुभ एव रसो घातिप्रकृतित्वादेव। शेषाणां यथाबन्धेऽभिहितः तथोदीरणायामपि द्रष्टव्यः। सम्यक्त्वमिश्रयोरुत्कृष्टानुभागोदीरणा सत्कर्मणि षट्स्थानपतितेऽपि भवति, अनन्तभागहीने असङ्ख्येयभागहीने सङ्ख्येयभागहीने सङ्ख्येयगुणहीने असङ्ख्येयगुणहीने अनन्तगुणहीने। कथं? अनन्तानन्तानां स्पर्धकानां यतोऽनुभागे क्षपितेऽप्यनन्तानि तिष्ठन्त्यतोऽनन्तभागे ॥१३२॥

ऽप्युत्कृष्टा उदीरणा लभ्यत इति । शेषाणां बन्धवत् शुभाशुभतेति गाथार्थः ॥४६॥

(मलय०)—सम्प्रति शुभाशुभरसे विशेषमाह–सम्यक्त्वमिश्रयोर्घातिप्रकृतित्वादशुभ एव रसो वेदितव्यः, अत एव चानुभागमधिकृत्यैते प्रकृती पापे उच्येते, तदुक्तं कर्मप्रकृतौ–'मीसा सम्मत्तमवि य पावेसु'। शेषाणां तु प्रकृतीनां शुभाशुभत्वं बन्धोक्तं–बन्धवद् द्रष्टव्यम् । अथ कीदृशे अनुभागसत्कर्मणि वर्तमान उत्कृष्टामनुभागोदीरणां करोति ? उच्यते—उत्कृष्टानुभागोदीरणा सत्कर्मणि–अनुभागसत्कर्मणि षट्स्थानपतितेऽपि वेदितव्या । एतदुक्तं भवति—यत्सर्वोत्कृष्टमनुभागसत्कर्म तस्मिन्, अनन्तभागहीने वा, असंख्येयभागहीने वा, संख्येयभागहीने वा, संख्येयगुणहीने वा, असंख्येयगुणहीने वा, अनन्तगुणहीने वा उत्कृष्टानुभागोदीरणा प्रवर्तते । यतोऽनन्तानन्तानां स्पर्द्धकानामनुभागे क्षपितेऽप्यनन्तानन्तानि स्पर्द्धकानि पश्चादवतिष्ठन्ते। ततोऽनन्तभागेऽपि शेषे मूलानुभागसत्कर्मापेक्षया अनन्तगुणहीने उत्कृष्टानुभागोदीरणा लभ्यते किं पुनरसंख्येयगुणहीनाद्यनुभागसत्कर्मणीति ? ॥४६॥

विपाकफलमधिकृत्याह—

मोहणियनाणवरण केवलिय दसण विरियविग्घ । संपुन्नजीवदव्वे न पज्जवेसु कुणइ पागं ॥४७॥

(स्वो०)—मोहनीयमष्टाविंशतिभेदभिन्नं, ज्ञानावरणं पञ्चविधं, केवलदर्शनावरणं, वीर्यान्तरायं, एतत्पञ्चत्रिंशत्प्रकृत्यात्मकं कर्म सम्पूर्णजीवद्रव्ये विपाकं करोति, न वीर्यादिजीवपर्यायेषु सर्वेष्वपि । कथं ? यथा मेघैः समन्तरितयोरपि सूर्याचन्द्रमसोः उद्योतादिरुपलभ्यत इति गाथार्थः ॥४७॥

(मलय०)—सम्प्रति विपाकमधिकृत्य विशेषमाह—मोहनीयमष्टाविंशतिभेदभिन्नं, ज्ञानावरणं पञ्चप्रकारं, तथा कैवलिकं दर्शन–

दर्शनावरणं, तथा वीर्यविघ्नं—वीर्यान्तरायमित्येताः पञ्चत्रिंशत्प्रकृतयः संपूर्णजीवद्रव्ये पाकं—विपाकं कुर्वन्ति, न सर्वेषु पर्यायेषु । इद-मुक्तं भवति—एताः पञ्चत्रिंशदपि प्रकृतयो द्रव्यतः सकलमपि जीवद्रव्यमुपघ्नन्ति, पर्यायांस्तु न सर्वानपि, सर्वेषामपि पर्यायाणां हन्तुमशक्यत्वात्, यथा मेघैरतिनिचिततरैरपि सूर्याचन्द्रमसोर्न सर्वथा प्रभावोऽपनेतुं शक्यते । उक्तं च—'सुट्ठु वि मेहसमुदए होइ पहा चन्दसूराणं' इति ॥४७॥

गुरुलहुगाणंतपएसिएसु चक्खुस्स सेसविग्घाणं । जोगेसु गहणधरणे ओहीणं रूविदव्वेसु ॥४८॥

(स्वो०)—चक्षुर्दर्शनस्य ये गुरुलघुद्रव्याणामनन्तप्रदेशिकाः स्कन्धाः तेष्वेव विपाकः । 'सेसविग्घाणं' ति—दानलाभभोगोपभोगानां ग्रहणधारणयोग्यद्रव्येष्वेव विपाकः, अवधिज्ञानदर्शनयोरपि रूपिद्रव्येष्वेव विपाकः अयं विशेषो नान्यत्रेति गाथार्थः ॥४८॥

(मलय०)—चक्षुषश्चक्षुर्दर्शनावरणस्य ये गुरुलघुका अनन्तप्रादेशिकाः स्कन्धास्तेषु विपाकः । तथा शेषाणां विघ्नानाम्—अन्तरायाणां दानालाभभोगोपभोगान्तरायरूपाणां ग्रहणधारणे योग्येषु पुद्गलद्रव्येषु विपाकः, न शेषेषु । तथा अवध्योः—अवधिज्ञानावधिदर्शनावरणयो रूपिद्रव्येष्वेव विपाकः, नाऽरूपिद्रव्येषु । यावत्येव हि विषये चक्षुर्दर्शनादीनि व्याप्रियन्ते तावत्येव विषये चक्षुर्दर्शनावरणादीन्यपि, तत उक्तरूपो नियमो न विरुध्यते ॥४८॥

सेसाणं जह बंधे होइ विवागो उ पच्चओ दुविहो । भवपरिणामकओ वा निग्गुणसगुणाण परिणइओ ॥४९॥

१ "ओहिस्स" इत्ति तु कर्मप्रकृतौ गाथा ४९

(स्वो०)—उक्तसप्तकक्षेपाणां प्रकृतीनां विपाको यथा ग्रन्थेऽभिहितः पुद्गलादिः उदीरणायामपि तथैव। उक्तो विपाकः। प्रत्ययो हेतुः कारणमिति यावत्, स च द्विविध —भवकृतो वा परिणामकृतो वा। परिणामकृतो द्विविध—निर्गुणपरिणामकृतो वा, सद्गुणपरिणामकृतो वा हेतुरुदीरणायां भवतीति गाथार्थः ॥४९॥

(मलय०)—उक्तशेषाणां प्रकृतीनां यथा येषु पुद्गलादिषु विपाकोऽभिहितस्तेष्वेवोदीरणायामपि वेदितव्यः, उक्तो विपाकः। सम्प्रति प्रत्ययः प्ररूपयितव्यः, प्रत्ययो हेतुः कारणमित्येकोऽर्थः। उदीरणायाश्च प्रत्ययः कषायसहितोऽसहितो वा योगसंज्ञो वीर्यविशेषः, स च द्विधा—भवकृतः परिणामकृतश्च। परिणामकृतोऽपि द्विधा—निर्गुणानां, सगुणानां च। परिणतितो निर्गुणपरिणामकृतः सगुणपरिणामकृतश्चेत्यर्थः ॥४९॥

उत्तरतणुपरिणामे अहिय अहोन्ता वि होंति सुसरजुया। मिउलहुपरघाउज्जोयखगइचउरंसपत्तेया ॥५०॥

(स्वो०)—'उत्तरतणु'त्ति। उत्तरवैक्रियमाहारकं वा, तयोः करणपरिणामे, यद्यप्यस्यर्थे न सन्ति (प्राक्) सुस्वरयुक्ता। मृदुलघुपराघातोद्योतशुभविहायोगतिचतुरस्रप्रत्येकप्रकृतयस्तथाप्यऽवश्यमुदीरणामाश्रित्य भवन्ति, नात्र गुणागुणपरिणामयोः प्राधान्यं, शरीरयोरेवेति गाथार्थः ॥५०॥

(मलय०)—सम्प्रति यासां प्रकृतीनामनुभागोदीरणा न गुणागुणपरिणामकृता, नापि भवकृता तां निर्दिदिक्षुराह—सुस्वरयुक्ताः—सुस्वरसहिताः, मृदुलघुपराघातोद्योतशुभविहायोगतिसमचतुरस्रसंस्थानप्रत्येकनामानः प्रकृतयो यद्यपि अधिकमधिकृत्य प्राक् नासीरन्, तथापि उत्तरतनुमुत्तरवैक्रियमाहारकं वा, तयोः परिणामे करणपरिणामे, उत्तरतनौ क्रियमाणायामित्यर्थः, उदीरणामधिकृत्यावश्य

भवति । तथा च सति नात्र गुणागुणयोः प्राधान्यं किं तूत्तरतन्वोरेव, ततो नैतासां प्रकृतीनामुदीरणा वैक्रिये आहारके वा प्रवर्त्तमाना न गुणागुणपरिणामकृता, नापि भवकृता, किन्तु शरीरपरिणामकृता वेदितव्या ॥५०॥

**सुभगाइ उच्चगोयं गुणपरिणामा उ देसमाईणं । अइहीणफड्डगाओ अणंतसो नोकसायाणं ॥५१॥**

(स्वो०)—सुभगादेययशःकीर्त्युच्चैर्गोत्रं देशविरतादीनां गुणकृतपरिणामप्रत्ययं स्वविपक्षे सदप्युच्छाद्योदीरणामेति । अतिजघन्यस्पर्द्धकादनन्तभाग उदीरणामेति नोकषायाणां, तेषां गुणपरिणामादेवेति गाथार्थः ॥५१॥

(मलय०)—'सुभगादि उच्चगोयं' इत्यत्र षष्ठ्यर्थे प्रथमा । ततोऽयमर्थः-सुभगादीनां सुभगादेययशःकीर्त्तीनामुच्चैर्गोत्रस्य च, देशादीनां-देशविरतादीनां देशविरतप्रमत्तसंयतादीनामित्यर्थः, अनुभागोदीरणा गुणपरिणामा-गुणपरिणामप्रत्यया वेदितव्या । तथाहि-सुभगादिप्रतिपक्षभूतदुर्भगादिप्रकृत्युदययुक्तोऽपि यो देशविरतिं सर्वविरतिं वा प्रतिपद्यते तस्यापि देशविरत्यादिगुणप्रभावतः सुभगादीनामेव प्रकृतीनामुदयपूर्विकोदीरणा प्रवर्त्तत इति । तथा स्त्रीवेदादीनां नवानां नोकषायाणामतिजघन्यानुभागस्पर्द्धकादारभ्य क्रमेणानन्ततमो भागो देशविरतानां सर्वविरतानां च उदीरणायोग्यो गुणपरिणामकृतः । कर्मप्रकृतौ त्वेतेषामसंख्येयो भागो उदीरणायोग्यो गुणपरिणामकृत उक्तः ॥५१॥

अनुभागोदीरणायां प्रत्ययप्ररूपणा ।

प्रत्ययः (तस्य भेदस्थापना)
(सकाषायिकोऽकाषायिको वा)

- परिणामकृतः
  - सगुणपरिणामप्रत्ययः
  - निर्गुणपरिणामप्रत्ययः
- भवकृतः

| | | |
|---|---|---|
| वै० ७-तै० ७-वर्ण ५-रस ५ स्निग्ध०-उष्ण-रूक्ष-शीत-स्थिर०-अस्थिर०-शुभ-अशुभ-अगु०-गंध २ (३५) | नृतिरश्चाम् गुणपरिणामप्रत्यया (देवनारकाणाम् भवप्रत्ययापि) | दि० सप्तक गुणसमुत्थलब्धिप्रत्यय। शेषास्त्वन्यथाऽन्यथाविपरिणमय्योदीर्यन्ते इति। |
| समच०-मृदु-लघु-परा०-उद्योत-सुखग०-सुस्वर-प्रत्येकानाम् (८) | तनुपरिणामप्रत्यया (भूखदेहिनाम् भवप्रत्ययापि) | उत्तरदेहे क्रियमाणे यत्नादेवोदीर्यन्त इति। |
| आहारकसप्तकस्य | केवलगुणपरिणामप्रत्यया | गुणोत्थलब्धिप्रत्ययत्वात्। |
| सुभग-आदेय-यश-उच्चैर्गोत्राणाम् (४) | गुणपरिणामप्रत्यया (भवप्रत्ययाऽपि अविरतानाम्) | देशविरतादिभिर्दुर्भगाद्युदय निरुध्योदीर्यन्ते इति। |
| ९ नोकषायाणाम् | प्रथमोऽसंख्येयभागः[1] गुणप० प्र० (शेषो भ० प्र० अविरतानाम्) | देशसर्वविरतानां एतदेवोदीरणायामायान्तीति। |
| जिन-घातिनीनाम् ३८ | नृतिरश्चाम् गुणप० प्र० (देवनारकाणां भ० प्र०) | अन्यथापरिणमय्योदीर्यन्ते इति। |
| शेष ५६ नाम् | भवप्रत्ययाः | गुणप्रत्ययाभावत्वात्। |

विशेष—स्वस्वभवेऽप्यस्योदयवतीप्रकृतयः याः ताः भवप्रत्ययापि। १ पञ्चसंग्रहे " अनन्तमो भाग " इति।

जा जंमि भवे नियमा उदीरए ताउ भवनिमित्ताओ। परिणामपच्चयाओ सेसाओ सइ स सव्वत्थ ॥५२॥

(स्वो०)—याः प्रकृतीर्यस्मिन् भवे नियमात्–निश्चयेनोदीरयति तास्तद्भवप्रत्ययाः, यथा–नरकभवे नरकत्रिकम्, देवभवे देवत्रिकम्, तिर्यक्भवे तिर्यक्त्रिकं, विकलजातित्रिकं, स्थावरं, सूक्ष्मं, साधारणं, आतपं, एकेन्द्रियजातिरिति, मनुष्यभवे मनुष्यत्रिकम्,–एता विंशतिर्भवप्रत्ययाः। परिणामप्रत्ययाः शेषाः, यतः सती–विद्यमानोदीरणा सर्वत्र ध्रुवोदया निर्गुणपरिणामप्रत्यया इति गाथार्थः ॥५२॥

(मलय०)—याः प्रकृतीर्यस्मिन् भवे नियमान्निश्चयेनोदीरयति, तास्तद्भवप्रत्ययाः। किमुक्तं भवति ? तासां तद्भवप्रत्यया उदीरणा, यथा नारकभवप्रत्यया नरकत्रिकस्य, देवभवप्रत्यया देवत्रिकस्य, तिर्यग्भवप्रत्यया तिर्यक्त्रिकैकद्वित्रिचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणातपनाम्नां, मनुष्यभवप्रत्यया मनुष्यत्रिकस्य। एताभ्यश्च विंशतिप्रकृतिभ्यो व्यतिरिक्ताः शेषाः परिणामप्रत्ययोदीरणास्ता [अ]ध्रुवा एव। यत आह–'सई स सव्वत्थ', यतः सती–विद्यमाना सा उदीरणा सर्वत्र–सर्वेषु भावेषु सर्वेषु च भवेषूदीरणा सती [अ]ध्रुवोदयानामेव। ततः शेषाः परिणामप्रत्ययोदीरणा [अ]ध्रुवोदया एवावगन्तव्याः, उदीरणा च तासां परिणामप्रत्यया निर्गुणपरिणामप्रत्यया द्रष्टव्या ॥५२॥

तित्थयरं घाईणि य आसज्ज गुणं पहाणभावेण। भवपच्चइया सव्वा तहेव परिणामपच्चइया ॥५३॥

(स्वो०)—तीर्थकरं, घातिकर्मप्रकृतयश्च, ज्ञानदर्शनावरणमोहनीयान्तरायविभागाः, चशब्दाद्वैक्रियसप्तकं, ध्रुवोदयाश्च तिर्यग्मनुष्या गुणप्रत्ययप्राधान्यादन्यथा बद्धा अन्यथा परिणामस्योदीरयन्ति। हेतोरविशेषितभावाश्रयणात्तु सर्वा भवप्रत्ययाः परिणामप्रत्ययाश्च भवन्ति, यतस्तिर्यग्गतियोग्याः तिर्यग्गतावुदीर्यन्ते, एवं शेषास्वपि। परिणामोऽपि रसस्य हासवृद्ध्यात्मको भवापेक्षेति गाथार्थः ॥५३॥

(मलय०)—तीर्थकरं घातिकर्मप्रकृतीश्च पञ्चविधज्ञानावरणनवविधदर्शनावरणनोकषायवर्जमोहनीयपञ्चविधान्तरायरूपा', चशब्दाद् वैक्रियसप्तकं धवोदयाश्च तिर्यङ्मनुष्या गुणमाश्रित्य प्रधानभावेन गुणप्रत्ययाः प्राधान्यादियमर्थः । अन्यथा यद्वा अन्यथा परिणाम स्योदीरयन्ति, ततस्तेषां गुणपरिणामप्रत्ययोदीरणास्तीर्थंकरादिप्रत्यया वेदितव्याः । अथवा सर्वा अपि प्रकृतयो यथायोग भवे एवो-दीर्यन्ते । तद्यथा—तिर्यग्गतिप्रायोग्यास्तिर्यग्भवे, मनुष्यगतियोग्या मनुष्यभवे, नरकगतियोग्या नरकभवे, देवगतियोग्या देवभवे, अतः सर्वा अपि प्रकृतयो भवप्रत्ययोदीरणा द्रष्टव्याः । यद्वा सर्वा अपि प्रकृतीस्तत्तत्परिणामवशेन प्रभूतरसा' सतीरल्परसा', अल्पर-सा' सती' प्रभूतरसीकृत्योदीरयन्ति सर्वेऽपि जीवाः, इति सर्वा अपि प्रकृतयः परिणामप्रत्ययोदीरणा वक्तव्या. ॥५३॥

उक्तो हेतुः, साधनादिप्ररूपणामाह—

वेयणिएणुक्कोसा अजहण्णा मोहणीयचउभेया । सेसघाईण तिविहा नामगोयाणणुक्कोसा ॥५४॥

सेसविगप्पा दुविहा सव्वे आउस्स होउमुवसन्तो । सव्वट्ठगओ साए उक्कोसुदीरण कुणइ ॥५५॥

(स्वो०)—वेदनीयेऽनुत्कृष्टा अनुभागोदीरणा, मोहनीयस्याजघन्योदीरणा चतुर्विधा भवति । शेषघातिनां ज्ञानदर्शनावरणान्तरा-याणामजघन्योदीरणा त्रिधा भवति । नामगोत्रयोरनुत्कृष्टा त्रिधेति गाथार्थः ॥ शेषविकल्पा अनुक्तभेदा' सर्वकर्मणां द्विधा—साद्यध्रुवा भवन्ति । आयुषश्चत्वारोऽपि भेदाः साद्यध्रुवाः, कथं ? वेदनीयस्योपशान्तो भूत्वा पश्चात्सर्वार्थगतः सातस्योदीरणामुत्कृष्टां करोति। सा च तस्माद् भ्रष्टस्य सादिः, तत्स्थानमप्राप्तस्यानादिरभव्यस्य ध्रुवा, भव्यस्याध्रुवेति । मोहनीयस्याजघन्या चतुर्विधा, कथं ? क्षप-

## मूलप्रकृतेरनुभागोदीरणायाः साद्यादिभङ्गयन्त्रम्

| प्रकृतयः | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अना० | ध्रु० | सादिः | अध्रु० | सादिः | अध्रु० | अना० | ध्रु० | सादिः | अध्रुवः |
| (मूलप्रकृतिषु) ज्ञान०-दर्श०-वि० | —— | भव्यानाम् | सादेरभावात् | अभ० | १२मे गुणस्थाने .० | सादित्वात् | परावृत्तित्वात् | परावृ० | — | — | परावृत्तित्वात् | परावृ० |
| नामगोत्रयोः | परावृत्तित्वान्मिथ्यादृशि | परा० मिथ्या० | — | — | परावृत्तित्वान्मिथ्यादृशि | परावृ० मिथ्या० | — | भव्यानाम् | आदेरभावात् | अभ० | १३ मे | सादित्वात् |
| वेदनीयस्य | ” | ” | — | — | ” | ” | अप्रमत्तादितः पतताम् | ” | साद्यप्राप्तानाम् | ” | १०मवर्द्धसर्वार्थसुराणाम् | ” |
| मोहनीयस्य | ११तः पतितानाम् (१०मे) | भव्यानाम् | साद्यप्राप्तानाम् | अभव्या० | क्षपकानां १०मे .० | सादिसमयादनंतरं | परावृत्तित्वात् | परावृ० | — | — | परावृत्तित्वात् | परावृ० |
| आयुषः | अध्रुवत्वात् | अध्रु० | — | — | अध्रुवत्वात् | अध्रु० | अध्रुवत्वात् | अध्रु० | — | — | अध्रुवत्वात् | अध्रु० |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| (उत्तरप्रकृतिषु मृदु-लघ्वोः | परावृत्तित्याभिमिथ्यादृशि | परावृ० मिथ्या० | — | — | परावृत्तित्या मिथ्यादृशि | परावृ० मिथ्या० | आहारक देहोपसंहरतः | अभव्यानां | साद्यप्राप्तानाम् | अभव्यानां | आहारकदेहस्थमुनीनाम् | सादि स्यात् |
| मिथ्यात्वस्य | सम्यक्त्वपतितानाम् | अभव्यानां | साद्यप्राप्तानां | अभव्यानां | सम्य०संयमी युगपत्प्रतिपित्सोः (समयमात्रत्वात्) | सादि स्यात् | परावृत्तिस्यात् मिथ्यादृशि | परावृ० मिथ्या० | — | — | परावृत्तिस्यात् मिथ्यादृशि | परावृत्तिस्यात् |
| गुरु-कर्कशयोः | समुद्घातस्य ७ मे समये | " | " | " | समुद्घातस्य षष्ठे समये | " | " | " | — | — | " | " |
| तै० ७-सुवर्ण ९-अगु०-स्थि० शुभ-निर्माणानां (२०) | परावृत्तित्याभिमिथ्यादृशि | परावृ० मिथ्या० | — | — | परावृत्तित्या मिथ्यादृशि | परावृ० मिथ्या० | —— | अभव्यानां | आदेरमाधात् | अभव्यानां | १३मान्ते | विच्छेदस्यात् |
| दा०६-न०४ वि०५ रुवर्ण०७ अस्थिराशुभानाम् (२२) | —— | अभव्यानाम् | आदेरमाधात् | अभव्यानाम् | स्योगीरणान्ते | सादि स्यात् | परावृत्तिस्यात् मिथ्यादृशि | परावृ० मिथ्या० | — | — | परावृत्तिस्यात् मिथ्यादृशि | परावृ० मिथ्या० |
| ११०उत्कृष्टोगाणाम् | अध्रुवोदीरण स्यात् | अध्रुवो दी० | — | — | अध्रुवोदीरण स्यात् | अध्रुवो दी० | अध्रुवोदीरणस्यात् | अध्रुवो दी० | — | — | अध्रुवोदीरणस्यात् | अध्रुवो दी० |

० "समयाधिकावलिकाशेषे" इति संभाव्यतम्

कस्य चरमोदीरणस्थितौ जघन्या, सा च सादिरध्रुवा भवति, तां मुक्त्वा शेषाऽजघन्या, उपशान्तभावं प्रतिपन्नस्य नास्ति, ततः प्रतिपततः सादिरजघन्या, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे सुगमे। घातिनामु(मोहनीयस्यो)त्कृष्टानुत्कृष्टजघन्या द्विधा–सादिरध्रुवा। एतेषामु(अस्यो)त्कृष्टा मिथ्यादृष्टौ, प्रतिपततस्तस्मात्परिणामादनुत्कृष्टा, सापि सादिरध्रुवा, जघन्योक्तैव। क्षपकस्य शेषघातिनामजघन्या, नामगोत्रयोरनुत्कृष्टा त्रिधा भवत्यनुभागोदीरणा, स्थित्युदीरणावत्, क्षीणकषायसयोगिस्थानयोः अवशेषे जघन्योत्कृष्टे यथासंख्येन द्विविधा तत्रैवेति। घातिनामुत्कृष्टानुत्कृष्टे नामगोत्रयोर्जघन्याजघन्ये मिथ्यादृष्टौ भवतः, साद्यध्रुवे प्राग्वत्। आयुषः सर्वे भेदाः सुगमाः, अध्रुवोदीरणत्वादेवेति गाथार्थः ॥५४–५५॥

(मलय०)—तदेवं कृता प्रत्ययप्ररूपणा। सम्प्रति साद्यादिप्ररूपणा कर्त्तव्या, सा च द्विधा मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र प्रथमतो मूलप्रकृतिविषयां तां कुर्वन्नाह—'वेदनीये'। वेदनीयस्याऽनुत्कृष्टानुभागोदीरणा चतुर्विधा, तद्यथा—सादिरनादिर्ध्रुवा अध्रुवा च। तथाहि—उपशमश्रेण्यां सूक्ष्मसंपरायगुणस्थानके यद्बद्धं सातवेदनीयं तस्य सर्वार्थसिद्धिसंप्राप्तौ प्रथमसमये या उदीरणा सा चोत्कृष्टानुभागोदीरणा सादिरध्रुवा च। ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चाप्रमत्तगुणस्थानकादौ न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे अभव्यभव्यापेक्षया। तथा मोहनीयस्याऽजघन्यानुभागोदीरणा चतुर्विधा, तद्यथा–सादिरनादिर्ध्रुवा अध्रुवा च। तथा मोहनीयस्य जघन्यानुभागोदीरणा सूक्ष्मसंपरायस्य क्षपकस्य समयाधिकावलिकाशेषायां स्थितौ भवति, सा च सादिरध्रुवा च। शेषकालं त्वजघन्या, सा चोपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत्। शेषाणां घातिप्रकृतीनां ज्ञानावरणदर्शनावरणान्तरायाणामजघन्यानु-

भागोदीरणा त्रिधा, तद्यथा—अनादिर्ध्रुवा अध्रुवा च। तथाहि—आसां प्रकृतीनां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यानुभागोदीरणा, सा च सादिरध्रुवा च। ततोऽन्या सर्वाप्यजघन्या, सा चाऽनादिः, सदैव भावात्। ध्रुवाध्रुवे पूर्ववत्। तथा नामगोत्रयोरनुत्कृष्टानुभागोदीरणा त्रिधा, तद्यथा—अनादिर्ध्रुवा अध्रुवा च। तथाहि—अनयोरुत्कृष्टानुभागोदीरणा सयोगिकेवलिनि, सा च सादिरध्रुवा च। ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चाऽनादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे पूर्ववत्॥ 'सेसविगप्पा दुविह'त्ति। उक्तव्यतिरिक्ताः शेषविकल्पा द्विविधाः—द्विप्रकारास्तद्यथा—सादयोऽध्रुवाश्च तथाहि—चतुर्णां घातिकर्मणामुत्कृष्टानुत्कृष्टा चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण प्राप्येते, ततो द्वे अपि साद्यध्रुवे, जघन्या च प्रागेव भाविता। तथा नामगोत्रवेदनीयानां जघन्या अजघन्या चानुभागोदीरणा मिथ्यादृष्टौ लभ्येते, ततो द्वे अपि साद्यध्रुवे, उत्कृष्टा च प्रागेव भाविता। तथा आयुषः सर्वेऽपि भेदा द्विविधा स्तद्यथा—सादयोऽध्रुवाश्च, सा च साद्यध्रुवता अध्रुवोदीरणत्वादवसेया। तदेवं कृता मूलप्रकृतिविषया साद्यादिप्ररूपणा॥५४-५५॥

उत्तरप्रकृतीनां साद्यनादिप्ररूपणामाह—

कक्खडगुरुमिच्छाणं अजहण्णा मिउलहूणणुक्कोसा। चउहा साइयवज्जा वीसाएँ धुवोदयसुभाणं ॥५६॥

(स्वो०)—कर्कशगुरुमिथ्यात्वानां अजघन्यानुभागोदीरणा, मृदुलघुस्पर्शयोरनुत्कृष्टा चतुर्धा भवति। विंशतेर्ध्रुवोदयानां कार्मणसमकस्थिरशुभनिर्माणागुरुलघुश्वेतपीतरक्तवर्णसुगन्धमधुराम्लकषायरसोष्णस्निग्धाख्यानां सादिवर्ज्जा त्रिधाऽनुत्कृष्टानुभागोदीरणा भवति। कथं? मिथ्यात्वस्य मिथ्यादृष्टिर्यदा सम्यक्त्वेन सह संयमं प्रतिपद्यते तदा जघन्यामनुभागोदीरणां करोति, सा च सादिरध्रुवा, तस्यैव प्रतिपततः अजघन्या, सा च सादिरध्रुवा, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत्। कर्कशगुरुनाम्नोस्तु केवलिनः

समुद्घातान्निवृत्तस्य मथि जघन्या, सा च सादिरध्रुवा भवति, समुद्घातसमाप्तावजघन्या सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । मृदुलघुस्पर्शयोरनुत्कृष्टा चतुर्विधा, कथं ? आहारकशरीरपर्याप्तकस्य उत्कृष्टा, सा च सादिरध्रुवा, तदैवोपसंहरतोऽनुत्कृष्टा सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । जघन्या मृदुलघ्वोर्नामशुभध्रुवाणां च विंशतेः मिथ्यादृष्टौ भवति । सा च सादिरध्रुवा, तत्परिणामस्य प्रतिपातादजघन्यस्यापि सादिरध्रुवा । विंशतेः शुभध्रुवाणां सयोग्यन्तसमये उत्कृष्टा भवति, सा च सादिरध्रुवा । अनुत्कृष्टाया आदिर्नास्ति, अप्रतिपातात्, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वदिति गाथार्थः ॥५६॥

(मलय०)—संप्रत्युत्तरप्रकृतिविषयां तां चिकीर्षुराह—कर्कशगुरुमिथ्यात्वानामजघन्यानुभागोदीरणा चतुर्विधा, तद्यथा–सादिरनादिर्ध्रुवा अध्रुवा च । तथाहि–सम्यक्त्वं संयमं च युगपत्प्रतिपत्तुकामस्य जन्तोर्मिथ्यादृष्टेर्मिथ्यात्वस्य जघन्यानुभागोदीरणा, सा च सादिरध्रुवा च । ततोऽन्यस्य मिथ्यादृष्टेः सर्वाप्यजघन्या । सा च सम्यक्त्वात्प्रतिपततः सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत् । कर्कशगुरुस्पर्शयोर्जघान्यानुभागोदीरणा केवलिसमुद्घातान्निवर्त्तमानस्य षष्ठे समये भवति, सा च सादिरध्रुवा च समयमात्रत्वात् । ततोऽन्या सर्वाप्यजघन्या, सापि केवलिसमुद्घातान्निवर्त्तमानस्य सप्तमे समये सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत् । तथा मृदुलघुस्पर्शयोरनुत्कृष्टानुभागोदीरणा चतुर्विधा, सादिरनादिर्ध्रुवा अध्रुवा च । तथाहि–अनयोरुत्कृष्टानुभागोदीरणा आहारकशरीरस्थस्य संयतस्य भवति, सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यनुत्कृष्टा, सापि चाहारकशरीरमुपसंहरतः सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत् । तथा विंशतेर्ध्रुवोदयानां शुभप्रकृतीनां तैजससप्तकस्थिरशुभनिर्माणागुरुलघुश्वेतपीतरक्तवर्णसुरभिगन्धमधुराम्लकषायरसोष्णस्निग्धस्पर्शरूपाणां सादिवर्जा त्रिधाऽनुत्कृष्टानुभागोदीरणा भवति । तद्यथा–अनादिर्ध्रुवा अध्रुवा च ।

तथाहि—एतासामुत्कृष्टानुभागोदीरणा सयोगिकेवलिचरमसमये, ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चानादिः सदैव भावात्, ध्रुवाध्रुवे पूर्ववत् ॥

**अजहण्णा असुभधुवोदयाण तिविहा भवे तिवीसाए । साई अधुवा सेसा सव्वे अधुवोदयाण तु ॥५७॥**

(स्वो०)—अजघन्यानुभागोदीरणा अशुभध्रुवोदयत्रयोविंशतिप्रकृतीनां नीलकृष्णवर्णदुर्गन्धतिक्तकटुकरसरूक्षशीतस्पर्शज्ञानावरणान्तरायदशकदर्शनावरणचतुष्कास्थिराशुभाख्यानां सादिवर्जा त्रिधा भवति, कथं? आत्मीयात्मीयोदीरणान्तस्थितौ जघन्या, सा च सादिरध्रुवा, तदन्याऽजघन्या, तस्या आदिर्नास्ति ध्रुवोदयित्वात्, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । आसां शेषविकल्पाः, सर्वे विकल्पाः अध्रुवोदयानां साद्यध्रुवाः, शुभध्रुवाणां जघन्याजघन्ये, अशुभध्रुवोदयानां उत्कृष्टानुत्कृष्टे मिथ्यादृष्टौ भवतोऽतः साद्यध्रुवे, शेषाणामध्रुवोदयित्वाद् भाविता एवेति गाथार्थः ॥५७॥

(मलय०)—अशुभध्रुवोदयानां त्रयोविंशतेः प्रकृतीनां–पञ्चविधज्ञानावरणचक्षुरचक्षुरवधिकेवलदर्शनावरणकृष्णनीलदुरभिगन्धतिक्तकटुरूक्षशीतास्थिराशुभपञ्चविधान्तरायरूपाणां अजघन्यानुभागोदीरणा त्रिधा, तद्यथा–अनादिर्ध्रुवा अध्रुवा च । तथाहि–एतासां स्वस्वोदीरणापर्यवसाने जघन्यानुभागोदीरणा, सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यजघन्या, सा चानादिः सदैव भावात् । ध्रुवाध्रुवे पूर्ववत् । एतासां सर्वासां पूर्वोक्तानां प्रकृतीनां शेषा–उक्तव्यतिरिक्ता विकल्पाः, तद्यथा–कर्कशगुरुमिथ्यात्वत्रयोविंशतीनामुत्कृष्टानुत्कृष्टजघन्याः, मृदुलघुविंशतीनां जघन्याजघन्योत्कृष्टाः साद्योऽध्रुवाश्च । तथाहि–कर्कशगुरुमिथ्यात्वत्रयोविंशतीनामुत्कृष्टानुत्कृष्टा चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्येते, अशुभप्रकृतित्वात् । ततो द्वे अपि साद्यध्रुवे, जघन्या च प्रागेव भाविता । तथा मृदुलघुविंशतीनां जघन्याजघन्या चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्येते, शुभप्रकृतित्वात् । ततो द्वे अपि साद्यध्रुवे, उत्कृष्टा च

प्रागेव भाविता । तथा शेषाणामध्रुवोदयानां दशोत्तरशतसंख्यानां सर्वे उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपा विकल्पाः सादयोऽध्रुवाश्च, सा च साद्यध्रुवता अध्रुवोदीरणत्वादवसेया ॥५७॥

उक्ता साद्यनादिप्ररूपणा, उत्कृष्टस्वामित्वमाह—

दाणाइ अचक्खूणं उक्कोसाइंमि हीणलद्धिस्स । सुहुमस्स चक्खुणो पुण तेइंदियसव्वपज्जत्ते ॥५८॥

(स्वो०)—दानान्तरायादीनां पञ्चानामन्तरायाणामचक्षुर्दर्शनषष्ठानामुत्कृष्टानुभागोदीरणा उत्पत्त्याद्यसमये हीनलब्धिकस्य-जघन्यप्रभावस्य सूक्ष्मजीवस्य भवति । चक्षुर्दर्शनावरणस्य पुनस्त्रीन्द्रिये सर्वपर्याप्तिभिः पर्याप्ते भवतीति गाथार्थः ॥५८॥

(मलय०)—कृता साद्यादिप्ररूपणा सम्प्रति स्वामित्वमभिधानीयं । तच्च द्विधा, उत्कृष्टोदीरणाविषयं, जघन्योदीरणाविषयं च । तत्र प्रथमत उत्कृष्टोदीरणास्वामित्वमाह–दानान्तरायादीनां पञ्चनामन्तरायप्रकृतीनामचक्षुर्दर्शनावरणस्य च सूक्ष्मैकेन्द्रियस्य हीनलब्धिकस्य-सर्वस्तोकदानाद्यचक्षुर्विज्ञानलब्धियुक्तस्योत्पत्तिप्रथमसमये उत्कृष्टानुभागोदीरणा। तथा त्रींद्रिये–त्रीन्द्रियस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य पर्याप्तिचरमसमये चक्षुर्दर्शनावरणस्योत्कृष्टानुभागोदीरणा ॥५८॥

निद्दाणं पंचण्हवि मज्झिमपरिणामसंकिलिट्ठस्स । पणनोकसायसाए नरए जेट्ठाट्ठिति समत्ते ॥५९॥

(स्वो०)—निद्राणां पञ्चानामपि मध्यमपरिणामस्य उत्कृष्टानुभागोदीरणा भवति, यतोऽतिविशुद्धसंक्लिष्टानां निद्रोदय एव न भवति। पञ्चानां नोकषायाणां नपुंसकारतिशोकभयजुगुप्साख्यानां असातस्य च नारके उत्कृष्टस्थितिके पर्याप्तके उत्कृष्टानुभागोदीरणा भवती-

ति गाथार्थः ॥५९॥

(मलय०)—मध्यमपरिणामस्य तत्प्रायोग्यसंक्लेशयुक्तस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य निद्रापञ्चकस्योत्कृष्टानुभागोदीरणा, अत्यन्तविशुद्धस्यात्यन्तसंक्लिष्टस्य वा निद्रापञ्चकस्योदय एव न भवतीति कृत्वा मध्यमपरिणामग्रहणम्। पुनः पञ्चानां नोकषायाणां नपुंसकवेदारतिशोकभयजुगुप्सानां असातस्य चोत्कृष्टानुभागोदीरणास्वामी नैरयिको ज्येष्ठस्थितिक', समाप्तः—सर्वाभिः पर्याप्तिभिः पर्याप्तो वेदितव्यः ॥५९॥

पंचेंदियतसबायरपज्जत्तगसायसुस्सरगईण । वेउव्वुस्सासस्स य देवो जेट्ठट्ठिति समत्तो ॥६०॥

(स्वो०)—पञ्चेन्द्रियत्रसबादरपर्याप्तकसातसुस्वरशुभविहायो(देव)गतीनां वैक्रियसप्तकस्योच्छ्वासस्य चोत्कृष्टामनुभागोदीरणां देवो ज्येष्ठस्थितिः पर्याप्तः करोतीति गाथार्थः ॥६०॥

(मलय०)—पञ्चेन्द्रियजातित्रसबादरपर्याप्तसातवेदनीयसुस्वरदेवगतिवैक्रियसप्तकोच्छ्वासरूपाणां पञ्चदशप्रकृतीनां देवो ज्येष्ठस्थितिक'—त्रयस्त्रिंशत्सागरोपमस्थितिक इत्यर्थः, समाप्तः—सर्वाभिः पर्याप्तिभिः पर्याप्तः सर्वविशुद्ध उत्कृष्टानुभागोदीरणा(णां करोति)॥

सम्मत्तमीसगाण से काले गाहिहिइत्ति मिच्छत्त । हासरईण पज्जत्तगस्स सहसारदेवस्स ॥६१॥

(स्वो०)—सम्यक्त्वमिश्रयोर्यस्मादुत्तरसमये मिथ्यात्वं ग्रहीष्यति तत्रोत्कृष्टानुभागोदीरणा, हास्यरत्योः सहस्रारदेवस्य सर्वपर्याप्तिभिः पर्याप्तस्य भवतीति गाथार्थः ॥६१॥

(मलय०)—योऽनन्तरसमये मिथ्यात्वं गृहीष्यति, तस्य सर्वसंक्लिष्टस्य सम्यक्त्वसम्यग्मिथ्यात्वयोर्यथासंभवमुदये सति उत्कृष्टानुभागोदीरणा। तथा सहस्रारदेवस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य हास्यरत्योरुत्कृष्टानुभागोदीरणा ॥६१॥

गइहुंडुवघायाणिट्ठखगति दुसराइणीयगोयाणं। नेरइओ जेट्ठट्ठिइ मणुआ अंते अपज्जस्स ॥६२॥

(स्वो०)—नरकगतिहुण्डसंस्थानोपघातानिष्टविहायोगतिदुःस्वरदुर्भगानादेयायशःकीर्त्तिनीचैर्गोत्राणां नवानां प्रकृतीनामुत्कृष्टस्थितिः नारकः पर्याप्तोऽतिसंक्लिष्टः करोत्युत्कृष्टामुदीरणाम्। अपर्याप्तकनाम्नस्तु मनुष्योऽपर्याप्तो भवान्तसमयेऽतिसंक्लिष्टः उत्कृष्टानुभागोदीरणां करोतीति गाथार्थः ॥६२॥

(मलय०)—नरकगतिहुण्डसंस्थानोपघाताप्रशस्तविहायोगतिदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्ररूपाणां नवानां प्रकृतीनां नैरयिको ज्येष्ठस्थितिकः—उत्कृष्टस्थितिकः, सर्वाभिः पर्याप्तिभिः पर्याप्तोऽतिसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी। तथा अपर्याप्तकनाम्नो मनुष्योऽपर्याप्तश्चरमसमये वर्त्तमान उत्कृष्टानुभागोदीरणास्वामी ॥६२॥

कक्खडगुरुसंघयणा थीपुमसंठाणतिरिगईणं च। पंचिंदिओ तिरिक्खो अट्ठमवासेट्ठवासाऊ ॥६३॥

(स्वो०)—कर्कशगुरुस्पर्शाशुभसंहननपञ्चकस्त्रीपुंवेदमध्यमसंस्थानचतुष्कतिर्यग्गतीनां चतुर्दशप्रकृतीनां अष्टमवर्षे—अष्टमवर्षायुरतिसंक्लिष्टः संज्ञी पञ्चेन्द्रियतिर्यङ्करोति उत्कृष्टानुभागोदीरणामिति गाथार्थः ॥६३॥

(मलय०)—कर्कशगुरुस्पर्शयोरादिमवर्जानां पञ्चानां संहननानां, स्त्रीपुरुषवेदयोः, आद्यन्तवर्जानां चतुर्णां संस्थानानां, तिर्यग्जा-

तेथ, सर्वसम्यया चतुर्दशप्रकृतीनां तिर्यक्पञ्चेन्द्रियः संज्ञी, अष्टवर्षायुरष्टमे वर्षे वर्तमानः सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी ॥

तिगपलियाउ समत्तो मणुओ मणुयगतिउसभउरलाण। पज्जत्ता चउगइया उक्कोस सगाउयाणं तु ॥६४॥

(स्वो०)—त्रिपल्योपमायुः पर्याप्तो मनुष्यो मनुजगतिप्रथमसंहननौदारिकसप्तकानामुत्कृष्टानुभागोदीरणां करोति। पर्याप्ताः चतुर्गतिकाः स्वायुषामुत्कृष्टस्थितिकाः चयाणां विशुद्धा (उत्कृष्टामुदीरणां कुर्वन्ति), नारकायुषः संक्लिष्ट उत्कृष्टामुदीरणां करोतीति गाथार्थः ॥

(मलय०)— त्रिपल्योपमायुष्कः समाप्तः–सर्वाभिः पर्याप्तिभिः पर्याप्तो मनुष्यः सर्वविशुद्धो मनुष्यगतिवज्रर्षभनाराचसंहननौदारिकसप्तकानामुत्कृष्टानुभागोदीरणास्वामी। तथा पर्याप्ताश्चतुर्गतिकाः स्वस्वायुषामुत्कृष्टस्थितौ वर्तमानास्त्रयाणामायुषां विशुद्धाः, नरकायुषः सर्वसंक्लिष्टा उत्कृष्टानुभागोदीरणास्वामिनो भवन्ति ॥६४॥

हस्सठिई पज्जत्ता तन्नामा विगलजाइसुहुमाण। थावरनिगोयएगिंदियाणमिह बायरा नवर ॥६५॥

(स्वो०)—ह्रस्वस्थितिकाः पर्याप्तास्तन्नामानो विकलजातिसूक्ष्माणां संक्लिष्टा द्वीन्द्रिया द्वीन्द्रियजातेः, एव शेषास्वपि, स्थावरसाधारणैकेन्द्रियजातीनां बादरत्वविशिष्टाशुत्कृष्टामुदीरणां कुर्वन्ति, स्वविशेषणाभिधाना इति गाथार्थः ॥६५॥

(मलय०)—ह्रस्वस्थितिका–जघन्यस्थितिकाः पर्याप्तकास्तन्नामानो–द्वीन्द्रियादिजातिसूक्ष्मनामकर्मानुभाविनामानो विकलेन्द्रियजातीनां सूक्ष्मनाम्नश्चोत्कृष्टानुभागोदीरणां कुर्वन्ति। एतदुक्तं भवति–द्वित्रिचतुरिन्द्रियाः सूक्ष्माश्च सर्वजघन्यस्थितौ वर्तमानाः सर्वपर्याप्तिभिः पर्याप्ताः सर्वसंक्लिष्टा यथासंख्यं द्वित्रिचतुरिन्द्रियजातिनाम्नां सूक्ष्मनाम्नश्चोत्कृष्टानुभागोदीरणास्वामिनः, ह्रस्वस्थितौ च वर्तमानाः

सर्वसंक्लिष्टा भवन्तीति तदुपादानम्। तथा स्थावरसाधारणैकेन्द्रियजातिनाम्नां जघन्यस्थितौ वर्त्तमाना बादरैकेन्द्रियाः सर्वपर्याप्तिपर्याप्ताः सर्वसंक्लिष्टाः स्थावरनाम्नः स्थावराः, साधारणनाम्नः साधारणाः, एकेन्द्रियजातेरुभयेऽपि उत्कृष्टानुभागोदीरणास्वामिनो वेदितव्याः, बादराणां च महान् संक्लेशो भवतीति तदुपादानम् ॥६५॥



**आहारतणूपज्जत्तगो उ चउरंसमउयलहुयाणं। पत्तेयखगइपरघायतइयमुत्तीण य विशुद्धो ॥६६॥**

(स्वो०)—आहारतन्वा पर्याप्तकोऽतिविशुद्धसंयत इति गम्यते, चतुरस्रसंस्थानमृदुलघुप्रत्येकशुभविहायोगतिपराघाताहारकसप्तकानां आसां त्रयोदशप्रकृतीनां उत्कृष्टामनुभागोदीरणां करोतीति गाथार्थः ॥६६॥

(मलय०)—आहारकतन्वा–आहारकशरीरेण पर्याप्तः, आहारकशरीरसंयुतः, सर्वाभिः पर्याप्तिभिः पर्याप्त इत्यर्थः, सर्वविशुद्धः समचतुरस्रसंस्थानमृदुलघुस्पर्शप्रत्येकप्रशस्तविहायोगतिपराघातानां तृतीयस्याश्च मूर्तेराहारकशरीरनाम्नः, सर्वसंख्यया त्रयोदशप्रकृतीनामुत्कृष्टानुभागोदीरणास्वामी ॥६६॥

**उत्तरवेउव्विजई उज्जोयस्सायवस्स खरपुढवी। नियगगईणं भणिया तइए समएणुपुव्वीणं ॥६७॥**

(स्वो०)—उत्तरवैक्रिये वर्त्तमानो यतिरुद्योतस्य, आतपस्य 'खर' इति बादरपृथिवीकायिकः पर्याप्तोऽतिविशुद्ध उत्कृष्टानुभागोदीरणां करोति, स्वगतीनां ये भणिताः त एव तृतीयसमये त्वानुपूर्वीणां कुर्वन्ति, शुभयोर्विशुद्धा, अशुभयोः संक्लिष्टा इति गाथार्थः ॥६७॥

(मलय०)—उत्तरवैक्रिये वर्त्तमानो यतिः पर्याप्तः सर्वविशुद्ध उद्योतनाम्न उत्कृष्टानुभागोदीरणास्वामी भवति। तथा खरपृथ्वीका-

यिको-बादरपृथ्वीकायिकः उत्कृष्टायां स्थितौ वर्त्तमानः पर्याप्तः सर्वविशुद्ध आतपनाम्न उत्कृष्टामनुभागोदीरणामाधत्त । तथा मनुष्यदेवानुपूर्व्योर्विशुद्धाः, नरकगतितिर्यगानुपूर्व्योः संक्लिष्टाः, निजगतीनां स्वस्वगतीनां तृतीयसमये वर्त्तमाना उत्कृष्टानुभागोदीरका वेदितव्याः ॥६७॥

**जोगन्ते सेसाणं सुभाणमियराण चउसु वि गईसु । पज्जत्तुक्कडमिच्छेसु लद्धिहीणेसु ओहीणं ॥६८॥**

(स्वो०)--सयोग्यन्तसमये शेषाणां शुभप्रकृतीनां स्थिरादिषट्कं कार्मणसप्तकं मृदुलघुवर्जशुभवर्णादिनवकं निर्माणागुरुलघुतीर्थङ्कराणां पञ्चविंशतेरुत्कृष्टानुभागोदीरणा भवति । इतरासामशुभानां प्रकृतीनां चतसृष्वपि गतिषु पर्याप्ता उत्कटमिथ्यादृष्टयः ये तेषु भवन्ति । कास्ताः-अवधिवर्जज्ञानावरणचतुष्कं केवलदर्शनावरणं मिथ्यात्वं षोडश कषायाः गुरुकर्कशहीनाशुभवर्णादिसप्तकं अस्थिराशुभे इत्येकत्रिंशतामुत्कृष्टानुभागोदीरणा, अवधेरवधिलब्धिरहितस्येति गाथार्थः ॥६८॥

(मलय०)—सयोगिकेवलिनोऽन्ते-चरमसमये वर्त्तमानस्य शेषाणामुक्तव्यतिरिक्तानां शुभप्रकृतीनां तैजससप्तकमृदुलघुवर्जशेषशुभवर्णादिनवकागुरुलघुस्थिरशुभसुभगादेययशःकीर्तिनिर्माणोच्चैर्गोत्रतीर्थकरनाम्नां पंचविंशतिसंख्यानामुत्कृष्टानुभागोदीरणा भवति। इतरासां चाशुभप्रकृतीनां मतिश्रुतमनःपर्यायकेवलज्ञानावरणकेवलदर्शनावरणमिथ्यात्वषोडशकषायकर्कशगुरुवर्जशेषकुवर्णादिसप्तकास्थिराशुभरूपाणामेकत्रिंशत्प्रकृतीनां चतसृष्वपि गतिषु ये मिथ्यादृष्टयः सर्वपर्याप्तिपर्याप्ता उत्कृष्टे संक्लेशे वर्त्तमाना उत्कृष्टानुभागोदीरणास्वामिनः, तथाविधज्ञानावरणदर्शनावरणयोस्तेष्वेव चतुर्गतिषु मिथ्यादृष्टिषु अवधिलब्धिहीनेषु उत्कृष्टानुभागोदीरणा वेदितव्या, अवधिलब्धियुक्तानां हि प्रभूतोऽनुभागः क्षयं याति ततः उत्कृष्टा न लभ्यते इति लब्धिहीनेष्वित्युक्तम् ॥६८॥

उक्तमुत्कृष्टस्वामित्वम्, जघन्यस्वामित्वमाह—

**सुयकेवलिणो मइसुयचक्खुअचक्खूणुदीरणा मंदा । विपुलपरमोहिगाणं मणनाणोहीदुगस्सा वि ॥६९॥**

(स्वो०)—श्रुतकेवलिनश्चतुर्दशपूर्वधरस्य मतिश्रुतज्ञानचक्षुरचक्षुर्दर्शनावरणप्रकृतीनां क्षपणायाम्युत्थितस्यात्मीयात्मीयोदीरणान्तसमये ऽनुभागोदीरणा मन्देति जघन्या । विपुलमतेर्मनोज्ञानावरणस्य, परमावधिमतस्यावधिज्ञानदर्शनावरणयोर्मन्देति गाथार्थः ॥६९॥

(मलय०)—तदेवमुक्तमुत्कृष्टमदेशोदीरणास्वामित्वम् । सम्प्रति जघन्यानुभागोदीरणास्वामित्वमाह–श्रुतकेवलिनश्चतुर्दशपूर्वधरस्य क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्चमानस्य मतिज्ञानावरणश्रुतज्ञानावरणचक्षुरचक्षुर्दर्शनावरणानां मन्दा जघन्यानुभागोदीरणा प्रवर्त्तते, तथा क्षीणकषायस्य विपुलमतिमनःपर्यायज्ञानसहितस्य समयाधिकावलिकाशेषायां स्थितौ वर्चमानस्य मनःपर्यायज्ञानावरणस्य जघन्यानुभागोदीरणा, परमावधियुक्तस्य तु क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्चमानस्यावधिज्ञानावरणावधिदर्शनावरणयोर्जघन्यानुभागोदीरणा ॥६९॥

**खवगम्मि विग्घकेवलसंजलणाण सनोकसायाण । सगसगउदीरणंते निद्दापयलाणमुवसंते ॥७०॥**

(स्वो०)—क्षपकेऽन्तरायपञ्चककेवलज्ञानदर्शनावरणसञ्ज्वलनानां नवनोकषाययुक्तानां विंशतिप्रकृतीनां आत्मीयात्मीयोदीरणान्तसमये जघन्यानुभागोदीरणा भवति । निद्राप्रचलयोरुपशान्तकषाये, सर्वविशुद्धत्वादिति गाथार्थः ॥७०॥

(मलय०)—क्षपके–अन्तरायपञ्चककेवलज्ञानावरणकेवलदर्शनावरणसंज्वलनानां नवानां च नोकषायाणां सर्वसङ्ख्यया विंशतिप्रकृ-

तीनां स्वकस्वकोदीरणापर्यवसाने जघन्यानुभागोदीरणा भवति । तत्र पञ्चविधान्तरायकेवलज्ञानावरणकेवलदर्शनावरणानां क्षीणकषायस्य, चतुर्णां तु संज्वलनानां त्रयाणां च वेदानामनिवृत्तिबादरस्य स्वस्वोदीरणापर्यवसाने, षण्णां नोकषायाणामपूर्वकरणगुणस्थानकचरमसमये जघन्यानुभागोदीरणा । तथा निद्राप्रचलयोरुपशान्तमोहे जघन्यानुभागोदीरणा लभ्यते, तस्य सर्वविशुद्धत्वात् ॥७०॥

**निद्दानिद्दाईणं पमत्तविरए विसुज्झमाणंमि । वेयगसम्मत्तस्स उ सगखवणोदीरणा चरिमे ॥७१॥**

(स्वो०)—स्त्यानर्द्धित्रिकस्य प्रमत्तसंयते विशुद्ध्यमाने मन्दोदीरणा भवति, वेदकसम्यक्त्वस्य त्वात्मीयक्षपकोदीरणाचरमसमये समयाधिकावलिकाशेषायां स्थिताविति गाथार्थः ॥७१॥

(मलय०)—निद्रानिद्रादीनां—निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धीनां प्रमत्तविरतस्य विशुध्यमानस्याप्रमत्तताभिमुखस्य जघन्यानुभागोदीरणा प्रवर्त्तते । तथा क्षायिकसम्यक्त्वमुत्पादयतो मिथ्यात्वसम्यग्मिथ्यात्वयोः क्षपितयोर्वेदकसम्यक्त्वस्य—क्षायोपशमिकसम्यक्त्वस्य स्वक्षपणकाले चरमोदीरणायां समयाधिकावलिकाशेषायां स्थितौ सत्यां प्रवर्त्तमानायां जघन्यानुभागोदीरणा भवति । सा च चतुर्गतिकानामन्यतमस्य विशुध्यमानस्य वेदितव्या ॥७१॥

**सम्मपडिवत्तिकाले पंचण्ह वि संजमस्स चउचउसु । सम्माभिमुहो मीसे आऊण जहण्णठितिगो त्ति ॥७२॥**

(स्वो०)—अपिशब्दात् संयमस्य सम्यक्त्वस्य च प्रतिपत्तिकाले पञ्चानां मिथ्यात्वानन्तानुबन्धिप्रकृतीनां मिथ्यादृष्टिर्विशुद्धत्वात् मन्दोदीरणां करोति । अविरतः संयमप्रतिपत्तिकाले द्वितीयकषायाणाम्, देशविरतो विशुद्धतरत्वात् तृतीयकषायाणां संयमप्रतिपत्ति- ॥१४३॥

काले, सम्यक्त्वोदयोपान्त्यसमये सम्यग्मिथ्यादृष्टिः सम्यग्मिथ्यात्वस्य मन्दोदीरकः, द्वावपि यतो युगपत्त्र प्रतिपद्यते । आयुषां जघन्यस्थितिको जीवो मन्दां करोति, शुभायुषां संक्लिष्टः नरकायुषो विशुद्ध इति गाथार्थः ॥७२॥

(मलय०)—सम्यक्त्वप्रतिपत्तिकाले, अपिशब्दात्संयमस्य च, ससंयमसम्यक्त्वप्रतिपत्तिकाले इत्यर्थः, मिथ्यादृष्टेः सतो मिथ्यात्वानन्तानुबन्धिरूपाणां प्रकृतीनां पञ्चानां जघन्यानुभागोदीरणा भवति, तस्य तदानीमतिविशुद्धत्वात् । तथा संयमस्य प्रतिपत्तिकाले 'चउचउत्'त्ति षष्ठयर्थे सप्तमी, चतसृणां चतसृणां प्रकृतीनां जघन्यानुभागोदीरणा । इयमत्र भावना—अविरतसम्यग्दृष्टेः संयमप्रतिपत्तिकाले अप्रत्याख्यानक्रोधमानमायालोभानां जघन्यानुभागोदीरणा, देशविरतस्य संयमप्रति१त्तिकाले प्रत्याख्यानावरणक्रोधमानमायालोभानाम्, तथा यः सम्यग्मिथ्यादृष्टिरनन्तरसमये सम्यक्त्वं प्रतिपत्स्यते तस्य सम्यग्मिथ्यात्वस्य जघन्यानुभागोदीरणा, सम्यग्मिथ्यादृष्टिः सम्यक्त्वं संयमं च युगपत्त्र प्रतिपद्यते, तथाविशुद्धेरभावात्, किंतु केवलं सम्यक्त्वमेवेति कृत्वा 'सम्मामिमुहो मीसे' इत्युक्तम् । तथा चतुर्णामप्यायुषां जघन्यस्थितिकः स्वस्वजघन्यस्थितौ वर्तमानो जघन्यमनुभागमुदीरयति । तत्र त्रयाणामायुषां संक्लेशवशादेव जघन्यः स्थितिबन्धो भवति, ततो जघन्योऽनुभागोऽपि तत्रैव लभ्यते, नरकायुषश्च विशुद्धिवशाज्जघन्यः स्थितिबन्ध इति जघन्यानुभागोऽपि नरकायुषस्तत्रैव, तथा च सति त्रयाणामायुषामतिसंक्लिष्टो जघन्यानुभागोदीरको नरकायुषस्त्वतिविशुद्ध इति ॥७२॥

पोग्गलविवागियाण भवाइसमए विसेसमुरलस्स । सुहुमापज्जो वाऊ बादरपज्जत्तवेउव्वे ॥७३॥

(स्वो०)—पुद्गलविपाकिनीनां पूर्वोक्तानां भवादिसमये—जन्मप्रथमसमये, स्वोदययोग्यानां जीवा मन्दोदीरणां कुर्वन्ति । औदारिकषट्कस्य त्वयं विशेषः, सूक्ष्मवायुकायिकस्यापर्याप्तकस्याल्पायुषो मन्दोदीरणा [तदुदययोग्यानां] भवति । वैक्रियषट्कस्य तु स एव

वायुकायिको बादरः पर्याप्तोऽल्पायुरिति शेषः, अनुभागस्य मन्दोदीरणां करोतीति गाथार्थः ॥७३॥

(मलय०)—याः पुद्गलविपाकिन्यः प्रकृतयः तासां सर्वासामपि भवादिसमये–भवप्रथमसमये जघन्यानुभागोदीरणा भवति। एतच्च सामान्येनोक्तमतो विशेषममुकस्याः प्रकृतेरमुक उदीरक इत्येवंरूपं वक्ष्ये–तत्रौदारिकस्य, उपलक्षणमेतत् , औदारिकषट्कस्य, सूक्ष्मो वायुकायिकोऽपर्याप्तकोऽल्पायुर्जघन्यानुभागोदीरकः। वैक्रियस्य–वैक्रियषट्कस्य स एव वायुकायिको बादरपर्याप्तोऽल्पायुर्जघन्यानुभागोदीरणां करोति ॥७३॥

अप्पाऊ बेइंदी उरलंगे नारओ तदियरंगे। निल्लेवियवेउव्वाअसण्णिणओ आगओ कूरो ॥७४॥

(स्वो०)—अल्पायुः–स्तोकजीवितव्यो द्वीन्द्रिय औदारिकाङ्गोपाङ्गे मन्दोदीरणां करोति भवादिसमये। तदितराङ्गे वैक्रियाङ्गोपाङ्गे क्रूरोऽतिसंक्लिष्टो नारको निर्लेपितवैक्रियेभ्यः–समुद्वलितवैक्रियेभ्यो योऽसंज्ञिभ्यः समायातः–समुत्पन्नो दीर्घस्थितिरादिसमये स मन्दोदीरणां करोतीति गाथार्थः ॥७४॥

(मलय०)—द्वीद्रियोऽल्पायुरौदारिकाङ्गोपाङ्गनाम्नः उदयप्रथमसमये जघन्यानुभागोदीरणां करोति। तथा तदितराङ्गे–तदितराङ्गोपाङ्गस्य वैक्रियाङ्गोपाङ्गनाम्न इत्यर्थः, योऽसंज्ञिपञ्चेन्द्रियः पूर्वोद्वलितं वैक्रियाङ्गोपाङ्गं स्तोककालं बद्ध्वा स्वायुःपर्यन्ते स्वभूमिकानुसारेण चिरस्थितिको नैरयिको जातः सन् क्रूरोऽतिसंक्लिष्टः सन् उदयप्रथमसमये जघन्यानुभागोदीरणां करोति ॥७४॥



मिच्छोऽन्तरे किलिट्ठो वीसाइ धुवोदयाण सुभियाण। आहारजई आहारगस्स अविसुद्धपरिणामो ॥७५॥

(स्वो०)—मिथ्यादृष्टिर्भवान्तरे संक्लिष्टः शुभध्रुवविंशतिप्रकृतीनां मन्दोदीरणां करोति, स च सूक्ष्म इति। आहारकशरीरलब्धिमान् यतिराहारकसप्तकस्याविशुद्धपरिणामो ह्रस्वस्थितिर्मन्दोदीरणां करोतीति गाथार्थः ॥७५॥

(मलय०)—मिथ्यादृष्टिरन्तरे भवापान्तरालगतौ वर्तमानोऽनाहारकोऽतिसंक्लिष्टो विंशतिसंख्यानां ध्रुवोदयानां शुभप्रकृतीनां तैजससप्तकमृदुलघुवर्जशेषशुभवर्णादिनवकागुरुलघुस्थिरशुभनिर्माणरूपाणां जघन्यानुभागोदीरणास्वामी। तथा आहारकसप्तकस्याहारकयतिरविशुद्धपरिणामो जघन्यानुभागोदीरणां करोति ॥७५॥

अप्पाउ रिसभचउरंसगाण अमणो चिरट्ठिइ चउण्हं। संठाणाण मणूओ संघयणाण तु सुविसुद्धो ॥७६॥

(स्वो०)—अल्पायुरतिसंक्लिष्टः प्रथमसंहननसंस्थानयोरसंज्ञी पञ्चेन्द्रियः भवादिसमये मन्दोदीरणां करोति। स एव दीर्घस्थितिरतिविशुद्धः प्रथमसमये मध्यसंस्थानानां तद्भवस्थः आहारपर्याप्त्या पर्याप्तो जघन्यामनुभागोदीरणां करोति, मध्यमसंहननानां मनुष्यो विशुद्ध इति चिरस्थितिरायसमये आहारपर्याप्त्या पर्याप्त इति गाथार्थः ॥७६॥

(मलय०)—अमना–असंज्ञिपञ्चेन्द्रियोऽल्पायुरतिसंक्लिष्टो भवप्रथमसमये वर्तमान आहारको वज्रर्षभनाराचसंहननसमचतुरस्रसंस्थानयोर्जघन्यमनुभागमुदीरयति। अल्पायुर्ग्रहणं संक्लेशार्थम्। तथा स एवासंज्ञिपञ्चेन्द्रियश्चिरस्थितिक आत्मीयायामायुरुत्कृष्टस्थितौ वर्तमान आहारको भवप्रथमसमये वर्तमानो मध्यमानां चतुर्णां संस्थानानां जघन्यानुभागोदीरणास्वामी। संहननानां तु सेवार्तवज्रर्षभनाराचवर्जानां पूर्वकोटयायुर्मनुष्य आहारकः भवप्रथमसमये वर्तमानः विशुद्धः जघन्यानुभागोदीरणास्वामी। इह दीर्घायुर्ग्रहणं विशुद्ध्यर्थं, तिर्यक्पञ्चेन्द्रियापेक्षया च प्रायो मनुष्या अल्पबला इति मनुष्योपादानम् ॥७६॥

## जघन्यानुभागोदीरणास्वामिनः

| प्रकृतयः | स्वामिनः | प्रकृतयः | स्वामिनः |
|---|---|---|---|
| मतिश्रुत-अचक्षुः-चक्षुषाम् | क्षीणमोहाः १४पूर्विणः | अप्रत्या०४ र्णाम् | अनन्तरसमये संयमोत्पादकाः ४ र्थस्थाः |
| | | प्रत्या० ४ र्णाम् | ,, ,, पञ्चमस्थाः |
| | | मिश्रस्य | अनन्तरसमये सम्यक्त्वोत्पादकाः मिश्राः |
| मनःपर्यवस्य | क्षीणमोहा विपुलमतयः | ३ आयुषाम् | स्वस्वाल्पस्थितिकाः अतिसंक्लिष्टाः |
| अवधिद्विकस्य | क्षीणमोहाः परमावधिलब्धिकाः | नरकायुषः | ,, ,, ,, विशुद्धाः |
| वि०५-केवलद्विकयोः | १२ मे स्वोदीरणान्ते | औदा०देह८-प्रत्येकानां | अल्पायुषोऽपर्याप्तसूक्ष्माः भवादिसमये |
| वेद३-संज्वलनत्रिकयोः | ९ मे क्षपकाः स्वोदीरणान्ते | वैक्रियषट्कस्य | अल्पायुषः पर्याप्तबादरा वायुकायिकाः |
| संज्व० लोभस्य | १० मे क्षपकाः ,, | औदा० उपांगस्य | अल्पायुषो द्वीन्द्रियाः उदयाद्यसमये |
| ६ नोकषाणायाम् | ८ मान्ते | वै० उपांगस्य | पूर्वोद्वलितवैक्रियोपांगबद्धस्तोककालासंज्ञिपंचे० भवादागत्य जातसंक्लिष्टदीर्घस्थितिकनारका उदयाद्यसमये |
| निद्राद्विकयोः | ११ मे. | | |
| स्त्यानर्द्धित्रिकस्य | अप्रमत्तोन्मुखा प्रमत्ताः | | |
| सम्यक्त्वस्य | स्वक्षपणकाले चतुर्गतिकाः | आहा० ७ कस्य | आहारकविकुर्वन्तः संयताः प्रथमसमये |
| मिथ्या०अनन्ता०४र्णाम् | अनन्तरसमये सम्यक्त्वसंयमौ युगपत्प्रतिपित्सवो मिथ्यादृशः | समच-वज्रर्षभयोः | अल्पायुषोतिसंक्लिष्टाःसंज्ञिपंचेन्द्रियाःदेहस्थाः |
| | | मध्यसंस्था०४र्णाम् | दीर्घायुषोऽसंज्ञिपंचेन्द्रिया भवाद्यसमये |

| | | | |
|---|---|---|---|
| हुण्डक-उप०-साधा० | दीर्घायुष सूक्ष्माः भवाद्यसमये | पराघातस्य | शीघ्रपर्याप्ताल्पायुषोऽतिसंक्लिष्टसूक्ष्माः पर्याप्त्यन्त्यसमये |
| मध्यसंहनन ४ नाम् | देवस्थाः पूर्वकोट्यायुर्मनुष्याः | | |
| सेवार्तस्य | द्वीन्द्रियाः दीर्घायुरन्ते | आतप-उद्योतयोः | देहपर्याप्त्याद्यसमये संक्लिष्टाः पृथ्वीकायिकाः |
| मृदु-लघ्वोः | तत्प्रायोग्यविशुद्धाः सविपर्येन्द्रियाः [अनाहारका गत्यन्तराले] | जिननाम्नः | आयोजिकाकरणादर्वाक्समये तीर्थकराः |
| | | कुवर्णादि७-अस्थिर-अशुभानाम् [९] | १३ मान्ते |
| तै०७-शुभवर्णादि ९ अगु०-स्थिर०-शुभ-निर्माणानाम् (२०) | भवान्तरालवर्तिनः मिथ्यादृशः | गुरु-कर्कशयोः | मथिमहारसमये सर्वज्ञाः समुद्घातगताः |
| | | ३४ उत्कर्षेणाणाम् | मध्यमपरिणामाः तद्बन्धयन्तः सर्वेऽपि जीवाः |

हुंडोवघायसाहारणाण सुहुमा सुदीह पज्जत्तो । परघाए लहु पज्जो आयावुज्जोय तज्जोगो ॥७७॥

(स्वो०)—हुण्डोपघातसाधारणानां सूक्ष्मजीवः दीर्घस्थितिरतिविशुद्धः पर्याप्तः मन्दोदीरणां करोति । पराघाते लघुपर्याप्त'—शीघ्रपर्याप्त', आतपोद्योतयोस्तदुदययोग्यः पृथिवीकायिको जघन्यानुभागोदीरणां करोतीति गाथार्थः ॥७७॥

(मलय०)—हुण्डसंस्थानोपघातसाधारणनाम्नां सूक्ष्मैकेन्द्रियः सुदीर्घस्थितिकोऽतिविशुद्धः पर्याप्तो जघन्यानुभागोदीरणां करोति । तथा स एव सूक्ष्मैकेन्द्रियः शीघ्र पर्याप्तोऽतिसंक्लिष्टः पर्याप्तिचरमसमये वर्त्तमानः पराघातनाम्नो जघन्यानुभागोदीरणास्वामी । तथा आतपोद्योतनाम्नोस्तद्योग्यस्तदुदययोग्यः पृथिवीकायिकः शरीरपर्याप्त्या पर्याप्तः प्रथमसमये वर्त्तमानः संक्लिष्टो जघन्यानुभागोदीरकः ॥७७॥

छेवट्ठस्स बिइंदी बारसवासाउ मयउलहुयाणं । सण्णि विसुद्धाणाहारगो य पत्तेयमुरलसमं ॥७८॥

(स्वो०)—चरमसंहननस्य द्वीन्द्रियो द्वादशवर्षायुः द्वादशवर्षे जघन्यामनुभागोदीरणां करोति । मृदुलघ्वोः संज्ञी पञ्चेन्द्रियोऽति विशुद्धोऽनाहारको मन्दोदीरणां करोति । प्रत्येकमौदारिकेण समं मन्तव्यमिति गाथार्थः ॥७८॥

(मलय०)—द्वादशवर्षायुर्द्वीन्द्रियो द्वादशे वर्षे वर्त्तमानः सेवार्त्तसंहननस्य जघन्यानुभागोदीरणास्वामी । तथा मृदुलघुस्पर्शयोः संज्ञिपञ्चेन्द्रियः स्वभूमिकानुसारेणातिविशुद्धोऽनाहारको जघन्यानुभागोदीरणास्वामी । तथा प्रत्येकमौदारिकसमं औदारिकस्येव प्रत्येकनाम्नोऽपि सूक्ष्मैकेन्द्रिय उदयप्रथमसमये वर्त्तमानो जघन्यानुभागोदीरको वक्तव्य इत्यर्थः ॥७८॥

कक्खडगुरूण मंथे विणियट्टे णामअसुहधुवियाणं । जोगंतंमि नवण्हं तित्थस्साउज्जियाइंमि ॥७९॥

(स्वो०)—कर्कशगुरुस्पर्शयोर्मन्थे—मन्थानके विनिवृत्ते मन्दोदीरणा । नामाशुभध्रुवोदयानां नवानां नीलकृष्णदुर्गन्धतिक्तकटुशीतरूक्षास्थिराशुभाख्यानां सयोग्यन्तसमये मन्दोदीरणा, तस्यैव सर्वविशुद्धत्वात् । तीर्थकरनाम्नः 'आउज्जियाइंमि'त्ति—आङ्मर्यादया योजनं आयोजनम्, तच्चातिशुभयोगानां आयोजनमेवायोजिका, आयोजिकायाः करणं आयोजिकाकरणं, तदादौ प्रथमं मन्दोदीरणां करोति, किमुक्तं भवति, तस्यातिविशुद्धत्वादन्यत्र न मन्दोदीरणेति गाथार्थः ॥७९॥

(मलय०)—कर्कशगुरुस्पर्शयोः समुद्घातान्निवर्त्तमाने 'मथे'—मथि संहारसमये जघन्यानुभागोदीरणा । तथा नवानां नामाशुभध्रुवोदयानां प्रकृतीनां—नीलकृष्णदुरभिगन्धतिक्तकटुशीतरूक्षास्थिराशुभाख्यानां योग्यन्ते—सयोगिकेवलिचरमसमये जघन्यानुभागोदीरणा,

तस्यैव सर्वविशुद्धत्वात् । तथा तीर्थकरनाम्न 'आउजियादिम्मि'त्ति–आयोजिकाकरणादौ, आयोजिकाकरणं नाम केवलिसमुद्घातादर्वाग्भवति, तत्राऽऽङ्मर्यादायां, आ मर्यादया केवलिदृष्टया योजनं व्यापारणं आयोजनं, तच्चातिशुभयोगानामवसेयं, आयोजनमायोजिका, तस्याः करणमायोजिकाकरणं तदादौ, यावच्चाद्यापि तदारभ्यते अनन्तरे च समये प्राप्स्यते तदा जघन्यानुभागोदीरणा भवति, आयोजिकाकरणे तु प्रभूतानुभागोदीरणा प्रवर्तते इति तदादावित्युक्तम् ॥७९॥

सेसाणं वेयंतो मज्झिमपरिणामपरिणओ कुणइ । पच्चयसुभासुभा वि य चिंतिय णेओ विवागो य ॥८०॥

(स्वो०)—उक्तशेषाणां प्रकृतीनां चतुस्त्रिंशतो नीचोच्चसातासातोच्छ्वासगत्यानुपूर्विकाविहायोगतिजातीनां त्रसबादरपर्याप्तस्थावरसूक्ष्मापर्याप्तसुभगदुर्भगसुस्वरदुःस्वरादेयानादेययशोऽयशःकीर्त्याख्यानां यः कश्चिदनुभविता मध्यमपरिणामः स मन्दोदीरणां करोति। प्रत्ययाः शुभाशुभपरिणामभवाख्या', शुभताऽशुभता वा प्रकृतीनां, चशब्दाद्विपाकः पुद्गलादिश्चतुर्विधः, प्रत्ययशुभाशुभविपाकेभ्यः सप्रमाणप्रकृतिस्वरूपमुपलभ्य स्वबुद्ध्या स्वामित्व उदीरणा विपाकश्च ज्ञेयो–मन्तव्य इति गाथार्थः ॥८०॥

(मलय०)—शेषाणां सातासातवेदनीयगतिचतुष्टयजातिपञ्चकानुपूर्वीचतुष्टयोच्छ्वासविहायोगतिद्विकत्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तसुभगदुर्भगसुस्वरदुःस्वरादेयानादेययशःकीर्त्ययशःकीर्तिनीचैर्गोत्रोच्चैर्गोत्राख्यानां चतुस्त्रिंशत्संख्यानां प्रकृतीनां तत्तत्प्रकृत्युदये वर्तमानाः सर्वेऽपि जीवा मध्यमपरिणामपरिणता जघन्यानुभागोदीरणास्वामिनो भवन्ति, सम्प्रति सर्वासां प्रकृतीनां सामान्येन जघन्योत्कृष्टानुभागोदीरणास्वामित्वपरिज्ञानार्थमुपायोपदेशमाह–'पच्चय'इत्यादि । प्रत्यय'–परिणामप्रत्ययो भवप्रत्ययश्च, तथा प्रकृतीनां शुभत्व

१ "विपागो" इति पाठः प्र०

मशुभत्वं च, अपिचशब्दात् विपाकश्चतुर्विधः पुद्गलविपाकादिः, एतत्सम्यक् चिंतयित्वा-परिभाव्य विपाकी-जघन्योत्कृष्टानुभागोदीरणास्वामी यथावद् ज्ञेयोऽवगन्तव्यः, तथाहि-परिणामप्रत्ययानुभागोदीरणा प्राय उत्कृष्टा भवति, भवप्रत्यया तु जघन्या, शुभानां च संक्लेशे जघन्यानुभागोदीरणा, अशुभानां च विशुद्धौ, विपर्यासे तूत्कृष्टेत्यादि परिभाव्य तत्तत्प्रकृत्युदयवतां जघन्योत्कृष्टानुभागोदीरणास्वामित्वमवगन्तव्यम् ॥८०॥

उक्तानुभागोदीरणा, प्रदेशोदीरणामाह। तस्यादावेव साद्यनादिप्ररूपणोच्यते-

**पंचण्हमणुक्कोसा तिहा चउद्धा उ वेयमोहाणं। सेसावियप्पा दुविहा सव्वविगप्पा उ आउस्स ॥८१॥**

(स्वो०)—पञ्चानां ज्ञानदर्शनावरणान्तरायनामगोत्राख्यानां अनुत्कृष्टा प्रदेशोदीरणा सादिवर्जा त्रिधा भवति, कथं? अमीषां पञ्चानां कर्मणामात्मीयात्मीयोदीरणान्ते गुणितकर्मांशमधिकृत्योत्कृष्टा प्रदेशोदीरणा लभ्यते, गुणिताः प्रभूतीकृताः कर्मांशाः-कर्मपरमाणवः येन स गुणितकर्मांश इति, सा च साद्यध्रुवा, तदन्यानुत्कृष्टा, तस्या आदिर्नास्ति ध्रुवोदीरणत्वात्, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे पूर्वोक्ते। चतुर्विधा वेदनीयमोहनीययोरनुत्कृष्टा प्रदेशोदीरणा, कथं?, वेदनीयस्य प्रमत्तोऽप्रमत्ताभिमुखोऽतिविशुद्ध उत्कृष्टप्रदेशोदीरणां करोति। मोहनीयस्यात्मीयोदीरणान्ते उत्कृष्टा भवति, सा च सादिरध्रुवा, प्रमत्तोपशान्तस्थानयोः प्रतिपततामनुत्कृष्टा प्रदेशोदीरणा, सा च सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत्। शेषविकल्पा द्विधा अमीषां, योऽतिसक्लिष्टो मिथ्यादृष्टिस्तस्मिन् जघन्या, सा च सादिरध्रुवा, तत्परिणामात् च्युतस्याजघन्या, सापि सादिरध्रुवा, जघन्यायाः भूयः सद्भावात्, उत्कृष्टापि भणितैव। आयुषः सर्वेऽपि विकल्पाः द्विधा भवन्ति, अध्रुवोदयित्वाद् भाविता एवेति गाथार्थः ॥८१॥

(मलय०)—तदेवमुक्तानुभागोदीरणा, सम्प्रति प्रदेशोदीरणावसरः, तत्र च द्वावर्थाधिकारौ, तद्यथा—साद्यादिप्ररूपणा, स्वामित्वप्ररूपणा च। साद्यादिप्ररूपणा च द्विधा—मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र प्रथमतो मूलप्रकृतिविषयां साद्यादिप्ररूपणां चिकीर्षुराह—पञ्चानां ज्ञानावरणदर्शनावरणान्तरायनामगोत्राख्यानां मूलप्रकृतीनामनुत्कृष्टा प्रदेशोदीरणा त्रिधा—त्रिप्रकारा, तद्यथा—अनादिर्ध्रुवा अध्रुवा च। तथाहि—एतासामुत्कृष्टा प्रदेशोदीरणा गुणितकर्मांशे स्वस्वोदीरणापर्यवसाने लभ्यते, सा च सादिरध्रुवा च, ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चानादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे अभव्यभव्यापेक्षया। तथा वेदनीयमोहनीययोरनुत्कृष्टा प्रदेशोदीरणा चतुर्धा—चतुष्प्रकारा, तद्यथा—सादिरनादिर्ध्रुवा अध्रुवा च। तथाहि—वेदनीयस्योत्कृष्टा प्रदेशोदीरणा प्रमत्तसंयतस्याऽप्रमत्तभावाभिमुखस्य सर्वविशुद्धस्य, मोहनीयस्य पुनः स्वोदीरणापर्यवसाने सूक्ष्मसंपरायस्य, ततो द्वयोरप्येषा साद्यध्रुवा, ततोऽन्या सर्वाप्यनुत्कृष्टा, सापि चाप्रमत्तगुणस्थानकात्प्रतिपततो वेदनीयस्य, उपशान्तमोहगुणस्थानकाच्च प्रतिपततो मोहनीयस्य सादिः, तत्स्थानमप्राप्तस्य द्वयोरप्यनादिः, ध्रुवाध्रुवे पूर्ववत्। 'सेसविगप्पा दुविह'त्ति- एतासां सप्तानामपि मूलप्रकृतीनां शेषा उक्तव्यतिरिक्ता विकल्पा जघन्याजघन्योत्कृष्टरूपा द्विधा—द्विप्रकारास्तद्यथा—साद्यधुवाश्च। तथाहि—एतासां सप्तानामपि संक्लिष्टे मिथ्यादृष्टौ जघन्या प्रदेशोदीरणा, सा च सादिरध्रुवा च, संक्लेशपरिणामाच्च च्युतस्य मिथ्यादृष्टेरप्यजघन्या, ततः सापि सादिरध्रुवा च, उत्कृष्टा च प्रागेव भाविता। आयुषः सर्वेऽपि विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टा द्विविधास्तद्यथा—साद्यध्रुवाश्च, सा च साद्यध्रुवता अध्रुवोदीरणत्वादवसेया ॥८१॥

उत्तरप्रकृतीनामाह—

तिविहा धुवोदयाण मिच्छस्स चउव्विहा अणुक्कोसा। सेसविगप्पा दुविहा सव्वविगप्पा य सेसाणं ॥८२॥

(स्वो०)—ध्रुवोदयप्रकृतीनां सप्तचत्वारिंशतां त्रिधा सादिवर्जा, मिथ्यात्वस्य चतुर्विधानुत्कृष्टा प्रदेशोदीरणा भवति, कथं ? ज्ञानान्तरायदशकदर्शनचतुष्काणां चतुर्दशप्रकृतीनां गुणितकर्मांशः क्षीणकषायस्योदीरणान्तसमये उत्कृष्टा प्रदेशोदीरणा, सा च सादिरध्रुवा, नामध्रुवोदयानां त्रयस्त्रिंशतां गुणितकर्मांशः सयोगिकेवलिनोऽन्तसमये उत्कृष्टा प्रदेशोदीरणा, सापि सादिरध्रुवा, तदन्या अनुत्कृष्टा, अस्या आदिर्नास्ति ध्रुवोदयत्वात्तेषां चाप्रतिपातत्वात्, तत्स्थानमप्राप्तानामनादिः, ध्रुवाध्रुवे प्राग्वत् । मिथ्यात्वस्य चतुर्विधा, कथं ? मिथ्यादृष्टिः ससंयमं सम्यक्त्वं द्वितीयसमये प्रतिपत्स्यते तस्मिन्नवसरे उत्कृष्टा प्रदेशोदीरणा, सा च सादिरध्रुवा, तस्यैव सम्यक्त्वात् प्रतिपततोऽनुत्कृष्टा, सा च सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । शेषविकल्पाः—अनुक्तभेदा आसां द्विविधा, यतो जघन्या प्रदेशोदीरणा मिथ्यादृष्टौ सर्वसंक्लिष्टे भवत्यतः सादिरध्रुवा, अजघन्याऽपि साद्यध्रुवा, तत्परिणामस्यानित्यत्वात् । उत्कृष्टा भणितैव । सर्वविकल्पाः शेषाणामध्रुवोदयानां साद्यध्रुवा, अध्रुवत्वादेव भावितेति गाथार्थः ॥८२॥

(मलय०)—सम्प्रत्युत्तरप्रकृतीनां साद्यादिप्ररूपणार्थमाह—ध्रुवोदयानां सप्तचत्वारिंशत्संख्यानामनुत्कृष्टा प्रदेशोदीरणा त्रिविधा—त्रिप्रकारा, तद्यथा—अनादिर्ध्रुवा अध्रुवा च। तथाहि—पञ्चविधज्ञानावरणपञ्चविधान्तरायचतुर्विधदर्शनावरणरूपाणां चतुर्दशप्रकृतीनां क्षीणकषायस्य गुणितकर्मांशस्य स्वस्वोदीरणापर्यवसाने उत्कृष्टा प्रदेशोदीरणा सा च सादिरध्रुवा च, ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चानादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे पूर्ववत्। तथा तैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणनाम्नां त्रयस्त्रिंशत्संख्यानां प्रकृतीनां गुणितकर्मांशस्य सयोगिकेवलिनश्चरमसमये उत्कृष्टा प्रदेशोदीरणा, सा च सादिरध्रुवा च, ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चानादिः, ध्रुवोदीरणत्वात्, तासां ध्रुवाध्रुवे पूर्ववत्। तथा मिथ्यात्वस्यानुत्कृष्टा प्रदेशोदीरणा चतुर्विधा, तद्यथा—सादिरनादिर्ध्रुवा अध्रुवा ॥१४८॥

## अथ प्रदेशोदीरणायाः साद्यादिभङ्गयन्त्रम् ।

( मूलप्रकृतिषु )

| प्रकृतयः | अजघन्यः | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | अनादिः | ध्रुवः | सादिः | अध्रुवः |
| ज्ञानावरणादिपञ्चकस्य | संक्लेशापरावृत्तिता, मिथ्यादृशाम् | सं०परावृत्तिता, मिथ्या० | संक्लेशपरावृत्तिता, मिथ्यादृशाम् | सं०परा० मिथ्यादृशाम् | ० | भव्यानाम् | आदेरभावात् | अभव्यानाम् | गुणितकर्मांशानां स्वस्वोदीरणान्ते | सादित्वात् |
| वेदनीयस्य | ” | ” | ” | ” | प्रमत्तात्पतताम् | ” | साद्यप्राप्तानाम् | ” | अप्रमत्तोन्मुख प्रमत्तानां | ” |
| मोहनीयस्य | ” | ” | ” | ” | ११ तः पतताम् | ” | ” | ” | क्ष० १० मानां स्वस्वोदीरणान्ते | ” |
| आयुषः | अध्रुवत्वात् | अध्रु० | अध्रुवत्वात् | अध्रु० | अध्रुवत्वात् | अध्रु० | ० | ० | अध्रुवत्वात् | अध्रुवत्वात् |

( उत्तर प्रकृतिषु )

| मिथ्यात्वस्य | संक्लेशपरावृत्तितः मिथ्यादृशाम् | सं०परा० मिथ्या० | संक्लेशपरावृत्तितः मिथ्यादृशाम् | सं०परा० मिथ्या० | सम्यक्त्वात्पतताम् | भव्यानाम् | साद्यप्राप्तानाम् | अभव्यानाम् | अनंतरसमये ससम्यक्त्वसंयममुत्पादकानां १ सामयिकत्वात् | सादित्वात् |
|---|---|---|---|---|---|---|---|---|---|---|
| ज्ञा० ५–दर्श० ४–विघ्न ५ नाम् | " | " | " | " | ० | " | आदेरभावात् | " | गुणित० १२ मानां स्वस्वोदीरणान्ते | " |
| तै० ७-वर्णादि २०-स्थिर०-अस्थिर०-शु०-अशु०-अगु०-निर्मा० (३३) | " | " | " | " | ० | " | " | " | गुणितकर्मांशानां १३ मान्ते | " |
| ११० उक्तशेषाणाम् | अध्रुवोदीरणत्वात् | अध्रुवो० | अध्रुवोदीरणत्वात् | अध्रुवोदी० | अध्रुवोदी० | अध्रुवो० | ० | ० | अध्रुवोदी० | अध्रुवोदी० |

च। तथाहि–मिथ्यादृष्टेः ससंयमं सम्यक्त्वं प्रतिपत्तुकामस्य मिथ्यात्वस्योत्कृष्टा प्रदेशोदीरणा, सा च सादिरध्रुवा च, ततोऽन्या सर्वाप्य-
नुत्कृष्टा, सापि च सम्यक्त्वात्प्रतिपततो भवतीति सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत्। 'सेसविगप्पा दुविहं' त्ति-
उक्तशेषविकल्पा जघन्याजघन्योत्कृष्टरूपा द्विविधास्तद्यथा–साद्योऽध्रुवाश्च। तथाहि–सर्वासामप्युक्तप्रकृतीनामतिसंक्लिष्टपरिणामे मि-
थ्यादृष्टौ जघन्या प्रदेशोदीरणा लभ्यते, अतिसंक्लिष्टपरिणामप्रच्यवने चाजघन्या, ततो द्वे अपि साद्यध्रुवे, उत्कृष्टा च प्रागेव भा-

विता । शेषाणां चोक्तव्यतिरिक्तानां प्रकृतीनां दशोत्तरशतसंख्यानां सर्वेऽपि विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टा द्विविधास्तद्यथा-सादयोऽध्रुवाश्च, सा च साद्यध्रुवता अध्रुवोदीरणत्वादवसेया ॥८२॥

अणुभागुदीरणाए होंति जहन्नसामिणो जे उ । जेट्ठपएसोदीरणसामी ते घाइकम्माणं ॥८३॥

(स्वो०)—अनुभागोदीरणायां जघन्यायां ये पूर्वं स्वामिनोऽभिहिताः त एवोत्कृष्टप्रदेशोदीरणायां स्वामिनो घातिकर्म समाश्रित्य भवन्ति । अवधिवर्जज्ञानावरणान्तरायदर्शनत्रिकप्रकृतीनां समयाधिकावलिकाशेषछद्मस्थकाले गुणितकर्मांशे जीवे उत्कृष्टा प्रदेशोदीरणा भवति । अवधिद्विकस्य तस्यैवालब्धिमतो भवति, लब्धिमतो यतः क्षीणशेषाः स्तोकाः सम्भवन्ति । निद्राप्रचलयोरुपशान्तकषाये, स्त्यानर्द्धित्रिकस्य प्रमत्तेऽप्रमत्तत्वप्रतिपत्त्युपान्त्यसमये, मिथ्यात्वानन्तानुबन्धिकषायाणां ससंयमं सम्यक्त्वं प्रतिपद्यमानस्य, सम्यग्मिथ्यात्वस्य सम्यक्त्वप्रतिपत्त्युपान्त्यसमये, अप्रत्याख्यानावरणानां अविरतस्य संयमप्रतिपत्तिकाले, प्रत्याख्यानावरणानां देशविरतस्य संयमप्रतिपत्तिकाले, सञ्ज्वलनक्रोधमानमायानां उद्वेदकस्य क्षयान्तसमये, वेदत्रिकसञ्ज्वलनलोभानां उद्वेदकस्य समयाधिकावलिकाशेषे काले क्षपकस्योत्कृष्टा प्रदेशोदीरणा स्यात्, हास्यादिषट्कस्य अपूर्वकरणस्यान्त्यसमये । गुणितकर्मांशः सर्वत्र भणितव्य इति गाथार्थः ।

(मलय०)—कृता साद्यादिप्ररूपणा, संप्रति स्वामित्वमभिधानीयं, तच्च द्विधा-उत्कृष्टप्रदेशोदीरणास्वामित्वं जघन्यप्रदेशोदीरणास्वामित्वं च । तत्र प्रथमत उत्कृष्टप्रदेशोदीरणास्वामित्वमाह—घातिकर्मणामनुभागोदीरणाया जघन्याया ये पूर्वं स्वामिनोऽभिहितास्त एव घातिकर्मणामुत्कृष्टप्रदेशोदीरणाया अपि स्वामिनो वेदितव्याः, अपि चेदमतिसंक्षिप्तमुक्तमिति विशेषतो भाष्यते-अवधिज्ञानावरणवर्जानां चतुर्णां ज्ञानावरणानां चक्षुरचक्षुःकेवलदर्शनावरणानां च क्षीणकषायस्य गुणितकर्मांशस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्योत्कृष्टा प्रदेशोदीरणा, अवधिज्ञानावरणावधिदर्शनावरणयोः पुनरवधिलब्धिरहितस्य क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितावुत्कृ-

ष्टा प्रदेशोदीरणा, निद्राप्रचलयोरुपशान्तकषायस्य, प्रमत्तसंयते अप्रमत्तभावाभिमुखे स्त्यानर्द्धित्रिकस्य, मिथ्यात्वानन्तानुबन्धिकषायाणामनन्तरसमये सम्यक्त्वं संयमसहितं प्रतिपत्तुकामस्य मिथ्यादृष्टेश्चरमसमये, सम्यग्मिथ्यात्वस्य सम्यक्त्वप्रतिपत्त्युपान्त्यसमये, अप्रत्याख्यानावरणकषायाणामविरतसम्यग्दृष्टेरनन्तरसमये सर्वविरतिं प्रतिपत्तुकामस्य, प्रत्याख्यानावरणकषायाणां देशविरतस्यानन्तरसमये सर्वविरतिं प्रतिपत्तुकामस्य, संज्वलनक्रोधमानमायालोभानां तत्तद्वेदकस्य स्वोदयपर्यवसाने, वेदत्रयसंज्वलनलोभयोस्तत्तद्वेदकस्य क्षपकस्य समयाधिकावलिकाचरमसमये, हास्यादिषट्कस्यापूर्वकरणगुणस्थानकचरमसमये, सर्वत्र गुणितकर्मांशस्योत्कृष्टा प्रदेशोदीरणा वेदितव्या ॥१०३॥

**वेयणियाण पमत्तो अपमत्तत्तं जया उ पडिवज्जे । संघयणपणगतणुदुगुज्जोयाणं तु अपमत्तो ॥८४॥**

(स्वो०)—वेदनीययोः सातासातरूपयोः प्रमत्तो अप्रमत्तत्वप्रतिपत्त्यनन्तरसमये उत्कृष्टां प्रदेशोदीरणां करोति, तदुदीरकाणां विशुद्धत्वात् । अशुभसंहननपञ्चकवैक्रियाहारकसप्तकयोरुद्योतस्य च अप्रमत्तोऽतिविशुद्ध उत्कृष्टप्रदेशोदीरणास्वामीति गाथार्थः ॥८४॥

(मलय०)—वेदनीययोः सातासातरूपयोः प्रमत्तो यदानन्तरसमये अप्रमत्तत्वं प्रतिपद्येत–प्रतिपत्स्यते, स उत्कृष्टप्रदेशोदीरणास्वामी, तस्य सर्वविशुद्धत्वात् । तथा प्रथमसंहननवर्जशेषसंहननपञ्चकवैक्रियाहारकरूपशरीरसप्तकोद्योतनाम्नामप्रमत्त उत्कृष्टप्रदेशोदीरणास्वामी ॥१०४॥

**तिरियगईए देसो अणुपुव्विगईण खाइओ सम्मो । दुभगाईनीआणं विरई अब्भुट्ठिओ सम्मो ॥८५॥**

(स्वो०)—तिर्यग्गतेर्देशविरतः, चतसृणामानुपूर्विकाणां देवनरकगत्योश्च क्षायिकसम्यग्दृष्टिः। दुर्भगादिनीचानां तु विरतिं प्रती तुमभ्युत्थितः सम्यग्दृष्टिरुत्कृष्टां प्रदेशोदीरणां करोति, तदुदीरकेषु विशुद्धत्वादिति गाथार्थः ॥८५॥

(मलय०)—तिर्यग्गतेरुत्कृष्टप्रदेशोदीरणास्वामी देशविरतो वेदितव्यः। तथा चतसृणामानुपूर्वीणां तस्यां तस्यां गतौ तृतीसमये, देवनरकगत्योश्च क्षायिकसम्यग्दृष्टिरुत्कृष्टप्रदेशोदीरणास्वामी। तथा यो विरतिमभ्युत्थितोऽनन्तरसमये संयमं प्रतिपत्स्यते स एवाविरतिसम्यग्दृष्टिर्दुर्भगादीनां दुःस्वरस्य वक्ष्यमाणत्वात् दुर्भगानादेयायशःकीर्तीनां नीचैर्गोत्रस्य चोत्कृष्टप्रदेशोदीरकः ॥१०५॥

देवनिरयाउगाण जहण्णजेट्ठट्ठिई गुरुअसाए । इयराऊणं इयरा अट्ठमवासेट्ठवासाऊ ॥८६॥

(स्वो०)—देवायुषो देवः सर्वजघन्यस्थितिः, नरकायुषो नारकः सर्वोत्कृष्टस्थितिः,उभावपि गुरुदुःखावुत्कृष्टप्रदेशोदीरकौ भवतः। इतरयोस्तिर्यग्मनुष्यायुषोस्त एवाष्टमवर्षे गुरुदुःखा अष्टवर्षायुषः उत्कृष्टां प्रदेशोदीरणां कुर्वन्ति, आयुषो वेदनायाः प्रभूतपरमाणवः क्षरन्तीति गाथार्थः ॥८६॥

(मलय०)—देवनारकायुषोर्यथाक्रमं देवनारकौ जघन्योत्कृष्टस्थितिकौ गुरुदुःखोदये वर्तमानौ उत्कृष्टप्रदेशोदीरकौ वक्तव्यौ। एतदुक्तं भवति–देवो दशवर्षसहस्रायुःस्थितिको गुरुदुःखोदये वर्तमानो देवायुष उत्कृष्टप्रदेशोदीरकः, तथा नैरयिकस्त्रयस्त्रिंशत्सागरोपमायुःस्थितिको गुरुदुःखोदये वर्तमानो नारकायुष उत्कृष्टप्रदेशोदीरकः, प्रभूतं हि दुःखमनुभवन् प्रभूतान् पुद्गलान् परिशाटयतीति तदुपादानम्। इतरायुषोस्तिर्यग्मनुष्यायुषोर्यथासंख्यं तिर्यङ्मनुष्यौ अष्टवर्षायुषो–अष्टमे वर्षे वर्तमानौ गुरुदुःखोदययुक्तावुत्कृष्टप्रदेशोदीरणास्वामिनौ भवतः ॥१०६॥

एगंतेणं चिय जा तिरिक्खजोग्गाउ ताण ते चेव। नियनियनामविसिट्ठा अपज्जनामस्स मणु सुद्धो ॥८७॥

(स्वो०)—एकान्तेनावश्यं याः प्रकृतयः तिर्यग्जीवानामेवोदयं प्रति योग्यास्तासां त एवोदीरणां कुर्वन्ति, 'निजनिजनाम' इति तत्प्रकृत्यभिधानविशिष्टाः, एकेन्द्रियस्थावरयोः बादरः, आतपस्य खरपृथ्विकायिकः, सूक्ष्मस्य पर्याप्तप्रत्येकसूक्ष्मः, साधारणविकलजातीनां तन्नामानः पर्याप्ताः, सर्वेऽपि विशुद्धाः उत्कृष्टां प्रदेशोदीरणां कुर्वन्ति। अपर्याप्तनाम्नो मनुष्योऽपर्याप्तान्तसमय अतिविशुद्ध इति गाथार्थः ॥८७॥

(मलय०)—एकान्तेनावश्यंतया तिरश्चामेवोदयं प्रति या योग्याः प्रकृतयस्तासामेकेन्द्रियजातिद्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजात्यातपस्थावरसूक्ष्मसाधारणनाम्नामष्टानां त एव निजनिजनामविशिष्टाः, यथैकेन्द्रियजातिस्थावरनाम्नोर्बादरैकेन्द्रियः पृथिवीकायिकः सर्वविशुद्धः, आतपनाम्नः खरबादरपृथिवीकायिकः, सूक्ष्मस्य पर्याप्तसूक्ष्मः, साधारणविकलेन्द्रियजातिनाम्नां तत्तन्नामानः, सर्वविशुद्धा उत्कृष्टप्रदेशोदीरणास्वामिनः। तथा अपर्याप्तनाम्नः संमूर्च्छिमो मनुष्योऽपर्याप्तश्चरमसमये प्रवर्त्तमानः सर्वविशुद्ध उत्कृष्टप्रदेशोदीरणास्वामी ॥१०७॥

जोगंतुदीरणाणं जोगंते दुसरसुसरसासाणं। नियगंते केवलिणं सव्वविसुद्धस्स सेसाणं ॥८८॥

१ अत्र सम्यक्त्वोत्कृष्टप्रदेशोदीरणास्वामी मूलटीकाकृद्भिर्नोक्तः। विचार्यमाणा सा सम्यक्त्वस्योत्कृष्टप्रदेशोदीरणा यदा सर्वसंक्रमेण सम्यक्त्वे मीश्रं संक्रान्तं तदोत्कृष्टप्रदेशसत्ताकत्वेनावलिकानन्तरं संभाव्यते। स एव तस्याः स्वामीति चिन्तयन्तु कृतधियः ॥

(स्वो०)—सयोग्यन्तसमयोदीरणानां द्वाषष्टिप्रकृतीनां—नामध्रुवोदयानां त्रयस्त्रिंशतामौदारिकसप्तकसंस्थानषट्कविहायोगतिद्विकप्रथमसंहननोपघातपराघातपञ्चेन्द्रियजातिमनुष्यगतित्रस्वेप्रत्येकतीर्थङ्करत्रसत्रसुभगादित्रिकोच्चैर्गोत्राणां च, सयोग्यन्ते उत्कृष्टा प्रदेशोदीरणा। दुःस्वरसुस्वरयो' स्वरनिरोधे, उच्छ्वासस्य उच्छ्वासनिरोधे केवलिनो भवन्ति, यतस्तदुदीरकाणां स एव विशुद्धः, गुणितकर्मांशः सर्वत्रोत्कृष्टप्रदेशोदीरणायां वक्तव्यम्। 'सेसाणं'ति—यासां नोक्तो विशुद्धः तासां वक्तव्य इति गाथार्थः ॥८८॥

(मलय०)—योग्यन्तोदीरकाणां योगी—सयोगिकेवली अन्ते—चरमसमये उदीरको यासां ता योग्यन्तोदीरकास्तासां मनुजगतिपञ्चेन्द्रियजातितैजससप्तकौदारिकसप्तकसंस्थानषट्कप्रथमसंहननवर्णादिविंशत्यगुरुलघूपघातपराघातविहायोगतिद्विकत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभसुभगादेययशःकीर्तिनिर्माणतीर्थकरोच्चैर्गोत्ररूपाणां द्विषष्टिसंख्यानां सयोगिकेवली चरमसमये उत्कृष्टप्रदेशोदीरकः। तथा सुस्वरदुःस्वरयोः स्वरनिरोधकाले, उच्छ्वासनाम्न उच्छ्वासनिरोधकाले, सयोगिकेवलिनामुत्कृष्टप्रदेशोदीरणा। अस्यां चोत्कृष्टप्रदेशोदीरणायां सर्वत्र गुणितकर्मांशो वेदितव्यः। शेषाणां च प्रकृतीनां यासामुत्कृष्टप्रदेशोदीरणास्वामी नोक्तः तासामप्युत्कृष्टप्रदेशोदीरणा सर्वविशुद्धस्य वेदितव्या ॥८८॥

उक्तमुत्कृष्टस्वामित्वम्। जघन्यस्वामित्वमाह—

तप्पाओगाकिलिट्ठा सव्वाण होंति खवियकम्मंसा। ओहीण तव्वेई मदाऍ सुही य आऊण ॥८९॥

(स्वो०)—ये यासां प्रकृतीनामुदीरकास्तदुदीरकाणां अतिसंक्लिष्टाः ते तासां स्वामिनो मन्दायाः—जघन्यप्रदेशोदीरणायाः क्षपितकर्मांशाः स्तोकपरमाणुसत्कर्माण इति। तानेवाह—अवधिवर्जज्ञानावरणदर्शनत्रिकमोहनीयवेदनीयपञ्चत्रिंशत्प्रकृतीनां मिथ्यादृष्टिः

## ॥ उत्कृष्टप्रदेशोदीरणास्वामिनः ॥

| प्रकृतयः | स्वामिनः | प्रकृतयः | स्वामिनः |
|---|---|---|---|
| ज्ञा० ४ दर्शा० ३ | गु०क० श्रुतकेवलिन इतरे वा १२ मे | देवायुषः | १०००० वर्षस्थितिका अतिदुःखिनो देवाः |
| अवधिद्विकस्य | गु०क० अनवधिलब्धिकाः | नरकायुषः | ३३ सागर० स्थितिका अतिदुःखिनो नारकाः |
| निद्राद्विकस्य | गु०क० उपशांतकषायाः | तिर्यग्नरायुषोः | अष्टमवर्षेऽतिदुःखिनोऽष्टवर्षायुस्तिर्यग्नराः |
| स्त्यान० त्रिकस्य | अप्रमत्तोन्मुखाः प्रमत्ताः गु० कर्मांशाः | एके० स्था० | विशुद्धाः बादरपृथ्विकायाः |
| मिथ्या०, अनन्ता० | अनन्तरसमये ससम्यक्त्वसंयममुत्पादकाः | आतपस्य | खरपृथ्विकायाः |
| ४र्णाम् | गु०क० मिथ्यादृशः | सूक्ष्मस्य | पर्याप्तसूक्ष्माः |
| मिश्रस्य | सम्यक्त्वप्राप्तिपूर्वानंतर समये गु०क०मिश्राः | साधा०-विकलेन्द्रिय ३ | विशुद्धाः पर्याप्ताः तदुदयवन्तः |
| अप्र० ४ | सर्वविरतिप्राप्ति पूर्वानंतर समये गु०क० ४र्थाः | अपर्याप्तस्य | अप०संमूर्छिमनराः अन्त्यसमये. |
| प्रत्या० ४ | अनन्तरोक्तविशेषणाः ५माः | तिर्यग्गतेः | विशुद्धाः देशविरतास्तिर्यञ्चः |
| संज्व० ३ | स्वस्वोदयान्ते गु० कर्मांशाः | आनुपूर्व्याः २ | गत्यन्तराले तृतीयसमये विशुद्धाः सम्यग्दृशः ) (पंचसंग्रहे क्षा० सम्य०) |
| वेद ३-सं० लोभानाम् | तत्तदुदयक्षपकाः गु०कर्मांशाः | नृतिर्यगानुपूर्व्योः | क्षायिकसम्यग्दृशः ते एव. |
| हास्यादि ६ | अपूर्वकरणान्तसमयवर्त्तिनः | देवनरकगत्योः | |
| वेदनीयद्विकस्य | अप्रमत्तोन्मुखाः प्रमत्ताः (अन्त्यसमये) | दुर्भगादि ४ नीचैर्गोत्रस्य | सर्वविरतिप्राप्तिपूर्वानन्तरसमये ४र्थाः |
| कुसंहनन ५ वै०७- | | स्वर १-उच्छ्वा० | स्वरनिरोधकाले सर्वज्ञाः |
| आहा० ७-उद्योतानाम् | गु०क० अप्रमत्ताः | विघ्नपञ्चकस्य | क्षीणमोहाः |
| | | ८२ उत्कृष्टानाम् | सयोगिकेवलिनः |

पर्याप्तोऽतिसंक्लिष्टो मन्दप्रदेशोदीरणास्वामी । निद्रापञ्चकस्य तत्प्रायोग्यसंक्लिष्टः संज्ञी पर्याप्तः स्वामी । सम्यक्त्वमिश्राभ्यां यदा मिथ्यात्वं गन्तुमना अतिसंक्लिष्टस्तदा तयोर्मन्दायास्तद्वेदी स्वामी। नामध्रुवोदयास्त्रयस्त्रिंशत् षट्संस्थानसंहननानि पञ्चेन्द्रियजातिः वैक्रियौदारिकसप्तकेऽन्तरायपञ्चकं गतिचतुष्कं सुभगदुर्भगादिचतुष्कं त्रसादिचतुष्कं विहायोगतिगोत्रद्विके उद्योतोच्छ्वासपराघातोपघाताः इत्येकोननवति प्रकृतीनां संज्ञी पर्याप्तोऽतिसंक्लिष्टो जघन्यायाः प्रदेशोदीरणायाः स्वामी । आहारसप्तकस्य तद्वेदी—तत्प्रायोग्यसंक्लिष्टः स्वामी । आयुषां सातवेदनीयोदये इति विशेषः, सुखमनुभवतः स्तोकाः परमाणवः क्षरन्ति, शुभायुषां दीर्घस्थितिका नरकायुषो जघन्यस्थितिकाः मन्दोदीरणास्वामिन इति । आनुपूर्वीणां भवान्तरतृतीयसमये, आतपस्य बादरपृथिवीकायिकः, एकेन्द्रियजातिस्थावरसाधारणानां बादरो जीवः, सूक्ष्मस्य सूक्ष्मोऽपर्याप्तस्यापर्याप्तमनुष्यो जघन्यस्थितिर्भवान्तसमये, विकलजातीनां तदभिधाना एव सर्वसंक्लिष्टा जघन्यस्थितिकाः भवान्त्यसमये जघन्यप्रदेशोदीरणा स्वामिन इति, तीर्थंकरस्य यावदायोजिकाकरणं न करोति, तावन्मन्दोदीरणास्वामी, अवधिज्ञानदर्शनयोस्तल्लब्धिमान् संक्लिष्टो मन्दोदीरणास्वामी यतोऽवधिद्विकमुत्पादयतः प्रभूताः पुद्गला क्षरन्तीति गाथार्थः ॥८९॥

समाप्तमुदीरणाकरणमिति ।

(मलय०)—उदेयमुक्तमुत्कृष्टप्रदेशोदीरणास्वामित्वम् । संप्रति जघन्यप्रदेशोदीरणास्वामित्वमाह—ये यासां प्रकृतीनामुदीरकास्तदुदीरकाणां च मध्येऽतिसंक्लिष्टास्ते तत्प्रायोग्यसंक्लिष्टास्तासां मन्दाया जघन्यप्रदेशोदीरणायाः क्षपितकर्मांशाः स्वामिनो वेदितव्याः, तद्यथा—अवधिज्ञानावरणवर्जज्ञानावरणचतुष्टयावधिदर्शनावरणवर्जदर्शनावरणत्रयपञ्चविंशतिविधचारित्रमोहनीयमिथ्यात्ववेदनीयद्विकानां मिथ्यादृष्टिः पर्याप्तोऽतिसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी, निद्रापञ्चकस्य तत्प्रायोग्यसंक्लिष्टः संज्ञी पर्याप्तः, सम्यक्त्ववेदी मिथ्यात्वं गन्तुमनाः

॥ जघन्यप्रदेशोदीरणास्वामिनः ॥

| | | | |
|---|---|---|---|
| ज्ञाना०४-दर्श०३-वेदनीय २-मिथ्या०-१६ कषाय-९ नोकषायाणाम् (३५) | पर्याप्ताः संक्लिष्टमिथ्यादृशः | सूक्ष्मस्य | " सूक्ष्माः |
| | | अपर्याप्तस्य | अपर्याप्तमनुष्याः अन्त्यसमये |
| निद्रापञ्चकस्य | तत्प्रायो० सं० पर्या०मिथ्यादृशः | विकलत्रिकस्य | सर्वसंक्लिष्टा विकलेन्द्रियाः |
| सम्यक्त्व-मिश्रयोः | अतिसंक्लिष्टाःअनन्तरसमये मिथ्यात्वोत्पादका· | जिननाम्नः | आयोजिकाकरणात्र्वाग्समये तीर्थकराः |
| आहारकसप्तकस्य | तत्प्रायोग्य संक्लिष्टा आहारकदेहिनः | अवधिद्विकस्य | सर्वसंक्लिष्टा अवधिलब्धिमन्तः |
| आनुपूर्विचतुर्णाम् | तत्प्रायो०सं०तदुदयवन्तः | आयुःत्रिकस्य | दीर्घस्थितिका अतिसुखिनः तदुदयवन्तः |
| आतपस्य | अतिसंक्लिष्टबादरखरपृथ्विकायिकाः | नारकायुषः | अल्पस्थितिकाः अतिसुखिनो नारकाः |
| एके०-स्था०-साधारणानाम् | सर्वसंक्लिष्टा एकेन्द्रियाः | | |
| | | ८९ उत्कर्षेणाणां | सर्वसंक्लिष्टाः संज्ञिपर्याप्ताः |

सम्यक्त्वस्य, मिश्रवेदी मिथ्यात्वं गन्तुमनाः मिश्रस्य, गतिचतुष्टयपञ्चेन्द्रियजात्यौदारिकसप्तकवैक्रियसप्तकतैजससप्तकसंस्थानषट्कसंहननषट्कवर्णादिविंशतिपराघातोपघातागुरुलघूच्छ्वासोद्योतविहायोगतिद्विकत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरादेयानादेययशःकीर्त्त्ययशःकीर्त्त्युच्चैर्गोत्रनीचैर्गोत्रनिर्माणपञ्चविघान्तरायरूपाणामेकोननवतिप्रकृतीनामतिसंक्लिष्टः संज्ञिपर्याप्तः, आहा-

रूक्षसप्तकस्य तद्वेदी तत्प्रायोग्यसंक्लिष्ट', आनुपूर्वीणां तत्प्रायोग्यसङ्क्लेशयुक्तः, आतपस्य खरपृथ्वीकायिकः सर्वसंक्लिष्टः, एकेन्द्रियजाति-स्थावरसाधारणानां बादरः सर्वसंक्लिष्टः, सूक्ष्मस्य सूक्ष्मः, अपर्याप्तस्यापर्याप्तमनुष्यो भवचरमसमये, द्वित्रिचतुरिन्द्रियजातीनां यथाक्रम द्वित्रिचतुरिन्द्रियाः सर्वसङ्क्लिष्टा भवान्तसमये जघन्यप्रदेशोदीरणास्वामिनः। तीर्थङ्करनाम्नश्च यावदायोजिकाकरणं न भवति तावज्ज-घन्या प्रदेशोदीरणा। 'ओहीण'मित्यादि—अवध्योरवधिज्ञानावरणावधिदर्शनावरणयोस्तद्वेदी अवधिज्ञानावरणावधिदर्शनावरणवेदी सर्व-सङ्क्लिष्टो जघन्यप्रदेशोदीरणास्वामी। अवधिज्ञान मुत्पादयतो बहवः पुद्गलाः परिक्षीणा इति तद्वेदिग्रहणम्। तथा चतुर्णामप्यायुषां स्वस्वभूमिकानुसारेण दुःखी जघन्यप्रदेशोदीरणास्वामी, तत्र नारकायुषो नारको दशवर्षसहस्रप्रमाणस्थितिकः, स हि शेषनारकापेक्षया सुखी, शेषायुषां च स्वस्वोत्कृष्टस्थितौ वर्तमानाः। उक्तस्यैवार्थस्य संग्राहिका इयमन्यकर्तृकी गाथा—"वक्कोसुदीरणाए सामी सुक्खो उ गुणियकम्मसो। इयराए खवियकम्मो तज्जोगुदीरणकिलिट्ठो॥" सुगमा ॥१०९॥

## समाप्तमुदीरणाकरणम्

# उपशमनाकरणम् ।



साम्प्रतमुपशमनाकरणमारभ्यते तस्येदमादिसूत्रम्—

**देसुवसमणा सव्वाण होइ सव्वोवसामणा मोहे । अपसत्थपसत्था या करणुवसमणाएँ अहिगारो ॥१॥**

(स्वो०)—देशोपशमना सर्वेषां कर्मणां भवति । सर्वोपशामना मोहनीये । तत्र देशोपशामना, अनुदयोपशामना, अगुणोपशामना, अप्रशस्तोपशामना चेति । तथा सर्वोपशामना, उदयोपशामना, गुणोपशामना, प्रशस्तोपशामना चेति । तत्र देशोपशमना करणकृता करणरहिता च । सर्वोपशामना करणकृतैव । तत्र या करणरहिता तस्या व्याख्या नास्ति, तद्धेतूनामभावात् । सा च गिरिनदीपाषाणवृत्तादिभाववत्संसारस्थजीवानां करणविशिष्टगुणाभ्यां विनापि वेदनानुभवनादिकारणैर्भवति । करणोपशामनया अत्राधिकारो यथाप्रवृत्तकरणापूर्वकरणानिवृत्तिकरणैर्या क्रियते तयाऽधिकारः । सापि द्विधा—देशकरणोपशामना सर्वकरणोपशामना च, अथवा अगुणोपशामना प्रशस्तोपशामना चेति गाथार्थः ॥१॥

(मलय०)—तदेवमभिहिता सप्रपञ्चमुदीरणा, संप्रत्युपशमनाप्रतिपादनावसरः, तत्रेदमादिसूत्रं—इह द्विधा उपशमना, तद्यथा—देशोपशमना सर्वोपशमना च । तत्र देशोपशमना सर्वेषामपि कर्मणां भवति, सर्वोपशमना तु मोहनीयस्यैव । देशोपशमनायाश्चामून्येकार्थिकानि, तद्यथा—देशोपशमना, अनुदयोपशमना, अगुणोपशमना, अप्रशस्तोपशमना च । सर्वोपशमनाया अमूनि, तद्यथा—सर्वो-

पशमना, उदयोपशमना, गुणोपशमना, प्रशस्तोपशमना च । तत्र देशोपशमना द्विधा, करणकृता करणरहिता च । सर्वोपशमना तु करणकृतैव । करणानि यथाप्रवृत्तापूर्वानिवृत्तिसंज्ञानि, तैः कृता करणकृता । तद्विपरीता करणरहिता या संसारिणां जीवानां गिरिनदीपाषाणवृत्तादिवद्भवत्यथाप्रवृत्तादिकरणसाध्यक्रियाविशेषमन्तरेणापि वेदनानुभवनादिभिः कारणैरुपजायते । तस्याश्च संप्रत्यनुयोगो व्यवच्छिन्नः, तद्वेतॄणामभावात् । ततोऽप्रशस्ता प्रशस्ता च या करणोपशमना तया अधिकारः, तत्र वक्ष्यमाणस्वरूपत्वात्प्रथमतः सर्वोपशमना वाच्या । तत्र चैते अर्थाधिकारास्तद्यथा—प्रथमसम्यक्त्वोत्पादप्ररूपणा, देशविरतिलाभप्ररूपणा, सर्वविरतिलाभप्ररूपणा, अनन्तानुबन्धिविसंयोजना, दर्शनमोहनीयक्षपणा, दर्शनमोहनीयोपशमना, चारित्रमोहनीयोपशमना च ॥१॥

उपशमसम्यक्त्वेनादावधिकारस्तदर्थमाह—

सव्वुवसमणाजोग्गो पज्जत्तपणिंदिसण्णिसुभलेसो । परियत्तमाणसुभपगइबंधगोऽतीव सुज्झंतो ॥२॥

(स्वो०)—सर्वैः करणैरुपशामना सर्वोपशामना, तस्याः योग्यः अर्होऽशेषपर्याप्तिभिः पर्याप्तः, संज्ञी पञ्चेन्द्रियः, शुभत्रिलेश्य , एतत्रिलब्ध्युपेतो जीव इति, अथवोपशमनलब्ध्युपदेशलब्धिप्रयोगलब्धिभिरिति, शुभलेश्या(याम)न्यतमस्यां वर्तमान', परावर्त्तमानप्रकृतीनां शुभानामेव बन्धकः, उत्तरोत्तरसमयेऽतीव विशुध्यमानपरिणामोऽनन्तगुणशुद्धया प्रवर्द्धमानशुभाध्यवसायश्चतुर्गतिकानामन्यतम इति गाथार्थः ॥२॥

(मलय०)—तत्रादौ सम्यक्त्वोत्पादप्ररूपणार्थमाह—मिथ्यात्वस्य सर्वोपशमनाया योग्यो—अर्हो मिथ्यादृष्टिरशेषपर्याप्तिभिः पर्याप्तः पञ्चेन्द्रियः संज्ञी—उपशमलब्ध्युपदेशश्रवणलब्धिप्रयोगलब्धित्रिकयुक्तः करणकालात्प्रागप्यन्तर्मुहूर्तं काल यावत् शुभलेश्यः—तेजःपद्म-

शुक्ललेश्यान्यतमलेश्यायुक्तः, तथा परावर्त्तमानानां प्रकृतीनां शुभानामेव बन्धकः। तत्र तिर्यग्मनुष्यो वा प्रथमसम्यक्त्वमुत्पादयन् देवगतिप्रायोग्यानां देवद्विकपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गप्रथमसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकसातवेदनीयोच्चैर्गोत्ररूपाणामेकविंशतिसंख्यानां बन्धकः। देवो नैरयिको वा प्रथमसम्यक्त्वमुत्पादयन् मनुजगतिप्रायोग्याणां मनुजद्विकपञ्चेन्द्रियजातिप्रथमसंस्थानप्रथमसंहननौदारिकशरीरौदारिकाङ्गोपाङ्गपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकसातवेदनीयोच्चैर्गोत्ररूपाणां द्वाविंशतिसंख्यानां बन्धकः। सप्तमपृथ्वीनारकः पुनर्यदि प्रथमसम्यक्त्वमुत्पादयति ततस्तस्य तिर्यग्द्विकनीचैर्गोत्रे वक्तव्ये शेषं तदेव। उत्तरोत्तरसमयेषु चातीवविशुध्यमानः प्रतिसमयमनन्तगुणविशुद्ध्या प्रवर्द्धमानशुभाध्यवसायश्चतुर्गतिकानामन्यतमः ॥२॥

तस्यैव मिथ्यादृष्टेः सतो भूयः स्वरूपमाह—

**असुभसुभे अणुभागे अणंतगुणहाणिवुड्ढिपरिणामो। अन्तोकोडाकोडी ठिइओ आउं अबंधंतो ॥३॥**

(स्वो०)—अशुभानुभागस्यानन्तगुणहानिपरिणामः, शुभानुभागस्यानन्तगुणवृद्धिपरिणामो जीवो योग्यः, आयुर्वर्जानां सप्तानां कर्मणां अन्तःकोटाकोटिस्थितिकः, ध्रुवबन्धिनीनां सप्तचत्वारिंशतां बन्धकः, तद्भवप्रायोग्यानां शुभानां अध्रुवबन्धिनीनां च बन्धकः। तिर्यङ्मनुष्यो वा प्रथममुपशमसम्यक्त्वमुत्पादयति यदि ततो देवप्रायोग्यदेवद्विकं वैक्रियसप्तकं पञ्चेन्द्रियजातिः समचतुरस्रं पराघातोच्छ्वासं शुभविहायोगतित्रसादिदशकं नाम्नः एताश्चतुर्विंशतिः सातोच्चैर्गोत्रे च बध्नाति। अथवा देवो नारको वा प्रथममुपशमसम्यक्त्वमुत्पादयति ततो मनुष्यगतियोग्या मनुजद्विकौदारिकसप्तकप्रथमसंहननानि शेषाः पञ्चेन्द्रियाद्या ता एव। अथवा सप्तमपृथिवीनारकः प्रथमं सम्यक्त्वमुत्पादयति ततः तिर्यग्द्विकनीचैर्गोत्राणि, शेषा मनुज इव बध्नाति। तासां प्रकृतीनां प्रदेशान् स्वमनोवाक्का-

परीषहानुभवात् उपसर्गमध्ययोरकृष्टान् समारभते, नायुष्कं बध्नाति, यतस्तदतिविशुद्धस्य न बन्धमेतीति गाथार्थः ॥३॥

(मलय०)—अशुभेषु अनुभागेषु अनन्तगुणहानिप्रवृत्तपरिणामः, शुभेषु चानुभागेष्वनन्तगुणवृद्धिकरणप्रवृत्तपरिणामोऽन्तःकोटीकोटीस्थितिक आयुर्वर्जानां सप्तानामपि कर्मणामेकस्या अपि सागरोपमकोटीकोट्या मध्येऽपल्यापितस्थितिसत्ताकः। तथा 'आउ अबन्धन्तो'त्ति—आयुष्कमबध्नन्, अतिविशुद्धपरिणामो हि नायुर्बन्धमारभते इति गाथार्थम् ॥३॥

सम्प्रत्यनुभागसंख्यानां विशेषोऽभिहित', स्थितिमाह—

बन्धादुत्तरबन्ध पलिओवमसंखभागऊणूणं । सागारे उवओगे वट्टंतो कुणइ करणाइं ॥४॥

(चूर्णि०)—बन्धादुत्तरबन्धं प्राक्तनस्थितिबन्धापेक्षयाऽन्यमभिनवस्थितिबन्धं पल्योपमा(म)सङ्ख्येयभागहीनं बध्नाति, च सङ्ख्येयानि स्थितिहानिस्थानानि, शुभानामनुभागं चतुःस्थानिकं प्रतिसमयमनन्तगुणवृद्ध्या वर्धते, अशुभानां द्विस्थानिकोऽनन्तगुणहान्या क्षीयते, साकारोपयोगे वर्तमानो जीवः करणानि यथाप्रवृत्तादीन्यारभत इति गाथार्थः ॥४॥

(मलय०)—पूर्वस्मात्पूर्वस्माद्बन्धादुत्तरमुत्तरं बन्धं पल्योपमस्य संख्येयेन भागेन न्यूनं न्यूनं कुर्वन्, इदमुक्तं भवति—स्थितिबन्धमपि च पूर्णे पूर्णे सति अन्यं स्थितिबन्धं पल्योपमस्य संख्येयेन भागेन न्यूनं न्यूनं कुर्वन्, अशुभानां च प्रकृतीनां बध्यमानाना-मनुभागं द्विस्थानकं बध्नन्, तमपि प्रतिसमयमनन्तगुणहीनं, शुभानां च चतुःस्थानकं बध्नन् तमपि प्रतिसमयमनन्तगुणवृद्धं, तथा मतिश्रुताज्ञानविभङ्गज्ञानानामन्यतमस्मिन् साकारोपयोगे वर्तमानस्त्रीणि करणानि यथाप्रवृत्तादीनि क्रमेण करोति ॥४॥

**पढमं अहापवत्तं बीयं तु नियट्टि तइयमणियट्टी । अंतोमुहुत्तियाइं उवसमअद्धं च लहइ कमा ॥५॥**

(स्वो०)—प्रथमं यथाप्रवृत्तम्, द्वितीयं पुनः निवृत्तिकरणम्, तृतीयमनिवृत्तिकरणम्, त्रीण्यप्यन्तर्मुहूर्त्तिकानि, प्रत्येकमप्यन्तर्मुहूर्त्तिकानि, चतुर्थी उपशमाद्धा साप्यन्तर्मुहूर्त्तिकैव, एवं चत्वार्यपि क्रमेण जीवः प्राप्नोतीति गाथार्थः ॥५॥

(मलय०)—प्रथमं यथाप्रवृत्तं, द्वितीयं निवृत्तिकरणं, तृतीयमनिवृत्तिकरणं, एतानि त्रीण्यपि करणानि प्रत्येकमान्तर्मौहूर्त्तिकानि, करणत्रयानन्तरं च क्रमात्क्रमेण चतुर्थीमुपशमाद्धामान्तर्मौहूर्त्तिकीं लभते ॥५॥

तल्लक्षणमाह—



**आइल्लेसु दोसुं जहण्णउक्कोसिया भवे सोही । जं पइसमयं अज्झवसाया लोगा असंखेज्जा ॥६॥**

(स्वो०)—आद्ययोः यथाप्रवृत्तनिवृत्तिकरणयोः जघन्योत्कृष्टा च शुद्धिर्भवति, यतो यस्मात् प्रतिसमयमध्यवसाया असंख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति, अयमत्र भावार्थः-यथाप्रवृत्तकरणस्य प्रथमसमयेऽसंख्येयलोकाकाशप्रदेशप्रमाणानि विशुद्धिस्थानानि, द्वितीये विशेषाधिकानि, तृतीये विशेषाधिकानि, एवं यावदन्तिमसमय इति। निवृत्तिकरणमप्येवम्, द्वे अपि विषमचतुरस्रक्षेत्ररूपे भवत इति गाथार्थः ॥६॥

(मलय०)—सम्प्रति करणानामेव स्वरूपमाविश्चिकीर्षुराह—आद्ययोर्द्वयोः करणयोर्यथाप्रवृत्तनिवृत्त्याख्ययोर्जघन्या उत्कृष्टा च शुद्धिर्भवति, यतो यस्मादाद्ययोः करणयोः प्रतिसमयमध्यवसाया विशोधिरूपा नानाजीवापेक्षया असंख्येयलोकाकाशप्रदेशप्रमाणाः, तत

आद्ययोर्द्वयोः करणयोः प्रतिसमयं जघन्या उत्कृष्टा च विशोधिर्भवति। ताश्च विशोधयः–यथाप्रवृत्तकरणे प्रथमसमये विशोधयो नानाजीवापेक्षया असंख्येयलोकाकाशप्रदेशप्रमाणाः, ततो द्वितीयसमये विशेषाधिकाः, ततोऽपि तृतीये समये विशेषाधिकाः, एवं तावद्वाच्य यावच्चरमसमयः, एवमपूर्वकरणेऽपि द्रष्टव्यम्। एते च विशोध्यध्यवसाया यथाप्रवृत्तापूर्वकरणयोः सम्बन्धिनः स्थाप्यमाना विषमचतुरस्रं क्षेत्रमास्तृणन्ति। तयोरुपरि चानिवृत्तिकरणाध्यवसाया मुक्तावलीसंस्थिताः। स्थापनेयम् ॥६॥

पइसमयमणतगुणा सोही उड्ढामुही तिरिच्छा उ। छट्ठाणा जीवाण तइए उड्ढामुही एक्का ॥७॥

(स्वो०)—प्रतिसमयमूर्ध्वमुखी शुद्धिरनन्तगुणतया व्रजति, प्रथमसमये जघन्या, तदुत्तरेऽनन्तगुणा, एवं यावत्सर्वं करणम्। तिर्यङ्मुखी तु षट्स्थानपतिता–प्रथमसमयप्रतिपन्नाः षट्स्थानविशिष्टा भवन्ति, एवं द्वितीयादिष्वपि वक्तव्या। 'तइए'त्ति–तृतीयेऽनिवृत्तिकरणे ऊर्ध्वमुखी एव शुद्धिरनन्तगुणतया भवति, मुक्तावलिस्थितत्वात् तस्येति गाथार्थः ॥७॥

(मलय०)—एतदेवाह—त्रयाणामपि करणानां प्रतिसमयमूर्ध्वमुखी शुद्धिरनन्तगुणा वेदितव्या, तद्यथा–प्रथमसमयशुद्ध्यपेक्षया द्वितीयसमये शुद्धिरनन्तगुणा, ततोऽपि तृतीयसमये अनन्तगुणा, एवं यावदनिवृत्तिकरणचरमसमयः। आद्ययोस्तु द्वयोः करणयोस्तिर्यङ्मुखी शुद्धिः षट्स्थाना–षट्स्थानपतिता, तद्यथा–प्रथमसमयगता शुद्धिः षट्स्थानविशिष्टा, द्वितीयसमयगता षट्स्थानविशिष्टा, एवं यावदपूर्वकरणचरमसमयः। तृतीये त्वनिवृत्तिकरणे प्रतिसमयं सकलजीवापेक्षयाप्येकैकमेवाध्यवसायस्थानम्, तथाहि–अनिवृत्तिकरणस्य प्रथमसमये ये वर्तन्ते, ये च वृत्ताः, ये च वर्तिष्यन्ते, तेषां सर्वेषामप्येकमेवाध्यवसायस्थानं, द्वितीयसमयेऽपि ये वर्तन्ते, ये च वृत्ताः, ये च वर्तिष्यन्ते, तेषामपि सर्वेषामेकमेवाध्यवसायस्थानं, केवलं प्रथमसमयभाविविशोधिस्थानापेक्षया द्वितीयसमये

अनन्तगुणविशुद्धं, एवं तावद्वाच्यं यावत्तस्यानिवृत्तिकरणस्य चरमसमयः, ततस्तृतीये करणे एकैव शोधिरूर्ध्वमुखरूपा, न द्वितीया तिर्यग्मुखी ॥७॥

**गंतुं संखेज्जंसं अहापवत्तस्स हीण जा सोही । तीए पढमे समये अणंतगुणिया उ उक्कोसा ॥८॥**

(स्वो०)—संख्येयभागं गत्वा करणस्य या जघन्या शुद्धिः तस्याः प्रथमसमयोत्कृष्टा शुद्धिरनन्तगुणा, तस्या या संख्येयभागोपरिस्थिता जघन्या विशुद्धिः सानन्तगुणा, तस्या द्वितीयसमयोत्कृष्टानन्तगुणा विशुद्धि इति गाथार्थः ॥८॥

(मलय०)—तत्र यथाप्रवृत्तकरण एव विशोधितारतम्यमुपदर्शयन्नाह—यथाप्रवृत्तकरणस्य संख्येयं भागं गत्वा चरमसमये या जघन्या शुद्धिस्तस्याः सकाशात्प्रथमे समये उत्कृष्टा विशोधिरनन्तगुणा, इयमत्र भावना—यथाप्रवृत्तकरणस्य प्रथमसमये या सर्वजघन्या विशोधिः सा सर्वस्तोका, ततो द्वितीये समये जघन्या विशोधिरनन्तगुणा, ततोऽपि तृतीये समये जघन्या विशोधिरनन्तगुणा, एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणस्य संख्येयो भागो गतो भवति । ततः प्रथमसमये उत्कृष्टा विशोधिरनन्तगुणा, ततो यतो जघन्यस्थानान्निवृत्तस्तस्योपरितनी जघन्या विशोधिरनन्तगुणा, ततोऽपि द्वितीये समये उत्कृष्टा विशोधिरनन्तगुणा, तत उपरि जघन्या विशोधिरनन्तगुणा, एवमुपर्यधश्च एकैका विशोधिरनन्तगुणा तावद्वाच्या यावच्चरमसमये जघन्या विशोधिः ॥८॥

**एवं एक्कंतरिया हेट्ठुवरिं जाव हीणपज्जंते । तत्तो उक्कोसाओ उवरुवरिं होइ अणंतगुणा ॥९॥**

(स्वो०)—एवमनेन क्रमेण संख्येयभागोपरि विशुद्धिभ्यः प्रथमद्वित्रिचतुःसमयादिविशुद्धयोऽनन्तगुणा भवन्ति, यावत्करणस्य

### यथाप्रवृत्तकरणविशुद्धिः ( प्ररूपणा त्वधोमुखीकार्या )

| | | | | | |
|---|---|---|---|---|---|
| | १ | समये | जघन्या | विशोधिः | सर्वस्तोका |
| सम० | २ | ,, | ,, | | अनन्तगुणा |
| ,, | ३ | ,, | ,, | | ,, |
| ,, | ४ | ,, | ,, | | ,, — |
| ,, | ५ | ,, | ,, | | ,, — |
| ,, | ६ | ,, | ,, | | ,, — |
| ,, | ७ | ,, | ,, | | ,, — |
| ,, | ८ | ,, | ,, | | ,, — |
| ,, | ९ | ,, | ,, | | ,, — |
| ,, | १० | ,, | ,, | | ,, — |
| ,, | ११ | ,, | ,, | | ,, — |
| ,, | १२ | ,, | ,, | | ,, — |
| ,, | १३ | ,, | ,, | | ,, — |

| | | | |
|---|---|---|---|
| सम० | १ समये | उत्कृष्टा विशोधिः | अनन्तगुणा |
| ,, | २ | ,, | ,, |
| ,, | ३ | ,, | ,, |
| ,, | ४ | ,, | ,, |
| ,, | [illegible] | ,, | ,, |
| ,, | ६ | ,, | ,, |
| ,, | ७ | ,, | ,, |
| ,, | ८ | ,, | ,, |
| ,, | ९ | ,, | ,, |
| ,, | १० | ,, | ,, |
| ,, | ११ | ,, | ,, |
| ,, | १२ | ,, | ,, |
| ,, | १३ | ,, | ,, |

इत्थं—रेखायुक्तसमयस्थानेषु परस्पराक्रान्तप्ररूपणा कर्त्तव्येति ॥

जघन्यविशुद्धेः परिसमाप्तिरिति, प्रमाणुत्कृष्ट' परस्परमनन्तगुणतया भवन्तीति गाथार्थः ॥९॥

(मलय०)—यथा चाह—एवं पूर्वोक्तप्रकारेण संख्येयभागात्परत आरभ्य अध उपरि च एकान्तरिता विशोधिरनन्तगुणा तावद्वाच्या यावद्धीनपर्यन्तो—जघन्यविशोधिपर्यवसानम्। संख्येयभागमात्राश्चोत्कृष्टा विशुद्धयोऽद्याप्यनुक्ताः सन्ति ततस्ताः क्रमेणोपर्युपरि अनन्तगुणा वक्तव्याः ॥९॥

भणितं यथाप्रवृत्तिकरणम् । अपूर्वकरणमाह—

**जा उक्कोसा पढमे तीसेणंता जहण्णिया बीए । करणे तीए जेट्ठा एवं जा सव्वकरणं पि ॥१०॥**

(स्वो०)—यथाप्रवृत्तस्य उत्कृष्टा या शुद्धिः अस्या अपूर्वकरणप्रथमसमये जघन्या अनन्तगुणा, अस्या अपि प्रथमसमये उत्कृष्टा अनन्तगुणा, अस्या द्वितीयसमये जघन्यानन्तगुणा, तस्या अपि द्वितीयसमये उत्कृष्टा अनन्तगुणा, अस्या अपि तृतीयसमये जघन्या अनन्तगुणाः, तस्याः तृतीयसमये उत्कृष्टा अनन्तगुणाः, अनेन विधिना अपूर्वकरणं नेतव्यमिति गाथार्थः ॥१०॥

अपूर्वकरणविशुद्धिः ( अत्र सर्वसमयेषु परस्पराक्रान्तप्ररूपणा कार्येति )

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्रथमे | १ | समये | जघन्या विशोधिः सर्वस्तोका (सापि यथाप्रवृत्तसर्वोत्कृष्टविशोधेरनन्तगुणा) | | | ततस्तस्यैवोत्कृष्टा | विशोधिरनन्तगुणा |
| ततः | २ | समये | जघन्या | विशोधिरनन्तगुणा | — | ततः उत्कृष्टा | विशोधिरनन्तगुणा |
| ततः | ३ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ४ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ५ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ६ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ७ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ८ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ९ | समये | ,, | ,, | — | ,, | ,, |

(मलय०)—तदेवमुक्तं यथाप्रवृत्तकरणम्, संप्रत्यपूर्वकरणस्य स्वरूपमाविश्चिकीर्षुराह—प्रथमे यथाप्रवृत्तकरणे चरमसमये या उत्कृष्टा विशोधिस्तस्याः सकाशाद् द्वितीयेऽपूर्वाख्ये करणे प्रथमे समये जघन्या विशोधिरनन्तगुणा, तस्या अपि सकाशात्प्रथमसमये एव ज्येष्ठा-उत्कृष्टा

विशोधिरनन्तगुणा, ततो द्वितीये समये जघन्या विशोधिरनन्तगुणा, ततोऽपि तस्मिन्नेव द्वितीये समये उत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि तृतीये समये जघन्या विशोधिरनन्तगुणा, ततोऽपि तस्मिन्नेव तृतीये समये उत्कृष्टा विशोधिरनन्तगुणा, एवं प्रतिसमयं तावद्वाच्यं यावत्सकलमपि करणं परिसमाप्यते ॥१०॥

अपुव्वकरणसमग कुणइ अपुव्वे इमे उ चत्तारि । ठितिघाय रसघाय गुणसेढी बधगद्धा य ॥११॥

(स्वो०)—अपूर्वकरणेन समक-सह करोत्येतान् अपूर्वान् येऽतीतकाले न स्पृष्टाश्चत्वारो विषयः तानाह-स्थितिघातं रसघातं गुणश्रेणीं बन्धकाद्धां चेति गाथार्थः ॥११॥

(मलय०)—अपूर्वकरणेन समकं-युगपत्तस्मिन्नेव समये अपूर्वकरणे प्रविशति तस्मादेव समयादारभ्येत्यर्थः, इमान्-वक्ष्यमाणांश्चतुरः पदार्थान् अपूर्वान् करोति, अतीते काले न कदाचनापि पूर्वं कृताः, तानेवाह-स्थितिघात, रसघात, गुणश्रेणिं, बन्धकाद्धां च ॥११॥

तमेव स्थितिघातमाह—

उक्कोसेण बहुसागराणि इयरेण पल्लसखस । ठितिअग्गाओ घायइ अन्तमुहुत्तेण ठितिखड ॥१२॥

(स्वो०)—उत्कृष्टतोऽनेकसागरोपमप्रमाण, जघन्यतः पल्योपमसंख्येयभागमात्र चिरस्थितेरग्रतोऽन्तर्मुहूर्तेन स्थितिखण्डं घातयति विनाशयतीति गाथार्थः ॥१२॥

(मलय०)—तत्र प्रथमतः स्थितिघातस्वरूपव्याख्यानायाह-स्थितिसत्कर्मणोऽग्रिमभागादुत्कर्षेण प्रभूतानि सागरोपमाणि प्रभूतसा-

गरोपमप्रमाणं, इतरेण–जघन्येन पल्योपमा(म)संख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तेन कालेन घातयति, घातयित्वा च दलिकं या स्थितिरधो न खण्डयिष्यति तत्र प्रक्षिपति, ततः पुनरपि अधस्तात्पल्योपमा(म)संख्येयभागमात्रस्थितिखण्डमन्तर्मुहूर्त्तेन कालेन घातयति, प्रागुक्तप्रकारेणैव च निक्षिपति, एवमपूर्वकरणाद्धायाः प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति, तथा च सति अपूर्वकरणस्य प्रथमे समये यत्स्थितिसत्कर्मासीत् तत्तस्यैव चरमसमये संख्येयगुणहीनं जातम् ॥१२॥

**असुभाणंतमुहुत्तेणं हणइ रसकंडगं अणंतंसं। किरणे ठितिखंडाणं तंमि उ रसकंडगहस्सा ॥१३॥**

(स्वो०)—अशुभप्रकृतीनामन्तर्मुहूर्त्तेन हन्ति–विनाशयति, रसकण्डकं–अनुभागकण्डकं अनन्तांशं–अनन्तविभागात्मकं, किमुक्तं भवति ? अनन्तभागान् हन्ति अनन्तभागस्तिष्ठति, एवं एकस्मिन् स्थितिघातकण्डके बहूनि रसघातकण्डकसहस्राणि अतिक्रामन्ति स्थितिकण्डकसहस्रैस्त्वपूर्वकरणं समाप्तिं नयति, इति गाथार्थः ॥१३॥

(मलय०)—तदेवमुक्तः स्थितिघातः, सम्प्रति रसघातप्रतिपादनार्थमाह–स्थितिखण्डानां किरणे–उत्किरणे प्रवृत्तः सन् अशुभानां प्रकृतीनां रसकण्डकमनुभागकण्डकम्, अनन्तांशमनन्तविभागात्मकमन्तर्मुहूर्त्तेन विनाशयति, किमुक्तं भवति ? अशुभप्रकृतीनां यदनुभागसत्कर्म तस्यानन्ततमं भागं मुक्त्वा शेषाननुभागभागान् सर्वानप्यन्तर्मुहूर्त्तेन कालेन विनाशयति, ततः पुनरपि तस्य प्रागुक्तस्यानन्ततमस्य भागस्यानन्ततमं भागं मुक्त्वा शेषाननुभागभागान् सर्वानन्तर्मुहूर्त्तेन कालेन विनाशयति, एवमनेकान्यनुभागखण्डसहस्राणि एकैकस्मिन् स्थितिखण्डे व्यतिक्रामन्ति। तथा चाह–'तम्मि उ रसकण्डगसहस्सा'–तस्मिन् स्थितिखण्डे एकैकस्मिन् रसकण्डकसहस्राणि गच्छन्ति, स्थितिखण्डानां च सहस्रैरपूर्वकरणं परिसमाप्यते ॥१३॥

॥ अनुदयवतीनां स्थितिघातेनानुभागघातेन वानतारितस्य चरमस्थितिखण्डसत्कदलिकस्य गुणश्रेणिचित्रकम् ॥

उदयावलिकाया उपरितनसमयादारभ्य दलिकं प्रतिसमयमसंख्येयगुणतयाऽनुभागमनन्तगुणतया संक्रामति

| उदयावलिका | अन्तर्मुहूर्तम् अपवर्तनया घात्यमानस्थितिकण्डकस्यानुभागकण्डकस्य वा प्रक्षेपविषयः | चतुश्चरमं स्थितिखण्डं अनुभागकण्डकं वा | त्रिचरमं स्थितिखण्डं अनुभागकण्डकं वा | द्विचरमं स्थितिखण्डं अनुभागकण्डकं वा | घात्यमानं चरमं स्थितिखण्डं उत्कृष्टतः सागरोपमशतप्रमाणं जघन्यतः पल्योपमसंख्येयभागं प्रतिसमयं दलिकोत्किरणमसंख्येयगुणम्। अनुभागस्पर्धकान्यनन्तभागप्रमाणानि मुक्त्वा शेषाणि घातयति. |
|---|---|---|---|---|---|

एवं शेषखण्डानामपि प्ररूपणम्

गुणश्रेणीरचनोच्यते—

**घाइयठिइओ दलियं घेत्तुं घेत्तुं असंखगुणणाए । साहियदुकरणकालं उदयाइ रयइ गुणसेढिं ॥१४॥**

(स्वो०)—घातितस्थितिखण्डस्य यद्दलं तद्गृहीत्वा गृहीत्वा असंख्येयगुणवृद्धया उदयसमयादारभ्य गुणश्रेणीं रचयति, किमुक्तं भवति ? उदयसमये स्तोकं ददाति, द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं यावत्साधिकद्विकरणकालसमया इति–अपूर्वकरणानिवृत्तिकरणकालयोर्विशेषाधिका इति गाथार्थः ॥१४॥

(मलय०)—तदेवमुक्तो रसघातः, सम्प्रति गुणश्रेणिमाह—घातिता या स्थितिस्तन्मध्याद्दलिकं गृहीत्वा उदयसमयादारभ्य प्रतिसमयमसंख्येयगुणवृद्धया रचयति, तद्यथा–उदयसमये स्तोकम्, द्वितीयसमये असंख्येयगुणम्, ततोऽपि तृतीये समये असंख्येयगुणम्, एवं तावद्वक्तव्यं यावत्साधिककरणद्वयकालः–मनाक् समधिका अपूर्वकरणानिवृत्तिकरणकालसमयाः । एष प्रथमसमयगृहीतदलिकनिक्षेपविधिः, एवं द्वितीयादिसमयगृहीतानामपि दलिकानां निक्षेपविधिर्द्रष्टव्यः । अन्यच्च गुणश्रेणिरचनार्थं प्रथमसमये यद्दलिकं गृह्यते तत्स्तोकम्, ततोऽपि द्वितीये समये असंख्येयगुणम्, ततोऽपि तृतीयसमये असंख्येयगुणम्, एवं तावद्वक्तव्यं यावद्गुणश्रेणिकरणचरमसमयः । अपूर्वकरणानिवृत्तिकरणसमयेषु चानुभवतः क्रमशः क्षीयमाणेषु गुणश्रेणिदलिकनिक्षेपः शेषे शेषे भवति, उपरि न वर्द्धते ॥

बन्धकाद्धामाह—

**करणाइए अपुव्वो जो बन्धो सो न होइ जा अन्नो । बंधगद्धा सा तुल्लिगा उ ठिइकंडगद्धाए ॥१५॥**

(स्वो०)—अपूर्वकरणस्यादौ यो बन्धः प्रारब्धः यावदन्यो न भवति–प्रारब्धं समाप्तिं न नयति यावता कालेन सा बन्धकाद्धो-च्यते, सा च तुल्या स्थितिघातकालेन । तुशब्दात् तस्मिन् काले रसघातसहस्राणि व्यतिक्रामन्तीति गाथार्थः ॥१५॥

(मलय०)—अपूर्वकरणस्यादौ प्रथमसमये यो बन्धः प्रारब्धः स बन्धकाद्धा उच्यते । कियन्तं कालं यावत्स बन्धो बन्धकाद्धा उच्यते ? अत आह–यावदन्यो बन्धो न भवति–न प्रारभ्यते–प्रारब्धो बन्धो यावन्न समाप्तिं यातीत्यर्थः । सा च बन्धकाद्धा स्थिति-तिकण्डकाद्धया–स्थितिघातकालेन तुल्या । इदमुक्तं भवति–स्थितिघातस्थितिबन्धौ युगपदारभ्येते युगपदेव च निष्ठां यात इति ॥१५॥

**जा करणाईए ठिई करणंते तीइ होइ संखंसो । अनियट्टीकरणमओ मुत्तावलिसंठियं कुणइ ॥१६॥**

(स्वो०)—याऽपूर्वकरणस्यादौ–प्रथमसमये स्थितिस्तस्या अन्तसमये संख्येयभागो भवति, अतोऽस्मादन्तेऽनिवृत्तिकरणं मुक्तावलि-संस्थितं करोति, सर्वेषामेव कालप्रतिपन्नानां विशुद्ध्यादिभिः गुणैस्तुल्यत्वादिति गाथार्थः ॥ १६ ॥

(मलय०)—अपूर्वकरणस्यादौ प्रथमसमये या स्थितिः सा स्थितिघातसहस्रैः खंडिता सती करणान्ते अपूर्वकरणस्य चरमसमये संख्येयांशा भवति, संख्येयभागमात्रा भवति, संख्येयगुणहीना भवतीत्यर्थः, एतच्च प्रागपि प्रस्तावादुक्तम् । तदेवमुक्तमपूर्वकरणम् ॥

**एवमणियट्टिकरणे ठितिघायाईणि होंति चउरो वि । संखेज्जंसे सेसे पढमठिई अंतरं च भवे ॥१७॥**

(स्वो०)—एवमपूर्वकरणक्रमेणानिवृत्तिकरणेऽपि स्थितिघातादिकाश्चत्वारोऽपि विधयस्तथैव भवन्ति । विशेषमाह–तत्करणकालस्य संख्येयभागे शेषे प्रथमस्थितिरन्तरं च भवेदिति गाथार्थः ॥ १७ ॥

स्थापना ।
१२००००००००००००१६
१००००००००००००१५
८०००००००००००१४
६००००००००००१३
४०००००००००११
३००००००००९
२०००००००७
१०००००५

स्थापना ।
९०००००००००००१०
७०००००००००८
५००००००००६
३००००००००४
१००००००२

(मलय०)—संप्रत्यनिवृत्तिकरणप्रतिपादनार्थमाह— अतोऽपूर्वकरणादूर्ध्वमनिवृत्तिकरणं करोत्यारमते, तच्च कथंभूतमित्याह–मुक्तावलीसंस्थितं, अनिवृत्तिकरणे हि अध्यवसायस्थानानि मुक्तावलीसंस्थितानि भवन्ति, एतच्च प्रागेवोक्तं, तत एतदपि अनिवृत्तिकरणमभेदान्मुक्तावलीसंस्थितमित्युक्तम् ॥१७॥

तयोः कालमाह–

अंतमुहुत्तियमेत्ताइ दो वि निम्मवइ पढमठ्ठाए । गुणसेढिसंखभागं अंतरकरणेण उक्किरइ ॥१८॥

(स्वो०)—अन्तर्मुहूर्तमात्रा प्रथमस्थितिरन्तरं च निर्मापयति, आरम्भसमाप्तिकालयोः कथञ्चिदभेदात् । तथान्तरे बन्धकाद्धया तुल्यं प्रथमस्थितेः किञ्चिदूनम् । गुणश्रेणीसंख्येयभागमन्तरकरणेन सहोत्किरति, गुणश्रेणीसम्बन्धिनः संख्येयभागा प्रथमद्वितीयस्थित्यो रश्रितास्तिष्ठन्तीति गाथार्थः ॥ १८ ॥

(मलय०)—एवमपूर्वकरणक्रमेणानिवृत्तिकरणेऽपि स्थितिघाताद्यप्रस्तारोऽपि पदार्था भवन्ति–प्रवर्त्तन्ते, इत्थं चानिवृत्तिकरणाद्धायाः सम्येयेषु भागेषु गतेषु सत्सु एकस्मिंश्च सख्येयतमे भागे शेषे तिष्ठति अन्तर्मुहूर्त्तमात्रमधो मुक्त्वा मिथ्यात्वस्यान्तरकरणमन्तर्मुहूर्त्तप्रमाणे

प्रथमस्थितेः किञ्चित्समधिकं भवति, प्रथमस्थितिश्च–प्रथमस्थितिमन्तरकरणं च एते द्वे अपि अन्तर्मुहूर्त्तप्रमाणे युगपन्निर्मापयति, तथा तदन्तरकरणं अभिनवस्थितिबन्धाद्धया अभिनवस्थितिबन्धकालप्रमाणेन कालेन करोति। तथाहि–अन्तरकरणप्रथमसमय एवान्यं स्थितिबन्धं मिथ्यात्वस्यारभते, स्थितिबन्धान्तरकरणे च युगपदेव परिसमापयति। तथा गुणश्रेणिसंबन्धिनः संख्येयभागाः प्रथमद्वितीयस्थित्याश्रितास्तिष्ठन्ति, एकं तु गुणश्रेणेः संख्येयतमं भागमन्तरकरणदलिकेन सहोत्किरति–विनाशयति ॥१८॥



अंतरकरणस्स विही घेत्तुंघेत्तुं ठिईउ मज्झाओ। दलियं पढमठिईए विछुब्भइ तहा उवरिमाए ॥१९॥

(स्वो०)—अन्तरकरणस्यायं विधिः–गृहीत्वा गृहीत्वा अन्तरस्थितेर्मध्याद्दलं कर्मपरमाणुरूपं प्रथमस्थितौ विविधमनेकप्रकारैः क्षिपति, तथोपरिमायां द्वितीयस्थितौ यावत्सर्वं क्षीणमिति गाथार्थः ॥ १९ ॥

(मलय०)—संप्रति अन्तरकरणस्य विधिमाह—अन्तरकरणस्यायं विधिः–यदुत अन्तरकरणस्थितेर्मध्याद्दलिकं कर्मपरमाण्वात्मकं गृहीत्वा गृहीत्वा प्रथमस्थितौ प्रक्षिपति, तथा उपरितन्यां–द्वितीयस्थितौ च, एवं च प्रतिसमयं तावत्प्रक्षिपति यावदन्तरकरणदलिकं सकलमपि क्षीयते अन्तर्मुहूर्त्तेन च कालेन सकलदलिकक्षयः ॥१९॥

इगिदुगआवलिसेसाइ णत्थि पढमा उदीरणागालो। पढमठिईए उदीरण बीयाओ एइ आगाला ॥२०॥

(स्वो०)—एकावलिकाशेषायां प्रथमस्थितौ पूर्वोक्तोदीरणा न भवति, समयाधिकायामपि भवति, द्व्यावलिकाशेषायां प्रथमस्थितावागालो न भवति, द्वितीयस्थितेर्दलं नागच्छतीत्यर्थः। उदयस्थितौ यत्प्रथमस्थितेः सकाशात् पतति सोदीरणा, द्वितीयस्थितेर्यत्प-

त्वति तदागाल इति गाथार्थः ॥ २० ॥

(मलय०)—इह प्रथमस्थितौ वर्तमान उदीरणाप्रयोगेण यत्प्रथमस्थितेरेव दलिकं समाकृष्योदयसमये प्रक्षिपति सा उदीरणा, यत्पुनर्द्वितीयस्थितेः सकाशादुदीरणाप्रयोगेण समाकृष्योदये प्रक्षिपति स 'आगाल' इति उदीरणाया एव विशेषप्रतिपत्त्यर्थमिदं द्वितीयं नाम पूर्वसूरिभिरावेदितम् । उदयोदीरणाभ्यां च प्रथमस्थितिमनुभवन् तावद्गतो यावदावलिकाद्विकं शेषं तिष्ठति, तस्मिंश्च स्थिते आगालो न भवति किन्तु केवला उदीरणैव । साप्युदीरणा तावत्प्रवर्तते यावदावलिका शेषा न भवति । आवलिकायां च शेषीभूतायामुदीरणापि निवर्तते, ततः केवलेनैवोदयेन तामावलिकामनुभवति । अक्षरयोजना त्वेवम्—एकद्व्यावलिकाशेषायां प्रथमस्थितौ यथासङ्ख्यमुदीरणागालौ न भवतः, प्रथमस्थितेश्च सकाशाद् यदेव आगच्छति सा उदीरणा, द्वितीयायाश्च स्थितेः सकाशाद्यदागच्छति स आगाल इति ॥२०॥

आवलिमेत्तं उदएण वेइउ ठाइ उवसमद्धाए । उवसमियं तत्थ भवे सम्मत्त मोक्खबीयं ज ॥२१॥

(स्वो०)—आवलिकामात्रं प्रथमस्थितेर्मिथ्यात्वं वेदयित्वा—अनुभूय तिष्ठत्युपशमाद्धायां स्थितस्यौपशमिकं सम्यक्त्वं भवति, मोक्षसुखस्य यद्बीजभूतं यतस्तत्प्राप्तिं विना तन्न भवत्येव, तच्चान्तरकरणकालमात्रं भवतीति गाथार्थः ॥ २१ ॥

(मलय०)—तदावलिकामात्रं प्रथमस्थितिसत्कं केवलेनैवोदयेन वेदयित्वा—अनुभूयोपशमाद्धायां तिष्ठति—उपशमाद्धायां प्रविशति । तस्यां चोपशमाद्धायां स्थितस्य सतः प्रथमसमये यदौपशमिकसम्यक्त्वं भवति, तच्च मोक्षस्य बीजं—कारणभूतम्, तदन्तरेण मोक्षस्याभावात् ॥ २१ ॥

उवरिमठिइअणुभागं तं च तिहा कुणइ चरिममिच्छुदए । देसघाईण सम्म इयरेण मिच्छमीसाइं ॥२२॥

(स्वो०)—'उपरिमस्थतेः'–द्वितीयस्थितेः कर्म्मदलं रसभेदात् त्रिधा करोति शुद्धिमधिकृत्य, शुद्धं किञ्चिच्छुद्धमविशुद्धमिति। तच्च प्रथमस्थितिचरमसमये मिथ्यात्वमनुभवमानो जीवः देशघातिरसेन सम्यक्त्वपुञ्जं, सर्वघातिरसेन द्विस्थानिकेन सम्यग्मिथ्यात्वपुञ्जं, त्रिचतुःस्थानरसेन सर्वघातिना मिथ्यात्वपुञ्जं प्रारम्भयतीति गाथार्थः ॥ २२ ॥

(मलय०)—प्रथमस्थितिचरमसमये मिथ्यात्वोदये वर्त्तमानो मिथ्यादृष्टिरुपरितनस्थितेः–द्वितीयस्थितेः संबन्धिनां कर्मपरमाणूनामनुभागं त्रिधा करोति, अनुभागभेदेन त्रिधा द्वितीयस्थितिगतं मिथ्यात्वदलिकं करोतीत्यर्थः। तद्यथा–शुद्धमर्द्धविशुद्धमविशुद्धं च। तत्र शुद्धं सम्यक्त्वं, तच्च देशघातिरसेन समन्वितं करोति, अर्द्धविशुद्धं सम्यग्मिथ्यात्वं, अविशुद्धं मिथ्यात्वं, एते च इतरेण सर्वघातिना रसेन समन्विते करोति। इहौपशमिकसम्यक्त्वलाभप्रथमसमयादेवारभ्य मिथ्यात्वस्य सम्यक्त्वे सम्यग्मिथ्यात्वे च गुणसंक्रमः प्रवर्त्तते ॥ २२ ॥

गुणसंक्रमस्वरूपमाह—

**सम्मे थोवो मीसे असंखओ तस्स संखओ सम्मे। पइसमयं इय खेवो अंतमुहुत्ता उ विज्झाओ ॥२३॥**

(स्वो०)—सम्यक्त्वपुञ्जे स्तोकः क्षेपः अन्तरकरणकालाद्यसमये, तस्मिन्नेव समये सम्यग्मिथ्यात्वेऽसंख्येयगुणो, द्वितीयसमये तस्मादप्यसंख्येयगुणः सम्यक्त्वे, तस्मिन्नेव द्वितीयसमये सम्यक्त्वक्षेपादसंख्येयगुणः सम्यग्मिथ्यात्वे, एवं प्रतिसमयं गुणकृतः संक्रमो भवति यावदन्तर्मुहूर्त्तं, तदूर्ध्वतो विध्यातसंक्रमः प्रागभिहितो भवतीति गाथार्थः ॥ २३ ॥

(मलय०)—स चैवम्–औपशमिकसम्यक्त्वलाभप्रथमसमये स्तोको दलिकनिक्षेपः सम्यक्त्वे, ततो मिश्रे तस्मिन्नेव प्रथमसमये अस-

स्येयगुणः, ततोऽपि द्वितीये समये सम्यक्त्वे असंख्येयगुणः, ततोऽपि तस्मिन्नेव द्वितीये सम्यग्मिथ्यात्वे असंख्येयगुणः, इत्येवमुक्तेन प्रकारेण प्रतिसमय क्षेपो गुणसंक्रमरूपस्तावद् द्रष्टव्यो यावदन्तर्मुहूर्तम्, तदूर्ध्वं पुनः प्रागभिहितस्वरूपो विध्यातसंक्रमः प्रवर्त्तते ॥२३॥

गुणसंकमेण एसो संकमो होइ सम्ममीसेसु । अंतरकरणंमि ठिओ कुणइ जओ सप्पसत्थगुणो ॥२४॥

(स्वो०)—गुणसंक्रमेणासौ संक्रमो भवति पूर्वोक्तसम्यक्त्वसम्यग्मिथ्यात्वयोरन्तकरणे स्थितस्य, यतः स च प्रशस्तगुणो मोक्षबीजत्वादिति गाथार्थः ॥२४॥

(मलय०)—एष प्रागभिहितस्वरूपः संक्रमो मिथ्यात्वस्य सम्यक्त्वमिश्रयोर्भवति, गुणसंक्रमेणानन्तरोक्तस्वरूपः संक्रमो वेदितव्य इत्यर्थः । यतोऽसावन्तरकरणे स्थितः समप्रशस्तगुणः—सह प्रशस्तेन प्रशस्येन गुणेनौपशमिकसम्यक्त्वलक्षणेन वर्त्तत इति समप्रशस्तगुणः सन् संक्रमं करोति, तस्मादन्तरकरणे स्थितस्य गुणसंक्रमः प्रवर्त्तते तल्लक्षणस्य संभवात् । तथाहि गुणसंक्रमस्येदं लक्षणं—अपूर्वकरणादारभ्याशुभानामबध्यमानानां प्रकृतीनां गुणसंक्रमः प्रवर्तते इति । तदुक्तं–'गुणसंकमो अबज्झन्तिगाण असुभाणपुव्वकरणादी' इति । अपूर्वकरणे च मिथ्यात्वस्य बन्धः प्रवर्त्तते, तस्य वेद्यमानत्वात्, अन्तरकरणे च तस्योदयाऽभावात् बन्धो न प्रवर्त्तते, तत्र गुणसंक्रमः प्रवर्त्तते ॥

गुणसंकमेण समगं तिण्णिवि थक्कंत आउवज्जाणं । मिच्छत्तस्स उ इगिदुगआवलिसेसाए पढमाए ॥२५॥

(स्वो०)—गुणसंक्रमेण समकं–समकालं त्रिसोऽपि तिष्ठन्ति, स्थितिघातरसघातगुणश्रेण्यः, आयुर्वर्ज्जानां सप्तानामपि कर्मणाम् । मिथ्यात्वस्य पुनरावलिकाशेषा यावत्प्रथमस्थितिः तावत्स्थितिघातरसघातौ भवतः, न परतः, यावद् द्व्यावलिकाशेषा न प्रथम

स्थितिस्तावद् गुणश्रेणिरचना, न परत इति गाथार्थः ॥२५॥

(मलय०)—यावद्गुणसंक्रमः प्रवर्त्तते तावदायुर्वर्जानां सप्तानां कर्मणां स्थितिघातो रसघातो गुणश्रेणिर्वा प्रवर्त्तते, यदा तु गुणसंक्रमस्तिष्ठति-निवर्त्तते तदा गुणसंक्रमेण समं त्रितोऽपि स्थितिघातरसघातगुणश्रेणयस्तिष्ठन्ति। तथा मिथ्यात्वस्य यावदेकावलिका प्रथमस्थितौ शेषीभूता न भवति, तावत् स्थितिघातरसघातौ प्रवर्त्तेते, आवलिकामात्रशेषीभूतायां तु प्रथमस्थितौ न भवतः। तथा यावन्मिथ्यात्वस्य प्रथमस्थितिर्द्व्यावलिकाशेषा न भवति तावद्गुणश्रेणिरपि प्रवर्त्तते, द्व्यावलिकाशेषायां तस्यां गुणश्रेणिर्न भवति। उत्तरार्द्धस्य त्वक्षरयोजना इयं-मिथ्यात्वस्य एकद्व्यावलिकाशेषायां प्रथमस्थितौ यथासंख्यं स्थितिघातरसघातौ गुणश्रेणिश्च तिष्ठन्तीति॥२५॥



उवसंतद्धाअंते विहिए ओकड्ढियस्स दलियस्स । अज्झवसाणविसेसा एकस्सुदओ भवे तिण्हं ॥२६॥

(स्वो०)—उपशान्ताद्धाऽन्तसमये गोपुच्छाकारेण गुणसंक्रमविधिनापकर्षितस्य दलस्याध्यवसायविशेषतस्त्रयाणामेकस्योदयो भवतीति गाथार्थः ॥२६॥

(मलय०)—उपशान्ताद्धाया-औपशमिकसम्यक्त्वाद्धाया अन्ते-पर्यन्ते किञ्चित्समधिकावलिकाशेषे वर्त्तमानस्त्रयाणामपि द्वितीयस्थितिगतानां सम्यक्त्वादिपुञ्जानां दलिकमध्यवसायविशेषेण समाकृष्यान्तरकरणे पर्यन्तावलिकायां प्रक्षिपति, तत्र प्रथमसमये प्रभूतम्, द्वितीयसमये स्तोकम्, तृतीयसमये स्तोकतरं, एवं तावद्वाच्यं यावदावलिकाचरमसमयः, तानि चैवं दलिकानि क्षिप्यमाणानि गोपुच्छसंस्थानसंस्थितानि भवन्ति। तत आवलिकामात्रे अन्तरकरणस्य शेषे सति अध्यवसायविशेषादमीषां त्रयाणामेकतरस्य दलिकस्योदयो भवति। इदमुक्तं भवति-यदि तदानीं शुभः परिणामस्तर्हि सम्यक्त्वदलिकस्योदयः, मध्यमश्चेत्परिणामस्तर्हि सम्यग्मिथ्यात्वदलिकस्य,

जघन्यमेततो मिथ्यात्वदलिकस्येति ॥२६॥

छावलियासेसाए उवसमअद्धाइ जाव इगसमयं। असुभपरिणामओ कोइ जाइ इह सासणत्तं पि ॥२७॥

(स्वो०)—उत्कृष्टतः षडावलिकाशेषायां उपशमाद्धायां, जघन्यतः समयशेषायामशुभपरिणामतः कश्चित्सास्वादनं प्रतिपद्यत इति गाथार्थः ॥२७॥

(मलय०)—उपशान्ताद्धायां जघन्यतः समयशेषायामुत्कर्षतः षडावलिकाशेषायामशुभपरिणामतो अनन्तानुबन्ध्युदयलक्षणात् कश्चित्सासादनत्वमपि याति-प्रतिपद्यते, स च नियमात्तदनन्तरं मिथ्यात्वमेव प्रतिपद्यते ॥२७॥

सम्मत्तेण समगं सव्वं देसं च कोई पडिवज्जे। उवसंतदंसणी सो अंतरकरणे ठिओ जाव ॥२८॥

(स्वो०)—क्षायोपशमिकसम्यक्त्वेन समकं तस्मिन्नेव समये कश्चित्सर्वविरतिं देशविरतिं वा प्रतिपद्यते, यावदन्तरकरणे तिष्ठति तावदुपशमसम्यग्दृष्टिरिति गाथार्थः ॥२८॥

(मलय०)—सम्यक्त्वेनौपशमिकसम्यक्त्वेन समं कोऽपि कश्चित्सर्वविरतिं देशविरतिं वा प्रतिपद्यते, तदुक्तं शतकबृहच्चूर्णौ-'उवसमसम्मद्दिट्ठि अन्तरकरणे ठिओ कोइ देसविरइंपि लभेइ, कोइ पमत्तापमत्तभावंपि, सासायणो पुण न किं पि लभेइत्ति', उपशान्तदर्शनश्चौपशमिकसम्यग्दृष्टिश्च तावदवगन्तव्यो यावदन्तरकरणे स्थितोऽवतिष्ठत इति ॥२८॥

रसप्रतिघाते घात्यमानानुभागस्पर्धकसंख्या

| घात्यमानाः स्थितिकण्डकाः | | | घातितानुभागस्पर्धकानि | अवशिष्टानि अनुभागस्पर्धकानि |
|---|---|---|---|---|
| प्रथमे० | कण्डके | घातिते | ९०० कोट्यः | १०० कोट्यः |
| द्वितीये | " | " | ९० " | १० " |
| तृतीये | " | " | ९ " | १ कोटिः |
| चतुर्थे | " | " | ९० लक्षाणि | १० लक्षाणि |
| पञ्चमे | " | " | ९ लक्षाणि | १ लक्षम् |
| षष्ठे | " | " | ९० सहस्राणि | १० सहस्राणि |
| सप्तमे | " | " | ९ " | १ सहस्रम् |
| अष्टमे | " | " | ९ शतानि | १ शतम् |
| नवमे | " | " | नवतिः (९०) | दश (१०) |

प्रथमकण्डके घात्यमानानुभागानि

गुणसंक्रमः

अबध्यमानाशुभानां दलस्य संख्याक्रमः

| समयाः | बध्यमानपरप्रकृतौ संक्रम्यमाणदलिकसंख्या | अवशिष्टदलिकसंख्या (अबध्यमानाशुभायाः) |
|---|---|---|
| १ मे समये | अनन्तं सर्वतः स्तोकं | अनन्तगुणं ततो- |
| २ ये " | ततोऽसंख्यगुणं | ऽसंख्येयभागहीनं |
| ३ ये " | " | " |
| ४ र्थे " | " | " |
| ५ मे " | " | " |
| ६ ष्ठे " | " | " |
| ७ मे " | " | " |
| ८ मे " | " | " |

एवमन्तर्मुहूर्तं यावत्

प्ररूपणा चेत्थं—प्रथमे स्थितिकण्डके घातिते सति तदनुगतानुभागस्पर्धकाण्यप्यनन्तानि कल्पनया '९०० कोट्यः' घातितानि अवशिष्टश्चैकोऽनन्ततमो भागः कल्पनया '१०० कोट्यः' एवं द्वितीयादिस्थितिघातेऽप्येकमनन्ततमभागं मुक्त्वा शेषसर्वानुभागस्य विनाशो वक्तव्यः

सम्यक्त्वोपलम्भो भणितः, उक्तो दर्शनमोहनीयस्योपशमः । चारित्रमोहनीयस्योपशमो भण्यते—

वेयगसम्मद्दिट्ठी सोही अद्धाए अजयमाईया । करणदुगेण उवसमं चरित्तमोहस्स चेट्ठति ॥२९॥

(स्वो०)—वेदकसम्यग्दृष्टय–क्षायोपशमिकसम्यक्त्वाः, परित्यक्तसंक्लेशाद्धा विशुद्धाद्धायां वर्तमानास्ते चाविरता देशविरता वा सर्वविरता वा करणद्विकेन–यथाप्रवृत्तापूर्वाख्येन चारित्रमोहनीयस्योपशमं चेष्टन्ते–अनुचरन्तीति गाथार्थः ॥२९॥

(मलय०)—तदेवं कृता सम्यक्त्वोत्पादप्ररूपणा, संप्रति चारित्रमोहनीयस्योपशमना यथोक्तक्रमेण विस्तरेणाभिधातव्या, चारित्रमोहनीयस्य चोपशमको वेदकसम्यग्दृष्टिरयतो देशयतः सर्वविरतो वा प्रवर्द्धमानशुभपरिणामः, तथा चाह—वेदकसम्यग्दृष्टयः क्षायोपशमिकसम्यक्त्वाः परित्यक्तसंक्लेशा विशोध्यद्धायां च वर्तमाना अयतादयोऽविरतादयोऽविरतदेशविरतसर्वविरताश्चारित्रमोहनीयस्योपशम–उपशमार्थं करणद्विकेन यथाप्रवृत्तापूर्वाख्येन यथायोगं चेष्टन्ते, अनुचरा भवन्ति । तृतीयेन तु करणेन साक्षादुपशमका एव भवन्तीति करणद्विकेन चेष्टन्ते इत्युक्तम् ॥२९॥

तेषामविरतादीनां त्रयाणामपि लक्षणमाह—

जाणणगहणणुपालणविरओ विरई अविरओण्णेसु । आइमकरणदुगेण पडिवज्जइ दोण्हमण्णयरं ॥३०॥

(स्वो०)—व्रतानां ज्ञाता गृहीतानुपालकश्च यः स विरतो भवति, त्रिभिः पदैः अष्टौ भङ्गाः, शेषेषु सप्तसु वर्तमानोऽविरतः घुणाक्षरन्यायात् पालितानामपि निष्फलत्वात् । देशविरतस्तु पूर्वोक्तैस्त्रिभिः पदैः शुद्धः एकव्रतादियुक्तो यावद्नुत्कृष्टोऽनुमतिसेवको भवति,

तदेवोच्यते एकाणुव्रती, एवं यावत्पञ्चाणुव्रती द्विविधं त्रिविधेन, एवं षड्भङ्गानामन्यतमे वर्त्तमानः, एवं गुणव्रतशिक्षाव्रतग्राही तावद् यावदनुमतिसेवक इति। सापि त्रिविधा–प्रतिसेवनानुमतिः प्रतिश्रवणानुमतिः संवासानुमतिश्च। कृतं पापं श्लाघयति तच्च सावद्यारम्भोपपन्नं द्रव्यमुपभुङ्क्ते प्रतिसेवनानुमतिः। पुत्रादिभिरुदितं सावद्यं योगं शृणोति, न च प्रतिषेवते प्रतिश्रवणानुमतिः। सावद्यकारिषु पुत्रादिषु ममत्वरूपा संवासानुमतिरिति। अनया तृतीयानुमत्या युक्तः सर्वश्रावकाणां गुणाधिको भवति। एवंभूतया विरत्या विरतो भवत्यतोऽन्यथा अविरतः। अमीषां त्रयाणामन्यतमः करणद्विकेन यथाप्रवृत्तापूर्वकरणाख्येन प्रतिपद्यते द्वयोरन्यतरां, यद्यविरतः ततो देशविरतिं सर्वविरतिं वा, यदि देशविरतस्ततः सर्वविरतिम्, नत्वत्रानिवृत्तिकरणं भवति, यतोऽन्तःकोटाकोटिस्थितिस्तत्प्रतिपद्यते, अशुभानामनुभागसत्कर्म्म द्विस्थानिकमनन्तगुणहान्या क्षपयति, शुभानां चतुःस्थानिकमनन्तगुणनया वृद्धिर्भवति, एवंभूते प्राग्वत् यथाप्रवृत्तापूर्वकरणे करोति, किन्त्वत्र गुणश्रेणिः नास्ति, ततश्चापूर्वकरणसमाप्तौ देशविरतिं सर्वविरतिं वा प्रतिपद्यमानोऽपूर्वस्थितिखण्डमपूर्वमनुभागखण्डमपूर्वस्थितिबन्धं करोतीति गाथार्थः॥३०॥

देशसर्व-
विरतिप्रा-
प्तिक्रमः

(मलय०)—सांप्रत्यमेतेषामेवाविरतादीनां लक्षणमाह–विरतेर्यद् ज्ञानं ग्रहणं पालनं च, तैः कृत्वा विरतो भवति, तत्र यस्त्रिविधं त्रिविधेन सावद्याद्विरतः स सर्वविरतः, यस्तु देशतो विरतः स देशविरतः, ज्ञानग्रहणपालनरूपशुभभङ्गव्यतिरेकेण चान्येषु भङ्गेषु वर्त्तमानोऽविरतः, इयमत्र भावना–इह ज्ञानग्रहणपालनरूपैस्त्रिभिः पदैरष्टौ भङ्गाः, तत्र चाद्येषु सप्तसु नियमादविरतो, यतो व्रतानि घुणाक्षरन्यायेन पालितान्यपि न फलवन्ति भवन्ति–किन्तु सम्यग्ज्ञानसम्यग्ग्रहणपुरस्सरं पालितानि, तत्राद्येषु चतुर्षु सम्यग्ज्ञानाभावः, उत्तरेषु च त्रिषु सम्यग्ग्रहणसम्यक्पालनाभावः, तत आद्येषु सप्तसु भङ्गेषु वर्त्तमानो नियमादविरतः, चरमे तु भङ्गे वर्त्तमानो देशतो

विरतेर्देशविरतः, स चानेकप्रकारस्तद्यथा—कोऽप्येकाणुव्रती, कोऽपि द्व्यणुव्रती, एवं यावदुत्कर्षतः परिपूर्णद्वादशव्रतधारी प्रत्याख्यातसकलसावद्यकर्मा केवलमनुमतिमात्रसेवकः। अनुमतिरपि त्रिधा, तद्यथा—प्रतिसेवनानुमतिः, प्रतिश्रवणानुमतिः, संवासानुमतिश्च। तत्र यः स्वयं परैर्वा कृतं पापं श्लाघते, सावद्यारम्भोपपन्नं वा अशनाद्युपभुङ्क्ते, तस्य प्रतिसेवनानुमतिः। यदा तु पुत्रादिभिः कृतं पापं शृणोति, श्रुत्वा चानुमनुते, न च प्रतिषेधति, तदा प्रतिश्रवणानुमतिः। यदा पुनः सावद्यारम्भप्रवृत्तेषु पुत्रादिषु केवलं ममत्वमात्रयुक्तो भवति, नान्यत्किञ्चित्प्रतिशृणोति श्लाघते वा, तदा संवासानुमतिः, तत्र संवासानुमतिमात्रमेव यः सेवते स चरमो देशविरतः, स चान्यसर्वश्रावकाणां गुणोत्तमः। यः पुनः संवासानुमतेरपि विरतः स सर्वविरत उच्यते। अनयोश्च द्वयोर्देशविरतिसर्वविरत्योरन्यतरां विरतिमादिमेन यथाप्रवृत्तापूर्वाख्येन करणद्विकेन प्रतिपद्यते। इह यद्यविरतः सन् यथोक्ते द्वे करणे करोति, ततो देशविरतिं सर्वविरतिं वा प्रतिपद्यते, अथ देशविरतस्तर्हि सर्वविरतमेव। अथ कस्माद्देशविरतिसर्वविरत्योर्लाभे तृतीयमनिवृत्तिकरणं न भवति? उच्यते—इह करणकालात्प्रागप्यन्तर्मुहूर्तकालं यावत्प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या वर्धमानोऽशुभानां कर्मणामनुभागं द्विस्थानकं करोतीत्यादि तदेव वक्तव्यं यावत् यथाप्रवृत्तकरणम्, तदपि च तथैव वक्तव्यम्, ततोऽपूर्वकरणं, तदपि च तथैव, नवरमिह गुणश्रेणिर्न वक्तव्या, अपूर्वकरणाद्धायां च परिसमाप्तायामनन्तरसमये नियमाद्देशविरतिं सर्वविरतिं वा प्रतिपद्यते, ततोऽनिवृत्तिकरणं तृतीयमिह नावाप्यते ॥३०॥

| | |
|---|---|
| १ न जाणई न आयरई न पालई, सर्वलोक | ५ जाणई, न आयरई न पालइ, श्रेणिकादिक |
| २ न जाणई, न आयरई पालई, तपस्वी | ६ जाणई, न आयरई पालई, अनुत्तरदेव |
| ३ न जाणई, आयरई न पालई, पार्श्वस्थ | ७ जाणई, आयरई न पालई, संविग्नपाक्षिक |
| ४ न जाणई, आयरई पालई, अगीतार्थ | ८ जाणई, आयरई पालई, अणुमहाव्रतधारी |

उदयावलिए उप्पिं गुणसेढिं कुणइ सह चरित्तेण । अंतो असंखगुणणाइ तत्तियं वड्डई कालं ॥३१॥

(स्वो०)—ततः करणद्वये व्यतीते उदयावलिकाया उपरि गुणश्रेणीं देशचारित्रेण सर्वचारित्रेण वा सह समकालं रचयति, प्रतिसमयमसंख्येयगुणनया अन्तर्मुहूर्तं यावत्, यतस्तावन्मात्रं कालमवश्यं प्रवर्द्धमानशुभपरिणामो भवति । गुणश्रेणिरप्येवमेव प्रवर्द्धमानपरिणामे वर्द्धतेऽवस्थिते तावन्मात्रा, हीयमाने हीयते । स्वभावस्थिते स्थितिरसघातौ न भवत इति गाथार्थः । ३१॥

(मलय०)—करणद्वये व्यतिक्रान्ते उदयावलिकाया उपरि सह चारित्रेण देशचारित्रेण सर्वचारित्रेग वा समकालं प्रतिसमयमसंख्येयगुणनया गुणश्रेणिमन्तर्मुहूर्त्तं कालं यावत्करोति, कस्मादन्तर्मुहूर्त्तं कालं यावद्गुणश्रेणिं करोति ? परतोऽपि नेत्यत आह—'तत्तियं वड्ढए कालं', यतस्तावन्मात्रमन्तर्मुहूर्त्तकालं यावदवश्यं वर्द्धते–प्रवर्द्धमानपरिणामो भवति, तत उर्ध्वं त्वनियमः, तथाहि–कोऽपि प्रवर्द्धमानपरिणामो भवति, कोऽप्यवस्थितपरिणामः, कोऽपि हीयमानपरिणामः, ततो यदि प्रवर्द्धमानपरिणामो भवति तत ऊर्ध्वमपि गुणश्रेणिं प्रवर्द्धमानां करोति, अथ हीयमानपरिणामस्तर्हि हीयमानां, अवस्थितपरिणामश्चावस्थितां, स्वभावस्थे हीनपरिणामे वा देशविरते सर्वविरते वा स्थितिघातरसघातौ न भवतः ॥३१॥

परिणामपच्चएणं गमागमं कुणइ करणरहिओ वि । आभोगणट्ठचरणो करणे काऊण पावेइ ॥३२॥

(स्वो०)—परिणामप्रत्ययतः कथञ्चित्परिणामह्रासाद्देशविरतोऽविरतत्वं प्रतिपन्नः, विरतो वा देशविरतत्वमविरतत्वं वा गतः सोऽकृतकरणोऽपि भूयस्तां विरतिं प्राप्नोति, परिणामतीव्रत्वादेव । आभोगनष्टचरणस्तु मिथ्यात्वप्रतिपन्नस्त्वन्तर्मुहूर्त्तेन प्रभूतकालेन वा कर-

गदर्पं कृत्वा देशविरतिं सर्वविरतिं या प्राक्तनन्यायेन प्राप्नोतीति गाथार्थः ॥३२॥

(मलय०)—परिणामप्रत्ययतः कथञ्चित्परिणामह्रासात्कारणात् देशविरतोऽविरतिं प्रतिपन्नः, सर्वविरतो या देशविरतिमविरतिं वा, ततः स भूयोऽपि तां पूर्वप्रतिपन्नां देशविरतिं सर्वविरतिं वा करणरहितोऽपि प्रतिपद्यते। एवमकृतकरणोऽनेकशो गमागमं करोति। यः पुनराभोगतोऽप्रतिपत्त्या नष्टचरणो देशविरतेः सर्वविरतेर्वा परिभ्रष्टो मिथ्यात्वं च गतो भूयोऽपि जघन्येनान्तर्मुहूर्तेन कालेन, उत्कर्षतः प्रभूतेन कालेन, पूर्वप्रतिपन्नामपि देशविरतिं सर्वविरतिं वा उक्तप्रकारेण करणेन कृत्वा करणत्रयपुरस्सरमेव प्रतिपद्यते ॥३२॥

परिणामपच्चएणं चउव्विह होइ वड्ढई वावि। परिणामवड्ढयाए गुणसेढिं तत्तिय रयइ ॥३३॥

(स्वो०)—परिणामप्रत्ययतः परिणामहेतोश्चतुर्विधां वृद्धिं हानिं वा प्राप्नोति, असंख्येयगुणां वा संख्येयगुणां वा संख्येयभागाधिकां वाऽसंख्येयभागाधिकां वा गुणश्रेणीं करोति। प्रवर्द्धमानपरिणामो वृद्धिं नयति, संक्लिष्टस्तु ह्रासयति, अवस्थितपरिणामस्तावन्मात्रामेव धारयतीति गाथार्थः ॥३३॥

(मलय०)—परिणामप्रत्ययेन परिणामात्कारणाच्चतुर्विधं-चत्वारः प्रकारा यथा भवन्ति, एवं हीयते वर्द्धते वा गुणश्रेणिरिति विभक्तिपरिणामेन संबध्यते। इदमुक्तं भवति-यदि हीयमानः परिणामो भवति तर्हि तथा तथा परिणामहानिमधिकृत्य गुणश्रेणिश्चतुर्धा हीयते, तद्यथा—कदाचिदसंख्येयभागेन, कदाचित्संख्येयभागेन, कदाचित्संख्येयगुणेन, कदाचिदसंख्येयगुणेन। अथ परिणामः प्रतिसमयं प्रवर्द्धते तर्हि तत्परिणामानुसारेण गुणश्रेणिरप्युक्तप्रकारेण वर्द्धते। यदि पुनरवस्थितपरिणामो भवति तर्हि तावन्मात्रामेव गुणश्रेणिमारचयति। एषा चैवं दलिकापेक्षया द्रष्टव्या, कालतः पुनः सर्वदापि तावन्मात्रैव। यावच्च देशविरतिं सर्वविरतिं वा परिपालयति ताव-

द्गुणश्रेणिमपि समये समये करोति ॥ ३३ ॥

देशविरतिसर्वविरत्योः लाभो भणितः, इदानीमनन्तानुबन्धिकषायाणां वियोजना भण्यते—

सम्मुप्पायणविहिणा चउगइया सम्मदिट्ठिपज्जत्ता । संजोयणा विजोयंति न उण पढमट्ठिइं करेंति॥३४॥

(स्वो०)—सम्यक्त्वोत्पादनविधिना ये चतुर्गतिका अपि जीवा वेदकसम्यग्दृष्टयः पर्याप्तास्त्रिभिः करणैरनन्तानुबन्धिनः कषायास्ते वियोजयन्ति-विनाशयन्ति, नात्र प्रथमस्थितिं कुर्वन्ति, उपशमं वा । अविरताश्चतसृष्वपि गतिषु, देशविरताः तिर्यङ्मनुष्यगत्योः, सर्वविरता मनुष्यगतावेवेति गाथार्थः ॥ ३४ ॥

देशसर्व-विरतिमाप्तिक्रमः

(मलय०)—तदेवमुक्तो देशविरतिसर्वविरतिलाभः । संप्रत्यनन्तानुबन्धिनां विसंयोजना भण्यते—सम्यक्त्वोत्पादविधिना सम्यक्त्वोत्पादभणितकरणत्रयरूपेण प्रकारेण चतुर्गतिकाः सम्यग्दृष्टयो वेदकसम्यग्दृष्टयः पर्याप्ताः, तत्राविरतसम्यग्दृष्टयश्चतुर्गतिका अपि, देशविरतास्तिर्यंचो वा मनुष्या वा, सर्वविरतास्तु मनुष्याः, संयोजनान् अनन्तानुबन्धिनो वियोजयन्ति नाशयन्ति, न पुनरत्रान्तरकरणं कुर्वन्ति, तदभावाच्च प्रथमस्थितिमपि न कुर्वन्ति, अन्तरकरणस्य ह्यधस्तनी स्थितिः प्रथमस्थितिरित्युच्यते, द्वितीया तु द्वितीया, ततोऽन्तरकरणकरणाभावे प्रथमस्थितिमपि न कुर्वन्तीति ॥ ३४ ॥

उवरिमगे करणदुगे दलियं गुणसंकमेण तेसिं तु । नासेइ तओ पच्छा अंतमुहुत्ता सभावत्थो ॥३५॥

(स्वो०)—उपरिमे करणद्विके निवृत्त्यनिवृत्तिकरणाख्ये दलिकं कर्म्मपरमाण्वात्मकं गुणसंक्रमेण प्रागभिहितेन तेषामनन्तानुबन्धिनां

नाशयति, क्षेपकषायत्वेन स्थापयति । अन्तर्मुहूर्तात् परत' अनिवृत्तिकरणान्ते स्थितिघातरसघातगुणश्रेण्यो न भवन्ति, स्वभावस्थचतु-र्विंशतिसत्कर्म्मा स्यादिति गाथार्थः ॥ ३५ ॥

(मलय०)—अत्रैव विशेषमाह–उपरितने करणद्विके अपूर्वकरणानिवृत्तिकरणाख्ये तेषामनन्तानुबन्धिनां दलिकं परमाण्वात्मकं गुण-संक्रमेणोद्वलनासंक्रमानुविद्धेन नाशयति, क्षेपकषायत्वेन स्थापयति, अनिवृत्तिकरणे च वर्तमानः सन् गुणसंक्रमानुविद्धेनोद्वलनासंक्रमेण न निरवशेषान् विनाशयति, किन्त्वपस्तादावलिकामात्रं मुञ्चति, तदपि च स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति, ततो-ऽन्तर्मुहूर्त्तात्परतोऽनिवृत्तिकरणपर्यवसाने क्षेपकर्मणामपि स्थितिघातरसघातगुणश्रेणयो न भवन्ति, किन्तु स्वभावस्थ एव भवति चतुर्विं-शतिसत्कर्मा । तदेवमुक्तानन्तानुबन्धिनां विसंयोजना । ये त्वाचार्या अनन्तानुबन्धिनामुपशमनामपि मन्यन्ते तन्मतेनोपशमनाविधिः पडशीतिवृत्तेः सप्ततिकावृत्तेर्वा अवसेयः ॥ ३५ ॥

भणिता अनन्तानुबन्धिवियोजना, दर्शनमोहनीयस्य क्षपणोच्यते—

दसणखवणस्सरिहो जिणकालीओ पुमट्ठवासुवरिं । अणणासकमा करणाइ करिय गुणसंकमं तह य ॥३६॥

(स्वो०)—'दर्शन'–मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वस्वरूप, तस्य क्षपणा, तस्या अर्हो–योग्यः, 'जिणकालीअ' त्ति–जिनविहरणका-लसंभवः प्रथमसंहननीत्यर्थ' । 'पुम'त्ति–मनुष्यगतिजीवः व्यतीताष्टवर्षः अनन्तानुबन्धिवियोजनक्रमेण त्रीण्यपि करणानि यथाप्रवृ-त्तादीनि पूर्वं कृत्वा तथा गुणसंक्रममिति गाथार्थः ॥ ३६ ॥

(मलय०)—संप्रति दर्शनमोहनीयक्षपणाविधिमाह—दर्शनं मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वरूप, तस्य क्षपणा तस्या अर्हो

योग्यो 'जिनकालीओ'–जिनविहरणकालसंभवी प्रथमसंहननी च ''पुमत्ति'–मनुष्यगतौ वर्त्तमानो जीवो 'वर्षाष्टकस्योपरि वर्त्तमानोऽनन्तानुबन्धिविसंयोजनक्रमेण यथाप्रवृत्तादीनि त्रीणि करणानि, तथा गुणसंक्रमं च कृत्वा साकल्येन क्षपयति। इयमत्र भावना–दर्शनमोहनीयक्षपणार्थमभ्युद्यतस्त्रीणि करणानि करोति, तद्यथा—यथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं च। एतानि च त्रीण्यपि करणानि प्रागिव वक्तव्यानि। नवरमपूर्वकरणस्य प्रथमसमये एव गुणसंक्रमेण मिथ्यात्वसम्यग्मिथ्यात्वयोर्दलिकं सम्यक्त्वे प्रक्षिपति, उद्वलनासंक्रममपि तयोरेवमारभते, तद्यथा—प्रथमं स्थितिखण्डं बृहत्तरं घातयति, ततो द्वितीयं विशेषहीनम्, एवं तावद्वक्तव्यं यावदपूर्वकरणचरमसमयः॥ ३६॥

अप्पुव्वकरणसमगं गुणउव्वलणं करेइ दोण्हंपि। तक्करणाइं जं तं ठितिसंतं संखभागान्ते ॥३७॥

(स्वो०)—तं च गुणसंक्रममपूर्वकरणेन समं–समकालमुद्वलनविधिना करोति, द्वयोरप्यनुदितपुञ्जयोर्मिथ्यात्वसम्यग्मिथ्यात्वाख्ययोः, तत्करणादौ बृहत्स्थितिखण्डं (ततो द्वितीयं विशेषहीनं) एवं यावत्करणसमाप्तिरिति। यत्करणादौ स्थितिसत्कर्म्म तस्य करणान्ते संख्येयभागो भवतीति गाथार्थः॥ ३७॥

(मलय०)—तथा चाह–अपूर्वकरणसमकं अपूर्वकरणप्रथमसमयादारभ्येत्यर्थः, गुणसंक्रममुद्वलनं च द्वयोरनुदितयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोः करोति। तत्करणादावपूर्वकरणादौ यत्स्थितिसत्कर्मासीत् तत्तस्यैव करणस्यान्ते चरमसमये संख्येयभागमात्रं भवति, प्रथमसमयापेक्षया संख्येयगुणहीनं भवतीत्यर्थः॥ ३७॥

एवं ठितिबंधो वि हु पविसइ अणियट्टिकरणसमयंमि। अप्पुव्वं गुणसेढिं ठितिरसखंडाणि बंधं च ॥३८॥

(स्वो०)—एवमनेनैव सत्कर्मन्यायेन स्थितिबन्धोऽपि योऽपूर्वकरणादावासीत्, तस्यान्तसमये संख्येयगुणहीनो भवति, तस्मिन् काले तृतीयमनिवृत्तिकरणं प्रविशति। तत्रामूनि गुणश्रेण्यादीनि भवन्ति, अपूर्वगुणश्रेणिमपूर्वस्थितिघातमपूर्वरसघातमपूर्वस्थितिबन्धं च करोति इति गाथार्थः ॥ ३८ ॥

(मलय०)—एवमनेन प्रकारेण स्थितिसत्कर्मन्यायेन स्थितिबन्धोऽपि वेदितव्यः, अपूर्वकरणप्रथमसमये यावान् स्थितिबन्ध आसीत् तदपेक्षया तस्यैवापूर्वकरणस्य चरमसमये सङ्ख्येयगुणहीनो भवतीत्यर्थः, ततोऽनिवृत्तिकरणसमये प्रविशति, तत्र च प्रविष्टः सन् प्रथमसमयादेवारभ्यापूर्वां गुणश्रेणिमपूर्वं स्थितिघातं रसघातमपूर्वं च स्थितिबन्धं कर्तुमारभते ॥ ३८ ॥

देसुवसमणनिकायणनिहत्तिरहियं च होइ दिट्ठितिगं। कमसो असण्णिचउरिंदियाइतुल्लं च ठितिसंतं॥३९॥

(स्वो०)—अनिवृत्तिकरणे प्रवर्त्तमाने देशोपशमनानिकाचनानिधत्तिकरणरहित-वियुक्तं दर्शनत्रिकमपि भवति, स्थितिसत्कर्म च दर्शनत्रिकस्य सागरोपमपृथक्त्वमानैः खण्डैः खण्ड्यमानं खण्ड्यमानं क्रमेणासंज्ञिचतुस्त्रीद्व्येकेन्द्रियसत्कर्मतुल्यमनिवृत्तिकरणे भवतीति गाथार्थः ॥ ३९ ॥

(मलय०)—अनिवृत्तिकरणप्रथमसमये एव च देशोपशमनानिकाचनानिधत्तिरहितं दर्शनत्रिकं भवति, देशोपशमनादीनां त्रयाणां करणानां मध्ये नैकमपि तदानीं दर्शनत्रिकस्य करणं प्रवर्त्तत इत्यर्थः। दर्शनमोहनीयत्रिकस्य च स्थितिसत्कर्म स्थितिघातादिभिर्घात्यमानमसंज्ञिपञ्चेन्द्रियस्थितिसत्कर्मसमानं भवति। ततः स्थितिखण्डसहस्रपृथक्त्वे गते सति तु चतुरिन्द्रियस्थितिसत्कर्मसमानम्, ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु त्रीन्द्रियस्थितिसत्कर्मसमानम्, ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु द्वीन्द्रियस्थितिसत्कर्मसमानम्, ततो-

ऽपि तावन्मात्रेषु खण्डेषु गतेष्वेकेन्द्रियस्थितिसत्कर्मसमानम्, ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु पल्योपमसंख्येयभागमात्रप्रमाणं भवति ॥ ३९ ॥

**ठितिखंडसहस्साइं एक्केक्के अंतरंमि गच्छंति । पलिओवमसंखंसे दंसणसंते तओ जाए ॥४०॥**

(स्वो०)—स्थितिखण्डसहस्राणि-स्थितिघातसहस्राणि, एकैकस्मिन्नन्तरे व्रजन्ति । स्थितिबन्धादन्यस्थितिबन्धः स्थितिबन्धान्तरं, तस्मिन् स्थितिघातसहस्राणि गच्छन्ति-व्यतिक्रामन्ति, ततः पल्योपमसंख्येयभागे दर्शनत्रिकस्य सत्कर्मणि जाते यद् तदुच्यत इति गाथार्थः ॥४०॥

दर्शनमोह
क्षपणा

(मलय०)—एतदेवाह-अनिवृत्तिकरणादारभ्य क्रमशोऽसंज्ञिपञ्चेन्द्रियचतुरिन्द्रियादितुल्यं स्थितिसत्कर्म वक्तव्यम् । एकैकस्मिंश्चान्तरे स्थितिखण्डसहस्राणि-स्थितिघातसहस्राणि व्रजन्ति । भावना प्रागेव कृता । एवं पल्योपमसंख्येयभागमात्रे दर्शनमोहनीयत्रितयस्य सत्कर्मणि जाते सति यद्भवति तत्सांप्रतमुच्यते ॥४०॥

**संखेज्जा संखेज्जा भागा खंडेइ सहससो ते वि । तो मिच्छस्स असंखा संखेज्जा सम्ममीसाणं ॥४१॥**

(स्वो०)—पल्योपमसंख्येयभागस्थितिके दर्शनत्रिके संख्येयाः संख्येयाः स्थितिभागाः स्थितिघाते स्थितिघाते व्रजन्ति, संख्येयभागोऽवतिष्ठते, सहस्रशस्तेऽपि यदा व्यतीता भवन्ति, ततो मिथ्यात्वस्यासंख्येया भागाः स्थितिघाते स्थितिघाते व्रजन्ति, सम्यग्मिथ्यात्वसम्यक्त्वयोः संख्येयाः संख्येयाः स्थितिघाते स्थितिघाते भागा व्रजन्तीति गाथार्थः ॥४१॥

(मलय०)—पल्योपमसंख्येयभागमात्रस्थितिके दर्शनमोहनीयत्रिके जाते सति संख्येयान् भागान् खण्डयति। इयमत्र भावना—पल्योपमसंख्येयभागमात्रस्य स्थितिसत्कर्मण एकं संख्येयभागं मुक्त्वा शेषानशेषानपि संख्येयान् भागान् त्रयाणामपि मिथ्यात्वादीनां विनाशयति। ततः प्राग्मुक्तस्य संख्येयभागस्य एकं संख्येयभागं मुक्त्वा शेषानशेषानपि संख्येयान् भागान् विनाशयति। एवं ते संख्येयभागाः खण्ड्यमानाः सहस्रशोऽपि व्रजन्ति। ततो मिथ्यात्वस्यासंख्येयान् भागान् खण्डयति, सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु संख्येयान् भागान् ॥४१॥

तत्तो बहुखंडते खंडइ उदयावलीरहियमिच्छं। तत्तो असंखभागा सम्मामीसाण खंडेइ ॥४२॥

(स्वो०)—ततोऽनेन विधिना प्रभूतानां स्थितिखण्डानां अन्ते उदयावलिकारहितां सर्वां मिथ्यात्वस्थितिं खण्डयति। ततो सम्यग्मिथ्यात्वसम्यक्त्वयोरसंख्येयभागान् खण्डयत्येकोऽसंख्येयभागः स्थितेरवतिष्ठत इति गाथार्थः ॥४२॥

(मलय०)—ततोऽनेन विधिना स्थितिखण्डानां प्रभूतानामन्ते उदयावलिकारहितं सकलमपि मिथ्यात्वं खण्डयति-विनाशयति। तदानीं च सम्यक्त्वसम्यग्मिथ्यात्वयोर्दलिकं पल्योपमासंख्येयभागमात्रमवतिष्ठते। अमूनि च स्थितिखण्डानि खण्ड्यमानानि मिथ्यात्वसत्कानि सम्यक्त्वसम्यग्मिथ्यात्वयोः प्रक्षिपति, सम्यग्मिथ्यात्वसत्कानि सम्यक्त्वे, सम्यक्त्वसत्कानि स्वप्रस्तावस्वस्थाने इति। तदपि च मिथ्यात्वदलिकमावलिकामात्रं स्तिबुकसंक्रमेण सम्यक्त्वे प्रक्षिपति। मिथ्यात्वस्य चावलिकामात्रायां स्थितौ सत्यां तत ऊर्ध्वं सम्यक्त्वसम्यग्मिथ्यात्वयोरसंख्येयान् भागान् खण्डयति एकोऽवशिष्यते। ततस्तस्याप्यसंख्येयान् भागान् खण्डयति, एकं मुञ्चति ॥४२॥

बहुखंडंते मीसं उदयावलिबाहिरं खिवइ सम्मे । अडवाससंतकम्मो दंसणमोहस्स सो खवगो ॥४३॥

(स्वो०)—बहूनां संख्येयानां स्थितिखण्डानामतीतानां सम्यग्मिथ्यात्वं उदयावलिकाबाह्यं खण्डयति-सम्यक्त्वे प्रक्षिपतीत्यर्थः, तस्मिन् काले अष्टवार्षिकसम्यक्त्वसत्कर्मा दर्शनमोहनीयस्य क्षपकोऽभिधीयत इति गाथार्थः ॥४३॥

(मलय०)—ततो यज्जातं तदाह-एवं कतिपयेषु स्थितिखण्डेषु गतेषु सम्यग्मिथ्यात्वमावलिकामात्रं जातम्, तदानीं च सम्यक्त्वस्य स्थितिसत्कर्म वर्षाष्टकप्रमाणं विद्यते, स चाष्टवर्षप्रमाणसम्यक्त्वसत्कर्मा तत्काले सकलप्रत्यूहापगमतो निश्चयनयमतेन दर्शनमोहनीयस्य क्षपक उच्यते ॥ ४३ ॥

दर्शनमोहक्षपणा

अंतमुहुत्तियखंडं तत्तो उक्किरइ उदयसमयाओ । निक्खिवइ असंखगुणं जा गुणसेढी परिहीणं ॥४४॥

(स्वो०)—आन्तर्मुहूर्तिकं स्थितिखण्डं सम्यक्त्वस्य ततश्चोत्किरति-घातयति, ततो उदयसमयादारभ्य निक्षिपति-स्थापयति गुणश्रेणिक्रमेण प्रतिसमयमसंख्येयगुणं यावत् गुणश्रेणिकालं, तदूर्ध्वतो विशेषहीनं विशेषहीनं यावदुत्कृष्टा स्थितिरिति गाथार्थः ॥४४॥

(मलय०)—ततो निश्चयनयमतेन क्षपकत्वभवनादूर्ध्वं सम्यक्त्वस्य स्थितिखण्डमन्तर्मुहूर्तप्रमाणमुत्किरति-घातयति, तद्दलिकं तूदयसमयादारभ्य प्रक्षिपति । तद्यथा-उदयसमये स्तोकम्, ततो द्वितीयसमये असंख्येयगुणम्, ततोऽपि तृतीयसमये असंख्येयगुणम्, एवं तावद्वक्तव्यं यावद्गुणश्रेणीशिरः, तत ऊर्ध्वं विशेषहीनं विशेषहीनं तावद्यावच्चरमा स्थितिः ॥४४॥



उक्किरइ असंखगुणं जाव दुचरिमंति अंतिमे खंडे । संखेज्जंसो खंडइ गुणसेढीए तहा देइ ॥४५॥

(स्वो०)—स्थितयग्रमुत्किरति खण्डयत्यन्तर्मुहूर्तेन, भूयोऽसंख्येयगुणतया यावद् द्विचरमं स्थितिखण्डम्, अन्तिमखण्डस्य संख्येय-भागं खण्डयति, गुणश्रेण्यां तथा-येनैव प्रकारेण ददाति तद्दलमिति गाथार्थः ॥४५॥

(मलय०)—ततो द्वितीयस्थितिखण्डमन्तर्मुहूर्तप्रमाणं पूर्वस्मादसंख्येयगुणमुत्किरति-खण्डयति, प्रागुक्तप्रकारेण च उदयसमया-दारभ्य निक्षिपति। एवं पूर्वस्मात्पूर्वस्मादसंख्येयगुणं स्थितिखण्डमुत्किरन् तावदवसेयो यावद् द्विचरमं स्थितिखण्डम्, द्विचरमाच्च स्थितिखण्डादन्तिमं स्थितिखण्डं संख्येयगुणम्, तस्मिंश्चान्तिमे स्थितिखण्डे खण्ड्यमाने संख्येयं भागं गुणश्रेण्या खण्डयति, अन्यांश्च तदुपरिवर्तिनः संख्येयगुणाः स्थितीरुत्कीर्य तद्दलिकमुदयसमयादारभ्यासंख्येयगुणतया प्रक्षिपति। तद्यथा-उदयसमये स्तोकम्, ततो द्वितीयसमये असंख्येयगुणम्, ततोऽपि तृतीयसमये असंख्येयगुणम्, एवं तावद्वाच्यं यावद्गुणश्रेणिशिरः, अत ऊर्ध्वं तूत्कीर्यमाणमेव दलिकं, ततो न तत्र प्रक्षिपति। चरमे च स्थितिखण्डे उत्कीर्णे सति असौ क्षपकः कृतकरण उच्यते ॥४५॥

कयकरणो तक्काले कालंपि करेइ चउसु वि गईसु। वेइयसेसो सेढी अण्णयरं वा समारुहइ ॥४६॥

(स्वो०)—कृतकरणो-निष्पादितकरणः तस्मिन् काले कालमपि करोति, चतसृष्वपि गतिषु गच्छति, वेदितशेषोऽनुभवितशेषः क्षप-कश्रेणिमुपशमश्रेणिं वा समारोहतीति गाथार्थः ॥४६॥

(मलय०)—कृतकरणः सन् कश्चित्कालमपि करोति, कृत्वा च तत्कालं चतसृणां गतीनामन्यतमस्यां गतावुत्पद्यते, तदेवं प्रस्थापको मनुष्यः, निष्ठापकस्तु चतसृष्वपि गतिषु भवति। उक्तं च-'पट्ठवगो उ मणुस्सो निट्ठवगो होइ चउसु वि गईसु'। यदि पुनस्तदानीं कालं न करोति तर्हि वेदितशेषोऽनुभवितसम्यक्त्वशेषः क्षायिकसम्यग्दृष्टिः सन् अन्यतरां श्रेणिं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहति।

वैमानिकेष्वेव बद्धायुष्क उपशमश्रेणिं, अबद्धायुष्कस्तु क्षपकश्रेणिं, चतुर्गतिबद्धायुष्कस्तु न कामपि श्रेणिमित्यर्थः ॥४६॥

तइय चउत्थे तंमि व भवंमि सिज्झंति दंसणे खीणे । जं देवनरयऽसंखाउचरमदेहेसु ते होंति ॥४७॥

(स्वो०)—तृतीये चतुर्थे वा तस्मिन् वा भवे सिद्ध्यन्ति, सप्तके क्षीणे जीवा इति गम्यते, यतो—यस्माद् बद्धायुष्का वैमानिकदेवेषु रत्नप्रभानारकेषु वा क्षपितसप्तका गच्छन्ति, ते तु तद्भवानुभवनात्तृतीये भवे सेत्स्यन्ति, असंख्येयवर्षायुस्तिर्यग्मनुष्येषु ये बद्धायुष्काः सप्तकं क्षपयन्ति, तेऽपि द्विभवानुभवनाचतुर्थभवे सेत्स्यन्ति, ये तु अबद्धायुष्का सप्तकं क्षपयन्ति ते चरमदेहाः स्वस्मिन्नेव भवे सिद्ध्यन्तीति गाथार्थः ॥४७॥

दर्शनमोक्षपणा

(मलय०)—अथोच्येत क्षीणसप्तकः कतिमे भवे मोक्षमुपयाति ? उच्यते—तृतीये चतुर्थे तस्मिन् वा भवे क्षीणे दर्शने दर्शनमोहनीये सिध्यन्ति जीवाः । कुत इत्याह—यद्यस्मात्कारणात्क्षीणसप्तका देवनारकाऽसंख्येयवर्षायुष्केषु भवन्ति—उत्पद्यन्ते, चरमदेहेषु वा भवन्ति चरमदेहा वा भवन्ति, ततस्तृतीये चतुर्थे तस्मिन् वा भवे सिध्यन्तीत्युच्यते । इयमत्र भावना—देवगतौ बद्धायुष्कास्ते सप्तकक्षयं कृत्वा देवेषु मध्ये उत्पद्यन्ते, ये तु नरकेषु बद्धायुष्कास्ते नरकेषु, ततो देवभवान्नरकभवाद्वा समागत्य मनुष्या भूत्वा मोक्षं यान्तीति तृतीयभवे सिध्यन्तीत्युच्यते । ये तु तिर्यङ्मनुष्येष्वसंख्येयवर्षायुष्केषु मध्ये बद्धायुष्कास्ते सप्तकक्षयं कृत्वा तन्मध्ये उत्पद्यन्ते, ततो देवेषु, देवभवात्समागत्य मनुष्या भूत्वा मोक्षं यान्तीति चतुर्थे भवे सिध्यन्तीत्यभिधीयते । ये त्वबद्धायुष्काः सप्तकं क्षपयन्ति ते चरमदेहा उच्यन्ते, ते च सप्तकक्षयानन्तरं क्षपकश्रेणिमेव प्रतिपद्यन्ते, इति तस्मिन्नेव भवे सिध्यन्ति ॥४७॥

## अनन्तानुबन्धिनामुपशमनाक्रमः

प्रस्थापकाः-अविरताद्याश्चातुर्गतिकाः देशविरतास्तिर्यग्नराः सर्वविरता मनुष्या एव। (अत्र बिन्दवः प्रदेशोदयसूचकाः)

| क्रियाक्रमः | | |
|---|---|---|
| विशुद्धिः (अन्तर्मु०) | | अत्र प्रथमसमयादन्यस्थितिबन्धः । |
| यथाप्रवृत्तम् (अन्तर्मु०) | | अत्रापि प्रथमसमयादन्यस्थितिबन्धः । |
| अपूर्वकरणम् (अन्तर्मु०) | | अत्र प्रथमसमयात् स्थितिघातादि५पदार्था युगपत् प्रवर्तन्ते। (नवरं गु०श्रे० दलिकप्रक्षेप उदयावलिकाया उपरि) |
| अनिवृत्तिकरणम् (अन्तर्मु०) | संख्येया भागाः | अत्रापि पूर्वोक्ताः ५ पदार्था युगपत् प्रवर्तन्ते । |
| | १ संख्येयो भागः / आव० लि० | अतः प्राग्भ्यान्तरकरणं प्रथमस्थितेः प्रारभ्यते, द्वितीयसमयादुपशमनाऽपि प्रारभ्यते ।<br>स्तिबुकेन अनुदयवर्तिनामावलिकामात्रायाः प्रथमस्थितेः प्रथम(=पूर्व)समयो यथायथा क्षीयते तथानथोपरितनसमय(=परसमयः) आवलिकाया प्रविशति । |
| अन्तरम् (अनन्तानुबन्धिनां प्रदेशोदयः) अन्तर्मु० | | अत्र अन्तरकरणक्रियासमाप्ता, उपशान्ता अनन्तानुबन्धिनोऽपि, निवृत्ता स्थितिघातादयोऽपि । |
| द्वितीया स्थितिः (उपशान्ता) | | अत्रागतस्य पुनरपि प्रदेशोदयो भवति । |

## श्रेणिसत्कदर्शनमोहोपशमनाक्रमः

क्रियाक्रमः

| | | |
|---|---|---|
| विशुद्धिः | ० ० ० ० ० ० ० ० | अत्र प्रथमसमयादन्यस्थितिबन्धः । |
| यथाप्रवृत्तम् | ० ० ० ० ० ० ० ० ० ० | अत्रापि प्रथमसमयादेवान्यस्थितिबन्धः । |
| अपूर्वकरणम् | ० ० ० ० ० ० ० ० ० ० ० ० | अत्र प्रथमसमयादेव स्थितिघात–रसघातौ–गुणश्रेणि. अन्यस्थितिबन्धश्च प्रवर्त्तन्ते एवं गुणसंक्रमोऽपि । |
| अनि- (संख्येया भागाः) | ० ० ० ० ० ० | |

अत्र प्रथमसमयादारभ्य मिथ्यात्वमिश्रयोर्गु-णसंक्रमः प्रवर्तते

उक्ता दर्शनक्षपणा । चारित्रमोहनीयस्योपशमना भण्यते-सा च क्षीणसप्तकस्य वैमानिकेष्वेव बद्धायुष्कस्य भवति, अबद्धायुष्कस्तु क्षपकश्रेणिं करोति, यस्तु वेदकसम्यग्दृष्टिस्तस्य अनियमो बद्धायुष्कोऽबद्धायुष्को वा भवति, किन्तु यो वियोजितानन्तानुबन्धिकषायो भवति स चतुर्विंशतिसत्कर्मा, तेष्ववियोजितेष्वष्टाविंशतिसत्कर्मा केषाञ्चित् । अनन्तानुबन्धिनो वियोज्य पश्चाद्दर्शनत्रिकमुपशमयति स च 'वेयगसम्मद्दिट्ठी' अस्यां गाथायां चारित्रलम्भार्होऽविरतादिस्त्रिविधः कथितः, तत्र यो दर्शनत्रिकमविरत उपशमयति तं मत्याह—

चारित्रमो-
होपशमना

**अहवा दंसणमोहं पढमं उवसामइत्तु सामण्णे । ठिच्चा अणुदइयाणं पढमठिई आवली नियमा ॥४८॥**
**पढमुवसमं व सेसं अंतमुहुत्ताउ तस्स विज्झाओ । संकेसविसोहीओ पमत्तइयरत्तणं बहुसो ॥४९॥**

(स्वो०)—क्षीणसप्तकश्चारित्रमोहमेवोपशमयति, अथवा दर्शनत्रिकं वेदकसम्यग्दृष्टिः प्रथममुपशमय्य प्राक्तनन्यायेन वा मिथ्यात्व-सम्यग्मिथ्यात्वयोरावलिकामात्रा सम्यक्त्वस्य अन्तर्मुहूर्त्तिका प्रथमस्थितिर्नियमान्निश्चयेनेति गाथार्थः, प्रथमसम्यक्त्वोपलम्भोपशमवच्छेषम् । अन्तर्मुहूर्त्तात् व्यतीताद् गुणसंक्रमावसाने विध्यातसंक्रमः सम्यक्त्वस्य भवति । एवं दर्शनत्रिके उपशान्ते संक्लेशविशुद्धितः प्रमत्ताप्रमत्तत्वानि सहस्रशो विधाय यत्करोति तदुच्यत इति गाथार्थः ॥४८-४९॥

(मलय०)—उक्ता दर्शनमोहनीयस्योपशमना(स्य क्षपणा), सम्प्रति चारित्रमोहनीयस्योपशमना भण्यते—सा च क्षीणसप्तकस्य वैमानिकेष्वेव बद्धायुष्कस्य भवति, अबद्धायुष्कस्तु क्षपकश्रेणिमारोहति । यस्तु वेदकसम्यग्दृष्टिः सन्नुपशमश्रेणिं प्रतिपद्यते सोऽनियतो बद्धायुष्कोऽबद्धायुष्को वा, स च केषाञ्चिन्मतेनानन्तानुबन्धिनो विसंयोज्य चतुर्विंशतिसत्कर्मा सन् प्रतिपद्यते । केषाञ्चित्पुनर्मतेनो-

पशममप्यापि, ततो विसंयोजितानन्तानुबन्धिकषाय उपशमितानुबन्धिकषायो वा सन् दर्शनत्रितयमुपशमयति। तथा चाह–'अथवे'ति मतान्तरे, आदौ दर्शनमोहनीयं क्षपयित्वा उपशमश्रेणिं प्रतिपद्यते, अथवा दर्शनमोहनीयं प्रथममुपशमय्यापि प्रतिपद्यते, कथमुपशमय्येत्यत आह–श्रामण्ये संयमे स्थित्वा, उपशमनाविधिश्च प्रागुक्तः करणत्रयानुगो वेदितव्यः, नवरमन्तरकरणं कुर्वन् अनुदितयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोः प्रथमस्थितिरावलिकामात्रा नियमाद्वेदितव्या, सम्यक्त्वस्य चान्तर्मुहूर्तप्रमाणा, उत्कीर्यमाणं च दलिकमन्तरकरणे त्रयाणामपि सम्यक्त्वप्रथमस्थितौ प्रक्षिपति, शेषं प्रथमोपशमवत्–प्रथमौपशमिकसम्यक्त्ववद्वेदितव्यम्। अन्तरकरणप्रवेशसमयादारभ्यान्तर्मुहूर्तेऽतिक्रान्ते गुणसंक्रमावसाने विध्यातसंक्रमस्तस्य सम्यक्त्वस्य भवति। किमुक्तं भवति? विध्यातसंक्रमेण मिथ्यात्वसम्यग्मिथ्यात्वयोर्दलिकं सम्यक्त्वे प्रक्षिपतीति, एवं दर्शनमोहनीयत्रितये उपशान्ते संक्लेशविशोधिवशात्प्रमत्तत्वमितरच्चाप्रमत्तत्वं बहुशोऽनेकशोऽनुभूय चारित्रमोहनीयोपशमनाय यतते ॥ ४८–४९ ॥

पुण तिण्णि व करणाइं करेइ तइयंमि एत्थ पुण भेओ। अंतोकोडाकोडी बंध संतं च सत्तण्हं ॥५०॥

(स्वो०)—चारित्रमोहनीयोपशमार्थं पुनस्त्रीण्यपि करणानि यथाप्रवृत्तापूर्वानिवृत्तिकरणाख्यानि करोति प्राग्वत्, किन्तु अत्र तृतीयकरणे भेदः, अन्तःकोटाकोटीमानं बन्धं सत्कर्म च सप्तानामायुर्वर्जानां कर्मणां करणादौ भवतीति गाथार्थः ॥५०॥

(मलय०)—कथमित्याह–चारित्रमोहनीयोपशमनार्थं पुनरपि त्रीणि यथाप्रवृत्तापूर्वानिवृत्त्याख्यानि करणानि करोति, करणवक्तव्यता प्राग्वद् द्रष्टव्या, केवलमत्र तृतीये करणे भेदस्तमेव दर्शयति–अन्तःकोटीकोटीमानं बन्धं सत्कर्म च सप्तानामायुर्वर्जानां करणप्रथमसमये करोति, तत्र यद्यपि प्रागुक्तेष्वपि करणेष्वेतावान् बन्धः सत्कर्म च सप्तकर्मणां प्राप्यते तथाप्यत्र बन्धसत्कर्मणी

तदपेक्षया असंख्येयगुणहीने द्रष्टव्ये इति विशेषः, कर्मप्रकृतौ त्वत्र सत्कर्मान्तःसागरोपमकोटीकोटीप्रमाणमुक्तम्, बन्धस्त्वन्तःसागरोपमकोटीप्रमाणः, तदुक्तं—"अन्तोकोडाकोडी संतं अनियट्टिणो उ उवसंते। बन्धो अन्तोकोडी" ॥५०॥

**ठिइखंडं उक्कोसंपि तस्स पल्लस्स संखतमभागं। ठितिखंडं बहु सहसे सेक्केक्कं जं भणिस्सामो ॥५१॥**

(स्वो०)—स्थितिखण्डं उत्कृष्टमपि पल्योपमसंख्येयभागमात्रं तस्य प्राक्तनबन्धस्य ह्रापयित्वा ह्रापयित्वा अन्यं स्थितिबन्धं करोतीति शेषः, स्थितिखण्डसहस्रेष्वेवं गतेषु एकैकं करोति यत्तद् वयं भणिष्यामः, यद्यपि सप्तानामपि कर्मणां पल्योपमसंख्येयभागोऽभिहितो घातः, तथापि नामगोत्रयोः स्तोको हीनस्थितित्वाद्, ज्ञानदर्शनावरणान्तरायवेदनीयानां विशेषाधिको, मोहनीयस्य तस्मादपि विशेषाधिक इति गाथार्थः ॥५१॥

(मलय०)—स्थितिखण्डमुत्कृष्टमपि पल्योपमसंख्येयभागमात्रं खण्डयति, तथा तस्य प्राक्तनबन्धस्य पल्योपमसंख्येयभागमात्रं ह्रापयित्वा ह्रापयित्वा अन्यं स्थितिबन्धं करोतीति शेषः। तत्र यद्यपि सप्तानामपि कर्मणां पल्योपमसंख्येयभागप्रमाणो घात उक्तस्तथापि एवं सत्कर्म द्रष्टव्यम्। तद्यथा—नामगोत्रे सर्वस्तोके हीनस्थितिकत्वात्, ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणि विशेषाधिकानि, स्वस्थाने तु परस्परं तुल्यानि, ततोऽपि मोहनीयं विशेषाधिकम्। स्थितिखण्डसहस्रेषु च बहुष्वतिक्रान्तेषु एकैकं यत्करोति तद्वयं भणिष्यामः ॥५१॥

**करणाउ संखभागे सेसे य असण्णिमाइयाण समो। बंधो कमेण पल्लं वीसग तीसाण उ दिवड्ढं ॥५२॥**

(स्वो०)—तस्मादनिवृत्तिकरणात् संख्येयेषु भागेषु गतेष्वेकस्मिन् शेषे पञ्चेन्द्रियासंज्ञिबन्धतुल्यं बध्नाति, ततः स्थितिखण्डपृथक्त्वेषु गतेषु चतुरिन्द्रियबन्धतुल्य बन्ध बध्नाति, एवमनेन न्यायेन त्रिद्व्येकेन्द्रियबन्धतुल्यं बन्धं बध्नाति, ततः स्थितिबन्धसहस्रेष्वतीतेषु पल्योपमतुल्यो 'वीसगाणं' ति—नामगोत्रयोः, 'तीसगाणं' ति—ज्ञानदर्शनावरणान्तरायवेदनीयानां सार्द्धपल्योपमिकस्थितिबन्धो भवतीति गाथार्थः ॥५२॥

(मलय०)—तदेवाह—करणस्यानिवृत्तिकरणस्य संख्येयेषु भागेषु गतेषु सत्सु एकस्मिन् शेषे असंज्ञिपञ्चेन्द्रियादीनां समो बन्धः क्रमेण भवति, स चैवं—अनिवृत्तिकरणस्य संख्येयेषु भागेषु गतेष्वेकस्मिन् शेषे असंज्ञिपञ्चेन्द्रियबन्धतुल्यः स्थितिबन्धो भवति, तदनन्तरं स्थितिखण्डपृथक्त्वे गते सति चतुरिन्द्रियबन्धतुल्यः स्थितिबन्धः, ततो भूयोऽपि स्थितिखण्डपृथक्त्वे गते सति त्रीन्द्रियबन्धतुल्यः स्थितिबन्धः, तत एवमेव द्वीन्द्रियबन्धतुल्यः, ततोऽप्येवमेवैकेन्द्रियबन्धतुल्यः, ततोऽपि स्थितिबन्धसहस्रेषु गतेषु विंशतिकयोर्विंशतिसागरोपमकोटीकोटीप्रमाणयोर्नामगोत्रयोरित्यर्थः पल्योपममात्रस्थितिबन्धो भवति, त्रिंशत्कानां तु ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां सार्द्धपल्योपममात्रः ॥५२॥

मोहस्स दोण्णि पल्ला सतेसि तु एवमेव अप्पबहू । पलियमित्तम्मि बधे अण्णो संखेज्जगुणहीणो ॥५३॥

(स्वो०)—मोहनीयस्य द्विपल्योपमिको बन्धः, सत्कर्मणि चाल्पबहुत्वं बन्धक्रमेण वक्तव्यम् । यद्यप्यन्तःकोटाकोटिः सप्तानामपि, तथापि नामगोत्रयोः स्तोकम्, वेदनीयघातिकर्मणां विशेषाधिकम्, मोहनीयस्य विशेषाधिकम् । पल्योपमप्राप्ते बन्धे योऽन्यो बन्धः स संख्येयगुणहीनो भवति नामगोत्रयोः, शेषाणां संख्येयभाग इति गाथार्थः ॥५३॥

(मलय०)—मोहनीयस्य द्वौ पल्योपमौ स्थितिबन्धः, स्थितिसत्कर्मणि चाल्पबहुत्वं बन्धक्रमेण वक्तव्यम्, तद्यथा—सर्वस्तोकं नामगोत्रयोः, ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां विशेषाधिकम्, ततो मोहनीयस्य विशेषाधिकम्। तथा यस्य यस्य कर्मणो यदा यदा पल्योपमप्रमाणः स्थितिबन्धो भवति तस्य तस्य तदा तदा तत्कालादारभ्यान्योऽन्यः स्थितिबन्धः संख्येयगुणहीनो भवति। ततश्चेदानीं नामगोत्रयोः पल्योपमप्रमाणात्स्थितिबन्धादन्यं स्थितिबन्धं संख्येयगुणहीनं करोति, शेषाणां तु कर्मणां पल्योपमसंख्येयभागहीनम् ॥५३॥

चारित्रमोहोपशमना।

**एवं तीसाण पुणो पल्लं मोहस्स होइ उ दिवड्ढं। एवं मोहे पल्लं सेसाणं पल्लसंखंसो ॥५४॥**

(स्वो०)—'तीसाणं' ति, ज्ञानदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धसहस्रेष्वतीतेषु पल्योपमिकं बन्धं करोतीति। पल्योपमप्राप्ते बन्धे संख्येयगुणहीनमन्यबन्धं तेषां करोति। मोहनीयस्य तु सार्द्धपल्योपमिकमित्येवं पूर्वक्रमेण स्थितिबन्धसहस्रेषु गतेषु मोहनीयस्य पल्योपमिको बन्धो भवति, तस्याप्युत्तरबन्धः संख्येयगुणहीनः, शेषाणां षण्णां कर्मणां पल्योपमा(म)संख्येयभागतुल्य इति गाथार्थः ॥५४॥

(मलय०)—ततः—एवमुक्तेन प्रकारेण स्थितिबन्धसहस्रेष्वतिक्रान्तेषु त्रिंशत्कानां—ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धं पल्योपमप्रमाणं करोति, मोहनीयस्य तु सार्द्धपल्योपममात्रम्, ततो ज्ञानावरणीयादीनामन्यः स्थितिबन्धः संख्येयगुणहीनो भवति, मोहनीयस्य तु संख्येयभागहीनः। तत एवं पूर्वक्रमेण स्थितिबन्धसहस्रेष्वतिक्रान्तेष्वित्यर्थः, मोहनीयस्य स्थितिबन्धः पल्योपमप्रमाणो भवति, ततो मोहनीयस्याप्यन्यः स्थितिबन्धः संख्येयगुणहीनः प्रवर्तते, तदानीं च शेषकर्मणां स्थितिबन्धः पल्योपमसं-

स्येयमागमात्रप्रमाणो वेदितव्यः ॥५४॥

वीसगतीसगमोहाण सतय जहकमेण सखगुणं । पल्लअसखेज्जसो नामगोयाण तो बधो ॥५५॥

(स्वो०)—'वीस'त्ति, विंशतिकोटाकोटिस्थितिकयोर्नामगोत्रयोः 'तीसग'त्ति—त्रिंशत्कोटाकोटिस्थितिकानां ज्ञानदर्शनावरणान्त रायवेदनीयानां 'मोह'त्ति मोहनीयस्य सत्कर्म यथाक्रमेणा(ण) सख्येयगुण भवति, नामगोत्रयोस्तुल्य जघन्य च, ज्ञानावरणादीनां चतुर्णां तुल्यमसं(स्यं सं)ख्येयगुणम्, तदपेक्षया मोहनीयस्या(स्य) सख्येयगुणम्। पल्योपमासख्येयभागमात्रो नामगोत्रयोस्ततो बन्धो भवतीति गाथार्थः ॥५५॥

(मलय०)—विंशतिकत्रिंशत्कमोहानां सत्कर्म यथाक्रमं संख्येयगुणं वक्तव्यम्, तद्यथा—सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां सख्येयगुणम्, स्वस्थाने तु परस्परं तुल्यम्, ततोऽपि मोहनीयस्य संख्येयगुणम्। मोहनीयस्य पल्योपम(सख्येयभाग)मात्रे स्थितिबन्धे जाते सति नामगोत्रयोरन्यः स्थितिबन्धोऽसंख्येयगुणहीनो भवति, पल्योपमासंख्येयभागमात्रो भवतीत्यर्थः। अत्र सत्कर्मापेक्षया अल्पबहुत्वं चिन्त्यते—सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामसख्येयगुणं, स्वस्थाने तु परस्परं तुल्यम्, ततोऽपि मोहनीयस्य संख्येयगुणम् ॥५५॥

एव तीसाणं पि हु एक्कपहारेण मोहणीयस्स । तीसगअसखभागो ठिइबधो सतय च भवे ॥५६॥

(स्वो०)—एवं नामगोत्रक्रमेण 'तीसाणं'ति—ज्ञानदर्शनावरणान्तरायवेदनीयानां स्थितिबन्धसहस्रेषु गतेषु पल्योपमासंख्येयभाग मात्रो(बंधो)भवतीति । पुनः प्रभूतेषु स्थितिबन्धसहस्रेषु गतेषु 'एक्कपहारेण'त्ति—एकया वारया मोहनीयस्यापि पल्योपमासंख्येय-

भागमात्रं स्थितिबन्धं करोति, तं च ज्ञानावरणादीनां चतुर्णामप्यधोऽसंख्येयगुणहीनमित्यर्थः, तेपामसं(षां सं)ख्येयगुणो भूत्वा एक वारया एवमसंख्येयगुणहीनो मोहनीयस्य बन्धो भवति, यथा बन्धस्तथा सत्कर्म च, नामगोत्रयोः स्तोको, मोहनीयस्य असंख्येयगुणो, ज्ञानावरणादीनामसंख्येयगुणो बन्ध इति गाथार्थः ॥५६॥

(मलय०)—ततः–एवं पूर्वोक्तेन प्रकारेण स्थितिबन्धसहस्रेष्वतिक्रान्तेष्वित्यर्थः, ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धोऽसंख्येयगुणहीनो भवति, पल्योपमासंख्येयभागमात्रो भवतीति तात्पर्यार्थः। इदानीं च सत्कर्मापेक्षया अल्पबहुत्वं चिन्त्यते—सर्वस्तोकं नामगोत्रयोः सत्कर्म, ज्ञानावरणीयादीनां चतुर्णामसंख्येयगुणम्, स्वस्थाने तु परस्परं तुल्यम्, ततो मोहनीयस्यासंख्येयगुणम्। ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु एकप्रहारेण एकहेलयैव मोहनीयस्य पल्योपमासंख्येयभागमात्रो ज्ञानावरणीयादिबन्धापेक्षया चासंख्येयगुणहीनः स्थितिबन्धो भवति, सत्कर्मापि चैवमेव भवति। अत्राल्पबहुत्वमुच्यते—सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो मोहनीयस्यासंख्येयगुणं, ततोऽपि ज्ञानावरणीयादीनां चतुर्णामसंख्येयगुणम्, स्वस्थाने तु परस्परं तुल्यम् ॥५६॥

**वीसगअसंखभागे मोहं पच्छा उ घाइ तइयस्स। वीसाण तओ घाई असंखभागम्मि बज्झंति ॥५७॥**

(स्वो०)—ततः स्थितिबन्धसहस्रेष्वतीतेषु नामगोत्रयोरधो मोहनीयस्य एकवारयैव बन्धो भवति। सर्वस्तोको मोहनीये, तस्मादसंख्येयगुणस्तुल्यश्च नामगोत्रयोः, घातिकर्मणामसंख्येयगुणस्तुल्यश्च। 'तइयस्स'त्ति–वेदनीयस्यासंख्येयगुणः। ततः स्थितिबन्धसहस्रेषु गतेषु 'वीसगाणं'ति–नामगोत्रयोरेकप्रहारेणैव जातान्यधो घातीनि। मोहनीयस्य स्तोकबन्धः, शेषघातिकर्मणामसङ्ख्येयगुणो, नामगोत्रयोः असङ्ख्येयगुणः, वेदनीयस्याऽसङ्ख्येयगुणोऽनेन विधिना बध्यत इति गाथार्थः ॥५७॥

(मलय०)—ततः स्थितिबन्धसहस्रेषु गतेषु एकहेलयैव विंशतिकयोर्नामगोत्रयोरधस्तादसंख्येयगुणहीनो मोहनीयस्य स्थितिबन्धो भवति। अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते—सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि ज्ञानावरणादीनां चतुर्णामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः। स्थितिबन्धसहस्रेष्वतिक्रान्तेषु पश्चात् तीयस्य वेदनीयस्य घातीनि ज्ञानावरणदर्शनावरणीयान्तरायाणि अधो जातानि। अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते—सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु तयोः परस्परं तुल्यः, ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि वेदनीयस्यासंख्येयगुणः। ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु विंशतिकयोर्नामगोत्रयोरसंख्येयभागे घातीनि ज्ञानावरणीयादीनि त्रीणि बध्यन्ते, नामगोत्रापेक्षया ज्ञानावरणीयादीनां स्थितिबन्धोऽसंख्येयगुणहीनो भवतीत्यर्थः। अत्राल्पबहुत्वं—सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि वेदनीयस्यासंख्येयगुणः ॥५७॥

अस्संखसमयबद्धाणुदीरणा होइ तंमि कालम्मि। देसे घाइरस तो मणपज्जवअंतरायाणं ॥५८॥

(स्वो०)—यस्मिन् काले पल्योपमासंख्येयभागमात्रं स्थितिबन्धं बध्नाति तस्मिन् काले या बध्यमानाः स्थितयः ताभ्यो याः समयादिहीना असंख्येयसमयनिर्वर्तितास्तासामुदीरणा भवति, ततः स्थितिबन्धसहस्रेषु अतीतेषु देशघातिरसं मनःपर्यायज्ञानदानान्तराययोः बन्धं प्रति निर्वर्तयतीति गाथार्थः ॥ ५८ ॥

(मलय०)—यस्मिन् काले सर्वकर्मणां पल्योपमासंख्येयभागमात्रः स्थितिबन्धो जातः तस्मिन् काले असंख्येयसमयबद्धानामुदी-

रणा भवति। कथमेतदवसीयते इति चेद् ? उच्यते–इह यदा पल्योपमासंख्येयभागमात्रं स्थितिबन्धं करोति तदा बध्यमानप्रकृतिस्थित्यपेक्षया याः समयादिहीनाः स्थितयस्ता एवोदीरणामुपगच्छन्ति, नान्याः, ताश्च चिरकालबद्धा एव क्षीणशेषाः सम्भवन्तीत्यसंख्येयसमयबद्धानां तदानीमुदीरणा। ततः स्थितिबन्धसहस्रेषु गतेषु देशघातिनं रसमनुभागं मनःपर्यवज्ञानावरणदानान्तराययोर्बध्नाति ॥५८॥

**लाभोहीणं पच्छा भोगअचक्खूसुयाण तो चक्खू। परिभोगमईणं तो विरियस्स असेढिगा घाई ॥५९॥**

(स्वो०)—पश्चात्स्थितिबन्धसहस्रेष्वतीतेषु लाभान्तरायावधिज्ञानदर्शनानां देशघातिरसेन बन्धं करोति, ततः स्थितिबन्धसहस्रेष्वतीतेषु भोगान्तरायाचक्षुर्दर्शनश्रुतज्ञानानां देशघातिरसेन बन्धं करोति, ततः सङ्ख्येयेषु स्थितिबन्धसहस्रेष्वतीतेषु चक्षुर्दर्शनस्य देशघातिरसेन बन्धं करोति, ततः संख्येयेषु स्थितिबन्धसहस्रेष्वतीतेषु परिभोगान्तरायमतिज्ञानयोः देशघातिरसेन बन्धं करोति, ततः स्थितिबन्धसहस्रेष्वतीतेषु वीर्यान्तरायस्य देशघातिरसेन बन्धं करोति, एतेषां पूर्वोक्तानां कर्म्मणां अश्रेणिगताः क्षपकोपशमश्रेणिवर्जिता जीवाः सर्वघातिरसेन बन्धं कुर्वन्तीति गाथार्थः ॥ ५९ ॥



(मलय०)—पश्चात्स्थितिबन्धसहस्रेष्वतिक्रान्तेषु लाभान्तरायावधिज्ञानावरणावधिदर्शनावरणानां देशघातिनं रसं बध्नाति। ततोऽपि संख्येयेषु स्थितिबन्धसहस्रेष्वतीतेषु भोगान्तरायाचक्षुर्दर्शनावरणश्रुतज्ञानावरणानां देशघातिनं रसं बध्नाति। ततोऽपि संख्येयेषु स्थितिबन्धसहस्रेष्वतीतेषु चक्षुर्दर्शनावरणस्य देशघातिनं रसं बध्नाति। ततोऽपि स्थितिबन्धसहस्रेष्वतिक्रान्तेषु परिभोगान्तरायमतिज्ञानावरणयोर्देशघातिनं रसं बध्नाति। ततोऽपि स्थितिबन्धसहस्रेषु व्यतीतेषु वीर्यान्तरायस्य देशघातिनं रसं बध्नाति। एतेषामेवानन्तरोक्तानां कर्मणामश्रेणिगताः क्षपकोपशमश्रेणिरहिताः सर्वघातिनमेव रसं बध्नन्ति ॥५९॥

अत्रापि प्रथमगमयन पूर्ववत् ५ पदार्था प्रवर्तन्ते । (परमस्य प्रथमसमये पञ्चसंग्रहमतेन वन्धः सत्ता च अन्त को को. सागरप्रमाणा, कर्मप्रकृतिमतेन वन्ध कोटिसागरप्रमाणः सत्ता त्वन्तःको. को. प्रमाणा । यद्यपि प्रागुक्तेष्वपि करणेष्वेतावान् बन्ध एतावदेव सत्कर्म सदा कर्मणा प्राप्यते, तथाप्यत्र वन्धसत्कर्मणी तदपेक्षया सङ्ख्येयगुणहीने द्रष्टव्ये इति विशेष । सोऽपि वन्ध. पूर्वक्रमेण हानिं गच्छति)

स्थितिघातसहितानि ।

अत्र सागरोपमसहस्रपृथक्त्वः स्थितिवन्ध (७कर्मणाम्)

अनिवृत्तिसंख्येया भागाः । इति कर्षेष्वेक एव भागः शेषोऽवशिष्टो ।

स्थि० घा० पृथ०

अत्रासंज्ञिपञ्चे. तुल्यस्थि. वन्धः ।

स्थि० घा० पृथ०

अत्र चतुरिन्द्रियतुल्यस्थितिवन्ध ।

स्थि० घा० पृ०

अत्र त्रीन्द्रियतुल्यस्थितिवन्धः ।

स्थि० घा० पृ०

अत्र द्वीन्द्रियतुल्यस्थितिवन्धः ।

स्थि० व० स

अत्रैकेन्द्रियतुल्यस्थितिवन्ध ।

इत. प्रारभ्य ७ कर्मणा यस्य कर्मण. पल्यो. मात्रस्थि० वन्धः तस्यान्यस्थि. वन्धः संख्ये. गु हीनः, शेषाणा पूर्ववत् । अत्र सत्कर्मापेक्षयाल्पवहुत्वं–

**अनिवृत्तिकरणे**

| स्थि० बन्धसहस्राणि (प्रथमम्) | स्थि० बन्धसहस्राणि (द्वितीयम्) |
| --- | --- |
| अतःना० गो० प० अ० | प० असं० भा० |
| ज्ञा० द० अ० प० अ० | प० असं० भा० |
| वे० प० अ० | प० असं० भा० |
| मोह० प० अ० | प० असं० भा० |

अत्रसर्वस्तोको मोहस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणस्ततो ज्ञानदर्शनावरणान्तरायाणामसंख्येयगुणस्ततो वेदनीयस्यासंख्येयगुणः। अतो मनःप० दानान्तराययोर्देशघात्यनुभागबन्धः।

अत्र सर्वस्तोको मोहस्य स्थितिबन्धः, ततो ज्ञानावरणादित्रिकस्यासंख्येयगुणस्ततो नामगोत्रयोरसंख्येयगुणस्ततो वेदनीयस्य 'विशेषाधिक' इति कर्म प्र. 'असंख्येयगुण' इति पञ्चसंग्रहे। अतो लाभान्त. अवधि-द्विकयोश्च देशघात्यनुभागबन्ध.।

अतः भोगा०–अचक्षु०–श्रुतज्ञानाव० नां दे० घा० अनु० बन्ध.।

अतः चक्षु० स्य दे० घा० बन्धः।

अतः उपभो०–मत्योर्दे० घा० बन्धः।

अतः वीर्यान्त० स्य दे० घा० बन्ध।

संजमघाईण तओ अंतरमुदओ उ जाण दोण्हं तु । वेयकसायण्णयरे सोदयतुल्ला य पढमठिई ॥६०॥

(स्वो०)—ततः स्थितिबन्धसहस्रेष्वतीतेषु संयमघातिनीनामेकविंशतिप्रकृतीनामनन्तानुबन्धिवर्जकषायनोकषायाख्यानां अन्तरं प्रथमस्थितिं च करोति, वेदसञ्ज्वलनान्यतरयोः ययोर्द्वयोरुदयोऽस्ति तयोः स्वोदयतुल्यां प्रथमस्थितिं करोतीति गाथार्थः ॥ ६० ॥

(मलय०)—वीर्यान्तरायदेशघात्यनुभागबन्धानन्तरं संख्येयेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु संयमघातिनां अनन्तानुबन्धिवर्जानां द्वादशकषायाणां नवानां च नोकषायाणां सर्वसंख्यया एकविंशतिप्रकृतीनामन्तरकरणं करोति । तत्र चतुर्णां संज्वलनानामन्यतमस्य यस्य संज्वलनस्योदयो, यस्य च त्रयाणां वेदानामन्यतमस्य वेदस्य, तयोर्वेदकषायान्यतरयोः कर्मणोः प्रथमा स्थितिः स्वोदयकालप्रमाणा भवति, अन्येषां चैकादशकषायाणामष्टानां च नोकषायाणां प्रथमा स्थितिरावलिकामात्रा ॥६०॥

आसां सप्तानां स्वोदयप्रमाणकालमाह—

थीअपुमोदयकाला संखेज्जगुणा उ पुरिसवेयस्स । तस्स वि विसेसअहिओ कोहे तत्तो वि जहकमसो ॥६१॥

(स्वो०)—स्त्रीवेदनपुंसकवेदयोरुदयकालस्तुल्यो जघन्यश्च, तस्मात् पुरुषवेदस्य संख्येयगुणः, तस्मादपि संज्वलनक्रोधस्योदयकालो विशेषाधिकः, तस्मादपि यथोत्तरं मानादिष्वपि विशेषाधिकः स्वोदयकालः, किमुक्तं भवति ? क्रोधोदयेन श्रेणिमुपस्थितस्य यावन्मात्रो द्वयोः क्रोधयोरुपशमकालः तावन्मात्रां सञ्ज्वलनक्रोधस्य प्रथमस्थितिं करोति, एवं संज्वलनमानोदयेन श्रेणिमुपस्थितस्य तत्तन्नामोच्चारणेन सर्वं तथैव वक्तव्यम् , शेषैकादशकषायाणां अष्टानां नोकषायाणां विहायोदयावलिकां अन्तरं करोति, उपर्यधः समविषमस्थितिकमिति गाथार्थः ॥ ६१ ॥

(मलय०)—सम्प्रति चतुर्णां संज्वलनानां त्रयाणां च वेदानां स्वोदयकालप्रमाणमाह—स्त्रीवेदनपुंसकवेदयोरुदयकालः पुरुषवेदोदयकालापेक्षया सर्वस्तोकः, स्वस्थाने तु परस्परं तुल्यः, ततः पुरुषवेदस्योदयकालः सङ्ख्येयगुणः, तस्मादपि पुरुषवेदस्योदयकालात्क्रोधे क्रोधस्योदयकालो विशेषाधिकः, ततोऽपि क्रोधोदयकालान्मानमायालोभानां यथाक्रमशो—यथाक्रमेण विशेषाधिकः, तद्यथा—संज्वलनक्रोधोदयकालात्संज्वलनमानस्योदयकालो विशेषाधिकः, ततोऽपि संज्वलनमायाया विशेषाधिकः, ततोऽपि संज्वलनलोभस्य विशेषाधिकः। तत्र संज्वलनक्रोधेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणक्रोधोपशमो न भवति तावत्संज्वलनक्रोधस्योदयः, संज्वलनमानेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमानोपशमो न भवति तावत्संज्वलनमानस्योदयः, संज्वलनमायया चोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमायोपशमो नोपजायते तावत्संज्वलनमायाया उदयः, संज्वलनलोभेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणलोभोपशमो न भवति तावद्बादरसंज्वलनलोभस्योदयः, ततः परं सूक्ष्मसंपरायाद्धा, तदेवमन्तरकरणमुपरितनभागापेक्षया समस्थितिकम्, अधोभागापेक्षया पोक्तनीत्या विषमस्थितिकमिति ॥६१॥

अतरकरणेण समं ठितिखंडगबंधगद्धनिप्फत्ती । अतरकरणाणंतरसमए जायंति सत्त इमे ॥६२॥

(स्वो०)—अन्तरकरणेन समं तुल्यं स्थितिखण्डं पातयति, बन्धगद्धा—अभिनवबन्धकालः, किमुक्तं भवति ? यावता कालेनान्तरं करोति तावता कालेन स्थितिखण्डं पातयत्यभिनवबन्धं करोति। अन्तरकरणकाले रसघातसहस्राण्यतिक्रामन्ति। अन्तरदलस्य विधिरयं—यस्य कर्मणः उदानुभवनं बन्धश्च भवति, तस्यान्तरसत्कं प्रदेशाग्रं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, यथा पुरुषवेदोदया-

## चारित्रमोहानामन्तरकरणविषमतायाश्चित्रं

### इदमन्तरवैषम्यमन्तरकरणक्रियाप्रारम्भे (प्र० स्थितौ वर्त्तमानस्य)

इदमन्तरवैषम्यमेकस्य जीवस्यैकस्मिन् समये न भवेत् परमनेकजीवापेक्षया प्राप्यते, एकजीवस्यैकस्मिन् समयेऽन्यतरस्यैकवेदस्य कषायस्य चान्तरकरणभवनात् ।

अन्तरकरणकालेऽनुदयवतीनां १९ नाम्
- प्र० स्थि०
- ... | अ न्त र म् (अन्तर्मु०) | .................
- आव० — द्वितीया स्थितिः सखयेयवर्षप्रमाणा

अन्यतरस्यैकस्योदयो भवति

स्त्रीवेदस्य-
- प्र० स्थिति अन्तर्मु०
- ..... | अ न्त र म् (अन्तर्मु०) | ... ... ... ... ... ... ..
- द्वि० स्थि० स० व०

नपुंवेदस्य-
- प्र. स्थिति. अन्तर्मु०
- ..... | अ न्त र म् (अन्तर्मु०) | .. ... ... ... ... ... ..
- स्त्रीवेदतुल्या — द्वि० स्थि० स० व०

पुवेदस्य-
- प्र. स्थितिः अन्तर्मु०
- ... ... ... | अ न्त र म् (अन्तर्मु०) | ... ... ... ... ... ... ..
- नपु. वेदत. सख्येयगुणा — द्वि. स्थि. स. व.

॥ अन्तरकरणदलिकप्रक्षेपविषयस्य चित्रम् ॥

⊙ ⊙ ⊙ ⊙ ⊙ — अन्तरकरणस्थानं (अन्तर्मु०) उत्कीर्यमाणाः स्थितयश्च

O O O O O O O O O O — द्वितीया स्थितिः। (उत्कृष्टतः सङ्ख्येयवर्षप्रमाणा) अन्तरकरणदलिकप्रक्षेपविषयरूपा.

अन्तरकरणकाले मोहस्य उदयमात्रगतानां प्रकृतीनां स्थि० लताया अन्त० क० द० प्रक्षेपविधिः—




अन्तरकरणकाले बध्यमानमोहनीयस्य स्थितिलताया अन्त० क. द. प्र. वि.—

अन्तरकरणकाले अबन्धोदयमोहप्रकृतीनां स्थितिलताया अन्त. क. द. प्र. वि.—



रूढः (पुरुषवेदस्य)। यस्य पुनरुदयोऽस्ति न च बन्धः तस्यान्तरदलं प्रथमस्थितौ प्रक्षिपति, यथा स्त्रीनपुंसकवेदोदयारूढः (स्त्रीनपुंसकयोः)। यस्य पुनरुदयो नास्ति बन्धोऽस्ति तस्यान्तरदलं द्वितीयस्थितौ प्रक्षिपति, यथा क्रोधोदयारूढः शेषसञ्ज्वलनानामिति। यस्य पुनरुदयो बन्धश्च नास्ति तस्यान्तरदलं परप्रकृतिषु प्रक्षिपति, यथा द्वितीयतृतीयकषायाणाम्। अन्तरकरणानन्तरसमये-अन्तरकरणनिष्ठितसमयादुत्तरसमये, जायन्ते-प्रादुर्भवन्ति, युगपदेककाले सप्ताधिकारा इति गाथार्थः॥ ६२॥

(मलय०)—अन्तरकरणेन समम्, समभिव्याप्य, ततोऽयमर्थः—अन्तरकरणेन समाना स्थितिखण्डकस्य बन्धकाद्धायाश्च अभिनवबन्धाद्धायाश्च निष्पत्तिः, किमुक्तं भवति? यावता कालेन स्थितिखण्डकं घातयति यद्वा अन्यस्थितिबन्धं करोति तावता कालेनान्तरकरणमपि करोति। त्रीण्यप्येतानि युगपदारभते, युगपन्निष्ठां नयति। अन्तरकरणकाले चानुभागखण्डसहस्राणि व्यतिक्रामन्ति, अन्तरकरणसत्कदलिकस्य च प्रक्षेपविधिरयम्—येषां कर्मणां तदानीं बन्ध उदयश्च विद्यते तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, यथा पुरुषवेदोदयारूढ• पुरुषवेदस्य, येषां तु कर्मणामुदय एव केवलो न बन्ध• तेषामन्तरकरणगत्क दलिक

प्रथमस्थितावेव प्रक्षिपति, न द्वितीयस्थितावपि, यथा स्त्रीवेदोदयारूढः स्त्रीवेदस्य। येषां पुनरुदयो न विद्यते किंतु केवलो बन्ध एव तेषामन्तरकरणसत्कं दलिकं द्वितीयस्थितावेव प्रक्षिपति, न प्रथमस्थितौ, यथा संज्वलनक्रोधोदयारूढः शेषसंज्वलनानाम्। येषां पुनर्न बन्धो नाप्युदयस्तेषामन्तरकरणसत्कं दलिकं परप्रकृतिषु, यथा द्वितीयतृतीयकषायाणाम्। तथा अन्तरकरणानन्तरसमये-अन्तरकरणे कृते सति द्वितीये समये इत्यर्थः, इमे सप्त पदार्था युगपज्जायन्ते ॥६२॥



**एगट्ठाणाणुभागो बंधो उदीरणा य संखसमा। अणुपुव्वीसंकमणं लोहस्स असंकमो मोहे ॥६३॥**

**बद्धं बद्धं छसु आवलीसु उवरेणुदीरणं एइ। पंडगवेउवसमणा असंखगुणणाइ जावंतं ॥६४॥**

(स्वो०)—'मोहे'-मोहनीये एकस्थानिकरसबन्धः, संख्येयवार्षिकस्थितिबन्धः, उदीरणा च संख्येयवार्षिका, आनुपूर्व्या संक्रमणम्, सञ्ज्वलनलोभस्यासंक्रमणं भवतीति गाथार्थः। यथा बद्धं बद्धं कर्म बन्धावलिकायां गतायां याति उदीरणां तथान्तरकरणे कृते तदनन्तरसमये यद्बद्धं कर्म तत्षडावलिकाकालं स्थित्वा यात्युदीरणामिति। 'पंडग' त्ति-नपुंसकवेदस्योपशामना सप्तमीति, असंख्येयगुणनया प्रतिसमयमसंख्येयगुणमसंख्येयगुणं प्रदेशाग्रं उपशमयति, तस्मादप्यसंख्येयगुणमन्यासु प्रकृतिषु संक्रामयति। यत्प्रभृति मोहनीयस्य संख्येयवार्षिको बन्धः प्रारब्धस्ततः प्रभृति संख्येयगुणहीनं करोत्युत्तरं बन्धं, शेषकर्मणां असंख्येयगुणहीनम्। सर्वकर्मणामुदीरणायाः उदयोऽप्यसंख्येयगुणो यावन्नपुंसकोपशामनान्तसमय इति गाथार्थः ॥ ६४ ॥

(मलय०)—तानेवाह-मोहे मोहनीयस्यानुभागबन्धो रसबन्ध एकस्थानकः। उदीरणा संख्येयसमा-संख्येयवर्षप्रमाणा। चशब्दात्स्थितिबन्धः संख्येयवार्षिकः, स च सर्वोऽपि पूर्वस्मात्संख्येयगुणहीनो भावी। तथा मोहनीयस्य पुरुषवेदसंज्वलनचतुष्टयरूपस्य आ-

नुपूर्व्या क्रमेणैव संक्रमः। लोभस्य च सञ्ज्वलनलोभस्य चासंक्रमः। तथा 'बद्धं बद्धमि'त्यादि, इह प्राक् बद्धं बद्धं कर्म बन्धावलिकायामतीतायामुदीरणामायाति स्म, अन्तरकरणे तु कृते तदनन्तरसमयेषु यद् यद् बध्यते कर्म तत् षडावलिकाकालमवस्थाप्योदीरणामायाति। तथा षण्ढकवेदस्य–नपुंसकवेदस्योपशमना असंख्येयगुणनया तावद्भवति यावदन्त्यसमयः, तथाहि–नपुंसकवेदस्य प्रथमसमये स्तोकं प्रदेशाग्रमुपशमयति, ततो द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं प्रतिसमयमसंख्येयगुणं तावद्वक्तव्यं यावच्चरमसमयः, परप्रकृतिषु च प्रतिसमयमुपशमितदलिकापेक्षया असंख्येयगुणं तावत्संक्रमयति यावद् द्विचरमसमयः, चरमसमये पुनरुपशम्यमानं दलिकं परप्रकृतिषु संक्रम्यमाणदलिकापेक्षया असंख्येयगुणं द्रष्टव्यम्। नपुंसकवेदोपशमनारम्भप्रथमसमयादारभ्य च सर्वकर्मणामुदीरणा दलिकापेक्षया सर्वस्तोका, उदयस्त्वसंख्येयगुणः ॥६३–६४॥

अंतरकरणपविट्ठो संखासंखसमोहइयराणं। बंधाउत्तरबंधो एवं इत्थीएँ संखसे ॥६५॥

(स्वो०)—अन्तरकरणे प्रविष्टो जीवः बन्धादुत्तरबन्धं मोहनीयस्य संख्येयभागं करोतीतरासामसंख्येयभागमिति। एवं नपुंसकोपशमकात् स्थितिसहस्रेष्वतीतेषु स्त्रीवेदं पूर्वविधिनोपशमयति, स्त्रीवेदस्य संख्येयभागे उपशान्ते यद् भवति तदाहेति गाथार्थः ॥६५॥

(मलय०)—अन्तरकरणे प्रविष्टः सन् जीवः प्रथमसमय एव बन्धादुत्तरबन्धं मोहनीयस्य संख्येयभागं करोति–संख्येयगुणहीनं करोतीत्यर्थः। यो हि यदपेक्षया संख्येयभागमात्रकल्पः स तदपेक्षया संख्येयगुणहीन एवेति। मोहनीयवर्जानां तु शेषाणां कर्मणां बन्धादुत्तरबन्धमसंख्येयभागं करोति, असंख्येयगुणहीनं करोतीत्यर्थः। एवं नपुंसकवेदमुपशमयति। तदुपशमनानन्तरं च स्थितिबन्धसहस्रेष्वतीतेषु एवम्–अनन्तरोक्तेन प्रकारेण स्त्रीवेदमुपशमयति। ॥६५॥

## ॥ नपुंसकोपशमनाक्रमस्य चित्रम् ॥

(स्त्रीवेदषट्नोकषायाणामप्युपशमनविधिर्नपुं०वेदतुल्या) अन्तर्मुहूर्तेन

00000000000000000000000000000000000000
00000000000000000000000000000000000000
0000000 नपुं० वेदस्य द्वि० स्थितिगतप्रदेशोपचय. 0000000
00000000000000000000000000000000000000
00000000000000000000000000000000000000
00000000000000000000000000000000000000

| समयाः | प्रतिसमयमुपशम्यमाना प्रदेशसंख्या | प्रतिसमयं बध्यमानपरप्रकृतिषु संक्रम्यमाणा प्रदेशसंख्या |
|---|---|---|
| १ | १० | १४ |
| २ | १५ | १९ |
| ३ | २० | २४ |
| ४ | २५ | २९ |
| ५ | ३० | ३४ |
| ६ | ३५ | ३९ |
| ७ | ४० | ४४ |
| ८ | ४५ | ४९ |
| ९ | ५० | ५४ |
| १० | ५५ | ५९ |
| ११ | ६० | ६४ |
| १२ | ६५ | ६९ |
| १३ | ७० | ७४ |
| १४ | ७५ | ७९ |
| १५ | ८० | ८४ |
| १६ | ८५ | ८९ |
| १७ | ९७ | ९३ |

अत्र अन्त्यसमयवर्जसर्वेषु समयेषु प्रतिसमयमुपशम्यमानप्रदेशापेक्षयाऽसंख्येयगुणदलिकं संक्रम्यमाणं भवेत्। अन्त्यसमये संक्रान्तप्रदेशापेक्षयोपशान्ताः प्रदेशा असं०गुणाः। प्ररूपणा च ग्रन्थानुसारेण कर्तव्या।

अत्र अन्तर्मु०स्य १७ समयाः कल्पनीयाः। तथात्र 'यच्चतुरधिकत्वं' तत् असं० गुणं ज्ञेयम्।

उवसते घाईणं संखेज्जसमा परेण संखसो । यधो सत्तणहेव संखेज्जतमंमि उवसंते ॥६६॥

नामगोयाण संखा यधो घासा असखिया तइए । ता सव्वाण वि संखा तत्तो सखेज्जगुणहाणी ॥६७॥

(स्वो०)—सख्येयभागे स्त्रीवेदस्य उपशान्ते घातिकर्मणां ज्ञानदर्शनावरणानां संख्येयवार्षिकः स्थितिबन्धो भवति, परेण संख्येयगुणहान्या इति । एवं नपुंसकविधिना स्त्रीवेदे उपशान्ते सप्तानां च शेषनोकषायाणां संख्येयभागे उपशान्ते यद्भवति तदाहेति गाथार्थः ॥ तस्मिन् काले नामगोत्रयोः संख्येयवार्षिकः स्थितिबन्धो, असंख्येयवार्षिको वेदनीयस्य । ततः स्थितिबन्धसहस्रेष्वतीतेषु सर्वेषां कर्मणां संख्येयवार्षिको बन्धः—संख्येयगुणहान्या इति गाथार्थः ॥६६-६७॥

(मलय०)—स्त्रीवेदस्य च संख्येयतमे भागे उपशान्ते यद्भवति तदुपदर्शयन्नाह—स्त्रीवेदस्य संख्येयतमे भागे उपशान्ते सति घाति कर्मणां ज्ञानावरणदर्शनावरणान्तरायाणां सख्येयवर्षप्रमाणो बन्ध भवति । 'परेण'त्ति—ततः संख्येयवर्षप्रमाणात्स्थितिबन्धात्परोऽन्यो यः स्थितिबन्धो घातिकर्मणामुक्तरूपाणां पूर्वस्मात्संख्येयांश'—संख्येयभागरूपः—संख्येयगुणहीन इत्यर्थः । तस्मादेव च संख्येयवर्षप्रमाणात्स्थितिबन्धादारभ्य देशघातिनां—केवलज्ञानावरणकेवलदर्शनावरणवर्जानां ज्ञानावरणदर्शनावरणकर्मणामेकस्थानकं रसं बध्नाति । तत एव स्थितिबन्धसहस्रेषु गतेषु सत्सु स्त्रीवेद उपशान्तो भवति । ततः स्त्रीवेदे उपशान्ते शेषाणां सप्तनोकषायाणां एव—नपुंसकवेदोक्तेन प्रकारेण संख्येयतमे भागे उपशान्ते, किमित्याह—नामगोत्रयोः सख्येयाः समाः—संख्येयवर्षप्रमाणो बन्धः स्थितिबन्धो भवति, तृतीये तृतीयस्य वेदनीयाख्यस्य कर्मणः स्थितिबन्धोऽसंख्येयानि वर्षाणि असंख्येयवर्षप्रमाण इत्यर्थः, तस्मिंश्च स्थितिबन्धे पूर्णे सत्यन्यः

स्थितिबन्धो वेदनीयस्यापि संख्येयवर्षप्रमाणो भवति। 'तो' त्ति-तस्माद्वेदनीयसत्कसंख्येयवार्षिकस्थितिबन्धात्प्रभृति सर्वेषामपि कर्मणां स्थितिबन्धः संख्येयवार्षिक एव प्रवर्त्तते, स च पूर्वस्मात्पूर्वस्मादन्योऽन्यः प्रवर्त्तमानः संख्येयगुणहान्या भवति, संख्येयगुणहीनः प्रवर्त्तते इत्यर्थः ॥६६-६७॥

**जं समए उवसंतं छक्कं उदयट्ठिई तया सेसा। पुरिसे समऊणावलिदुगेण बंधं अणुवसंतं ॥६८॥**

(स्वो०)—अनेन विधिना यस्मिन् समये षट्कमुपशान्तं-जलार्द्रकुट्टितभूमिरजस्तुल्यं कर्मदलं जातं तदा पुरुषवेदस्योदयस्थितिरेका प्रथमस्थितेस्तिष्ठति, समयोनद्विकावलिकाशेषायां प्रथमस्थितौ यत्पुरुषवेददलं बद्धं तत्तदा नाद्याप्युपशमं यातीति गाथार्थः ॥६८॥

(मलय०)—ततः स्थितिबन्धसहस्रेषु गतेषु सप्तापि नोकषाया उपशान्ता भवन्ति-यस्मिन् समये षट् नोकषाया उपशान्ताः-जलसिक्तद्रुघनकुट्टितभूमिरजांसीवोपशमं नीतास्तदा पुरुषवेदस्य एका उदयस्थितिः समयमात्रा शेषा, तदानीं च स्थितिबन्धः षोडशवर्षाणि, तस्मिंश्च समये एका उदयस्थितिः, यच्च समयोनावलिकाद्विकेन कालेन बद्धमेतावद्देवानुपशान्तं वर्त्तते, शेषं सर्वमप्युपशान्तम्। इयमत्र भावना-पुरुषवेदस्य प्रथमस्थितौ द्व्यावलिकाशेषायां प्रागुक्तस्वरूप आगालो व्यवच्छिद्यते, उदीरणा तु भवति, तस्मादेव च समयादारभ्य षण्णां नोकषायाणां सत्कं दलिकं पुरुषवेदे न संक्रमयति किन्तु संज्वलनक्रोधादिषु, यदा च पुरुषवेदस्य सत्का प्रागुक्ता एकाप्युदयस्थितिरतिक्रान्ता भवति तदाऽवेदको भवति। अवेदकाद्धायाश्च प्रथमसमये समयद्वयोनावलिकाद्विकेन कालेन यद्बद्धं तदेव केवलमनुपशान्तं तिष्ठति। शेषं सकलमपि नपुंसकवेदोक्तेन प्रकारेणोपशमितम्, तदपि च तावता कालेनोपशमयति ॥६८॥

**आगालेणं समगं पडिग्गहया फिडइ पुरिसवेयस्स। सोलसवासियबंधो चरिमो चरिमेण उदएण ॥६९॥**

तावइ कालेण चिय पुरिस उवसामए अवेदो सो। बंधो बत्तीससमा सजलणियराण उ सहस्सा ॥७०॥

(स्वो०)—आगालो द्वितीयस्थितेर्यद्दलमुदयस्थितौ निक्षिपति तेन समं तेन समकाल पुरुषवेदस्य प्रतिग्रहता—अन्यप्रकृतिभ्यो दलसंक्रमस्याधारतेति, सा 'फिट्टइ' इत्यपगच्छति—विनश्यति। यदा षोडशवार्षिकः पुरुषवेदस्य बन्धः तदा सञ्ज्वलनानां सङ्ख्येयवर्षसहस्राणि। अथ चरमबन्ध उदयेन षट्कस्योपशमचरमसमयेन (सहापगच्छति) इति गाथार्थः। समयोनद्व्यावलिकाकालेन यद्बद्धं दलं तत्तावन्मात्रे व कालेनावेदको भूत्वोपशमयति। पुरुषवेदो यदोपशान्तस्तदा सञ्ज्वलनानां द्वात्रिंशद्वार्षिको बन्ध', 'इयराण' ति—मोहवर्जानां शेषकर्मणां सङ्ख्येयानि वर्षसहस्राणि। बद्ध पुरुषवेदानुपशान्तदलमसङ्ख्येयगुणनया श्रेण्योपशमयति, यथाप्रवृत्तसंक्रमेणान्यासु च प्रकृतिषु संक्रमयति, प्रथमसमये प्रभूत, यथोत्तरेषु विशेषहीन विशेषहीन क्रोधत्रिकोपशमाद्धायां अवेदको यावत्सर्वमुपशान्तमिति गाथार्थः ॥ ६९–७० ॥

(मलय०)—एतदेवाह—यदा पुरुषवेदस्य प्रागुक्तस्वरूप आगालो व्यवच्छिद्यते तदा तेन समकं तत्कालमेव तस्य पुरुषवेदस्य पतद्ग्रहता—शेषदलिकसंक्रमाधारता स्फिटति—अपगच्छति। योऽपि स चरमः पर्यन्तवर्ती षोडशवार्षिकः स्थितिबन्धः पुरुषवेदस्य सोऽपि चरमेण प्रथमस्थितिचरमसमयभाविना उदयेन सहापगच्छति। यदा च पुरुषवेदस्य स्थितिबन्धः षोडशवार्षिकस्तदा संज्वलनानां संख्येयानि वर्षसहस्राणि स्थितिबन्धः। यदपि चावेदकाद्धाप्रथमसमये समयद्वयोनावलिकाद्विकबद्धं पुरुषवेददलिकमस्ति तदप्यवेदो—वेदोदयरहित सन् स उपशमको जीवस्तावतैव समयद्वयोनावलिकाद्विकप्रमाणेन कालेन पुरुषं पुरुषवेददलिकमुपशमयति। तदुपशमनाविधिर्यं—प्रथमे समये स्तोकमुपशमयति, द्वितीयसमये असंख्येयगुणम्, तृतीयसमये असंख्येयगुणम्, एवं तावद्वक्तव्य यावत्समयद्वयोना

## ॥ पुंवेदोपशमनाक्रमस्य चित्रम् ॥

पुंवेदद्वि० स्थितिगतप्रदेशोपचयः

| समयः | उपशमना | संक्रान्तिः |
|---|---|---|
| | प्रतिसमयमसंख्येयगुणोपशमना (नपुं०वेदवत्) | प्रतिसमयमसंख्येयगुणसंक्रान्तिः (नपुं०वेदवत्) |
| १ मे समये | १० | १४ |
| २ ये | १५ | १९ |
| ३ ये | २० | २४ |
| ४ र्थे | २५ | २९ |
| ५ मे | ३० | ३४ |
| ६ ष्ठे | ३५ | ३९ |
| ७ मे | ४० | ४४ |
| ८ मे | ४५ | ४९ |
| ९ मे | ५० | ५४ |
| १० मे | ५५ | ५९ |
| ११ मे | ६० | ६४ |
| १२ मे | ६५ | ६९ |
| १३ मे | ७० | ७४ |
| १४ मे | ७५ | ७९ |
| १५ मे | ८७ | ८३ |
| | प्रथमसमयोपशमना; अन्तर्मुहूर्तेनोपशमना | प्रथमसमयसंक्रान्तिः; अन्तर्मुहूर्तेन संक्रान्तिः |
| | प्रतिसमयमसं० गुणोपशमना | प्रतिसमयं विशेषहीनं संक्रान्तिः |
| १६ मे | ९१ | ८२ |
| १७ मे | ९५ | ८१ |
| १८ मे | ९९ | ८० |
| १९ मे | १०३ | ७९ |
| २० मे | १०७ | ७८ |
| २१ मे | १११ | ७७ |
| २२ मे | ११५ | ७६ |
| | चरमसमयस्योपशमना; द्विसमयोनाव० द्विकेनोपशमना | चरमसमयस्य संक्रान्तिः; द्विसमयोनाव० द्विकेन संक्रान्तिः |

१ तः १५= अन्तर्मु० समया । १६ तः २२ = द्विसमयोनाव० द्विकसमयाः ।

अत्र यत् 'चतुरधिकत्व' तदसंख्येयगुणत्वं ज्ञेयं, तथा 'एकहीनत्व' तत् विशेषहीनत्वं ज्ञेयम् ।

वलिकाद्विकचरमसमयः । परप्रकृतिषु च प्रतिसमयं समयद्वयोनावलिकाद्विककाले यावद्यथाप्रवृत्तसंक्रमेण सङ्क्रमयति । तद्यथा-प्रथमसमये प्रभूतम्, द्वितीयसमये विशेषहीनम्, तृतीयसमये विशेषहीनम्, एवं तावद्यावच्चरमसमयः । ततः पुरुषवेद उपशान्तः । तदानीं च संज्वलनानां द्वात्रिंशत्समा-द्वात्रिंशद्वर्षप्रमाणः स्थितिबन्धः । इतरेषां-ज्ञानावरणदर्शनावरणान्तरायनामगोत्राणां संख्येयानि वर्षसहस्राणि स्थितिबन्ध इति ॥६९-७०॥

अव्वेयपढमसमया कोहतिगं आढवेइ उवसमिउं । तिसु पडिग्गहया एक्का उदओ य उदीरणा बंधो ॥७१॥
फिट्टंति आवलीए सेसाए सेसयं तु पुरिससमं । एव सेसकसाया वेयइ थिबुगेण आवलियं ॥७२॥
चरिमुदयम्मि जहण्णो बंधो दुगुणो उ होइ उवसमगे । तयणंतरपगईए चउग्गुणोण्णेसु संखगुणो ॥७३॥

(स्वो०)—यदाऽवेदकत्वं तस्मात्समयादारभ्य क्रोधत्रिकमुपशमयितुमारभते समकमेव, संज्वलनक्रोधस्य प्रथमस्थितेः समयोनासु तिसृष्वावलिकासु शेषासु प्रतिग्रहताऽपगच्छति, संज्वलनमाने क्रोधद्विकं संक्रामतीत्यर्थः । आवलिकाद्विके शेषे आगालो न भवति, आवलिकायां उदयोदीरणाबन्धाः फिट्टन्तीत्यपगच्छन्ति । बन्धाद्युत्तरबन्धाः सर्वे संज्वलनस्योपशमाद्धायां संख्येयभागहीना यावच्चरन्तके बन्धश्चातुर्मासिक इति गाथार्थः । 'फिट्टंति आवलीए' इति व्याख्यातम् । शेषं पुरुषवेदसमं । संज्वलनक्रोधस्य प्रथमस्थितौ आवलिकाशेषायां क्रोधद्विकमुपशान्तं भवति । तस्यापि प्रथमस्थित्यावलिकां समयोनावलिकाद्विकबद्धं च मुक्त्वा शेषमुपशान्तं भवति । एवमनेनैव क्रमेण मानमायालोभान् उपशमयति । उदयावलिकाश्रोत्तरकषाये स्तिबुकसंक्रमेण सङ्क्रमय्यानुभवतीति गाथार्थः । चर

मोदयकाले संज्वलनानां यः क्षपकमाश्रित्य जघन्यबन्ध उक्तः स उपशामके द्विगुणो भवति। तदनन्तरप्रकृतौ चतुर्गुणो, यतः क्षपके क्रोधस्य मासद्वयं जघन्यो बन्धः स चोपशामके मन्दपरिणामत्वाच्चातुर्मासिको भवति। मानस्य तदा चतुर्गुणः, यतः– स्वजघन्यबन्धस्तस्य मासिकः, एवं शेषेष्वपि संज्वलनेषु भावना कर्त्तव्या। अन्येषु कर्मसु संख्येयगुणो बन्धः। यदा क्रोधस्यावेदको भवति, तदा संज्वलनमानस्यान्तर्मुहूर्त्तेन प्रथमस्थितिरसंख्येयगुणनया वृद्ध्या विदधाति, ततोऽपि मानत्रिकमुपशामयितुमारम्भयति। संख्येयभागेनोनं बन्धादुत्तरबन्धं विदधाति। संज्वलनमानस्य समयोनत्र्यावलिकाशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति। अप्रत्याख्यानप्रत्याख्यानमानौ संज्वलनमायायां संक्रामत इत्यर्थः। द्व्यावलिकाशेषायां प्रथमस्थितावागालोऽपि न भवति। आवलिकाशेषायां उदयोदीरणबन्धा न भवन्ति। तस्मिन् काले मानद्वयमुपशान्तं भवति। मानसंज्वलनस्यापि प्रथमस्थित्यावलिकां समयोनद्व्यावलिकाबद्धं द्वितीयस्थितौ मुक्त्वा शेषमुपशान्तम्, मानमाययोः यदा द्विमासिको बन्धः, शेषकर्मणां संख्येयानि वर्षाणि, तदा संज्वलनमायाया अन्तर्मुहूर्तेनासंख्येयगुणवृद्ध्या प्रथमस्थितिं विदधाति, ततो मायात्रिकं चोपशामयितुमारम्भयति, तदप्येवमेव वक्तव्यमिति गाथार्थः ॥ ७१-७२-७३ ॥

(मलय०)—यस्मिन् समये पुरुषवेदस्यावेदको जातस्तस्मादवेदकप्रथमसमयादारभ्य क्रोधत्रिकं–अप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनरूपं युगपदुपशमयितुमारभते, उपशमनां च कुर्वतः प्रथमे स्थितिबन्धे पूर्णे सत्यन्यः स्थितिबन्धः संज्वलनानां संख्येयभागहीनः, शेषाणां च संख्येयगुणहीनः, शेषं स्थितिघातादि तथैव। संज्वलनक्रोधस्य च प्रथमस्थितौ समयोनावलिकात्रिकशेषायां पतद्ग्रहतापगच्छति। अप्रत्याख्यानप्रत्याख्यानावरणक्रोधदलिकं न तत्र प्रक्षिपति किन्तु संज्वलनमानादाविति भावः। ततो द्व्यावलिकाशे

पायां प्रथमस्थितौ संज्वलनक्रोधस्यागालो न भवति, किन्तूदीरणैव, साप्युदीरणा तावत्प्रवर्त्तते यावदेका आवलिका शेषा भवति। उदीरणावलिकायाश्चरमसमये स्थितिबन्धश्चत्वारो मासा, शेषकर्मणां तु सङ्ख्येयानि वर्षसहस्राणि, संज्वलनक्रोधस्य च बन्धोदयोदीरणा-व्यवच्छेदः। तथा चाह—एकस्यामावलिकायां शेषायामुदय उदीरणा बन्धश्च एते त्रयोऽपि पदार्था युगपत्परिस्फुटन्त्यपगच्छन्ति। तदानीं चाप्रत्याख्यानावरणप्रत्याख्यानावरणक्रोधावुपशान्तौ। तदा चैकामावलिकां समयोनावलिकाद्विकबद्धं च दलिकं मुक्त्वा शेषमन्यत्सर्वं संज्वलनक्रोधस्योपशान्तम्, समयोनावलिकाद्विकबद्धं च दलिकं पुरुषवेदोक्तेन प्रकारेणोपशमयति तथा चाह—संज्वलनक्रोधस्य बन्धादौ व्यवच्छिन्ने शेषं पुरुषसम—पुरुषवेदसमं वक्तव्यम्। एवं क्रोधत्रिकोक्तेन प्रकारेण शेषानप्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनमानमायालोभरूपान् कषायानुपशमयति। याश्च शेषीभूता आवलिकास्ता उत्तरस्मिन् कषाये स्तिबुकेन—स्तिबुकसंक्रमेण संक्रमय्यानुभवति। इयमत्र भावना—संज्वलनक्रोधस्य बन्धादौ व्यवच्छिन्ने या प्रथमस्थितेरेका आवलिका तिष्ठति तां स्तिबुकसंक्रमेण माने प्रक्षिप्य वेदयति। यदपि च समयोनावलिकाद्विकबद्धं सदस्ति तदपि तावता कालेनोपशमयति। तद्यथा—प्रथमसमये स्तोकमुपशमयति, द्वितीयसमये असंख्येयगुणम्, ततोऽपि तृतीयसमये असंख्येयगुणम्, एवं यावत्समयोनावलिकाद्विकचरमसमयः, परप्रकृतिषु च समयोनावलिकाद्विककालं यावद्यथाप्रवृत्तसंक्रमेण पूर्ववत्संक्रमयति। एवं संज्वलनक्रोधं सर्वात्मनोपशमयति। यदैव च संज्वलनक्रोधस्य बन्धोदयोदीरणा व्यवच्छिन्नास्तदैव संज्वलनमानस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च। तत्रोदयसमये स्तोकं प्रक्षिपति, द्वितीयस्थितावसंख्येयगुणम्, तृतीयस्थितावसंख्येयगुणम्, एवं तावद्यावत्प्रथमस्थितेश्चरमसमयः। प्रथमस्थितिप्रथमसमये च संज्वलनमानस्य स्थितिबन्धश्चत्वारो मासाः, शेषाणां तु

ज्ञानावरणीयादीनां संख्येयानि वर्षसहस्राणि। तदानीमेव च त्रीनपि मानान् युगपदुपशमयितुमारभते। संज्वलनमानस्य च प्रथमस्थितौ समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणदलिकं न संज्वलनमाने प्रक्षिपति, किन्तु संज्वलनमायादौ, आवलिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते, तत उदीरणैव केवला प्रवर्त्तते, सापि तावद्यावदावलिकाचरमसमयः, तत्र एका प्रथमस्थितेरावलिका शेषीभूता तिष्ठति, तस्मिंश्च समये संज्वलनानां द्वौ मासौ स्थितिबन्धः, शेषकर्मणां तु संख्येयानि वर्षाणि। तदानीं संज्वलनमानस्य बन्धोदयोदीरणा व्यवच्छिन्नाः, अप्रत्याख्यानप्रत्याख्यानावरणमानौ चोपशान्तौ, तदानीं च संज्वलनमानस्य प्रथमस्थितेरेकामावलिकां समयोनावलिकाद्विकबद्धाश्च लता मुक्त्वा शेषमन्यत्सर्वमुपशान्तम्। तदानीमेव च संज्वलनमायाया द्वितीयस्थितेर्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च। पूर्वोक्तां संज्वलनमानस्य प्रथमस्थितिसत्कामेकामावलिकां स्तिबुकसंक्रमेण संज्वलनमायायां प्रक्षिपति, समयोनावलिकाद्विकबद्धाश्च लताः पुरुषवेदोक्तक्रमेणोपशमयति संक्रमयति च। संज्वलनमायोदयप्रथमसमये च मायालोभयोर्द्वौ मासौ स्थितिबन्धः, शेषकर्मणां तु संख्येयानि वर्षाणि। तत्समयादेव चारभ्य तिस्रोऽपि माया युगपदुपशमयितुमारभते। ततः संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणमायादलिकं संज्वलनमायायां न प्रक्षिपति, किन्तु संज्वलनलोभे, आवलिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते, तत उदीरणैव केवला प्रवर्त्तते, सापि तावद्यावदावलिकाचरमसमयः तस्मिंश्च समये संज्वलनमायालोभयोः स्थितिबन्ध एको मासः, शेषकर्मणां तु संख्येयानि वर्षाणि। तदानीमेव च संज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदः। अप्रत्याख्यानप्रत्याख्यानावरणमाये चोपशान्ते। संज्वलनमायायाश्च प्रथमस्थितिसत्कामेकामावलिकां समयोनावलिकाद्विकबद्धाश्च लता मुक्त्वा शेषमन्यत्सर्वमुपशान्तम्। ततोऽनन्तरसमये संज्वलनलोभस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथ-

मस्थितिं करोति वेदयते च । पूर्वोक्तां च मायायाः प्रथमस्थितिसत्कामेकामावलिकां स्तिबुकसंक्रमेण सञ्ज्वलनलोभे संक्रमयति, समयोनावलिकाद्विकबद्धाश्च लताः पुरुषवेदक्रमेणोपशमयति, संक्रमयति च संज्वलनलोभे । संप्रति सञ्ज्वलनक्रोधादीनां स्वस्योदयचरमसमये यावत्प्रमाणः स्थितिबन्धोऽनन्तरमुक्तस्तावत्प्रमाणमेव साम्प्रतमुपदर्शयति–इह यः क्षपकश्रेण्यां क्षपकस्य सञ्ज्वलनक्रोधादीनां स्वस्वचरमोदयकाले जघन्यः स्थितिबन्ध उक्तः स उपशमके द्विगुणो भवति, तदनन्तरप्रकृतेः पुनश्चतुर्गुणः, ततोऽपि परस्याः प्रकृतेरष्टगुण इत्यर्थः, अन्येषु तु सङ्ख्येयगुण इति । यथा–क्षपकमधिकृत्य सञ्ज्वलनक्रोधस्य मासद्वयं जघन्यो बन्धः, स चोपशमके मन्दपरिणामत्वाद् द्विगुणश्चतुर्मासप्रमाणो भवति । क्रोधस्य चानन्तरा प्रकृतिर्मानः, तस्य तदानीं बन्धश्चतुर्गुणो भवति, तथाहि–मानस्य क्षपकमधिकृत्य स्वचरमोदयकाले जघन्यः स्थितिबन्ध एको मासः, ततस्तस्य क्रोधचरमोदयकाले चतुर्मासप्रमाणो बन्धः प्रवर्त्तमानः स्वजघन्यबन्धापेक्षया चतुर्गुणो भवति, ततोऽपि परा प्रकृतिर्माया तस्यास्तदानीमष्टगुणो बन्धः, तस्या हि क्षपकमधिकृत्य स्वचरमोदयकाले जघन्यः स्थितिबन्धोऽर्द्धमासः, ततः क्रोधचरमोदयकाले चातुर्मासिको बन्धः प्रवर्त्तमानः स्वजघन्यबन्धापेक्षया अष्टगुणो भवति । तथा मानस्य क्षपकमधिकृत्य जघन्यो बन्ध एको मासः, स चोपशमके मन्दपरिणामत्वाद् द्विगुणो द्विमासप्रमाणो भवति । मानस्य चानन्तरा प्रकृतिर्माया, तस्यास्तदानीं चतुर्गुणः, पक्षापेक्षया मासद्वयस्य चतुर्गुणत्वात् । तथा मायायाः क्षपकमधिकृत्य जघन्यो बन्धः एकः पक्षः, स चोपशमके मन्दपरिणामत्वाच्चरमोदये मासप्रमाणः प्रवर्त्तमानो द्विगुणो भवति, शेषकर्मणां तु ज्ञानावरणीयादीनां सर्वत्रापि सङ्ख्येयवर्षप्रमाणः स्थितिबन्धः, केवलं पूर्वस्मात् हीनो हीनतर इति ॥७१–७२–७३॥

लोहस्स उ पढमठिइं बिईयठिइओ उ कुणइ तिविभागं। दोसु दलणिक्खेवो तइओ पुण किट्टिवेयद्धा ॥७४॥

(स्वो०)—सञ्ज्वलनलोभस्य प्रथमस्थितिं करोति द्वितीयस्थितेः दलं गृहीत्वा गृहीत्वा, तां च प्रथमस्थितिं त्रिविभागां, द्वयोर्विभागयोर्दलनिक्षेपः, तृतीयो विभागः किट्टयनुभवाद्धा संज्ञेति गाथार्थः ॥ ७४ ॥

(मलय०)—सम्प्रति संज्वलनलोभवक्तव्यतामाह-लोभस्य द्वितीयस्थितेर्दलिकमाकृष्य प्रथमां स्थितिं करोति त्रिविभागां-त्रिभागोपेताम्, तद्यथा-प्रथमो विभागोऽश्वकर्णकरणाद्धासंज्ञः, द्वितीयः किट्टिकरणाद्धासंज्ञः, एतयोश्च द्वयोरपि विभागयोर्दलिकनिक्षेपो भवति। किमुक्तं भवति ? द्वितीयस्थितेर्दलिकमाकृष्य द्विभागप्रमाणां प्रथमां स्थितिं करोतीति। तृतीयः पुनर्विभागः किट्टिवेदनाद्धा। संज्वलन लोभोदये चाश्वकर्णकरणाद्धायां वर्त्तमानः प्रथमसमय एव त्रीनपि लोभान् अप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनरूपान् युगपच्छमयितुमारभते ॥७४॥

**संताणि बज्झमाणगसरूवओ फड्डगाणि जं कुणइ। सा अस्सकण्णकरणद्ध मज्झिमा किट्टिकरणद्धा ॥७५॥**

(स्वो०)—'सन्ति'-विद्यमानानि मायाकर्मदलानि बध्यमानसंज्वलनलोभसरूपेण फड्डकानि यत्करोति, साऽश्वकर्णकरणाद्धा प्रथमा भण्यते, द्वितीयो विभागः किट्टिकरणाद्धा संज्ञः, तृतीयः किट्टयनुभवनाद्धा संज्ञः, प्रथमस्थित्यां निवर्त्तितायां लोभत्रिकमुपशामयितुमारम्भयतीति गाथार्थः ॥ ७५ ॥

(मलय०)—अन्यच्च यत्करोति प्रथमे अश्वकर्णकर्णाद्धासंज्ञे विभागे तदाह-'सन्ति'। विद्यमानानि यानि संक्रमितानि मायाकर्मदलिकानि पूर्वबद्धसंज्वलनलोभदलिकानि वा तानि बध्यमानस्वरूपतस्तत्कालबध्यमानसंज्वलनलोभरूपतया, किमुक्तं भवति ? तत्कालबध्यमानसंज्वलनलोभस्पर्द्धकानां चात्यन्तं नीरसानि यत्र करोति सा अश्वकर्णकरणाद्धा। इयमत्र भावना-अश्वकर्णकरणाद्धासंज्ञे प्रथमे त्रिभागे ॥१९५॥

वर्त्तमानः संक्रमितमायादलिकेभ्यः संज्वलनलोभसत्केभ्यो वा पूर्वस्पर्द्धकेभ्यः प्रतिसमयं दलिकं गृहीत्वा तस्य चात्यन्तहीनरसतामा पाद्य, अपूर्वं च प्रतिसमयं दलिकं गृह्णन् अपूर्वाणि स्पर्द्धकानि करोति । आसंसारं हि परिभ्रमता न कदाचनापि बन्धमाश्रित्य ईदृशानि स्पर्द्धकानि कृतानि किन्तु सम्प्रत्येव विशुद्धिवशात्करोतीत्यपूर्वाणीत्युच्यन्ते । तथारूपाणि स्पर्द्धकानि कुर्वतः संख्येयेषु स्थितिबन्धेषु गतेषु सत्सु अश्वकर्णकरणाद्धा व्यतिक्रामति । ततो मध्यमा-द्वितीया किट्टिकरणाद्धा प्रवर्तते, तदानीं च संज्वलनलोभस्य स्थितिबन्धो दिनपृथक्त्वप्रमाणः, शेषकर्मणां तु वर्ष(सहस्र)पृथक्त्वमानः, किट्टिकरणाद्धायां च पूर्वस्पर्द्धकेभ्योऽपूर्वस्पर्द्धकेभ्यश्च दलिकं गृहीत्वा प्रति समयमनन्ताः किट्टीः करोति ॥७५॥

अप्पुव्वविसोहीए अणुभागोणूण विभयण किट्टी। पढमसमयंमि रसफड्डुवग्गणाणंतभागसमा ॥७६॥

(स्वो०)—अश्वकर्णकरणाद्धायां वर्त्तमानोऽपूर्वया विशुद्ध्या पुर्वफड्डकेभ्यः प्रतिसमयं दलं गृहीत्वा अपूर्वाणि फड्डकानि निवर्त्तयति, बन्धमाश्रित्यापूर्वेण रसेन करोति । ततः सख्येयेषु बन्धेष्वपगतेषु अश्वकर्णकरणाद्धा अतिक्रामति । ततः किट्टिकरणाद्धा प्रवर्तते, अपूर्वविशुद्ध्या अनुभागपरमाण्वोर्यद्विभजनं तत्किट्टीकरणमिति । तस्याः किट्टिकरणाद्धायाः प्रथमसमये संज्वलनलोभस्य दिनपृथक्त्वमानो बन्धः, शेषकर्मणां वर्ष(सहस्र)पृथक्त्वमानो बन्धः । तस्याः किट्टिकरणाद्धायाः प्रथमसमये कियतीः किट्टीर्निर्वर्त्तयति ? एतदुच्यते—एकस्मिन् स्पर्द्धके अनन्ता या रसवर्गणाः तासामनन्तभागतुल्याः किट्टीः प्रकरोति, ता अप्यनन्ता इति गाथार्थः ॥ ७६ ॥

(मलय०)—सम्प्रति किट्टिस्वरूप, प्रथमसमये च यावतीः किट्टीः करोति तदेतत्प्रतिपादयति—अपूर्वया विशुद्ध्या अनुभागस्य ऊनस्य एकोत्तरवृद्धिव्यावर्तनेन हीनस्य हीनतरस्य यद्विभजनं सा किट्टी", किमुक्तं भवति ? पूर्वस्पर्द्धकेभ्योऽपूर्वस्पर्द्धकेभ्यश्च वर्गणा

गृहीत्वा तासामनन्तगुणहीनरसतामापाद्य बृहदन्तरालतया यद्व्यवस्थापनम्, यथा–यासां वर्गणानामसत्कल्पनया अनुभागभागानां शतं त्र्युत्तरं द्व्युत्तरमेकोत्तरं चासीत्, तासामनुभागानां यथाक्रमं पञ्चविंशतिः पञ्चदशकं पञ्चकमिति ताः किट्टयः, ताश्च एकस्मिन् रसस्पर्द्धके अनुभागस्पर्द्धके या अनन्ता वर्गणास्तस्य(तासा)मनन्ततमे भागे यावत्यो वर्गणास्तावत्प्रमाणाः प्रथमसमये करोति, ताश्चानन्ताः, ननु ताः किं सर्वजघन्यानुभागस्पर्द्धकानुभागेन सदृशीः करोति ? उत ततोऽपि हीनाः, उच्यते–ततोऽपि हीनाः ॥७६॥

**सव्वजहण्णगफड्डुगअणंतगुणहाणिया उ ता रसओ। पइसमयमसंखंसो आइमसमया उ जावंतो ॥७७॥**

(स्वो०)—सर्वजघन्यानुभागस्पर्द्धकस्याधोऽनन्तगुणहीना रसतो–अनुभागतो भवति, प्रतिसमयमसंख्येयगुणहीनया श्रेण्या यथोत्तरसमयेष्वसंख्येयभागतुल्याः किट्टीः करोति, पूर्वसमयकिट्टिभ्यः असंख्येयभागा यावत्किट्टिकरणाद्धान्तसमय इति गाथार्थः॥ ७७ ॥

(मलय०)—तथा चाह–यत्सर्वजघन्यं रसस्पर्द्धकं ततोऽपि रसमधिकृत्य ताः किट्टीरनन्तगुणहानिकाः–अनन्तगुणहीनाः करोति। ता आदिमसमयात्परतः प्रतिसमयमसंख्येयांशान्–प्रतिसमयं पूर्वस्मात्पूर्वस्मादसंख्येयभागमात्राः किट्टीस्तावत्करोति यावदन्तः–किट्टिकरणाद्धाचरमसमयः। इयमत्र भावना–प्रथमसमये प्रभूताः किट्टीः करोति, द्वितीयसमये असंख्येयगुणहीनाः, एवं तावद्वाच्यं यावत्किट्टिकरणाद्धायाश्चरमसमयः ॥७७॥

**अणुसमयमसंखगुणं दलियमणंतंसओ उ अणुभागो। सव्वेसु मंदरसमाइयाण दलियं विसेसूणं ॥७८॥**

(स्वो०)—'अणुसमयं' इति–प्रतिसमयमसंख्येयगुणं दलं भवति, प्रथमसमयनिर्वर्त्तितकिट्टीनां यत्परमाण्वात्मकं दलं तद् द्वितीयसमयनिर्वर्त्तितानां सर्वकिट्टीनामसंख्येयगुणमेवं प्रतिसमयं नेयम्, यावत्किट्टिकरणाद्धान्तसमयमिति। प्रथमसमयनिर्वर्त्तितानां किट्टीनां

( योऽनुभागस्तदपेक्षया ) यथोत्तरासनन्तभागमात्रोऽनुभागः, एवं यथोत्तरसमयनिर्वर्तितानामपि रसः । सर्वेषु समयेषु निर्वर्तिताः किट्टयो यास्तासां मध्ये मन्दरसास्तासां प्रभूतदलं भवति, यथोत्तरासु तद्रसोत्तरासु विशेषहीनं विशेषहीनं यावदुत्कृष्टरसा इति, एवं प्रतिसमयनिर्वर्तितानामपीति गाथार्थः ॥ ७८ ॥

(मलय०)—अनुसमय-प्रतिसमयं दलिकमसङ्ख्येयगुणम्, तद्यथा-प्रथमसमये सकलकिट्टिगतं दलिकं सर्वस्तोकम्, ततो द्वितीयसमये सकलकिट्टिगतं दलिकमसङ्ख्येयगुणम्, ततोऽपि तृतीयसमये समस्तकिट्टिगतं दलिकमसङ्ख्येयगुणम्, एवं तावद्वाच्यं यावत्किट्टिकरणाद्धायाश्चरमसमयः । 'अणंतसओ उ अणुभागो' इति-प्रतिसमयमनुभागोऽनन्तांशकोऽनन्तभागमात्रः, तद्यथा-प्रथमसमयकृतासु किट्टिषु सामान्येनानुभागः सर्वप्रभूतः, ततोऽपि द्वितीयसमयकृतासु किट्टिष्वनन्तगुणहीनः, ततोऽपि तृतीयसमयकृतासु किट्टिष्वनन्तगुणहीनः एवं तावद्वाच्यं यावत्किट्टिकरणाद्धाचरमसमयः । तथा सर्वेषु समयेषु मन्दरसादिकानां-जघन्यरसप्रभृतीनां किट्टीनां दलिकं विशेषोनं वक्तव्यं यावत्सर्वोत्कृष्टरसा किट्टिः । इयमत्र भावना-सर्वेषु समयेषु या निर्वर्तिताः किट्टयस्तासां मध्ये या मन्दरसा तस्यां दलिकं सर्वप्रभूतम्, ततोऽनन्तरेणानुभागेनानन्तगुणेनाधिकायां द्वितीयायां किट्टौ दलिकं विशेषहीनम्, ततोऽप्यनन्तरेणानुभागेनानन्तगुणेनाधिकायां तृतीयस्यां किट्टौ विशेषहीनम्, एवमनन्तरानन्तरानुभागाधिकासु किट्टिषु विशेषहीनं विशेषहीनं तावद्वक्तव्यं यावत्सर्वोत्कृष्टरसा किट्टिः । एवं प्रतिसमयनिर्वर्तितानामपि किट्टीनां भावनीयम्, तद्यथा-प्रथमसमयकृतासु किट्टिषु मध्ये या सर्वमन्दानुभागा किट्टिस्तस्यां दलिकं सर्वप्रभूतम्, ततोऽनन्तरेणानन्तगुणेनानुभागेनाधिकायां द्वितीयकिट्टौ दलिकं विशेषहीनम्, ततोऽप्यनन्तरेणानन्तगुणेनानुभागेनाधिकायां तृतीयकिट्टौ विशेषहीनम्, एवमनन्तरानन्तरानुभागाधिकासु किट्टिषु विशेषहीनं विशेषहीनं तावदवसेयं यावत्प्रथमसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टरसा किट्टिरिति । एवं सर्वेष्वपि समयेषु प्रत्येकं भावयितव्यम् ॥७८॥

किट्टिकरणाद्धायां सं० लोभस्थि० स्थितौ किट्टिकरणविधिचित्रम्।

प्रथमसमयकृता किट्टय १२ (वस्तुतोऽनन्ता) अनुभागसमुदायसर्वोत्कृष्टस्तदपि जघन्यानुभागस्पर्धकतोऽनन्तगुणहीन. प्रदेशसमुदायः सर्वस्तोकः।

द्वि० समयकृताः किट्टया. १० (वस्तुतोऽनन्ता.) परं प्र०स० कृताकिट्टिभ्योऽसंख्येयगुण०हीनाः । अनुभागसमुदायोऽनन्तगुणहीन. । प्रदेशसमुदायोऽसंख्येयगुणः (प्र० समयतः)

तृतियसमयकृता किट्टयोऽनन्ताः परं द्वि० स०कृतकिट्टिभ्योऽस०गु०हीनास्तदपि ८। अनुभागसमु० अनं०गु०हीनः। प्रदे०समु०अस०गुणः।

चतुर्थसमयकृतकिट्टयोऽनन्ताः परं तृ० समयतोऽस०गु०हीनास्तदपि ६। अनु० समु०अनं०गु० हीनः। प्रदे०समु०असगुणः।

पञ्चमसमयकृतकिट्टयोऽनन्ताः परं च० समयतोऽस०गु०हीनाः तदप्यसत्कल्पनया ४। अनु०समु०अन०गु० हीनः । प्रदे०समु० असं०गुणः।

इति अनुभागकिट्टिरूपा रेखा॥

द्वितीयसमयवर्तितेषु किट्टिषु—

**आइमसमयकयाणं मंदाईणं रसो अणंतगुणो । सव्वुक्कसरसा वि हु उवरिमसमयस्सऽणंतंसे ॥७९॥**

(स्वो०)—आद्यसमयनिर्वर्त्तितानां किट्टीनां या मन्दानुभागा किट्टी तस्या अन्या अनन्तगुणरसा, एवं यावदुत्कृष्टरसा, एवं प्रतिसमयनिर्वर्त्तितानामपि ज्ञातव्यम् । प्रथमसमयनिर्वर्त्तितानां किट्टीनां सर्वमन्दानुभागा या द्वितीयसमयनिर्वर्त्तितानां या सर्वोत्कृष्टरसा साप्यनन्तगुणहीनरसेति गाथार्थः ॥ ७९ ॥

(मलय०)—आदिमसमयकृतानां-प्रथमसमयकृतानां मन्दादीनां-जघन्यरसादीनां रसो यथोत्तरमनन्तगुणो वक्तव्यः, तद्यथा-प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टिः सा सर्वस्तोकानुभागा, ततो द्वितीया अनन्तगुणानुभागा, ततोऽपि तृतीया अनन्तगुणानुभागा, एवं तावद्वाच्यं यावत्प्रथमसमयकृतानां किट्टिमध्ये सर्वोत्कृष्टानुभागा किट्टिरिति । एवं द्वितीयादिष्वपि समयेषु किट्टीनां प्ररूपणा कर्त्तव्या। तथा सर्वोत्कृष्टरसापि-सर्वोत्कृष्टानुभागापि, हुर्निश्चितमुपरितनसमयस्य सत्का पश्चात्समयभाविसर्वमन्दानुभागकिट्ट्यपेक्षया अनन्तांशे-अनन्ततमभागे वर्त्तते । तद्यथा-प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टी सा सर्वप्रभूतानुभागा किट्टी, ततो द्वितीयसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टानुभागा किट्टी साऽनन्तगुणहीना, तथा द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टी तदपेक्षया तृतीयसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टानुभागाऽनन्तगुणहीना । एवं तावद्यावच्चरमसमयः । संप्रत्यासामेव किट्टीनां परस्परं प्रदेशाल्पबहुत्वमुच्यते—प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वबहुप्रदेशा किट्टी, सा स्तोकप्रदेशा, ततो द्वितीयसमयकृतानां मध्ये या सर्वाल्पप्रदेशा किट्टी सा असंख्येयगुणप्रदेशा, ततोऽपि तृतीयसमयकृतानां किट्टीनां

मध्ये या सर्वाल्पप्रदेशा, सा असंख्येयगुणप्रदेशा, एवं तावद्वक्तव्यं यावच्चरमसमयः ॥ ७९ ॥

किट्टीकरणद्धाए तिसु आवलियासु समयहीणासु। न पडिग्गहया दोण्हवि सट्ठाणे उवसमिज्जति ॥८०॥

(स्वो०)—किट्टीकरणाद्धायास्तिसृष्वावलिकासु समयोनासु शेषासु संज्वलनलोभस्य प्रतिग्रहता न भवति, स्वस्थाने इतरलोभयोः कर्मपरमाणवः उपशमं नीयन्ते, किट्टीकरणाद्धाया आवलिकाद्वितये शेषे आगालो न भवति, आवलिकाशेषायामुदयोदीरणाबन्धा न भवन्तीति गाथार्थः ॥ ८० ॥

(मलय०)—किट्टीकरणाद्धायास्तिसृष्वावलिकासु समयहीनासु पतद्ग्रहता न भवति, अप्रत्याख्यानप्रत्याख्यानावरणलोभदलिकं संज्वलनलोभे न संक्रमयतीति भावः, किन्तु तयोर्द्वयोरप्यप्रत्याख्यानप्रत्याख्यानावरणलोभयोर्दलिकं स्वस्थान एव स्थितमुपशमं नीयते। द्व्यावलिकाशेषायां पुनः किट्टीकरणाद्धायां बादरसंज्वलनलोभस्यागालो न भवति, किन्तूदीरणैव। सापि तावत् यावदावलिका। तथा किट्टीकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु संज्वलनलोभस्य स्थितिबन्धोऽन्तर्मुहूर्तप्रमाणो, ज्ञानावरणदर्शनावरणान्तरायाणां दिनपृथक्त्वप्रमाणो, नामगोत्रवेदनीयानां प्रभूतवर्षसहस्रमानः, ततः किट्टीकरणाद्धायाश्चरमसमये संज्वलनलोभस्य स्थितिबन्धोऽन्तर्मुहूर्तप्रमाणः, केवलमिदमन्तर्मुहूर्तं स्तोकतरमवसेयम् , ज्ञानावरणदर्शनावरणान्तरायाणामन्तरहोरात्रस्य, नामगोत्रवेदनीयानां किञ्चिदूनवर्षद्वयप्रमाणः, आगालव्यवच्छेदानन्तरं च या उदीरणावलिका तस्याश्चरमसमयः किट्टीकरणाद्धाचरमसमयः ॥८०॥

लोभस्स अणुवसंत किट्टी उदयावली य पुव्वुत्त। बायरगुणेण समग दोण्णिवि लोभा समुवसंता॥८१॥

(स्वो०)—तदा लोभस्यानुपशान्तं समयोनद्वयावलिकाकृताः किट्टयः उदयावलिका च। बादरगुणेन समकं द्वावपि लोभावप्रत्याख्यानप्रत्याख्यानावरणौ समुपशान्तौ भवतः, स्थितिबन्धोऽपि लोभस्य तदा बादरकषायान्ते [1]द्व्यन्तर्मुहूर्त्तमानः, शेषघातिकर्मणां किञ्चिदूनमहोरात्रं स्थितिबन्धः, नामगोत्रवेदनीयानां किञ्चिदूनवर्षद्वयमिति गाथार्थः ॥ ८१ ॥

(मलय०)—तस्मिंश्च किट्टीकरणाद्धाचरमसमये यद्भूत्तन्निर्दिदिक्षुराह—किट्टीकरणाद्धायाश्चरमसमये संज्वालनलोभस्य अनुपशान्तं वर्त्तते यद् द्वितीयस्थितिगतं किट्टीकृतं दलिकम्, या च उदयावलिका किट्टीकरणाद्धायाः शेषीभूता, यच्च पूर्वोक्तं समयोनावलिकाद्विकबद्धमित्यर्थः, शेषं सर्वमप्युपशान्तम्। तथा तस्मिन्नेव समये बादरगुणेन अनिवृत्तिबादरसम्परायगुणस्थानकेन समकं द्वावप्यप्रत्याख्यानावरणप्रत्याख्यानावरणलोभावुपशान्तौ, किमुक्तं भवति? तस्मिन्नेव समये द्वावप्यप्रत्याख्यानप्रत्याख्यानावरणलोभानुपशान्तौ, तस्मिन्नेव समये अनिवृत्तिबादरसंपरायगुणस्थानकव्यवच्छेदश्च, उपलक्षणमेतत्, बादरसंज्वलनलोभोदयोदीरणाव्यवच्छेदश्च ॥ ८१ ॥



**सेसद्ध तणुरागो तावइया किट्टिओ उ पढमठिई। वज्जिय असंखभागं हिट्ठुवरिमुदीरए सेसा ॥८२॥**

(स्वो०)—'शेषाद्धां' शेषत्रिभागं सूक्ष्मरागो भवति, तावन्मात्राः किट्टयः प्रथमस्थितिः सूक्ष्मरागाद्धा तुल्या, आद्यवर्गमुदयावलिकागतं स्तिबुकसंक्रमेण संक्रामयति, प्रथमसमयसूक्ष्मरागः किट्टीनामसंख्येयभागमनुभवति, आद्यन्तसमयकिट्टीर्वर्जयित्वा शेषाः प्रथमसमये उदयमुपगच्छन्ति, प्रथमसमयकृतानामग्रस्थमसंख्येयभागं मुक्त्वा चरमसमयकृतानां तु जघन्यकिट्ट्यादिकमसंख्येयभागं मुक्त्वा शेषाः



[1] क्षपकापेक्षया द्विगुणत्वेनेयमुक्तम्, तेन वृत्तद्वयुक्तावन्तर्मुहूर्तत्वेऽपि न क्षतिः, केवलं तत् क्षपकात् द्विगुणं, अन्तर्मुहूर्तस्यासंख्येयभेदत्वात्।

कं सूक्ष्मसम्परायाद्धायाश्चरमसमये ज्ञानावरणदर्शनावरणान्तरायाणामान्तर्मौहूर्त्तिकः स्थितिबन्धो, नामगोत्रयोः षोडशमुहूर्त्तप्रमाणो, वेदनीयस्य चतुर्विंशतिमुहूर्त्तमानः। तस्मिन्नेव चरमसमये द्वितीयस्थितिगतं सकलमपि मोहनीयमुपशान्तम्। तत एवमुपशमितद्वितीयस्थितिरनन्तरसमये उपशान्तमुपशान्तमोहरूपं गुणस्थानं लभते, मोहनीयस्याष्टाविंशतिरुपशमितत्वेन। उपशमाद्धा अन्तर्मुहूर्त्तप्रमाणा, तदेव उपशान्तमोहगुणस्थानम् ॥ ८३ ॥

**अन्तोमुहुत्तमेत्तं तस्स वि संखेज्जभागतुल्लाओ। गुणसेढी सव्वद्धं तुल्ला य पएसकालेहिं ॥८४॥**



(स्वो०)—अन्तर्मुहूर्त्तमात्रं तदुपशान्तगुणस्थानं, तस्य तु गुणकालस्य संख्येयभागमात्रां गुणश्रेणिं करोति। सा च गुणश्रेणी परमाणुकालाभ्यामवस्थिता सर्वामुपशान्ताद्धां, तस्यावस्थितपरिणामत्वादिति गाथार्थः ॥ ८४ ॥

(मलय०)—अन्तर्मुहूर्त्तमात्रं तदुपशान्तमोहगुणस्थानकम्, तस्यापि उपशान्तमोहगुणस्थानककालस्य यः संख्येयः संख्येयतमो भागस्तत्तुल्या गुणश्रेणीः करोति। ताश्च गुणश्रेणीः सर्वा अपि सर्वाद्धां सकलामप्युपशान्तगुणस्थानकाद्धां यावत्प्रदेशापेक्षया कालापेक्षया च तुल्याः करोति, अवस्थितपरिणामत्वात् ॥ ८४ ॥

**करणाय णोवसंतं संकमणोवट्टणं तु दिट्ठितिगं। मोत्तूण विलोमेणं परिवडई जा पमत्तो त्ति ॥८५॥**

(स्वो०)—'करणाय'-संक्रमादिकरणार्थं करणगम्यं न भवत्युपशान्तं मोहनीयस्य प्रकृतिजालं, किं सर्वमपि? नेत्याह-मुक्त्वा दृष्टित्रिकं, संक्रमणमपवर्तनं च दृष्टित्रिकवाह्यासु न भवति, यतः तस्मिन् काले मिथ्यात्वसम्यग्मिथ्यात्वे च सम्यक्त्वे संक्रामति, अपवर्त्तनं तु त्रयाणामपि भवत्येव। तस्मादुपशान्तगुणस्थानादुपशान्ताद्धाक्षयेण विलोमतो यथारोहं प्रतिपतति, किं सर्वगुणेषु? नेत्याह-यावदप्र-

*मत्र, यथाऽप्रमत्तादिगुणेषु स्थितिघातरसघातादिकं कुर्वन् श्रेणीं समारूढः तेषु तेषु स्थानेषु तथाविधदपत् क्रमेण प्रतिपतति नियमात्, अन्येष्वनियमो–देशविरतो वा अविरतो वा सास्वादनो वा भवति, भूयस्तामेव श्रेणीं वा समारोहतीति गाथार्थः* ॥८५॥

(मलय०)—मोहनीयस्य प्रकृतिजालमुपशान्तं सत् 'करणाय'–करणयोग्यं न भवति, संक्रमणोद्वर्त्तनापवर्त्तनोदीरणानिधत्तिनिकाचनाकरणानामयोग्यं भवतीत्यर्थः । संक्रमणमपवर्त्तनं च दृष्टित्रिकं सम्यक्त्वसम्यग्मिथ्यात्वमिथ्यात्वरूपं मुक्त्वा शेषाणां मोहनीयप्रकृतीनां न भवति, दृष्टित्रिके तु संक्रमणमपवर्त्तनं च भवति । तत्र संक्रमो मिथ्यात्वसम्यग्मिथ्यात्वयोः सम्यक्त्वे, अपवर्त्तना तु त्रयाणामपि । एवं क्रोधेन श्रेणिं प्रतिपन्नस्य द्रष्टव्यम् । यदा तु मानेन श्रेणिं प्रतिपद्यते तदा मानं वेदयमान एव प्रथमतो नपुंसकवेदोक्तक्रमेण क्रोधत्रिकमुपशमयति । ततः क्रोधोक्तप्रकारेण मानत्रिकम्, शेषं तथैव । यदा तु मायया श्रेणिं प्रतिपद्यते तदा मायां वेदयमान एव प्रथमतो नपुंसकवेदोक्तप्रकारेण क्रोधत्रिकम्, ततो मानत्रिकम्, ततः क्रोधोक्तप्रकारेण मायात्रिकम्, शेषं तथैव । यदा तु लोभेन श्रेणिं प्रतिपद्यते तदा लोभं वेदयमान एव प्रथमतो नपुंसकवेदोक्तप्रकारेण क्रोधत्रिकम्, ततो मानत्रिकं, ततो मायात्रिकम्, तत उक्तप्रकारेण लोभत्रिकमिति । संप्रति प्रतिपात उच्यते–सोऽपि, द्विधा–भवक्षयेण अद्धाक्षयेण वा । तत्र भवक्षयो म्रियमाणस्य, अद्धाक्षयः उपशान्ताद्धाया व्यवच्छेदः । तत्र यो भवक्षयेण प्रतिपतति तस्य प्रथमसमये एव सर्वाण्यपि करणानि प्रवर्त्तन्ते, प्रथमसमये च यानि कर्माण्युदीर्यन्ते तान्युदयावलिकायां प्रवेशयति, यानि च नोदीरणामायान्ति तेषां दलिकान्युदयावलिकाया बहिर्गोपुच्छाकारसंस्थितानि विरचयति । यः पुनरुपशान्तमोहगुणस्थानकाद्धापरिक्षयेण प्रतिपतति, किमुक्तं भवति ? येनैव क्रमेण स्थितिघातादीन् कुर्वन्नारूढस्तेनैव क्रमेण पश्चानुपूर्व्या स्थितिघातादीन् कुर्वन् प्रतिपतति । स च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकम् ॥८५॥

॥ श्रेणितः प्रतिपततो द्वितीयस्थितेः प्रथमस्थितीकरणचित्रम् ॥



ओक्कड्डित्ता दलियं पढमाठितिं कुणइ बिइयठितिहिंतो। उदयाइविसेसूणं आवलिउप्पिं असंखगुणं ॥८६॥

(स्वो०)—विलोमतः प्रतिपतन् अपकृष्य द्वितीयस्थितेः प्रथमस्थितिं करोति, संज्वलनलोभादिषु प्रकृतिषु विपाकोदयानुभवगम्यासूदयावलिकाप्रथमसमये प्रभूतं दलं निक्षिपति, तदुपरितनेषु विशेषहीनं विशेषहीनं यावत्तदन्तसमयः, तदुपरितनसमयेष्वसंख्येयगुणं दलं निक्षिपतीति गाथार्थः ॥ ८६ ॥

चारित्रमोहोपशमना।

(मलय०)—उपशान्तमोहगुणस्थानकात्प्रतिपतनक्रमेण संज्वलनलोभादीनि कर्माण्यनुभवति। तद्यथा—प्रथमतः संज्वलनलोभम्, ततो यत्र मायोदयव्यवच्छेदस्तत आरभ्य मायाम्, ततो यत्र मानोदयव्यवच्छेदस्ततः प्रभृति मानम्, ततो यत्र क्रोधोदयव्यवच्छेदस्तत आरभ्य क्रोधम्। इत्थं च क्रमेणानुभवनार्थं तेषां द्वितीयस्थितेः सकाशाद्दलिकमपकृष्य—समाकृष्य प्रथमस्थितिं करोति। उदयादिषु च उदयसमयप्रभृतिषु च स्थितिषु श्रेण्या विशेषोनं प्रक्षिपति। तद्यथा—उदयसमये प्रभूतम्, ततो द्वितीयसमये विशेषहीनम्, ततोऽपि तृतीयसमये विशेषहीनम्, एवं तावद्वाच्यं यावदुदयावलिकायाश्चरमसमयः। तत उदयावलिकाया उपरि असंख्येयगुणम्, तद्यथा—उदयावलिकाया उपरि प्रथमसमये प्राक्तनानन्तरसमयदलिकनिक्षेपापेक्षया असंख्येयगुणम्, ततोऽपि द्वितीयसमये असंख्येयगुणम्, ततोऽपि तृतीयसमये असंख्येयगुणम्, एवमुदयवतीनां तावद्वक्तव्यं यावद्गुणश्रेणिशिरः, ततः पुनरपि प्रागुक्तक्रमेण विशेषहीनो दलिकनिक्षेपः ॥८६॥



जावइया गुणसेढी उदयवई तासु हीणगं परओ। उदयावलीमकाउं गुणसेढिं कुणइ इयराणं ॥८७॥

(स्वो०)—यावत्समयैर्गुणश्रेणी तावत्समयेष्वसंख्येयगुणदलनिक्षेपः उदयवतीषु—तत्कालोदितप्रकृतिषु, तत्परतो विशेषहीन दलनिक्षेपः, इतरासामनुदयवत्प्रकृतीनां उदयावलिकामकृत्वा गुणश्रेणीं करोति, तन्मस्तकोपरि समयेषु विशेषहीनं विशेषहीनं दलं क्षिपतीति गाथार्थः ॥८७॥

(मलय०)—एतदेवाह—या उदयवत्यस्तत्कालमुदयमाजस्तासां प्रकृतीनां यावती गुणश्रेणि'—यावद्गुणश्रेणीशिर इत्यर्थः, तावदुदयावलिकाया उपरि प्रागुक्तक्रमेणासंख्येयगुणं दलिकनिक्षेपं करोति। ततः परतो हीनकं विशेषहीनम्। इतरासामनुदयवतीनां प्रकृतीनामुदयावलीमकृत्वा उदयावलिकायां दलिकनिक्षेपमकृत्वेत्यर्थः, तत उपरि असंख्येयगुणनया दलिकनिक्षेपः, स च तावद्यावद्गुणश्रेणीशिरः, ततः परतः पुनर्विशेषहीनो विशेषहीनः ॥८७॥

संकमउदीरणाण नत्थि विसेसो उ एत्थ पुव्वुत्तो। ज जत्थ उ वोच्छिण्णं जायं वा होइ तं तत्थ ॥८८॥

(स्वो०)—संक्रमोदीरणयोरत्र—प्रतिपाते पूर्वोक्तो विशेषो नास्ति, आनुपूर्वीसंक्रमो यः समारोहति कथितः सोऽत्र न भवति, षडावलिकापरतो यदस्य या उदीरणा प्रतिपादिता साऽत्र न भवति, यतोऽत्र बन्धावलिकागताने उदीरणा प्रभवति। यद्यत्र स्थाने अपगत विनष्ट बन्धनं वा संक्रमणं वा उद्वर्तन वा अपवर्तन वा उदीरणा वा देशोपशमनं वा आगालो वा नियधिवी निकाचनं वा तत्तत्र स्थाने भवति। जातं वा यदस्मिन् स्थाने रसस्थितिघातादि तत्तत्र स्थाने तद्विधमेव विपर्यस्त भवतीति गाथार्थः ॥ ८८ ॥

(मलय०)—इह य उपशमश्रेण्यारोहे संक्रमे विशेष उक्तो यथाऽऽनुपूर्व्येव संक्रमो नानानुपूर्व्या, तथा य उदीरणायां विशेष उक्तो यथा बद्धं बद्धं कर्म षडावलिकातीतमुदीरयति न षडावलिका मध्ये, विशेषोऽत्रोपशमश्रेणिप्रतिपाते न भवति। किमुक्तं भवति ?

अनानुपूर्व्याऽपि संक्रमः, बद्धं च कर्म बन्धावलिकातिक्रान्तमुदीरयतीति। तथा यत् यत्र स्थाने व्यवच्छिन्नमपगतं बन्धनं वा संक्रमणं वाऽपवर्तनं वा उदीरणं वा देशोपशमना वाऽऽगालो वा निधत्तिर्वा निकाचनं वा तत्तत्र स्थाने भवति। तथा यत् यत्र स्थाने जातं स्थितिरसघातादि तत्तत्र स्थाने तद्विधमेव भवतीति ॥८८॥

**वेइज्जमाणसंजलणकालाओ अहिगमोहगुणसेढी । पडिवत्तिकसाउदए तुल्ला सेसेहि कम्मेहिं ॥८९॥**

(स्वो०)—वेद्यमानसंज्वलनकालादभ्यधिका मोहनीयगुणश्रेणी कालमधिकृत्य, समारोहगुणश्रेणीमाश्रित्य तुल्या, श्रेणीप्रतिपत्तिर्यस्य कषायस्योदये तस्य गुणश्रेणी तुल्या शेषकर्म्मभिः, शेषकर्म्मणां तु यदारोहत उक्तं प्रतिपततोऽपि तदेवाहीनानतिरिक्तं भवतीति गाथार्थः ॥ ८९ ॥



(मलय०)—मोहनीयस्य–मोहनीयप्रकृतीनां गुणश्रेणिः कालमधिकृत्य वेद्यमानसंज्वलनकालादभ्यधिका प्रतिपतता सता प्रारभ्यते, समारोहकाले गुणश्रेण्यपेक्षया तु तुल्या। तथा यस्य कषायस्योदये उपशमश्रेणिप्रतिपत्तिरासीत्, तस्योदयप्राप्तस्य सतो गुणश्रेणिः प्रतिपतता शेषकर्मभिः शेषकर्मसत्कगुणश्रेणिभिः सह तुल्या क्रियते। यथा–कश्चित्संज्वलनक्रोधेनोपशमश्रेणिं प्रतिपन्नः, ततः श्रेणेः प्रतिपतन् तदा संज्वलनक्रोधमुदयेन प्राप्तवान् भवति, ततः प्रभृति तस्य गुणश्रेणिः शेषकर्मभिः समाना भवति। एवं मानमाययोरपि वाच्यम्। संज्वलनलोभेन पुनरुपशमश्रेणिं प्रतिपन्नस्य प्रतिपातकाले प्रथमसमयादेवारभ्य संज्वलनलोभस्य गुणश्रेणिः शेषकर्मसत्कगुणश्रेणिभिः सह तुल्या प्रवर्त्तते। शेषकर्मणां तु यदारोहत उक्तं तदेव प्रतिपततोऽप्यन्यूनातिरिक्तं वेदितव्यम् ॥८९॥



**खवगुवसामगपच्चागयाण दुगुणो तहिं तहिं बन्धो। अणुभागोऽणंतगुणो असुभाण सुभाण विवरीओ॥९०॥**

(स्वो०)—आदिमध्यावसानेषु क्षपकस्यानुपशमको द्विगुणो बन्धः, तत्रैव प्रतिपतत' तस्मादपि द्विगुणो बन्धः कालतो भवति । य. क्षपकस्यानुभागः स तयोरनन्तगुणोऽशुभप्रकृतीनां, शुभानां त्वनन्तभागतुल्यः, क्षपकस्य स्तोकः, उपशामकस्य अनन्तगुणः, त तोऽप्यनन्तगुणः प्रतिपततोऽशुभकर्म्मणाम्, शुभानां विपरीतः, शेषविधिरुभयोरपि तुल्य इति गाथार्थः ॥९०॥

(मलय०)—क्षपकस्य क्षपकश्रेणिमारोहतो यस्मिन् स्थाने यावान् स्थितिबन्धस्तस्मिन्नेव स्थाने उपशमश्रेणिमारोहतस्तावान् स्थितिबन्धो द्विगुणो भवति । ततोऽपि तस्मिन्नेव स्थाने उपशमश्रेणीतः प्रतिपततो द्विगुणो भवति, क्षपकसत्कस्थितिबन्धापेक्षया चतुर्गुणो भवतीत्यर्थ' । तथा क्षपकस्य यस्मिन् स्थानेऽशुभप्रकृतीनां यावाननुभागो भवति तदपेक्षया तस्मिन्नेव स्थाने तासामेवाशुभ प्रकृतीनामुपशमकस्यानुभागोऽनन्तगुण' । ततोऽपि तस्मिन्नेव स्थाने तासामेवाशुभप्रकृतीनामुपशमश्रेणीतः प्रतिपततोऽनन्तगुणः । 'सुभाण विवरिउ' त्ति–शुभानां पुनरनुभागो विपरीतो वाच्यः, स चैवं–उपशमश्रेणीतः प्रतिपततो यस्मिन् स्थाने शुभप्रकृतीनां यावाननुभागो भवति तदपेक्षया तस्मिन् स्थाने तासामेव *शुभप्रकृतीनामुपशमकस्यानुभागोऽनन्तगुणः* । ततोऽपि तस्मिन्नेव स्थाने तासामेव शुभप्रकृतीनां क्षपकस्यानन्तगुण' ॥९०॥

परिवाडीए पडिउ पमत्तइयरत्तणे बहु किच्चा । देसजई सम्मो वा सासणभाव वए कोइ ॥९१॥

(स्वो०)—आरोहत' परिपाटया प्रतिपतित्वा प्रमत्ताऽप्रमत्तत्वे बहून् वारान् कृत्वा ततो देशविरतत्वं वा अविरतत्वं वा सास्वादनत्वं वा कश्चिद् व्रजेदिति गाथार्थः ॥९१॥

(मलय०)—यया परिपाटया श्रेणिमारूढस्तया परिपाटया पतितः सन् तावदधो गच्छति यावत् प्रमत्तसंयतगुणस्थानकम् । ततः

प्रमत्तत्वाप्रमत्तत्वे बहून् वारान् कृत्वा कश्चिद्देशयतिर्भवति कोऽप्यविरतसम्यग्दृष्टिर्वा । येषां मतेनानन्तानुबन्धिनामुपशमना भवति तेषां मतेन कश्चित्सासादनमपि व्रजति ॥९१॥

उवसमसम्मत्तद्धाअंतो आउक्खया धुवं देवो । जेण तिसु आउएसुं बद्धेसु न सेढिमारुहइ ॥९२॥

(स्वो०)—औपशमिकसम्यक्त्वकालादन्तर्मध्ये आयुःक्षयात् यो म्रियते सोऽवश्यं देवो भवति, यतो यस्मात्रिधायुष्केषु नारकतिर्यङ्मनुष्यसंज्ञेषु बद्धेषु न उपशमश्रेणीं समारोहतीति गाथार्थः ॥ ९२ ॥

(मलय०)—औपशमिकसम्यक्त्वाद्धायां वर्तमानो यदि कश्चिदायुःक्षयात् कालं करोति तर्हि स ध्रुवमवश्यं देवो भवति, येन यस्मात् कारणात् त्रिषु नारकतिर्यङ्मनुष्यसम्बन्धिष्वायुष्केषु बद्धेषु श्रेणिमुपशमश्रेणिं नारोहति किं तु देवायुष्क एव बद्धे । ततः कालं कृत्वा देव एव भवतीति ॥९२॥

सेढीपडिओ तम्हा छडावली सासणो वि देवेसु । एगभवे दुक्खुत्तो चरित्तमोहं उवसमेज्जा ॥९३॥

(स्वो०)—तस्माच्छ्रेणीपातात् यः सास्वादनो भवति, ( जघन्यत एकं समयमुत्कृष्टतः ) षडावलिकाकालमनुभवति, ( सोऽपि ) सास्वादनोऽवश्यं तदन्तर्मृतो देवो भवति, यतोऽमरायुषा बद्धेन श्रेणीप्रतिपत्तिरिष्यते, नान्येन । एकस्मिन् भवे चारित्रमोहनीयं द्वे वारे उपशमयत्युत्कृष्टतो, न तृतीयवारेति । यस्तूपशान्तगुणस्थ एव कालं करोति सोऽनुभूयमानप्रकृतीनां गोपुच्छान्तःस्थ एवोदयावलिकां सर्वप्रकृतीनामनुभवति । अनुदयवतीषु द्वितीयस्थितेर्दलं गृहीत्वा उदयावलिकां करोतीति गाथार्थः ॥९३॥

(मलय०)—यस्मात् कारणात् देवायुर्वर्जेषु क्षेपेषु त्रिष्वायुष्केषु श्रेणिं नारोहति तस्मात् कारणात् श्रेणितः पतितः सन् य उत्कर्षतः षडावलिकाकाल जघन्यत समयमात्र सासादनो भवति, सोऽप्यवश्य मृत्वा देवेषु समुत्पद्यते। तथा एकस्मिन् भवे उत्कर्षतश्चारित्रमोहनीय द्वौ वारावुपशमयति, न तृतीयमपि वारम्, यस्तु द्वौ वारावुपशमश्रेणिं प्रतिपद्यते स तस्मिन् भवे क्षपकश्रेणिं न प्रतिपद्यते, यस्त्वेकं वारमुपशमश्रेणिं प्रतिपन्नस्तस्य भवेदपि तस्मिन् भवे क्षपकश्रेणिः। एष कार्मग्रन्थिकाभिप्रायः, आगमाभिप्रायेण त्वेकस्मिन् भवे एकैव श्रेणिर्न तु द्वे अपि। तदुक्तं—' अन्नयरसेढिवज्जं एगभवेण च सव्वाइं ' अन्यत्राप्युक्तं—" मोहोपशम एकस्मिन् भवे द्विः स्यादसन्ततः। यस्मिन् भवे तूपशमः क्षयो मोहस्य तत्र न" ॥९३॥

एवं पुरुषवेदोदयेन श्रेणीप्रतिपन्नस्य विधिरभिहितः, साम्प्रत स्त्रीनपुंसकोदयेन प्रतिपन्नयोरभिधीयते—

दुचरिमसमए नियगोदयस्स इत्थीनपुंसगोण्णोण्ण। समयिं तु सत्त पच्छा किन्तु नपुंसो कमारद्धे ॥९४॥

॥ इति श्रीपंचसंग्रहे उवसमकरणं सम्मत्त ॥

(स्वो०)—स्त्रीवेदोदयेन श्रेणीं समारूढो नपुंसकवेद प्रथममुपशमयति, पश्चात् स्त्रीवेद, यावत्स्वकोदयस्य द्विचरमसमयः, तस्मिन् समयमात्रे प्रथमस्थितेरनुपशान्ते शेषे तूपशान्ते अवेदको नोकषायषट्कं पुरुषवेद च युगपत्सप्ताप्युपशमयति, शेष पुरुषवत्। नपुंसकवेदोदयेन श्रेणीं समारूढो नपुंसकवेद स्त्रीवेद च युगपदुपशमयितुमारम्भयति, अन्योन्यं क्रमेणोपशमयतो यावत् द्विचरमा स्थितिः, तस्यां शेषायां अवेदकः सप्तकमुपशमयति—हास्यादिषट्कपुरुषवेदसंज्ञं, शेष पुरुषवेदवदिति गाथार्थः ॥ ९४ ॥

॥ इति श्रीस्वोपज्ञवृत्तौ समाप्त चोपशमनाकरणमिति ॥

—

(मलय०)—एवं पुरुषवेदेनोपशमश्रेणिं प्रतिपन्नस्य विधिरुक्तः, संप्रति स्त्रीवेदेन नपुंसकवेदेन चोपशमश्रेणिं प्रतिपद्यमानस्य विधिमाह—स्त्री नपुंसकश्च वेदेन सहान्योऽन्यं परस्परस्य वेदमुपशमयति । किमुक्तं भवति ? स्त्री स्त्रीवेदमुपशमयति नपुंसकवेदं च, नपुंसको नपुंसकवेदमुपशमयति स्त्रीवेदं चेति । किन्तु नपुंसकवेदे गते सति पूर्वक्रमेणारब्धे सत्युक्तप्रकारेणोपशमयति । इह चोपशमनाकरणे स्त्रियः नपुंसकस्य च निजकोदयस्य स्ववेदोदयद्विचरमसमये एकामुदयस्थितिं मुक्त्वा शेषं सर्वमुपशान्तम् । इत्थं च शमयित्वा स्त्री नपुंसको वा पश्चात्सप्त पुरुषवेदादिकाः प्रकृतीरुपशमयितुं यतते । इयमत्र भावना—इह स्त्री उपशमश्रेणिं प्रतिपन्ना सती प्रथमतो नपुंसकवेदमुपशमयति, पश्चात्स्त्रीवेदम् , तच्च तावदुपशमयति यावत्स्वोदयस्य द्विचरमसमयः, तस्मिंश्च निजकोदयद्विचरमसमये एकां चरमसमयमात्रामुदयस्थितिं च वर्जयित्वा शेषं सकलमपि स्त्रीवेदसत्कं दलिकमुपशमितम् , ततश्चरमसमये गते सति अवेदका सती पुरुषवेदहास्यादिषट्करूपाः सप्त प्रकृतीर्युगपदुपशमयितुमारभते । शेषं पुरुषवेदेनेव श्रेणिं प्रतिपन्नस्य द्रष्टव्यम् । तथा स्त्रीवेदेन पुरुषवेदेन वा उपशमश्रेणिं प्रतिपद्यमानो यस्मिन् स्थाने नपुंसकवेदमुपशमयति तद्दूरं यावन्नपुंसकवेदेन श्रेणिं प्रतिपन्नः सन् नपुंसकवेदमेव केवलमुपशमयति । तत ऊर्ध्वं नपुंसकवेदं स्त्रीवेदं युगपदुपशमयितुं लग्नः, स च तावद्गतो यावन्नपुंसकवेदोदयाद्धाया द्विचरमसमयः । तस्मिंश्च समये स्त्रीवेद उपशान्तः, नपुंसकवेदस्य च एका समयमात्रा उदयस्थितिर्वर्त्तते, शेषं सर्वमप्युपशान्तम् , तस्यामप्युदयस्थितावतिक्रान्तायामवेदको भवति । ततः पुरुषवेदादिकाः सप्त प्रकृतीर्युगपदुपशमयतीति ॥९४॥

॥ समाप्ता सर्वोपशमना ॥

उपशमनाकरणम्

भिन्नवेदेन श्रेणौ विशेषः

## ॥ भिन्नकषायोदयेन श्रेणौ विशेषः ॥

| संज्व०क्रोधोदयेन | सज्व०मानोदयेन | सं०मायोदयेन | सं०लोभोदयेन |
|---|---|---|---|
| प्रथमं सं क्रोधं वेदयमानः क्रोधत्रिकं | सं० मान वेदयमानः क्रोधत्रिकम् (नपुं० वत्) | स०मायां वेदयमानः प्रथमं क्रोधत्रिकम् | सं०लोभ वेदयमानः प्रथमं क्रोधत्रिकम् |
| ततो मानत्रिकं (क्रोधवत्) | ततो मानत्रिकम् | ततो मानत्रिकम् | ततो मानत्रिकम् |
| ततो मायात्रिकम् | ततो मायात्रिकम् | ततो मायात्रिकम् | ततो मायात्रिकम् |
| ततो लोभत्रिकमुपशमयति | ततो लोभत्रिकमुपशम० | ततो लोभत्रिकम् | ततो लोभत्रिकम् |

### ॥ भिन्नवेदेन श्रेणौ विशेषः ॥

यदि स्त्री प्रारम्भिका

प्रथमं नपुं० वेदं शमयति
ततः स्त्रीवेदं शमयति
ततः समयानन्तरं पुंवेदहास्य
६ षट्कोपशमनाप्रारम्भः
शेषविधिः पुंवेदवत् ।

### यदि नपुंसकः प्रारम्भकः

प्रथमं नपुं० वेदोपशमनाप्रारम्भः, ततः नपुं०स्त्रीवेदौ युगपदुपशमयति, ततः स्त्रीवेदोपशान्तिः, नपुंसः १स्थि० अवशिष्टा, ततः समया नन्तरं नपुं०वेदोपशान्तिः, ततः समयानन्तरं पुंहास्य ६ कोपशमना प्रारम्भः शेषविधिः पुंवेदवत् ।

### यदा पुरुषः प्रारम्भकः

प्रथमं नपुं०वेदं शमयति, ततोऽन्तर्मुहूर्तानन्तरं स्त्रीवेदं शमयति, ततः समयानन्तरं पुंवेदहास्य६कोपशमनाप्रारम्भः, ततो हास्य ६कोपशान्तिः, पुं० १ स्थितिरवशिष्टा, ततः पुंवेदोदयशान्तिः, ततः उदयावलिका समयोनावलिकाद्विकवर्जं च मुक्त्वा सर्वपुंवेदशान्तिः

अथ यस्याः प्रकृतेरुपशमो भोक्तस्तस्याः तत्स्थान पर्यान्तर्मुहूर्तेनोपशमो भवतीति ज्ञेयम् ॥

साम्प्रतं देशोपशमना भण्यते—

मूलुत्तरकम्माणं पगडिट्ठितिमादि होइ चउभेया। देसकरणेहि देसं समेइ जं देससमणातो ॥९५॥

उपशमना करणम्

(स्वो०)—मूलोत्तरकर्म्माणि प्रकृतिस्थित्यनुभागप्रदेशभेदाच्चतुर्द्धा भवन्ति, देशकरणैः (णाभ्यां) यथाप्रवृत्तापूर्वकरणसंज्ञैः (ज्ञाभ्यां) देशं-किञ्चिन्मात्रं प्रकृतिस्थित्यादीनां यत उपशामयति अतो देशोपशमना भण्यत इति गाथार्थः ॥ ९५॥

देशोपशमना

(मलय०)—तदेवमुक्ता सर्वोपशमना, संप्रति देशोपशमनामभिधातुकाम आह—देशोपशमना मूलकर्मणां—मूलप्रकृतिनाम्, उत्तरकर्मणाम्—उत्तरप्रकृतीनां प्रत्येकं प्रकृतिस्थित्यादिका—प्रकृतिस्थित्यनुभागप्रदेशविषया चतुर्भेदा—चतुर्विधा भवति। इयमत्र भावना—देशोपशमना द्विधा, तद्यथा—मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। एकैकापि चतुर्भेदा, तद्यथा—प्रकृतिदेशोपशमना, स्थितिदेशोपशमना, अनुभागदेशोपशमना, प्रदेशदेशोपशमना च। अथ कस्माद्देशोपशमनेत्यभिधीयते ? अत आह—यत् यस्मात्कारणाद्देशभूताभ्यामेकदेशभूताभ्यां यथाप्रवृत्तापूर्वकरणसंज्ञिताभ्यां करणाभ्यां प्रकृतिस्थित्यादीनां देशमेकदेशं शमयत्युपशमयति अतो देशोपशमनाभिधीयते। देशभूताभ्यां करणाभ्यामुपशमना देशोपशमना। यदि वा देशस्य प्रकृत्यादीनामेकदेशस्योपशमना देशोपशमनेति व्युत्पत्तेः ॥९५॥

तयोपशान्तानां प्रकृतिस्थित्यादीनां लक्षणमाह—

उवट्टणओव्वट्टणसंकमकरणाइं होंति नण्णाइं। देसोवसामियस्सा जापुव्वो सव्वकम्माणं ॥९६॥



(स्वो०)—देशोपशमनयोपशान्तमपि उद्वर्त्तनापवर्तनसंक्रमणगम्यं कर्म्मदलं भवति, नान्येषां करणानाम्। तस्याश्च देशोपशम-

नापा: एकद्वित्रिचतु:पञ्चेन्द्रियनारकतिर्यग्देवमनुष्याः तेऽपि यावदपूर्वकरणान्त्यसमय तावत् सर्वेऽपि स्वामिनः सर्वकर्मणां इति गाथार्थः ॥९६॥

(मलय०)—सप्रत्ययस्या एव तात्पर्यविश्रान्तिमाह—देशोपशमनया उपशमितस्य कर्मण उद्वर्तनापवर्तनसंक्रमलक्षणानि करणानि भवन्ति, नान्यानि करणान्युदीरणाप्रभृतीनि, एष देशोपशमनायाः सर्वोपशमनातो विशेषः। अनया च देशोपशमनया मूलप्रकृतिरु त्तरप्रकृतिं वा उपशमयितुं प्रभुस्तावदवसेयो यावदपूर्वोऽपूर्वकरणगुणस्थानकचरमसमयः। इयमत्र भावना–अस्या देशोपशमनायाः स्वामिनः सर्वे तिर्यञ्च एकद्वित्रिचतुष्पञ्चेन्द्रियभेदभिन्नाः, सर्वे नारकाः, सर्वे देवाः, सर्वे मनुष्याः, ते च मनुष्यास्तावद्यावदपूर्वकर-णान्त्यसमय इति। एषा च देशोपशमना सर्वेषामपि कर्मणामवगन्तव्या, न मोहनीयस्यैव केवलस्य ॥९६॥

एतदेव विशेषयति—

खवगो उवसामगो वा पढमकसायाण दंसणतिगस्स। देसोवसामगो सो अपुव्वकरणतगो जाव ॥९७॥

(स्वो०)—प्रथमकषायाणां वियोजने प्रथमसम्यक्त्वप्राप्तौ चतुर्गतिका अप्यपूर्वकरणान्त्यसमय यावद्देशोपशामनां कुर्वन्ति, नानिवृ त्तिकरणकालम्। दर्शनत्रिकस्य क्षपका अविरतदेशविरतसर्वविरता अपूर्वकरणान्त्यसमय यावद्देशोपशामनां कुर्वन्ति, न परतः, अशेषकर्मणा-मपि अपूर्वगुणस्थानात् परतो देशोपशामना न भवत्येवेति गाथार्थः ॥९७॥

(मलय०)—स्वामिविषयमेव कञ्चन विशेषमाह—स देशोपशमनास्वामी देशोपशमकः प्रथमकषायाणां दर्शनत्रिकस्य च क्षपक उपशमको वा तावदवसेयो यावत्तत्रस्थापूर्वकरणान्त्यगः। एतदुक्तं भवति—प्रथमकषायाणां विसंयोजकाश्चतुर्गतिका अपि, उपशमकाः

मनुष्याः प्रतिपन्नसर्वविरतयो, दर्शनत्रिकस्य क्षपका मनुष्या अविरतदेशविरतसर्वविरताः, उपशमकाः सर्वविरताः तावद्देशोपशमनाकारिणो यावत्स्वस्वापूर्वकरणचरमसमयो, न परत इति ॥९७॥

साइयमाइचउद्धा देसुवसमणा अणाइसंतीणं । मूलुत्तरपगईणं साई अधुवा उ अधुवाओ ॥९८॥

(स्वो०)—सादिः अनादिर्ध्रुवाऽध्रुवा एवं चतुर्विधाऽपि देशोपशामना भवति मूलप्रकृतीनां उत्तरप्रकृतीनां चानादिसद्भाविनीनां-यासामनादिसत्तेति। कथं ? उपशमश्रेणीतः प्रतिपततः सादिस्तत्स्थानमप्राप्तस्यानादिरभव्यस्य ध्रुवा भव्यस्याध्रुवेति । अध्रुवसत्प्रकृतीनां सादिरध्रुवा भावितैवेति गाथार्थः ॥ ९८ ॥

(मलय०)—संप्रति साद्यादिप्ररूपणार्थमाह—या मूलप्रकृतय उत्तरप्रकृतयो वा अनादिसत्योऽनादिसत्ताकास्तासां देशोपशमना साद्यादिभेदाच्चतुर्धा चतुष्प्रकारा, तद्यथा–सादिरनादिर्ध्रुवा अध्रुवा च । तत्र मूलप्रकृतीनामष्टानामपि अपूर्वकरणगुणस्थानकात्परतः सा देशोपशमना न प्रवर्त्तते, ततः प्रतिपाते च भूयोऽपि प्रवर्त्तते इति सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवा अभव्यानां, भव्यानां त्वध्रुवा । भाविता मूलप्रकृतीनां साद्यादिरूपतया चतुर्विधा देशोपशमना । सम्प्रत्युत्तरप्रकृतीनामनादिसत्ताकानां सा भाव्यते–तत्र वैक्रियसप्तकाहारकसप्तकमनुष्यद्विकदेवद्विकनरकद्विकसम्यक्त्वसम्यग्मिथ्यात्वोच्चैर्गोत्ररूपोद्वलनयोग्यत्रयोविंशतितीर्थकरायुश्चतुष्टयवर्जाः शेषास्त्रिंशदुत्तरशतसंख्याः प्रकृतयोऽनादिसत्ताकाः, तासां मध्ये मिथ्यात्वानन्तानुबन्धिनां स्वस्वापूर्वकरणात्परतो देशोपशमना नोपजायते, शेषकर्मणां त्वपूर्वकरणगुणस्थानकात्परतः, तत् स्थानात्प्रच्यवमानस्य भूयोऽपि जायते इति सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे अभव्यभव्यापेक्षया । यास्त्वध्रुवा अध्रुवसत्ताकाः प्रकृतयोऽनन्तरोक्ता अष्टाविंशतिसंख्याकास्ता देशोपशमनामधिकृत्य

साधध्रुवाः, तासां देशोपशमना सादिरध्रुवा चेत्यर्थः। सा च साधध्रुवता अध्रुवसत्ताकत्वादेवात्रसेया ॥९८॥

प्रकृतिस्थानानां साधनादिप्ररूपणामाह—

गोयाउयाण दोण्ह चउत्थ छट्ठाण होइ छ सत्तण्हं। साइयमाइ चउद्धा सेसाणं एगठाणस्स ॥९९॥

(स्वो०)—गोत्रायुषोर्द्वे प्रकृतिस्थाने, उद्वलितगोत्रस्य अबद्धायुष्कस्य च एकप्रकृत्यात्मकमेकं स्थानम्, तत्प्रत्यये द्विप्रकृत्यात्मकं स्थानं द्वितीयम्। चतुर्थं मोहनीयं, तस्य षट्प्रकृतिस्थानानि देशोपशामनायोग्यानि। अष्टाविंशतिस्थानं मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टिवेदकसम्यग्दृष्टीनां भवति। सप्तविंशतिस्थानं उद्वलितसम्यक्त्वस्य मिथ्यादृष्टेः सम्यग्मिथ्यादृष्टेर्वा भवति। षड्विंशतिस्थानं उद्वलितसम्यक्त्वसम्यग्मिथ्यात्वस्यानादिमिथ्यादृष्टेः वा भवति। पञ्चविंशतिस्थानं सम्यक्त्वोत्पत्तौ मिथ्यादृष्टेर्यदाऽपूर्वकरणान्तसमये मिथ्यात्वस्य देशोपशमना न स्यात् तदेति। चतुर्विंशतिस्थानं यदानन्तानुबन्धिन उद्वलनेऽपूर्वकरणस्यान्तः समयस्तदा तेषां देशोपशमनाभावात् भवति, क्षपणायोत्थितस्य वा अपूर्वकरणस्यान्तसमये चतुर्विंशतिस्थानम्। एकविंशतिस्थानं क्षपितसप्तकस्य तस्यैवोपशमश्रेणीपतितस्य वा। एवं मोहनीयस्य षट् स्थानानि देशोपशामनायोग्यानि भवन्ति, न शेषाणि। नाम्नः सप्त स्थानानि–प्रथमचतुष्काध्रुवत्रिकसंज्ञानि। शेषस्थानानि क्षपकश्रेण्यां सम्भवन्ति, देशोपशामना चोभयश्रेण्योरपि न भवति। शेषाणां ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामेकैकं प्रकृतिस्थानम्। ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकम्, दर्शनावरणस्य नवप्रकृत्यात्मकम्, वेदनीयस्य द्विप्रकृत्यात्मकम्, देशोपशमनायोग्यम्। नामगोत्रायुर्मोहायुःस्थानवर्जानां शेषस्थानानां देशोपशामना चतुर्विधा भवति, उपशमश्रेणीतः पततः सादिः, तत्स्थानमप्राप्तस्यानादिरभव्यस्य ध्रुवा भव्यस्याध्रुवा, मिथ्यादृष्टेः सम्यक्त्वसंयमपञ्चेन्द्रियत्वप्राप्तौ नाम्नस्त्रिंशदुत्तरशतप-

ण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिस्थानेषु सादिः, गोत्रस्योद्वलनमुद्वलनेनैकस्थानद्विस्थानयोः सादिः, आयुष्कबन्धापेक्षयाऽऽयुष्कस्यैकस्थानद्विस्थानयोः सादिश्चाध्रुवा, वेदकसम्यक्त्वप्राप्तौ वियोजितानन्तानुबन्धिबन्धकस्य वा मोहनीयस्य अष्टाविंशतिस्थाने सादिस्तस्यैवोद्वलितसम्यक्त्वस्य सप्तविंशतेः सादिः, तस्यैवोद्वलितोभयदर्शनस्य षड्विंशतेः, तस्यैवोद्वलितानन्तानुबन्धिनः चतुर्विंशतेः सादिः, सम्यक्त्वोत्पत्तावपूर्वकरणान्तसमये मिथ्यात्वस्य देशोपशमनाविरमे पञ्चविंशतेः, सप्तके क्षपिते एकविंशतेः सादिः, येषु सादिस्तेषु अध्रुवा च, षड्विंशतेरनादिर्ध्रुवा चेति गाथार्थः ॥९०॥

देशोपशमना

(मलय०)—संप्रति प्रकृतिस्थानानां साद्यादिप्ररूपणार्थमाह—इह गोत्रस्य देशोपशमनामधिकृत्य द्वे प्रकृतिस्थाने, तद्यथा—द्वे एका च । तत्रानुद्वलितोच्चैर्गोत्रस्य द्वे, उद्वलितोच्चैर्गोत्रस्यैका । तथा आयुषोऽपि द्वे प्रकृतिस्थाने, तद्यथा—द्वे प्रकृती एका च । तत्र अबद्धपरभवायुष्कस्य एका, बद्धपरभवायुषो द्वे । एतेषां च चतुर्णामपि स्थानानां देशोपशमना सादिरध्रुवा च, स्थानानामपि स्वयं साध्रुवत्वात् । तथा 'चउत्थछ्छाण होइ छ सत्तण्हमिति', अत्र यथासंख्येन पदयोजना, तत्र चतुर्थं मोहनीयम्, तस्य देशोपशमनायोग्यानि षट् प्रकृतिस्थानानि, तद्यथा—एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिश्च । शेषाणि पुनरनिवृत्तिबादरसंपराये प्राप्यन्ते इति देशोपशमनायोग्यानि न भवन्ति । तत्राष्टाविंशतिस्थानं मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टिवेदकसम्यग्दृष्टीनां प्राप्यते । सप्तविंशतिस्थानमुद्वलितसम्यक्त्वस्य मिथ्यादृष्टेः सम्यग्मिथ्यादृष्टेर्वा । षड्विंशतिस्थानमुद्वलितसम्यक्त्वसम्यग्मिथ्यात्वस्यानादिमिथ्यादृष्टेर्वा । पञ्चविंशतिस्थानं षड्विंशतिसत्कर्मणो मिथ्यादृष्टेः सम्यक्त्वमुत्पादयतोऽपूर्वकरणात्परतो वेदितव्यम्, तस्य मिथ्यात्वदेशोपशमनाया अभावात् । तथा अनन्तानुबन्धिनामुद्वलनेऽपूर्वकरणात्परतो वर्तमानस्य चतुर्विंशतिस्थानम्, चतुर्विंशति-

सत्कर्मणो वा चतुर्विंशतिस्थानम् । क्षपितसप्तकस्य एकविंशतिस्थानम् । अत्र षड्विंशतिलक्षणं स्थानं मुक्त्वा शेषाणां पञ्चानामपि स्थानानां देशोपशमना साद्यध्रुवा, स्थानानामपि स्वयं कादाचित्कत्वात् । षड्विंशतिस्थानस्य चतुर्धा, तद्यथा–सादिरनादिर्ध्रुवा अध्रुवा च । तत्रोद्वलितसम्यक्त्वसम्यग्मिथ्यात्वस्य सादिः, अनादिमिथ्यादृष्टेरनादिः, ध्रुवा अभव्यानां, भव्यानां त्वध्रुवा । तथा षष्ठं नाम, तस्य देशोपशमनायोग्यानि सप्त स्थानानि, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशत, पण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिश्च । तत्रादिमानि चत्वारि स्थानानि यावदपूर्वकरणगुणस्थानकचरमसमयस्तावद्देशोपशम्यानि, न परतः, शेषाणि च त्रीणि त्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि एकेन्द्रियादीनां भवन्ति, न श्रेणिमतिपद्यमानानाम् । शेषाणि तु स्थानानि अपूर्वकरणगुणस्थानकात्परतो लभ्यन्ते, नार्वागिति न देशोपशमनायोग्यानि । एतेष्वपि च स्थानेषु देशोपशमना साद्यध्रुवा, स्थानानामपि स्वयमनित्यत्वात् । शेषाणां तु ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां देशोपशमनामधिकृत्यैकैकं प्रकृतिस्थानम् । तत्र ज्ञानावरणस्यान्तरायस्य च प्रत्येकं पञ्चप्रकृत्यात्मकं स्थानम्, दर्शनावरणस्य नवप्रकृत्यात्मकं, वेदनीयस्य द्विप्रकृत्यात्मकम् । एषां च देशोपशमना साद्यादिभेदाच्चतुर्धा–चतुष्प्रकारा, तद्यथा–सादिरनादिर्ध्रुवा, अध्रुवा च, तथा चाह–'साइयमाइ चउधा सेसाण पगठाणस्स', तत्रापूर्वकरणगुणस्थानकात्परतो न भवति, उपशमभेगीतः प्रतिपाते च भूयोऽपि भवति, ततः सादि, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवता अभव्यभव्यापेक्षया । उक्ता प्रकृतिदेशोपशमना ॥९९॥

उक्ता प्रकृत्युपशमना, स्थितेः देशोपशमनोच्यते—

उवसामणा ठिईओ उक्कोसा संकमेण तुल्लाओ । इयरा वि किंतु अभव्वउव्वलगअपुव्वकरणेसु ॥१००॥

देशोपशमना।

(स्वो०)—देशोपशामना मूलोत्तरप्रकृतीनां स्थितेरुत्कृष्टा संक्रमेण तुल्या, तुशब्दात्साद्यनादिप्ररूपणा च, इतरापि-जघन्यापि, संक्रमतुल्या। किन्त्वियमभव्यैकेन्द्रियस्य वक्तव्या, यतस्तस्यैवातिजघन्या स्थितिर्भवति। उद्वलनप्रकृतीनां यस्तासां स्वोद्वलकः, सोऽन्तिमे स्थितिखण्डे पल्योपमासंख्येयभागमात्रे वर्तमानो जघन्यां देशोपशमनां करोति। एकेन्द्रियः आहारकसप्तकसम्यक्त्वसम्यग्मिथ्यात्वानामपि स्वोद्वलकः। या मिथ्यादृष्टेः प्रायोग्या न भवति तस्याः अपूर्वकरणान्तसमये जघन्या देशोपशामना भवति, का सा? तीर्थकरनामप्रकृतिरिति गाथार्थः ॥१००॥

(मलय०)—संप्रति स्थितिदेशोपशमनामाह—स्थितिदेशोपशमना द्विविधा, तद्यथा-मूलप्रकृतिविषया च उत्तरप्रकृतिविषया च। एकैकापि द्विविधा, तद्यथा उत्कृष्टा, जघन्या च। तत्र मूलप्रकृतीनामुत्तरप्रकृतीनां वा उत्कृष्टा स्थितिदेशोपशमना संक्रमेण तुल्या। किमुक्तं भवति? यः प्रागुत्कृष्टस्थितिसंक्रमस्वामी प्रतिपादितः, यथा चोत्कृष्टस्थितिसंक्रमस्य साद्यादिप्ररूपणा, तदेतत्सर्वमुत्कृष्टस्थितिदेशोपशमनायामपि वाच्यमिति, इतरापि-जघन्यापि स्थितिदेशोपशमना संक्रमेण तुल्या, जघन्यस्थितिसंक्रमतुल्या, किन्त्वियमभव्यप्रायोग्यजघन्यस्थितौ वर्त्तमानस्य द्रष्टव्या, तस्यैव प्रायः सर्वकर्मणामतिजघन्यायाः स्थितेः प्राप्यमाणत्वात्। याश्च प्रकृतयो अभव्यप्रायोग्यजघन्यस्थितिका न भवन्ति तासामुद्वलके अपूर्वकरणे वा जघन्यस्थितिदेशोपशमना वेदितव्या। तत्रोद्वलके उद्वलनप्रायोग्याणां प्रकृतीनामन्तिमे खण्डे-पल्योपमासंख्येयभागमात्रे वर्त्तमाने, तत्राप्याहारकसप्तकसम्यक्त्वसम्यग्मिथ्यात्वानामेकेन्द्रियस्यानेकेन्द्रियस्य वा, शेषप्रकृतीनामुद्वलनयोग्यानां वैक्रियसप्तकदेवद्विकनरकद्विकमनुष्यद्विकोच्चैर्गोत्ररूपाणामेकेन्द्रियस्यैव, अन्यासां त्वपूर्वकरणचरमसमये वर्त्तमानस्येति ॥१००॥

गता स्थित्युपशामना। साम्प्रतमनुभागप्रदेशयोर्देशोपशामनामतिदिशन्नाह—

अणुभागपएसाण सुभाण जापुव्व मिच्छ इयराण। उक्कोसियर अभविय एगेंदी देससमणाए ॥१०१॥

॥ देसोवसामणा सम्मत्ता ॥

(स्वो०)—अनुभागप्रदेशयोः देशोपशमना संक्रमेण तुल्या, विशेषमाह–शुभानां यद्यपि सातवेदनीययशःकीर्त्युच्चैर्गोत्राणां अपूर्वकरणातीता उत्कृष्ट संक्रमं कुर्वन्ति, तथापि देशोपशमनां सर्वशुभप्रकृतीनां अपूर्वकरण एव करोति, तदुपरि तस्या अभावात्, इतरासामशुभप्रकृतीनां मिथ्यादृष्टिरेव करोति। यद्यपि ज्ञानावरणपञ्चकसंज्वलनदर्शनचतुष्कनवनोकषायान्तरायपञ्चकानां सप्तविंशतिप्रकृतीनां जघन्यसंक्रमः क्षान्तेऽभिहितः तथाप्यभव्यसिद्धिकैकेन्द्रिये जघन्या देशोपशामना वक्तव्येति विशेषः। प्रदेशसंक्रमोऽपि यासां प्रकृतीनामुत्कृष्टोऽपूर्वकरणोपरि कथितः तासां देशोपशमनामधिकृत्यापूर्वकरण एव वक्तव्यः, जघन्याप्यभव्यैकेन्द्रिये वक्तव्येति विशेष इति गाथार्थः॥ १०१॥

(मलय०)—अनुभागप्रदेशयोर्देशोपशमना यथाक्रममनुभागसंक्रमप्रदेशसंक्रमतुल्या। इयमत्र भावना–द्विविधा अनुभागदेशोपशमना, तद्यथा—उत्कृष्टा जघन्या च, तत्र य एव प्राक् उत्कृष्टानुभागसंक्रमस्वामी प्रतिपादितः स एवोत्कृष्टानुभागदेशोपशमनाया अपि। तत्र शुभप्रकृतीनां सम्यग्दृष्टिः, नवरं सातवेदनीययशःकीर्त्युच्चैर्गोत्राणामुत्कृष्टानुभागसंक्रमस्वामी अपूर्वकरणगुणस्थानकात्परतोऽपि भवति, उत्कृष्टानुभागदेशोपशमनायाः पुनरुत्कर्षतोऽप्यपूर्वकरणगुणस्थानपर्यवसानः स्वामी। इतरासामशुभानां प्रकृतीनामुत्कृष्टानुभागदेशोपशमनास्वामी उत्कृष्टानुभागसंक्रमस्वामी च मिथ्यादृष्टिरवसेयः। इतरस्या–जघन्यानुभागदेशोपशमनायास्तीर्थंकरवर्जानां सर्वासा-

मपि प्रकृतीनामभवसिद्धिकप्रायोग्यजघन्यस्थितौ वर्त्तमान एकेन्द्रियः स्वामी प्रतिपत्तव्यः। तीर्थकरनाम्नस्तु य एव जघन्यानुभाग संक्रमस्वामी स एव जघन्यानुभागदेशोपशमनाया अपि। प्रदेशदेशोपशमनापि द्विधा—उत्कृष्टा जघन्या च। तत्रोत्कृष्टप्रदेशदेशोपशमना उत्कृष्टप्रदेशसंक्रमतुल्या, नवरं येषां कर्मणामपूर्वकरणात्परतोऽपि उत्कृष्टः प्रदेशसंक्रमः प्राप्यते, तेषामपूर्वकरणगुणस्थानकचरमसमयं यावदुत्कृष्टप्रदेशदेशोपशमना वाच्या। जघन्या तु प्रदेशदेशोपशमना अभव्यप्रायोग्यजघन्यस्थितौ वर्त्तमानस्यैकेन्द्रियस्येति। समाप्तमुपशमनाकरणम् ॥ १०१ ॥



॥ इति श्रीउपशमनाकरणं समाप्तम् ॥

उक्ता देशोपशामना, निधत्तिकरणं निकाचनाकरणं च साम्प्रतमतिदिशति,

देसुवसमणा तुल्ला होइ निहत्ती निकायणा नवरि । सकमण वि निहत्तीइ नत्थि सव्वाणि इयरीए ॥१॥

(स्वो०)—देशोपशामना तुल्या भवति निधत्तिर्निकाचना च, उभयोरपि तुल्या साद्यनादिप्ररूपणा, जघन्योत्कृष्टस्वामिनश्च सभेदा वक्तव्याः, अथ पुन' विशेषः, निधत्तस्य कर्मणः संक्रमोऽपि न भवति, उदीरणादयो न भवन्त्येव, किमुक्तं भवति—उद्वर्तनापवर्तं वर्ज्जानि करणानि न सम्भवन्ति । इतरा-निकाचना, सापि देशोपशमना तुल्या भवत्येव, किन्तु तस्यामुद्वर्तनापवर्तनाकरणेऽपि न भवतः, किमुक्तं भवति—सर्वकरणायोग्य निकाचितं कर्म्म भवतीति गाथार्थः ॥ १ ॥

(मलय०)—उदेवमुक्तमुपशमनाकरणम् । संप्रति निधत्तिनिकाचने प्रतिपिपादयिषुराह—निधत्तिर्निकाचना च देशोपशमनातुल्या, किमुक्तं भवति ? ये देशोपशमनाया भेदाः, ये च स्वामिनस्ते अन्यूनातिरिक्ता निधत्तिनिकाचनयोरपि वेदितव्याः, नवरमय निधत्ति निकाचनयोर्विशेषः, संक्रमणमपि—परप्रकृतिसंक्रमणमपि, अपिशब्दादुदीरणादीन्यपि निधत्तौ सत्यां न भवन्ति, उद्वर्तनापवर्तने पुनर्भवत एव । इतरस्यां—निकाचनायां सर्वाण्यपि करणानि न संभवन्ति, उद्वर्तनापवर्तने अपि न भवत इत्यर्थः, सकलकरणायोग्य निकाचितमिति वचनप्रामाण्यात् ॥१॥

अप्रशस्तोपशामनादिषु यत्र गुणश्रेणी स्यात्, तत्र कर्मदलस्याल्पबहुत्वपरिज्ञापनार्थमाह—

गुणसेढिपएसग्गं थोव उवसामिय असंखगुण । एवं निहय निकाइय अहापवत्तेण सकत ॥२॥

(स्वो०)—यस्य वा तस्य वा कर्म्मणो गुणश्रेणीप्रदेशाग्रं स्तोकम् , तस्माद्देशोपशान्तमसंख्येयगुणम् , ततोऽपि निधत्तमसंख्येयगुणम् , ततोऽपि निकाचितमसंख्येयगुणम् , ततोऽपि यथाप्रवृत्तसंक्रमेण संक्रान्तमसंख्येयगुणमिति गाथार्थः ॥ २ ॥

भणिता निधत्तिर्निकाचना चेति ।

(मलय०)—इह यत्र गुणश्रेणिस्तत्र प्रायो देशोपशमनानिधत्तिनिकाचनायथाप्रवृत्तसंक्रमा अपि संभवन्ति, ततस्तत्राल्पबहुत्वमाह — गुणश्रेणिप्रदेशाग्रं स्तोकम्, तत उपशमितमसंख्येयगुणम् , एवं निधत्तं निकाचितं यथाप्रवृत्तेन संक्रमेण संक्रान्तं च क्रमेणासंख्येयगुणं वक्तव्यम्, इयमत्र भावना—यस्य वा कर्मणो गुणश्रेणीप्रदेशाग्रं सर्वस्तोकम् , ततो देशोपशमनायामसंख्येयगुणम् , ततो निधत्तमसंख्येयगुणम् , ततोऽपि निकाचितमसंख्येयगुणम् , ततोऽपि यथाप्रवृत्तसंक्रमेण संक्रान्तमसंख्येयगुणम् ॥ २ ॥

भणिता निधत्तिर्निकाचना चेति ।

करणाध्यवसायाल्पबहुत्वम्

साम्प्रतं सर्वकरणाध्यवसायसंख्यापरिज्ञानार्थमाह—

**ठितिबंधउदीरणतिविहसंकमे होंति संखगुणकमसो। अज्झवसाया एवं उवसामणमाइएसु कमा ॥३॥**

(स्वो०)—स्थितिबन्धाध्यवसायास्तीव्रमन्दकषायोदयविशेषजनिताः सर्वस्तोका भवन्ति, स्थितिग्रहणादनुभागबन्धोऽपि गृहीतः, प्रकृतिप्रदेशबन्धौ योगविशेषाद् भवत इत्यप्रधानौ, किमुक्तं भवति ? बन्धनकरणाध्यवसायाः स्तोकाः, तेभ्य उदीरणाध्यवसायाः असंख्येयगुणाः, तेभ्योऽपि संक्रमाध्यवसायाः असंख्येयगुणाः, उद्वर्त्तनापवर्त्तनकरणे संक्रमवदध्यवसायानाश्रित्य, तेन त्रिविधः संक्रम उक्तः,

संक्रमाध्यवसायेभ्यः उपशमनाध्यवसायाः असंख्येयगुणाः, तेभ्योऽपि निधत्ताध्यवसाया असंख्येयगुणाः, तेभ्योऽपि निकाचनाध्यवसाया असंख्येयगुणा भवन्तीति गाथार्थः ॥ ३ ॥

॥ स्वोपज्ञश्रीपञ्चसंग्रहटीकायामुक्तान्यष्टापि करणानि, तद् भणनादुक्ता कर्मप्रकृतिरिति ॥

(मलय०)—सप्रत्यष्टानामपि करणानां ये अध्यवसायास्तेषां परिमाणनिरूपणार्थमाह—इह स्थितिबन्धग्रहणेनानुभागबन्धोऽपि गृहीतः, कषायप्रत्ययत्वाविशेषात्, प्रकृतिप्रदेशबन्धौ च योगाद्भवत इति ताविह न गृह्येते। ततः 'स्थितिबन्ध' इति, किमुक्तं भवति ? बन्धनकरणाध्यवसायाः सर्वस्तोकाः, तेभ्य उदीरणाध्यवसाया असंख्येयगुणाः, तेभ्योऽपि 'तिविहसकम' इति—इह उद्वर्तनापवर्तने सक्रमविशेषरूपे, ततस्तत्प्रतिपत्त्यर्थं त्रिविधसंक्रमग्रहणम्, ततोऽयमर्थः—सक्रमकरणोद्वर्तनापवर्तनाकरणाध्यवसायाः समुदिता असंख्येयगुणाः, एवमुपशमनादिष्वपि क्रमादसंख्येयगुणा अध्यवसाया वक्तव्याः, तद्यथा—संक्रमकरणोद्वर्तनापवर्तनाकरणाध्यवसायेभ्य उपशमनाकरणाध्यवसाया असंख्येयगुणाः, तेभ्योऽपि निधत्त्यध्यवसाया असंख्येयगुणाः, तेभ्योऽपि निकाचनाध्यवसाया असंख्येयगुणाः। तदेवमुक्तान्यष्टावपि करणानि। तदभिधानाच समाप्तः कर्मप्रकृतिसंग्रहः। ॥३॥

॥ इति श्रीमलयगिरिविरचितायां श्रीपञ्चसंग्रहटीकायां कर्मप्रकृतिसंग्रहः समाप्तः ॥

क्षायिकसम्यक्त्वप्राप्तिः

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| o o o | o o o | o o o | o o o | o o o | o o o | o o o | o o o o o o | o o o o o o o | o o o o o o o o o |
| अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० ( उपान्त्य) | गुणश्रेणिविभाग', १ सख्येयभागो गुणश्रेण्या घातितः | गुणश्रेण्युपरितनविभागः, सख्येया भागा गुणश्रेण्यां प्रक्षेपेण घातिताः |
| घात्यमानान्यान्तर्मुहूर्त्तिकानि सहस्राणि स्थितिखण्डानि क्रमेणासङ्ख्येयगुणानि | | | | | | | | | |

क र ण मू

क्षायिकचारित्रप्राप्तिक्रमसूचक यन्त्राणि

| | | | |
|---|---|---|---|
| १ मा किट्टिः (लोभस्य) | २ या किट्टिः (लोभस्य) | ३ या किट्टिः सूक्ष्मा (लोभस्य) | १२ मं क्षीणकषाय-गुणस्थानकम् (अन्तर्मु०) |
| | | | संख्येया भागाः \| स० \| स० \| १ सख्ये० भागः |
| ० \| \| ०. अन्तर्मु० | \| स० \| ० अन्तर्मु० | स०भागाः \| १ सख्ये०भा० \| ० अन्तर्मु० १० म गु०स्थानम् | |

(अप. अन्तर्मु० उदय देशोनपूर्वकोटिपर्यन्त)

| | | |
|---|---|---|
| [illegible] | अन्तर्मु. | अत्र आयोजिकाकरणकरणम्। |
| [illegible] | अन्तर्मु. | अत्र केचित्समुद्घातं कुर्वन्ति। (स्थित्यनुभागकाण्डकघातन) |
| [illegible] | अन्तर्मु. | अत्र बा. कायेन बा. वाग्योगरुन्धनम्। |
| [illegible] | अन्तर्मु. | अत्र रुद्धो बा. वाग्योगः। (अत्र विभागे न किञ्चित् करणं) |
| [illegible] | अन्तर्मु. | अतः सू. कायेन बा. कायरोधनं। यो. गापूर्वस्पर्धककरण च। |
| [illegible] | अन्तर्मु. | अत्र रुद्धः बा. काययोगः। योगकिट्टीकरण घातः |
| [illegible] | अन्तर्मु. | अत्र योगकिट्टिः संजाता। (अत्र विभागे न किञ्चित्करण) |
| [illegible] | अन्तर्मु. | अतः सू. कायेन सू. वाग्योगरोधनम्। |
| [illegible] | अन्तर्मु. | अत्र रुद्धः सू. वाग्योगः। (अत्र विभागे न किञ्चित्करणं) |
| [illegible] | अन्तर्मु. | अतः सू० कायेन सू. मनोरुन्धनम्। |
| [illegible] | अन्तर्मु. | अत्र रुद्धः सू. मनोयोगः। (अत्र विभागे न किञ्चित्करणं) |
| [illegible] | अन्तर्मु. | अतः सू. कायेन सू. कायरोधनं। सू. क्रियाप्रतिपातिध्यानारोहणं, देहविवरपूरणं, योगकिट्टिविनाशनं च। |

## सप्ततिकासंग्रहः

साम्प्रतं सप्ततिकाक्रमेण बन्धविधानमाह—

**मूलुत्तरपगईणं साइअणाईपरूवणाणुगयं । भणियं बंधविहाणं अहुणा संवेहगं भणिमो ॥१॥**

(स्वो०)—मूलप्रकृतीनामुत्तरप्रकृतीनां च 'बन्धविधानं'—बन्धप्रकारः 'साद्यनादी'ति—सादिअनादिध्रुवाऽध्रुवविकल्पैः प्ररूपणास्तदनुगतं भणितं बन्धविधानम्, 'अधुना'—साम्प्रतं, संवेधगतं—संवेधोऽस्य बध्यमानैः बन्धोदयसद्भिः सह भणामो वयमिति गाथार्थः ॥१॥

(मलय०)—संप्रति सप्ततिकासंग्रहेण बन्धविधानमभिधित्सुः प्रस्तावनामाह—तदेवं मूलप्रकृतीनामुत्तरप्रकृतीनां च बंधविधानं साद्यादिप्ररूपणानुगतं भणितं, यत्तु करणाष्टकं तत्प्रसङ्गादायातमिति कृत्वोक्तम्, अधुना तदेव बन्धविधानं संवेधगतं भणामः ॥१॥

**आउम्मि अट्ठ मोहेट्ठ सत्त एक्कं च छाइ वा तइए । बज्झंतयंमि बज्झंति सेसएसुं छ सत्तट्ठ ॥२॥**

(स्वो०)—आयुषि बध्यमाने अष्टानामपि तत्साहचर्यान्नियमाद्बन्धो भवति, मोहनीये बध्यमाने आयुर्वर्ज्जानां सप्तानां तद्युतानामष्टानां वा बन्धो भवति, 'तृतीये'—वेदनीये बध्यमाने षण्णां सप्तानामष्टानां वा बन्धो भवति। 'शेषेषु'—ज्ञानदर्शनावरणनामगोत्रान्तरायेषु मोहायुर्वर्ज्जानि षट्, सप्त चायुर्वर्ज्जानि, पूर्व्वकानि अष्टौ वा जीवेन बध्यन्त इति गाथार्थः। उक्तः बन्धस्य बन्धेन सह संवेधः ॥

(मलय०)—प्रतिज्ञातमेव निर्वाहयितुकामः प्रथमतो मूलप्रकृतिषु बन्धस्य बन्धेन सह संवेधमाह—आयुषि बध्यमाने नियमादष्टावपि

कर्माणि बध्यन्ते, शेषेषु सप्तसु बध्यमानेषु सप्तानामायुषो बन्धसंभवात्। तथा मोहनीये बध्यमाने अष्टौ वा बध्यन्ते सप्त वा, तत्राष्टौ सर्वप्रकृतिसमुदाये, तान्येवाष्टावायुर्वर्जानि सप्त, मोहनीयबन्धो हि अनिवृत्तिबादरसंपरायगुणस्थानकं यावत्, तत्र मिथ्यादृष्टिगुणस्थानकादिष्वप्रमत्तसंयतगुणस्थानकपर्यन्तेषु(पर्यं)तेष्वायुर्बन्धकालेऽष्टानां बन्धः, शेषकाले सप्तानां, मिश्रापूर्वकरणानिवृत्तिबादरसंपरायेषु सप्तानामेवेति। तथा 'तृतीये'–वेदनीयाख्ये कर्मणि बध्यमाने एकं वा कर्म बध्यते, षडादि वा, तत्रैकमुपशान्तमोहादौ तदेव वेदनीयमवसेयम्, षट् सूक्ष्मसंपराये तानि च मोहायुर्वर्जानि, सप्त मिश्रापूर्वकरणानिवृत्तिबादरेषु, शेषेषु गुणस्थानकेष्वायुर्बन्धकाले अष्टौ, शेषकाले सप्त। तथा 'शेषकेषु'–ज्ञानावरणदर्शनावरणनामगोत्रान्तरायेषु बध्यमानेषु षट्, सप्त, अष्टौ वा बन्धमायान्ति। तत्र मिथ्यादृष्ट्यादिष्वप्रमत्तान्तेषु मिश्ररहितेष्वायुर्बन्धकाले अष्टौ, शेषकाले सप्त, मिश्रापूर्वकरणानिवृत्तिबादरसंपरायेषु सप्तैव, सूक्ष्मसंपराये षट् ॥२॥

मोहस्सुदए अट्ठ वि सत्त य लब्भन्ति सेसयाणुदए। सन्तोइण्णाणि अघाइयाण अड सत्त चउरो य ॥३॥

(स्वो०)—मोहनीयस्योदये सति अष्टावपि सदुदीर्णानि लभ्यन्ते, तद्वर्जानां त्रयाणां घातिकर्मणामुदये प्रत्येकं अष्टौ सप्त च सदुदीर्णानि लभ्यन्ते। अघातिकर्मणां वेद्यायुर्नामगोत्राणामुदयेऽष्टौ (सप्त चत्वारि वा) सदुदीर्णानि लभ्यन्ते, (तत्राष्टौ सूक्ष्मसंपरायं यावत्) सप्त क्षीणकषाये, चत्वारि केवलिनो लभ्यन्ते, उदये सदुदयसंवेधौ। मोहे सति अष्टावपि सदुदीर्णानि। शेषैर्घातिकर्मभिः सद्भिः अष्टौ सप्त च सदुदीर्णानि। अघातिकर्मभिः सद्भिः सप्ताष्ट चत्वारि सदुदीर्णानि लभ्यन्त इति गाथार्थः ॥३॥

(मलय०)—तदेवं चिन्तितो बन्धस्य बन्धेन सह संवेधः, संप्रत्युदयस्योदयसत्ताभ्यां सह चिन्त्यते–'मोहस्य'। मोहनीयस्योदये सति नियमादष्टावपि कर्माणि सदुदीरणानि, संति उदयवन्ति च प्राप्यन्ते, मोहनीयोदयो हि सूक्ष्मसंपरायगुणस्थानकं यावत्प्रवर्तते,

सूक्ष्मसंपरायं च गुणस्थानकं यावत्सर्वाण्यपि कर्माण्युदये सत्तायां च प्राप्यन्ते। तथा शेषाणां घातिकर्मणां ज्ञानावरणदर्शनावरणान्तरायरूपाणामुदये सति सप्त, चशब्दादष्टौ सदुदीर्णानि, सन्ति उदयवन्ति च लभ्यन्ते। तत्राष्टावुदये सूक्ष्मसंपरायगुणस्थानं यावत्, सत्तायां पुनरुपशान्तमोहगुणस्थानकमपि, उपशान्तमोहे हि मोहनीयस्योदयो न विद्यते, सत्ता पुनरस्तीति कृत्वा। सप्त पुनरुदयमाश्रित्योपशान्तमोहे क्षीणमोहे वा, सत्तामधिकृत्य पुनः क्षीणमोहे एव। तथा 'अघातिनां'—वेदनीयायुर्नामगोत्राणामुदये सत्यष्टौ सप्त चत्वारि वा सन्ति उदयवन्ति च प्राप्यन्ते। तत्राष्टावुदयमधिकृत्य सूक्ष्मसंपरायं यावत्, सत्तामधिकृत्य पुनरुपशान्तमोहगुणस्थानकम्। सप्त उदयमाश्रित्य उपशान्तमोहे क्षीणमोहे वा, सत्तामधिकृत्य क्षीणमोहे एव। चत्वारि सयोगिकेवलिनोऽयोगिकेवलिनो वा, चत्वारि तान्येवाघातिकर्माणि द्रष्टव्यानि। तदेवमुक्त उदयस्योदयसत्ताभ्यां संवेधः, संप्रति सत्तायामुदयसत्ताभ्यां चिन्त्यते—तत्र मोहनीये विद्यमाने उदयोऽष्टानां सप्तानां वा, तत्राष्टानां सूक्ष्मसंपरायगुणस्थानकं यावत्, सप्तानां पुनरुपशान्तमोहगुणस्थानकम्। सत्तायां पुनरष्टानामेव, मोहनीयसत्तायां शेषाणामवश्यं सत्तासंभवात्। ज्ञानावरणदर्शनावरणान्तरायाणां सत्तायां सप्तानामष्टानां वा उदयसत्ते, तत्राष्टानामुदयः सूक्ष्मसंपरायं यावत्, सप्तानामुपशान्तमोहे क्षीणमोहे वा, अष्टानां सत्ता उपशान्तमोहगुणस्थानकं यावत्, सप्तानां क्षीणमोहे, वेदनीयायुर्नामगोत्राणां सत्तायां सप्तानामष्टानां चतुर्णां वा सत्तोदयौ, तत्र सप्तानामष्टानां वा सत्तोदयौ प्रागिव, चतुर्णां सयोगिकेवलिन्ययोगिकेवलिनि च ॥ ३ ॥

**बन्धइ छ सत्त अट्ठ य मोहुदए सेसयाण एक्कं च। पत्तेयं संतेहिं बंधइ एगं छ सत्तट्ठ ॥४॥**

(स्वो०)—मोहनीयस्योदये सति षडायुर्मोहवर्ज्जानि बध्नाति, सप्तायुर्वर्ज्जानि, अष्टौ वा। शेषाणां मोहवर्जानामुदये एकं च

वेदनीयम्, उदये बन्धसंवेधः। षड्सप्ताष्टानां बन्धे मोहस्योदयो भवति। शेषाणामुदयः एकस्य च बन्धे भवति। एवं बन्धेऽप्युदय संवेधो भणनीयः। प्रत्येकं प्रत्येकं सत्तामिश्रतुष्प्रकारमपि बन्धं बध्नाति, एकं षड्सप्ताष्टाविति, नास्त्यन्यो भेदः, सति बन्धसंवेधः। एवं चतुर्ष्वपि बन्धेषु सद्भावेन प्रत्येकं लभ्यन्ते इति गाथार्थः ॥४॥

(मलय०)—तदेवमुक्तः सत्ताया उदयसत्ताभ्यां संवेधः, संप्रत्युदयस्य बन्धेन सह संवेधमाह—'मोहस्य' मोहनीयस्योदये सति षड् सप्त अष्टौ वा बध्नाति, तत्राष्टावायुर्बन्धकाले, आयुर्बन्धाभावे तु सप्त, तानि चानिवृत्तिबादरसंपरायगुणस्थानकं यावत्, षड् सूक्ष्मसंपराये। शेषाणां मोहवर्जानामुदये एकम्, चशब्दात् षड् सप्ताष्टौ प्रागिव, एकं ज्ञानावरणदर्शनावरणान्तरायाणामुदये उपशान्तमोहे क्षीणमोहे वा, वेदनीयायुर्नामगोत्राणामुदयः सयोगिकेवलिन्यपि, तत्रैकं सातवेदनीयरूपं द्रष्टव्यम्। तदेवमुक्त उदयस्य बन्धेन सह संवेधः, सम्प्रति बन्धस्योदयेन सह स उच्यते—षण्णां सप्तानामष्टानां वा बन्धे मोहनीयस्योदयो भवति, यतो बन्धोऽष्टानामप्रमत्तगुणस्थानकं यावत्, सप्तानामनिवृत्तिबादरसंपरायगुणस्थानकं, षण्णां सूक्ष्मसंपरायम्, मोहनीयस्यापि च उदयोऽवश्यं सूक्ष्मसंपरायं यावत्प्राप्यते, ततः षण्णां सप्तानामष्टानां वा बन्धे मोहनीयस्योदयो भवति। शेषाणां तूदयोऽष्टानां सप्तानां षण्णामेकस्य च बन्धे भवति। तथाहि—ज्ञानावरणदर्शनावरणान्तरायाणामुदयः क्षीणमोहं यावत्, वेदनीयायुर्नामगोत्राणामयोगिकेवलिनम्, एकस्य च बन्ध उपशान्तमोहादौ, ततः शेषाणामुदयः षण्णामष्टपर्यन्तेकबन्धेऽपि भवति। तदेवमुक्तो बन्धस्योदयेन सह संवेधः ॥ ४ ॥

सत्तट्ठछब्बंधेसुं उदओ अट्ठण्ह होइ पयडीण। सत्तण्ह चउण्हं वा उदओ सायस्स बन्धम्मि ॥५॥

(स्वो०)—षड्सप्ताष्टबन्धेष्वष्टानामपि कर्मणामुदयेन भाव्यम्, सद्वेदनीयबन्धे तु मोहनीयवर्जानां सप्तानाम्, चतुर्णां अघाति-

कर्म्मणामुदयेन भाव्यम्; बन्धे उदयसवेध इति गाथार्थः ॥५॥

(मलय०)—संप्रति सत्ताया बन्धेन सहोच्यते-सर्वैरपि कर्मभिः सद्भिः, सर्वेषामपि कर्मणां सत्तायामित्यर्थः, प्रत्येकं बध्नाति-एकं षट् सप्ताष्टौ वा, किमुक्तं भवति ? एकैकस्यापि कर्मणः सत्तायां चिन्त्यमानायां चतुष्प्रकारोऽपि बन्धः संभवति। तद्यथा-एकविधः, षड्विधः, सप्तविधः, अष्टविधश्च। तथाहि-मोहनीयस्य सत्ता उपशान्तमोहगुणस्थानकं यावदवाप्यते, ज्ञानावरणदर्शनावरणान्तरायाणां क्षीणमोहगुणस्थानकं यावत्, वेदनीयायुर्नामगोत्राणामयोगिकेवलिनम्, अष्टानां च बन्धोऽप्रमत्तगुणस्थानकं यावत्, सप्तानामनिवृत्तिबादरसंपरायम्, षण्णां सूक्ष्मसंपरायम् एकस्य चोपशान्तमोहादौ, ततः सर्वेषामपि कर्मणां सत्तायां प्रत्येकं चतुष्प्रकारोऽपि बन्धः प्राप्यते इति, तदेवमुक्तः सत्ताया बन्धेन सह संवेधः। संप्रति बन्धस्य सत्तया सहोच्यते-तत्राष्टबन्धे सप्तबन्धे षड्बन्धे च नियमादष्टानामपि कर्मणां सत्ता। एकस्य च बन्धेऽष्टानां चतुर्णां च। तत्राष्टानामुपशान्तमोहे, सप्तानां क्षीणमोहे, चतुर्णां सयोगीकेवलिनि, अयोगिकेवलिनि च। उक्तो बन्धस्य सत्तया सह संवेधः, संप्रत्युदयेन सहाभिधीयते-सप्तानामष्टानां षण्णां वा बन्धे नियमादष्टानामपि प्रकृतीनामुदयो भवति, भावना प्रागुक्तानुसारेण स्वयमेव भावनीया। तथा 'सातस्य' सातवेदनीयस्य केवलस्य बन्धे सप्तानां चतुर्णां वा उदयः। तत्र सप्तानामुपशान्तमोहे क्षीणमोहे वा, चतुर्णां सयोगिकेवलिनि ॥५॥

बन्धोदयसत्संवेधोऽभिहितस्तत्स्थानान्याह—

दो संतट्ठाणाइं बन्धे उदए य ठाणयं एक्कं। वेयणियाउयगोए सेसं नाणंतराएसु ॥६॥

(स्वो०)—द्वे सत्स्थाने द्वौ सत्प्रकारावित्यर्थः, बन्धे उदये च एकं स्थानं वेदनीयायुर्गोत्रेषु। कथं ? सद्भावेन त्रयाणामपि एका

॥२२०॥

प्रकृतिर्भवति, द्वे वा भवतः । उदये बन्धे वा सदैव एका प्रकृतिः । ज्ञानान्तराययोस्त्वेकं त्रिष्वपि स्थानम्, प्रकृतिपञ्चकस्य यौगपद्येन बन्धोदयसत्तावाविति गाथार्थः ॥६॥

(मलय०)—तदेवमुक्तो मूलप्रकृतीरधिकृत्य बन्धोदयसत्तानां संवेधः, संप्रत्येतासामेव स्थानान्याह—स्थानं नाम द्वित्र्यादिप्रकृतिसमुदायः, तत्र वेदनीयायुर्गोत्राणां प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—द्वे प्रकृती एका च । तत्र वेदनीयस्यायोगिकेवलिद्विचरमसमयं यावत् द्वे अपि प्रकृती सत्यौ, अयोगिकेवलिद्विचरमसमये चैकतरस्या व्यवच्छेदे एकेति । आयुषो यावदद्यापि परभवायुर्न बध्यते तावदेका प्रकृतिः सती, परभवायुर्बन्धे च द्वे, ते च तावद् यावत्परभवायुष उदयो न भवति । तथा गोत्रस्योच्चैर्गोत्रे उद्वलिते नीचैर्गोत्रे वा अयोगिकेवलिद्विचरमसमये क्षीणे एका प्रकृतिः सती, शेषकालं तु द्वे, तथा बन्धे उदये च वेदनीयायुर्गोत्राणामेकमेव स्थानम्, तच्चैकप्रकृतिरूप द्रष्टव्यम् । तथाहि—अमीषां द्वित्रादिप्रकृतयो युगपद्बन्धमुदयं वा नागच्छन्ति । तथा ज्ञानावरणान्तराययोः प्रत्येकं बन्धोदयसत्तास्वेकैकं पञ्चपञ्चप्रकृत्यात्मकं स्थानं भवति ॥६॥

नाणतरायबन्धा आसुहुम उदयसतया खीण । आइमतुगचउसत्तमनारयतिरिमणुसुराऊण ॥७॥

(स्वो०)—ज्ञानान्तराययोः सामस्त्येन सूक्ष्मसम्परायस्थानं यावद्बन्धोऽस्ति, न परतः । उदयसत्तावौ पुनः क्षीणकषायं यावदिति । नारकायुषो मिथ्यादृष्टिं यावत्, तिर्यगायुषो यावत्सास्वादनम्, मनुष्यायुषोऽविरतं यावत्, देवायुषोऽप्रमत्तं यावद्बन्धो यथासंख्येनेति गाथार्थः ॥७॥

(मलय०)—एतदेव विशेषतो भावयति—ज्ञानावरणीयान्तराययोः प्रत्येकं पञ्चानामपि प्रकृतीनामासूक्ष्मसंपरायं यावद्बन्धो, न

परतः, ततः पञ्चानामपि युगपद्बन्धभावात् युगपच्च बन्धव्यवच्छेदात् एकैकमेव पञ्चप्रकृत्यात्मकमेतयोर्बन्धस्थानम्, उदयः सत्ता चैतयोः प्रत्येकं पञ्चानामपि प्रकृतीनां क्षीणं क्षीणमोहस्थानकं यावद्भवति, न परतः एकस्या अपि, तत उदयसत्त्वयोरपि पञ्च-पञ्चप्रकृत्यात्मकमेकैकं स्थानम् । संप्रत्यायुषो गुणस्थानकान्यधिकृत्य बन्धोदयसत्ताश्चिन्तयिषुराह—आदिमं मिथ्यादृष्टिलक्षणं गुण-स्थानकं यावन्नरकायुषो बन्धः, द्वितीयं सासादनरूपं गुणस्थानकं यावत्तिर्यगायुषः, चतुर्थमविरतसम्यग्दृष्टिलक्षणं गुणस्थानकं याव-न्मनुष्यायुषः, सप्तममप्रमत्तसंयतलक्षणं गुणस्थानकं यावद् देवायुषः ॥७॥

**नारयसुराउ उदओ चउ पंचमतिरि मणुस्स चोद्दसमं । आसम्मदेसजोगी उवसंता संतयाऊणं ॥८॥**

(स्वो०)—नारकदेवायुषोरुदयो अविरतगुणस्थानं यावत्तत्परतस्तिर्यगायुषो देशविरतस्थानं यावन्मनुष्यायुषश्चतुर्दशगुणं यावदिति । नरकायुषोऽविरतसम्यग्दृष्टिं यावत्सत्ता, तिर्यगायुषो देशविरतिं यावत्, मनुष्यायुषस्त्वयोगिनं यावत्, देवायुषस्सत्तोपशान्तगुणं यावत्, यतो बद्धायुष्कस्य देवायुषा एवोपशमश्रेणी भवति, नान्येन इति गाथार्थः ॥८॥

(मलय०)—तथा नारकायुषो देवायुषश्च चतुर्थमविरतसम्यग्दृष्टिलक्षणं गुणस्थानकं यावदुदयः, पञ्चमं देशविरतिलक्षणं यावत्तिर्य-गायुषः, चतुर्दशमयोगिकेवलिलक्षणं गुणस्थानकं यावन्मनुष्यायुषः । तथा 'आसम्म'त्ति—अविरतसम्यग्दृष्टिगुणस्थाणकं यावन्नरकायुषः सत्ता, देशविरतिगुणस्थानकं यावत्तिर्यगायुषः, अयोगिकेवलिगुणस्थानकं यावन्मनुष्यायुषः, उपशान्तमोहगुणस्थानकं यावद्देवायुषः । ततो देवायुषि बद्धेऽपि उपशमश्रेणिमारभते, उपशमश्रेणिश्चोपशान्तमोहगुणस्थानकं यावदिति ॥८॥

आयुषः संवेधमाह—

**अब्बंधे इगि संत दो दो बद्धाउ बज्झमाणाणं। चउसु वि एक्कस्सुदओ पण नव नव पंच इइ भेया ॥९॥**

(स्वो०)—आयुष्प्रकृतेरबन्धे चतसृष्वपि गतिष्वेकस्यायुषः सत्ता भवति, तद्गत्यभिधानचिह्नितस्य बद्धायुषां बध्यमानायुषां च प्राणिनां द्वे द्वे आयुषी सद्भावेन भवतः, उत्तरभवायुषि बध्यमाने प्रथमसमयादिसमयेषु यदल्पमुपगृहीतं तदसम्पूर्णमपि आयुष्कर्मोच्यते, भाविनि भूतवदुपचारात्क्रियाकालनिष्ठाकालयोः कथञ्चिदभेदाददोषः। चतसृष्वपि गतिष्वेकस्यैवोदयः आयुषः तद्गत्युपलक्षितस्य भवति। 'पञ्च नव नव पञ्चे'ति—नरकादिषु भेदाः क्रमेण नरके पञ्च, तिर्यङ्मनुष्ययोः नव नव, देवगतौ पञ्च भङ्गा इत्येवमष्टाविंशतिः। प्रागुक्तभङ्गोच्चारणमाह—"बन्धो नत्थि नरयाउयं संतं १, तिरियाउय बन्धेइ नरयाउय वेयति नरयतिरियाउसंत २, बन्धोवरमे णरयाउय वेयइ तिरियनरयाउय सन्तं ३, मणुयाउय बन्धइ निरयाउयं वेयइ नरयमणुयाउय सन्तं ४, बन्धोवरमे नरयाउयं वेयइ नरयमणुयाउय सन्त ५। एव देवगतावपि, किन्तु नारकायुःशब्दो देवायुःशब्देन परावर्तनीयः, नान्यो विशेषः। बन्धो णत्थि तिरियाउय सन्तं १, नरयाउय बन्धइ तिरियाउ वेयइ तिरियनिरयाउय सन्त २, बन्धोवरमे तिरियाउयं वेयइ नरयतिरियाउय सन्त ३, तिरियाउय बन्धइ तिरियाउय वेयइ तिरियतिरियाउयं सन्त ४, बन्धोवरमे तिरियाउय वेयइ तिरियतिरियाउयं सन्तं ५, मणुयाउय बन्धइ तिरियाउय वेयइ तिरियमणुयाउय सन्त ६, बन्धोवरमे तिरियाउय वेयइ तिरियमणुयाउय सन्त ७, देवाउय बन्धइ तिरियाउय वेयइ तिरियदेवाउय सन्तं ८, बन्धोवरमे तिरियाउय वेयइ तिरियदेवाउयं सन्त ९, एते तिर्यग्गतौ नवभङ्गाः। एवं मनुष्यगतावपि, तिर्यग्मनुष्यायुषोर्व्यत्यासादिति" गाथार्थः ॥९॥

(मलय०)—संप्रत्यायुषो बन्धोदयसत्तासंवेधमाह—चतसृष्वपि गतिषु यावत्परभवायुर्न बध्यते तावत्तदेवैकैकं वेद्यमानं सत्, बद्धपरभवायुषां परभवायुर्बध्नतां च द्वे द्वे, तत्रैकं वेद्यमानमेव, द्वितीयं तु परभवायुः। तथा चतसृष्वपि गतिषु सर्वकालमायुष उदय एकस्यैव तद्गत्यनुयायिनः, न द्वितीयस्यापि, तिर्यङ्मनुष्याश्च सर्वत्राप्युत्पद्यन्ते, इति तेषां चतुर्णामप्यायुषां बन्धसंभवः, देवा नारकाश्च तिर्यङ्मनुष्यगत्योरेवोत्पद्यन्ते, इति तेषां द्वयोरेवायुषोर्बन्धः। ततो नरकगतौ पञ्च भङ्गाः, तिर्यग्गतौ नव, मनुष्यगतावपि नव, देवगतौ पञ्च संभवन्तीति सर्वसङ्ख्यया अष्टाविंशतिर्भङ्गाः। ते चैवं-नैरयिकस्य परभवायुर्बन्धकालात्पूर्वं नारकायुष उदयो नारकायुषः सत्ता, एष विकल्पश्चाद्येषु चतुर्षु गुणस्थानेषु प्राप्यते, शेषगुणस्थानकस्य नरकेष्वसंभवात्। परभवायुर्बन्धकाले तिर्यगायुषो बन्धो नारकायुष उदयो नारकतिर्यगायुषी सती, एष विकल्पो मिथ्यादृष्टेः सासादनस्य वा। अथवा मनुष्यायुषो बन्धो नारकायुष उदयो मनुष्यनारकायुषी सती, एष विकल्पो मिथ्यादृष्टेः सासादनस्याविरतसम्यग्दृष्टेर्वा। बन्धोपरमे नारकायुष उदयो नारकतिर्यगायुषी सती, एष विकल्प आद्येषु चतुर्ष्वपि गुणस्थानेषु, तिर्यगायुर्बन्धानन्तरं कस्यापि सम्यग्मिथ्यात्वे सम्यक्त्वे वा गमनसंभवात्। अथवा नारकायुष उदयो मनुष्यनारकायुषी सती, एषोऽपि विकल्प आद्येषु चतुर्ष्वपि गुणस्थानकेषु। तदेवं नारकाणां पञ्च विकल्पाः, एवं देवानामपि पञ्च विकल्पा भावनीयाः, नवरं नारकायुःस्थाने देवायुरित्युच्चारणीयम्। तद्यथा-देवायुष उदयो देवायुषः सत्ता इत्यादि। संप्रति तिरश्चा-मुच्यते-परभवायुर्बन्धकालात्पूर्वं तिर्यगायुष उदयस्तिर्यगायुषःसत्ता, एष विकल्प आद्येषु पञ्चसु गुणस्थानकेषु, शेषगुणस्थानकस्य तिर्यक्ष्वसंभवात्। बन्धकाले नारकायुषो बन्धस्तिर्यगायुष उदयो नारकतिर्यगायुषी सती, एष विकल्पो मिथ्यादृष्टेः, अन्यत्र नारकायुषो बन्धाभावात्। अथवा तिर्यगायुषो बन्धस्तिर्यगायुष उदयस्तिर्यक् तिर्यगायुषी सती, एषोऽपि विकल्पो मिथ्यादृष्टेः सासादनस्य वा।

अथवा मनुष्यायुषो बन्धस्तिर्यगायुष उदयो मनुष्यतिर्यगायुषी सती, एषोऽपि विकल्पो मिथ्यादृष्टेः सासादनस्य वा, विरतोऽविरतसम्यग्दृष्टेर्देशविरतस्य वा देवायुष एव बन्धसंभवात्। अथवा देवायुषो बन्धस्तिर्यगायुष उदयो देवतिर्यगायुषी सती, एष च विकल्पो मिथ्यादृष्टेः सासादनस्याविरतस्य देशविरतस्य वा, न सम्यग्मिथ्यादृष्टेः, तस्यायुर्बन्धासंभवात्। एते चत्वारोऽपि विकल्पाः परभवायुर्बन्धकाले, बन्धोपरमे तु तिर्यगायुष उदयो नरकतिर्यगायुषी सती, एष विकल्प आद्येषु पञ्चसु गुणस्थानकेषु, नरकायुर्बन्धानन्तरं सम्यक्त्वादावपि गमनसंभवात्। अथवा तिर्यगायुष उदयस्तिर्यक्तिर्यगायुषी सती। अथवा तिर्यगायुष उदयो मनुष्यतिर्यगायुषी सती। अथवा तिर्यगायुष उदयो देवतिर्यगायुषी सती। एते त्रयोऽपि विकल्पा आद्येषु पञ्चसु गुणस्थानकेषु। तदेवं सर्वसंख्या तिरश्चां नव विकल्पाः। सम्प्रति मनुष्याणामुच्यन्ते–मनुष्यायुष उदयो मनुष्यायुषः सत्ता, एष विकल्पोऽयोगिकेवलिनं यावत्। परभवायुर्बन्धकाले नरकायुषो बन्धो मनुष्यायुष उदयो नारकमनुष्यायुषी सती, एष विकल्पो मिथ्यादृष्टेः, अन्यत्र नरकायुषो बन्धाभावात्। तिर्यगायुषो बन्धो मनुष्यायुष उदयस्तिर्यङ्मनुष्यायुषी सती, एष विकल्पो मिथ्यादृष्टेः सासादनस्य वा। मनुष्यायुष बन्धो मनुष्यायुष उदयो मनुष्यमनुष्यायुषी सती, एषोऽपि विकल्पो मिथ्यादृष्टेः सासादनस्य वा। देवायुषो बन्धो मनुष्यायुष उदयो देवमनुष्यायुषी सती, एष विकल्पोऽप्रमत्तगुणस्थानकं यावत्। एते चत्वारोऽपि विकल्पाः परभवायुर्बन्धकाले। बन्धोपरमे तु मनुष्यायुष उदयो नारकमनुष्यायुषी सती, एष विकल्पोऽप्रमत्तगुणस्थानकं यावत्, नरकायुर्बन्धानन्तरं कस्यापि संयमप्रतिपत्तेरपि संभवात्। मनुष्यायुष उदयस्तिर्यङ्मनुष्यायुषी सती, (एष विकल्पोऽप्रमत्तसंयतं यावत्, मनुजायुष उदयो मनुष्यमनुष्यायुषी सती एषोऽपि विकल्पोऽप्रमत्तसंयतं यावत्। मनुजायुष उदयः देवमनुष्यायुषी सती) एष विकल्प उपशान्तमोहगुणस्थानकं यावत्, देवायुषि बद्धेऽप्युपशमश्रेण्यारोहसंभवात्। तदेवं मनुष्याणां नव भङ्गाः॥

## मूलप्रकृतीनां बंधोदयोदीरणासत्तानां संवेधयन्त्रम्

| बंधे | बंधः | उदयः | उदीरणा | सत्ता | उदये | बंधः | उदयः | उदीरणा | सत्ता |
|---|---|---|---|---|---|---|---|---|---|
| ज्ञानावरणीयस्य | ८-७-६ | ८ | ८-७-६-५ | ८ | ज्ञानावरणीयस्य | ८-७-६-१ | ८-७ | ८-७-६-१-२ | ८-७ |
| दर्शनावरणीयस्य | ,, | ८ | ,, | ,, | दर्शनावरणीयस्य | ,, | ,, | ,, | ,, |
| वेदनीयस्य | ८-७-६-१ | ८-७-४ | ८-७-६-१-२ | ८-७-४ | वेदनीयस्य | ,, | ८-७-४ | ,, | ८-७-४ |
| मोहनीयस्य | ८-७ | ८ | ८-७-६ | ८ | मोहनीयस्य | ८-७-६ | ८ | ८-७-६-१ | ८ |
| आयुषः | ८ | ,, | ८ | ,, | आयुषः | ८-७-६-१ | ८-७-४ | ८-७-६-२-२ | ८-७-४ |
| नाम्नः | ८-७-६ | ,, | ८-७-६-५ | ,, | नाम्नः | ,, | ,, | ,, | ,, |
| गोत्रस्य | ,, | ,, | ,, | ,, | गोत्रस्य | ,, | ,, | ,, | ,, |
| अन्तरायस्य | ,, | ,, | ,, | ,, | अंतरायस्य | ,, | ८-७ | ,, | ८-७ |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| उदीरणायां | | | | | सत्तायां | | | | |
| ज्ञानावरणीयस्य | ८-७-६-१ | ८-७ | ८-७-६-५ | ८-७ | ज्ञानावरणीयस्य | ८-७-६-१ | ८-७ | ८-७-६-५-२ | ८-७ |
| दर्शनावरणीयस्य | " | " | " | " | दर्शनावरणीयस्य | " | " | " | " |
| वेदनीयस्य | ८-७ | ८ | ८-७ | ८ | वेदनीयस्य | " | ८-७-४ | " | ८-७-४ |
| मोहनीयस्य | ८-७-६ | " | ८-७-६ | " | मोहनीयस्य | " | ८-७ | ८-७-६-५ | ८ |
| आयुषः | ८-७ | " | ८ | " | आयुषः | " | ८-७-४ | ८-७-६-५-२ | ८-७-४ |
| नाम्नः | ८-७-६-१ | ८-७-४ | ८-७-६-५-२ | ८-७-४ | नाम्नः | " | " | " | " |
| गोत्रस्य | " | " | " | " | गोत्रस्य | " | " | " | " |
| अन्तरायस्य | " | ८-७ | ८-७-६-५ | ८-७ | अन्तरायस्य | " | ८-७ | " | ८-७ |

## आयुषो वंधोदयसत्तासंवेधभङ्गाः २८

| | भंग संख्या | वंधः | उदय | सत्ता | गुणस्थानप्राप्तिः |
|---|---|---|---|---|---|
| नारकेषु | १ | | न० | न० | ४ या० (आयुर्वंधकालादर्वाग्) |
| | २ | ति० | ,, | ति० न० | १-२ (आयुर्वंधकाले) |
| | ३ | म० | ,, | म० न० | १-२-४ ( ,, ) |
| | ४ | | ,, | ति० न० | ४ या० (वंधोपरमे) |
| | ५ | | ,, | म० न० | ,, ( ,, ) |
| देवेषु | ६ | | दे० | दे० | ,, (आयुर्वंधकालादर्वाग्) |
| | ७ | ति० | ,, | ति० दे० | १-२ (आयुर्वंधकाले) |
| | ८ | म० | ,, | म० दे० | १-२-४ (आयुर्वंधकाले) |
| | ९ | | ,, | ति० दे० | ४ या० (वंधोपरमे) |
| | १० | | ,, | म० दे० | ,, ( ,, ) |
| तिर्यक्षु | ११ | | ति० | ति० | ५ या० (आयुर्वंधादर्वाग्) |
| | १२ | न० | ,, | न० ति० | १ मे (वंधकाले) |
| | १३ | ति० | ,, | ति० ति० | १-२ ( ,, ) |
| | १४ | म० | ,, | म० ति० | ,, ( ,, ) |
| | १५ | दे० | ,, | दे० ति० | १-२-४-५ ( ,, ) |
| | १६ | | ,, | न० ति० | ५ या० (वंधोपरमे) |
| | १७ | | ,, | ति० ति० | ,, ,, |
| | १८ | | ,, | म० ति० | ,, ,, |
| | १९ | | ,, | दे० ति० | ,, ,, |

| | | | | |
|---|---|---|---|---|
| २० | | म० | म० | १४ था० (भायुर्बंधात्पूर्व) |
| २१ | म० | " | न० म० | १ मे ( भायुर्बंधकाले ) |
| २२ | ति० | " | ति० म० | १–२ ( " ) |
| २३ | म० | " | म० म० | १–२ ( " ) |
| २४ | दे० | " | दे० म० | ७ था० ( " ) |
| २५ | | " | म० म० | " (बंधोपरमे) |
| २६ | | " | ति० म० | " " |
| २७ | | " | म० म० | " " |
| २८ | | " | दे० म० | ११ था० ( " ) |

नव छच्चउक्का चउक्षिइ दुगट्ठदसमेण दंसणावरणे ।
नव बायरम्मि सन्त छक्क चउरो य खीणम्मि ॥१०॥

(स्वो०)—दर्शनावरणस्य त्रीणि सबन्धस्थानानि, नवधा–नवप्रकारमविकलम्, षड्विधं–स्त्यानर्द्धित्रिकं विना, चतुर्धा–चतुष्प्रकारं दर्शनावरणं चक्षुरचक्षुरवधिकेवलदर्शनावरणमिति। तत्र नवप्रकारं मिथ्यादृष्टिसास्वादनाभ्यां बध्यते द्वाभ्यामपीति। सम्यग्मिथ्यादृष्ट्यविरतदेशविरतप्रमत्ताप्रमत्तापूर्वकरणैः षड्विधं बध्यते। चकारस्य समुच्चयार्थस्याप्यनेकार्थत्वादष्टमगुणप्रथमत्रि(वि)भागं यावत् षड्विधं बध्यते। तत्स्थानाद्दशमगुणस्थानं यावच्चतुर्विधं बध्यते। नव नवसु होंति संता, स्वार्थसिद्धौ 'नव बायरम्मि संत' एवं भणति तत्क्षपकश्रेणिं ज्ञापयति। यदुपरितनानां तदधस्तनानां भवत्येव, अप्रतिषिद्धमेतत् ज्ञापयति। ततश्चायमर्थः–नवविधमनिवृत्तिबादरकषायाद्यविभागं यावत् सद्भवति, स्त्यानर्द्धित्रिके क्षीणे तस्यैव षड्विधं सूक्ष्मसम्परायक्षीणकषाययोश्च सद्भवति, क्षीणकषायचरमसमये

एकं चतुर्विधं निद्राप्रचलाक्षयात् सद्भवति, उपशमश्रेण्यां तूपशान्तकषायं यावन्नवविधमपि सद्भवति, न तत्र त्रिविधस्यापि प्ररूपणा संभवति, तेन सूत्रे सूत्रकारेणानादृता इति गाथार्थः ॥१०॥

(मलय०)—संप्रति दर्शनावरणस्य बन्धोदयसत्तास्थानानि प्रतिपिपादयिपुराह—दर्शनावरणस्य त्रीणि बन्धस्थानानि, तद्यथा—नव षट् चतस्रः, तत्र सर्वप्रकृतिसमुदायो नव, नवधा च दर्शनावरणं मिथ्यादृष्टिगुणस्थानके सासादने वा बध्यते। ता एव नव प्रकृतयः स्त्यानर्द्धित्रिकरहिताः षड् भवन्ति, षट्प्रकारं च दर्शनावरणं सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्याष्टमस्यापूर्वकरणलक्षणस्य गुणस्थानकस्य प्रथमभागं यावद्बध्यते। ता एव षट् प्रकृतयो निद्राप्रचलाहीनाश्चतस्रः, चतुष्प्रकारं चेत्थं दर्शनावरणमपूर्वकरणगुणस्थानकस्य प्रथमभागादूर्ध्वं दशमं सूक्ष्मसंपरायगुणस्थानकं यावद्बध्यते, अक्षरयोजना त्वियं—नवधा षोढा चतुर्धा च दर्शनावरणं यथासंख्यं द्विकाष्टमदशमेषु द्विकाष्टमदशमपर्यवसानेषु गुणस्थानकेषु बध्यते। सत्तास्थानान्यपि दर्शनावरणस्य त्रीणि, तद्यथा—नव षट् चतस्रः, तत्र नव प्रकृतयः 'नव बादरंमि सन्तं'ति बादरे—अनिवृत्तिबादरसंपरायगुणस्थानके आद्यं विभागं यावत्सत्यः, एतच्चैवं क्षपकश्रेणिमधिकृत्य वेदितव्यम्। तत ऊर्ध्वं तु स्त्यानर्द्धित्रिके क्षीणे षट् प्रकृतयः, ताश्च क्षीणे—क्षीणमोहगुणस्थानके द्विचरमसमयं यावत्सत्यो वेदितव्याः। द्विचरमसमये तु निद्राप्रचलयोः सत्ताव्यवच्छेदे चतस्रः सत्यः, ताश्च तस्मिन्नेव क्षीणमोहगुणस्थानके चरमसमये क्षयमुपयान्ति, उपशमश्रेण्यां तु नवापि प्रकृतय उपशान्तमोहगुणस्थानकं यावत्सत्यः ॥१०॥

**नवभेए भंगतियं वे छावट्ठीउ छव्विहस्स ठिई। चउसमयाओ अंतो अंतमुहुत्ताउ नवछक्के ॥११॥**



(स्वो०)—नवभेदे नवप्रकृत्यात्मके काले भङ्गत्रयं भवति अनाद्यपर्यवसानोऽभव्यानाम्, अनादिसपर्यवसानो भव्यानाम्, सादि-

सपर्यवसानो भ्रष्टसम्यक्त्वानाम्, जघन्योत्कृष्टता चास्मिन्नेव भङ्गे 'अंतमुहुत्ताउ नवछक्के' तिवचनात् अन्तर्मुहूर्त्तादारभ्यापुद्गलपरावर्त्तार्द्धं देशोनं नवविधं बध्यते दर्शनावरणं इति। षड्विधं तु अन्तर्मुहूर्त्तादारभ्य द्वे षट्षष्ठीसागरोपमाणां यावद्बध्यते सातत्येन, यतः सम्यक्त्वसम्यक्त्वमिथ्यात्वयोरियन्तं कालमेव स्थितिः, तदतिक्रान्ते मिथ्यात्वेनावश्यं भाव्यम्, तस्मिंश्च सति नवविधो बन्ध इति। चतुर्विधबन्धस्तु समयादन्तर्मुहूर्त्तं सातत्येन भवति, यतोऽपूर्वकरणद्वितीयभागे चतुर्विधस्य प्रारम्भो भवति, तस्य चोपशमकस्य सामयिकी जघन्या स्थिति', क्षपकश्रेण्यामन्तर्मुहूर्त्तम्, स चोत्कृष्टकाल इति गाथार्थः ॥११॥

(मलय०)—संप्रति दर्शनावरणस्य त्रिषु बन्धस्थानेषु जघन्यत उत्कर्षतो वा यावान् बन्धकालो भवति तावत्प्ररूपणार्थमाह–'नवभेदे'। नवविधे नवप्रकृत्यात्मके बन्धस्थाने दर्शनावरणस्य कालमधिकृत्य भङ्गत्रयं भवति, तद्यथा–अनाद्यपर्यवसानम्, अनादिसपर्यवसानम्, सादिसपर्यवसानम्। तत्रानाद्यपर्यवसानमभव्यानाम्, तेषां कदाचिदपि नवविधबन्धव्यवच्छेदाभावात्। अनादिसपर्यवसितं भव्यानाम्, तेषां कालान्तरे नवविधबन्धव्यवच्छेदसम्भवात्। सादिसपर्यवसितं सम्यक्त्वात्प्रतिपतितानामवगन्तव्यम्। तच्च जघन्येनान्तर्मुहूर्त्तं कालं यावत्, 'अन्तमुहुत्ताउ नवछक्के' इति गाथापर्यन्ते भणनात्, उत्कर्षतो देशोनमर्द्धपुद्गलपरावर्त्तम्। तथा 'षड्विधस्य'–षट्प्रकृत्यात्मकस्य बन्धस्थानस्य निरन्तरं बध्यमानस्य स्थितिर्बध्यमानतया अवस्थानमुत्कर्षतो द्वे षट्षष्ठीसागरोपमाणां यावत्, सम्यक्त्वस्यापान्तराले सम्यग्मिथ्यात्वान्तरितस्यैतावन्तं कालमवस्थानसम्भवात्, तत ऊर्ध्वं तु कश्चित्क्षपकश्रेणिं प्रतिपद्यते, कश्चित्पुनर्मिथ्यात्वम्। मिथ्यात्वे च प्रतिपन्ने सत्यवश्यं नवविधो बन्धः, जघन्येन पुनः षड्विधबन्धस्थानस्यावस्थानमन्तर्मुहूर्त्तम्, चतुर्विधबन्धस्थानं समयादारभ्य यावदन्तर्मुहूर्त्तम्, एतदुक्तं भवति–चतुर्विधं स्थानं जघन्येनैकं समयं यावद्बध्यते, तच्चोपशमश्रेण्यामवगन्तव्यम्, उपशमश्रेण्यां हि

अपूर्वकरणस्य द्वितीयभागप्रथमसमये चतुर्विधं बन्धमारभ्यानन्तरसमये कश्चित्कालं करोति, कालं च कृत्वा दिवं गतः सन् अविरतो भवति, अविरतत्वे च षड्विधबन्धः । तत एवमेकसामयिकी चतुर्विधबन्धस्थानस्य स्थितिः, उत्कर्षेण त्वन्तर्मुहूर्त्तम्, 'अन्तमुहुत्ता उ नवछक्के' इति नवषट्कबन्धे अन्तर्मुहूर्त्तादारभ्य स्वस्वोत्कर्षं यावत्कालमानम्, किमुक्तं भवति ? नवकबन्धस्य षट्कबन्धस्य च जघन्यतः कालमानमन्तर्मुहूर्त्तम्, उत्कर्षतस्त्वनन्तरोक्तमिति । तथा नवप्रकृत्यात्मकं सत्तास्थानं दर्शनावरणस्य कालमधिकृत्य द्विधा, अनाद्यपर्यवसानं अनादिसपर्यवसानं च । तत्रानाद्यपर्यवसानमभव्यानाम्, अनादिसपर्यवसानं भव्यानां कालान्तरे व्यवच्छेदसंभवात् । सादिसपर्यवसानं तु न भवति, नवप्रकृत्यात्मकसत्तास्थानव्यवच्छेदो हि क्षपकश्रेण्यां, न च क्षपकश्रेणीतः प्रतिपातो भवतीति । षट्प्रकृत्यात्मकं तु सत्तास्थानमजघन्योत्कर्षमन्तर्मुहूर्त्तप्रमाणम्, चतुष्प्रकृत्यात्मकं त्वेकसामयिकमिति ॥११॥

दंसण सनिद्ददंसणउदओ समयं तु होइ जा खीणो । जाव पमत्तो नवण्ह उदओ छसु चउसु जा खीणो ॥१२॥

(स्वो०)—दर्शनावरणस्य द्वे उदयस्थाने, चक्षुरादिदर्शनावरणचतुष्कस्य निद्रापञ्चकान्यतमया युक्तस्य वा, अनयोः स्थानयोः क्षीणकषायगुणस्थानं यावदुदयो भवति, नास्त्यन्यो भेदः, समकम्—एककालम् । भिन्नकालं तु परिपाट्या यावत्प्रमत्तस्थानं तावन्नवानामपि प्रकृतीनामुदयो भवति. अप्रमत्तादारभ्य यावत् क्षीणकषायोपान्त्यसमयं तावत् स्त्यानर्द्धित्रिकक्षयात् षण्णामुदयो भवति, अन्तसमये तु तस्यैव चतसृणामुदयः, निद्राप्रचलयोस्तत्रासम्भवात्, तुशब्दस्यानेकार्थत्वात् क्षपकश्रेण्यां क्षपकाणां चतसृणामेवोदयः, तेषां तीव्रपरिणामत्वात् विशुद्धत्वाच्चेति गाथार्थः ॥१२॥

(मलय०)—सम्प्रति दर्शनावरणस्योदयस्थानप्रतिपादनार्थमाह—दर्शनावरणस्य द्वे उदयस्थाने, तद्यथा—समककालं केवलस्य

दर्शनस्य दर्शनावरणचतुष्कस्य चक्षुरचक्षुरवधिकेवलदर्शनावरणरूपस्य उदयः, इदमेकमुदयस्थानम् । अथवा 'सनिद्द'त्ति–सनिद्रस्य निद्राप्रचलान्यतमनिद्रासहितस्य दर्शनावरणचतुष्टयस्योदयः, इद द्वितीयमुदयस्थानम् । एते द्वे अपि उदयस्थाने यावत्क्षीणः क्षीण मोहगुणस्थानकं तावद्वेदितव्ये । एतच्चाचार्येण कर्मस्तवाभिप्रायेणोक्तम् । सत्कर्मग्रन्थाद्यभिप्रायेण तु क्षपकक्षीणमोहानां चतुर्णामेवोदयो, न पञ्चानामपि । तदुक्तं सत्कर्मग्रन्थे–'निद्दादुगस्स उदओ । खीणगखवगे परिच्चज्ज' । अथ चतसृणां पञ्चानां वा प्रकृतीनामुदय उक्तः, युगपद्भावापेक्षया एककाले चतस्रः पञ्च वा प्रकृतय उदये प्राप्यन्ते इत्यर्थः । यदा तु सामान्येन सर्वासामपि दर्शनावरणप्रकृतीनामुदयश्चिन्त्यते तदैवमवगन्तव्यम्, यावत्प्रमत्तः–प्रमत्तसंयतगुणस्थानं तावन्नवानामपि प्रकृतीनामुदयः, तत परं स्त्यानर्द्धित्रिकस्योदयाभावात् षण्णामुदयः, स च तावद्यावत्क्षीणकषायस्योपान्त्यसमयः, तस्मिंश्च निद्राप्रचलयोरपि व्यवच्छेदाच्चरमसमये चतसृणामुदय इति ॥

चउपणउदओ बंधेसु तिसुवि अब्बंधगे वि उवसंते । नव सत अट्ठेव उइण्णसताइं चउखीणे ॥१३॥

(स्वो०)—चतुर्णां पञ्चानां वा त्रिष्वपि बन्धेषु नवषट्चतुष्प्रकारेषूदयो भवति, अबन्धकेऽप्युपशान्ते एवम्, उपशमश्रेण्यां नवसत्ताभावेनाष्टौ भङ्गाः, त्रयो बन्धकप्रभेदाश्चतुर्थोऽबन्धकः उदयस्य द्वैविध्यादष्टौ भङ्गाः । क्षीणकषायान्तसमये चतुर्णामुदयः सत्कर्मता च नवमो भङ्ग इति गाथार्थः ॥१३॥

(मलय०)—सम्प्रति बन्धोदयसत्तास्थानानां परस्परं संवेधमाह–त्रिष्वपि बन्धेषु बन्धस्थानेषु नवषट्कचतुष्करूपेषु चतुर्णां पञ्चानां वा उदयः, नवकं सत् सत्तास्थानम् । एवं षड्भङ्गाः । तथा अबन्धकेऽपि उपशान्ते उपशान्तमोहे, चतुर्णां पञ्चानामुदयः, नवकं सत्तास्थानम् । एवमष्टौ भङ्गाः । ते चैवमुच्चारणीयाः, तद्यथा–नवविधो बन्धः चतुर्विध उदयो नवविधा सत्ता, एष विकल्पो निद्रो

दयाभावे, निद्रोदये तु नवविधो बन्धः पञ्चविध उदयः नवविधा सत्ता, एतौ द्वावपि विकल्पौ मिथ्यादृष्टिसासादनानाम्। तथा षड्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, अथवा षड्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एतौ च द्वौ विकल्पौ सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्यापूर्वकरणप्रथमं संख्येयभागं यावद्वेदितव्यौ। तथा चतुर्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, अथवा चतुर्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एतौ च द्वौ विकल्पावुपशमश्रेण्यामपूर्वकरणस्य द्वितीयभागादारभ्य सूक्ष्मसंपरायचरमसमयं यावत्। उपशान्ते तु बन्धाभावाच्चतुर्विध उदयो नवविधा सत्ता, अथवा पञ्चविध उदयो नवविधा सत्तेति द्वौ विकल्पौ। 'उइण्णसंताइ चउ खीणे' इति क्षीणे-क्षीणमोहे स्वगुणस्थानकचरमसमये वर्त्तमाने चत्वारि उदीर्णानि सन्ति च, चतुर्विध उदयश्चतुर्विधा सत्ता इत्यर्थः। एष नवमो भङ्गः ॥१३॥

**खवगे सुहुमंमि चऊबन्धंमि अबंधगंमि खीणम्मि। छस्संतं चउरुदओ पंचण्हवि केइ इच्छंति ॥१४॥**

(स्वो०)—क्षपकश्रेण्यां बादरकषाये सूक्ष्मकषाये चतुर्बन्धके अबन्धके च क्षीणकषाये षट् प्रकृतयः सद्भावेन भवन्ति, चतसृणामुदयः, एवमेकादश भङ्गाः, सप्ततिकाकारमतेन। कर्म्मस्तवकारमतेन पञ्चानामप्युदयो भवति, ततश्च त्रयोदश भङ्गाः, एवं दर्शनावरणत्रिकसंवेध इति गाथार्थः ॥१४॥

(मलय०)—क्षपकश्रेण्यां क्षपके अनिवृत्तिबादरसंपराये चतुर्विधबन्धके स्त्यानर्द्धित्रिकक्षयानन्तरं, सूक्ष्मे च सूक्ष्मसंपराये च, अबन्धके च क्षीणे क्षीणमोहे षट् प्रकृतयः सत्यश्चतुर्णामुदयः, एवं च द्वौ भङ्गौ, तद्यथा-चतुर्विधो बन्धश्चतुर्विध उदयः षड्विधा सत्ता, एष च विकल्पः स्त्यानर्द्धित्रिकक्षयानन्तरं सूक्ष्मसंपरायचरमसमयं यावत्। तथा चतुर्विध उदयः षड्विधा सत्ता, एष विकल्पः क्षीणमोहे

## दर्शनावरणे बंधोदयसत्तासंवेधः (भंगाः ११-१३ वा)

| संख्या | बंध | उदयः | सत्ता | प्राप्तिस्थानं | संख्या | बंध | उदयः | सत्ता | प्राप्तिस्थान |
|---|---|---|---|---|---|---|---|---|---|
| १ | ९ | ४ | ९ | निद्रोदयाभावे ( १–२ गु० ) | ८ | ० | ५ | ९ | ,, ,, |
| २ | ९ | ५ | ९ | निद्रोदये ( ,, ) | ९ | ० | ४ | ४ | १२शस्य चरमसमये |
| ३ | ६ | ४ | ९ | ३ तः ८मस्याद्यभाग यावत् | १० | ४ | ४ | ६ | स्त्या० २क्षयानंतरं १०मयावत् |
| ४ | ६ | ५ | ९ | ,, ,, | ११ | ० | ४ | ६ | १२क्षे उपान्त्यसमयं यावत् |
| ५ | ४ | ४ | ९ | उप०श्रेण्यां ८मस्य द्वितीय | १२ | क्षपकश्रेण्यां ४ | ५ | ६ | स्त्या० ३ क्षयानंतरं १०मं या० |
| ६ | ४ | ५ | ९ | भागादारभ्य १०मपर्यंत | १३ | | ५ | ६ | १२क्षे उपान्त्यसमयं या० |
| ७ | ० | ४ | ९ | ११क्षे बंधाभावात् | | | | | |

द्विचरमसमयं यावत् । तदेवं सर्वसंख्यया दर्शनावरणस्य सप्ततिकाकारमतेनैकादशभङ्गा उक्ताः । संप्रत्यत्रैव क्षपकानिवृत्तिबादरसंपरायादौ मतान्तरमुपदर्शयति–'पञ्चण्हवि केइ इच्छंति', केचिदाचार्याः कर्मस्तवकारादयः क्षपके अनिवृत्तिबादरे सूक्ष्मसंपराये क्षीणमोहे च द्विचरमसमयं यावत्पञ्चानामप्युदयमिच्छन्ति । ततस्तन्मतेनान्यौ द्वौ भङ्गौ भवतः, तद्यथा–चतुर्विधो बन्धः पञ्चविध उदयः षड्विधा सत्ता । एष विकल्पः स्त्यानर्द्धित्रिकक्षयानन्तरं सूक्ष्मसंपरायं यावत्, बन्धाभावे पञ्चविध उदयः षड्विधा सत्ता । सर्वसंख्यया तन्मते त्रयोदश भङ्गाः ॥१४॥

**बंधो आदुगदसमं उदओ पण चोद्दसं तु जा ठाणं । निच्चुच्चगोत्तकम्माण संतया होंति सव्वेसु ॥१५॥**

(स्वो०)––नीचैर्गोत्रोच्चैर्गोत्रकर्म्मणोराद्वितीयमादसमं च गुणं यावद्बन्धो यथासंख्यं भवति । उदयस्तु आपञ्चममाचतुर्दशं च गुणं यावद् भवति यथासंख्येन । उभयोरपि सत्कर्म्मता तु सर्वेष्वपि गुणेषु भवतीति गाथार्थः ॥१५॥

(मलय०)—तदेवं दर्शनावरणस्य बंधोदयसत्तास्थानसंवेध उक्तः, सम्प्रति गोत्रस्य प्रागुक्तानां बन्धोदयसत्तास्थानानां परस्परं संवेधमभिधित्सुराह–नीचैर्गोत्रोच्चैर्गोत्रयोर्यथासंख्यं द्वितीयं दशमं च गुणस्थानकं यावद्बन्धः, पञ्चमं चतुर्दशं च यावदुदयः,इयमत्र भावना–नीचैर्गोत्रस्य सासादनगुणस्थानकं यावद्बन्धो देशविरतिगुणस्थानकं यावदुदयः, उच्चैर्गोत्रस्य तु सूक्ष्मसंपरायगुणस्थानकं यावद्बन्धोऽयोगिकेवलिगुणस्थानकं यावदुदयः । सत्कर्मता पुनर्द्वयोरपि सर्वेष्वपि गुणस्थानकेषु वेदितव्या ॥१५॥



**बंधइ ऊइण्णयं चिय इयरं वा दो वि संत चउभंगा । नीएसु तिसु वि पढमो अबंधगे दोण्णि उच्चुदए॥१६॥**

(स्वो०)—यदेव गोत्रमुदीर्णं तदेव बध्नाति, नीचैर्गोत्रमुच्चैर्गोत्रं वा द्वौ भङ्गौ, तस्योरन्यद् बध्नाति अन्यदुदीर्णं एतावपि द्वौ भङ्गौ, एवं चतुर्ष्वपि सत्भावेनोभयम् , सदुदयबन्धेषु नीचैर्गोत्रमपि प्रथमः, एकशेषत्वादेकवचनं,अबन्धकेषु द्वौ भङ्गौ उच्चैर्गोत्रोदयोपलक्षितौ, एव सप्त, एत एव क्रमेण स्थाप्यन्ते–सदुदयबन्धेषु नीचैर्गोत्रेण प्रथमः, यतो वाय्वग्निकायिकत्व गतो जीवः उच्चैर्गोत्र नीचैर्गोत्रभावेन परिणमयति ततः एकसत्ता भवति । नीचैर्गोत्रं बध्नाति, तदेवोदीर्णमुभय सद्द्वितीयः । नीचैर्गोत्र बध्नाति उच्चैर्गोत्रमुदीर्णमुभयं सत्तृतीयः । उच्चैर्गोत्र बध्नाति नीचैर्गोत्रमुदीर्णमुभय सच्चतुर्थः । उच्चैर्गोत्र बध्नाति उदीर्णं चोच्चैर्गोत्रमुभयं सत्पञ्चमः । उपशान्तकषायादिष्वबन्धकेषूच्चैर्गोत्रोदयेनोभयसत्तया षष्ठः । अबन्धकस्यायोगिनो नीचैर्गोत्रक्षयादुच्चैर्गोत्र सदुदयेन सप्तमो भङ्ग इति गाथार्थः ॥१६॥

(मलय०)—संप्रत्यत्रैव यावन्तो भङ्गाः सम्भवन्ति तावत उपदर्शयति–यदेव गोत्रमुदीर्णम्–उदयप्राप्तमुच्चैर्गोत्र नीचैर्गोत्र वा तदेव बध्नाति, इतरद्वा–अनुदयप्राप्तं बध्नाति, सर्वत्रापि च द्वे अपि उच्चैर्गोत्रनीचैर्गोत्रे सती। इह चत्वारो भङ्गाः, ते च द्वितीयतृतीयचतुर्थपञ्चमरूपा द्रष्टव्याः । तथा त्रिष्वपि स्थानेषु बन्धोदयसत्तास्थानेषु नीचैर्गोत्रेषु सत्सु प्रथमो भङ्गः, तथा अबन्धके उपशान्तमोहादावुच्चैर्गोत्रोदये द्वौ भङ्गौ, सर्वसंख्यया सप्त, ते चैव–नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयो नीचैर्गोत्रं सत्, एष विकल्पस्तेजोवायुकायिकेषु लभ्यते, तद्भवादुद्वृत्तेषु वा शेषजीवेषु कियत्कालम्, नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयः उभनीचैर्गोत्रे सती, अथवा नीचैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदय उभनीचैर्गोत्रे सती, एतौ विकल्पौ मिथ्यादृष्टिषु सासादनेषु वा, न सम्यग्मिथ्यादृष्ट्यादिषु, तेषां नीचैर्गोत्रबन्धाभावात् । तथा उच्चैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयः उभनीचैर्गोत्रे सती, एष विकल्पो मिथ्यादृष्टेरारभ्य देशविरतिं यावदवगन्तव्यः, न परतः,

गोत्रस्य बंधोदयसत्तासंवेधः (भंगाः ७)

| सं० | बं० | उ० | स० | प्राप्तिस्थानं |
|---|---|---|---|---|
| १ | नी० | नी० | नी० | तेजोवायुकायिकेषु (क्रियत्कालमन्येष्वपि) |
| २ | ,, | ,, | उ० नी० | १-२ गुणयोः |
| ३ | ,, | उ० | नी० उ० | |
| ४ | उ० | नी० | उ० नी० | ५मं यावत् |
| ५ | ,, | उ० | ,, | १०मं यावत् |
| ६ | ० | ,, | ,, | ११त-१४शस्योपान्त्यसमयं या. |
| ७ | ० | ,, | उ० | १४शस्य चरमसमये |

वेदनीयस्य बंधोदयसत्तासंवेधः (भंगाः ८)

| क्रमसंख्या | बंधः | उदयः | सत्ता | प्राप्तिस्थानं |
|---|---|---|---|---|
| १ | असा० | असा० | सा० असा० | ६ यावत् |
| २ | ,, | सा० | ,, | ,, |
| ३ | सा० | असा० | ,, | १३ यावत् |
| ४ | ,, | सा० | ,, | ,, |
| ५ | ० | असा० | ,, | १४स्य द्विचरमसमयं या० |
| ६ | ० | सा० | ,, | |
| ७ | ० | असा० | असा० | १४स्य चरमसमये |
| ८ | ० | सा० | सा० | ,, |

परतो नीचैर्गोत्रस्योदयाभावात् । तथा उच्चैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती, एष विकल्पः सूक्ष्मसंपराय यावत्, न परतः, परतो बन्धाभावात् । उच्चैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती एष षष्ठो विकल्प , एष चोपशान्तमोहगुणस्थानकादारभ्यायोगिकेवलिद्विचरमसमय यावदवसेयः । चरमसमये उच्चैर्गोत्रस्योदय उच्चैर्गोत्र सत् ॥१६॥

तेरसमछट्ठएसु सायासायाण बंधवोच्छेओ । सतउइण्णाइ पुणो सायासायाइ सव्वेसु ॥१७॥

(स्वो०)—त्रयोदशसु षट्सु गुणस्थानेषु आत्रयोदशमषष्ठगुणेषु यथासंख्येन सातासातयोः बन्धव्यवच्छेदो भवति, बन्धस्योपरतिरित्यर्थः । सदुदयभावेन पुनः सातासाते सर्वेष्वपि गुणेषु भवतः । भूयः सातासातोच्चारण निरर्थक व्यत्यासेन च कस्मात् क्रियते ? भूय उच्चारणमयोगिनोऽन्त्यसमये उभयसदुदयानियमार्थम् । व्यत्यासोच्चारणं सातस्यैव बाहुल्येनान्त्यसमये सदुदय इति गाथार्थः ॥१७॥

(मलय०)—संप्रति वेदनीयस्य भागुक्तानां बन्धोदयसत्तास्थानानां परस्परं संवेधमाह—सातासातवेदनीययोर्यथासंख्य त्रयोदशे सयोगिकेवलिलक्षणे गुणस्थानके, षष्ठे—प्रमत्तसंयतलक्षणे बन्धव्यवच्छेदः, सती उदयप्राप्ते च पुनः सातासाते सर्वेष्वपि गुणस्थानकेषु प्राप्येते ॥१७॥

बंधइ उइण्णयं चिय इयर वा दोवि संत चउभंगो । सतमुइण्णमबंधे दो दोण्णि दुसत इइ अट्ठ ॥१८॥

(स्वो०)—यदेव वेद्यमुदीर्णं तदेव बध्नाति जीव इति द्वौ भङ्गौ, अन्यदुदीर्णमन्यद् बध्नाति एतावपि द्वावेवं चत्वार उभयसत्तया भवन्ति । तदेवोदीर्णे सातमसातं वाऽबन्धकस्यायोगिनोऽन्त्यसमयेऽन्यतरक्षयात् द्वावेव पद् । द्वावन्यौ सातासातयोः सद्भावेनान्यतरो

दयेन भवतोऽयोगिन एवोपान्त्यसमयं यावत्, एवं वेदनीयस्याष्टौ भङ्गाः। असातबन्धोदययोरुभयं सत्प्रथमः, असातबन्धः सातोदय उभयं सत् द्वितीयः, सातबन्धोऽसातोदय उभयं सन् तृतीयः, सातबन्धोदययोरुभयं सच्चतुर्थः, अयोगिनोऽबन्धे सातोदयः उभयं सत्पञ्चमः, असातोदय उभयं सत्षष्ठः, सातं सदुदीर्णं सप्तमः, असातं सदुदीर्णः अष्टमो भङ्ग इति गाथार्थः ॥१८॥

(मलय०)—संप्रत्यष्टैव भङ्गसंख्योपदर्शनमाह-यदेव वेदनीयमुदीर्णम्-उदयप्राप्तं सातवेदनीयमसातवेदनीयं वा तदेव बध्नाति, इतरद्वा-अनुदयप्राप्तं वा बध्नाति, सर्वत्रापि च द्वे अपि सातासाते सती इति चत्वारो भङ्गाः। तथा अबन्धे-बन्धाभावे अयोगिकेवलि-चरमसमये सातमसातं वा एकं सत् उदीर्णं चेतो द्वावन्यौ भङ्गौ। तथा सातमसातं वा उदयप्राप्तं द्वे सातासाते सती, इत्यन्यौ द्वौ, इति एवमुपदर्शितेन प्रकारेण वेदनीयस्य सर्वसंख्यया अष्टौ भङ्गाः, ते चैवमुच्चारणीयाः—असातस्य बन्धः असातस्योदयः सातासाते सती, अथवा असातस्य बन्धः सातस्योदयः सातासाते सती, एतौ द्वौ विकल्पौ मिथ्यादृष्टेरारभ्य प्रमत्तसंयतं यावत्प्राप्येते, न परतः, परतोऽसातस्य बन्धाभावात्। तथा सातस्य बन्धः असातस्योदयः, सातासाते सती, अथवा सातस्य बन्धः सातस्योदयः, सातासाते सती, एतौ द्वौ विकल्पौ मिथ्यादृष्टेरारभ्य सयोगिकेवलिचरमसमयं यावत्संभवतः, परतो बन्धाभावः। असातस्योदयः सातासाते सती, अथवा सातस्योदयः सातासाते सती, एतौ द्वौ विकल्पावयोगिकेवलिनि द्विचरमसमयं यावत्प्राप्येते। चरमसमये असातस्योदयेऽसातस्य सत्ता, यस्य द्विचरमसमये सातं क्षीणम्। यस्य त्वसातं द्विचरमसमये क्षीणम् तस्यायं विकल्पः—सातस्योदयः सातस्य सत्ता। तदेवमल्पवक्तव्यत्वादुक्तानि प्रथमतः षट् कर्माणि ॥१८॥

**दुगइगवीसा सत्तर तेरस नव पञ्च चउर ति दु एगो। बंधो इगि दुग चउत्थय पणउणवमेसु मोहस्स ॥१९॥**

(स्वो०)—अल्पवक्तव्यान्युक्तानि षट्कर्माणि। मोहनीयमारभ्यते, तस्य च दश बन्धस्थानानि–द्वाविंशः एकविंशः सप्तदशः त्रयोदश नव पञ्च चतुस्त्रिद्व्येकबन्ध, बन्धशब्दः प्रत्येकं दशस्वपि सम्बन्धनीयः, विंशशब्द उभयत्र सम्बन्धनीयः, यथासंख्येनैकद्वित्रिचतुर्थक पञ्चाष्टनवमेषु भवन्ति। प्रथमे मिथ्यादृष्टिगुणे द्वाविंशो बन्धः, द्वितीये सासादनगुणे एकविंशो बन्धः, तृतीयचतुर्थगुणयोः सप्तदशो बन्ध., देशविरतगुणे पञ्चमे त्रयोदशो बन्धः, प्रमत्ताप्रमत्तापूर्वकरणेषु नवप्रकृत्यात्मको बन्धः, पञ्चचतुस्त्रिद्व्येकप्रकृतिबन्धा अनिवृत्तिबादरगुणे नवमे पञ्चविभागीकृते क्रमेण भवन्ति, पुवेदस्य क्रोधादीनां च बन्धव्यवच्छेदादिति गाथार्थः ॥१९॥

(मलय०)—सम्प्रति मोहनीयस्य बन्धोदयसत्तास्थानानि विवक्षुराह–इह विंशतिशब्दो द्विके एकके च सम्बध्यते, यथासङ्ख्यं चैक द्विचतुर्थादिपदानां योजना, ततोऽयमर्थः–मोहनीयस्य दश बन्धस्थानानि, तद्यथा–प्रथमं बन्धस्थानं द्वाविंशतिः, सा च प्रथमगुणस्थानके। द्वितीयमेकविंशतिः, सा च द्वितीयगुणस्थानके। तृतीयं सप्तदश, तच्च तृतीयचतुर्थगुणस्थानकयोः। सूत्रे चतुर्थग्रहणं अनन्तरोक्तद्विकसङ्ख्याया उपरि पर्यन्तार्थम्। तथा चतुर्थं त्रयोदश, तच्च पञ्चमे गुणस्थाने। पञ्चमं नव, तच्च षष्ठसप्तमाष्टमगुणस्थानकेषु। अत्रापि अष्टमग्रहणं पञ्चकसंख्याया उपरि पर्यन्तार्थम्। षष्ठं बन्धस्थानं पञ्चप्रकृत्यात्मकम्, सप्तमं चतुष्प्रकृत्यात्मकम्, अष्टमं त्रिप्रकृत्यात्मकम्, नवमं द्विप्रकृत्यात्मकम्, दशममेकप्रकृत्यात्मकमिति, इमानि च पञ्चादीनि पञ्चबन्धस्थानानि नवमगुणस्थानके द्रष्टव्यानि ॥१९॥

हासरइअरइसोगाण बंधया आणवं दुहा सव्वे। वेयविभज्जंता पुण दुगइगवीसा छहा चउहा ॥२०॥

(स्वो०)—हास्यरत्योररतिशोकयोश्च व्यत्यासाव्यत्यासेन 'आनव'–नवकबन्धं यावत् सर्वेऽपि बन्धा द्विप्रकारा भवन्ति, यत एतेषु

पञ्चस्वपि बन्धेषु युग्मयोर्नियमादेकेन भाव्यम्, नोभयेनेति। वेदत्रयेण भूयोऽपि विभज्यमानो द्वाविंशो बन्धः षोढा भवति, यतो वेदत्रयात् तत्रैकेन भाव्यम्। एकविंशस्तु चतुर्द्धा, भङ्गकसंख्यानिगदनादेव ज्ञापयति, तत्राशुभस्य नपुंसकवेदस्य बन्धो नास्ति। सप्तदश त्रयोदशनवबन्धा द्विधैव, अत्रापि भङ्गकसंख्यानिगदनादेवावसीयते, स्त्रीवेदस्य बन्धव्यवच्छेदः, सर्वबन्धेष्वर्थादुपपन्नः। प्रकृतीनां प्राकट्यमाह–षोडशकषाया भयजुगुप्सामिथ्यात्वयुक्ता ध्रुवबन्धिन्य एकोनविंशतिप्रकृतयः वेदयुग्मान्यतरयुक्ता द्वाविंशतिर्भवन्ति। एवं वेदत्रयेण युग्मेन च भज्यमानानां प्रकृतीनां षड् द्वाविंशतयो भवन्ति मिथ्यादृष्टौ। सासादने तु ध्रुवबन्धिन्यो मिथ्यात्वरहिता हास्यरतिपुरुषवेदयुता प्रथमा एकविंशतिः, स्त्रीवेदव्यत्यासात् द्वितीया, अरतिशोकपुरुषयुक्ता ध्रुवा तृतीया एकविंशतिः, स्त्रीवेदेन चतुर्थी। सप्तदशत्रयोदशनवबन्धाः पुरुषवेदोपलक्षिता द्विधैव भवन्ति। अप्रमत्तापूर्वकरणयोर्नवकबन्धे एकविध एवारतिशोकयोरबन्धात्। पञ्चादयोऽप्येवमेवैकविधा इति गाथार्थः ॥२०॥

(मलय०)—एतेषु च बन्धस्थानेषु मध्ये याः प्रकृतीर्यथा बध्नाति तास्तथोपदर्शयति–हास्यरत्योररतिशोकयोश्च आनवकं बन्धं यावत्सर्वेऽपि द्विविधा भवन्ति। कदाचित् हास्यरती बध्नाति, कदाचिदरतिशोकप्रकृती, न तु कदाचनापि युगपदेताश्चतस्रोपि। तच्च-द्वाविंशतिबन्धकाः कदाचित्पुरुषवेदं बध्नन्ति, कदाचिद् स्त्रीवेदं, कदाचित् नपुंसकवेदं, न तु कदाचनापि त्रीनपि वेदान् युगपद् बध्नन्ति। तत एवं हास्यरतियुगलारतिशोकयुगलाभ्यां वेदत्रयेण च विभज्यमाना द्वाविंशतिः षोढा भवति। तथाहि–मिथ्यात्वम्, षोडश कषाया, अन्यतमो वेदः, अन्यतरद्युगलम्, भयम्, जुगुप्सा चेति द्वाविंशतिः, एषा च हास्यरतियुगले अरतिशोकयुगले च प्रत्येकं प्राप्यते, इति द्विधा। सा च द्विधा त्रिष्वपि वेदेषु प्रत्येकं विकल्पेन प्राप्यते, इति षोढा। सैव द्वाविंशतिर्मिथ्यात्वेन विना

## मोहनीयस्य बंधस्थानानां यंत्र (बंधस्थानानि १०)

| स्थान | स्थानगतप्रकृतयः | बंध गुणस्थाने | (मोहस्य बंधस्थानं) कतिविध | काल प्रमाण | |
|---|---|---|---|---|---|
| | | | | जघन्य | उत्कृष्ट |
| २२ | मिथ्या० १६क० १वे० २युग० भ० जु० | १ मे | ६ विधं (२ युगलेन) (३ वेदेन च) | अन्तर्मु० | देशोनार्धपुद्गलपरावर्तः अभव्यमत–अनादिसान्तमपि |
| २१ | ,, ,, ,, ,, ,, | २ ये | ४ ,, (वे० २×यु० २) | १ समय | ६ आवलिका |
| १७ | १२ क० ,, ,, ,, ,, | ३-४ थे गुणे | २ ,, (युगलेन) | अन्तर्मु० | साधिक ३३ सागर |
| १३ | ८ क० ,, ,, ,, ,, | ५ मे | ,, ,, ( ,, ) | ,, | देशोनपूर्वकोटिपर्यंत |
| ९ | ४ क० ,, ,, ,, ,, | ६-७-८ गुणे | १ ,, वर्षे २ | ,, | ,, |
| ५ | ४ क० पु० | ९ मे १ भाग पर्यंत | ,, | १ समय | अन्तर्मुहूर्त |
| ४ | ,, | ,, २ ,, | ,, | ,, | ,, |
| ३ | सं० मानः सं० माया सं० लोभ इति | ,, ३ ,, | ,, | ,, | ,, |
| २ | ,, ,, | ,, ४ ,, | ,, | ,, | ,, |
| १ | ,, | ,, ५म भाग पर्यंत | ,, | ,, | ,, |

एकविंशतिः, नवरमत्र द्वयोर्वेदयोरन्यतरो वेद इति वक्तव्यम् । यत एकविंशतिबन्धकाः सासादनाः, सासादनाश्च स्त्रीवेदं वा बध्नन्ति पुरुषवेदं वा, न नपुंसकवेदम् , नपुंसकवेदबन्धस्य मिथ्यात्वोदयनिबन्धनत्वात् , सासादनानां च मिथ्यात्वोदयाभावात् । अतश्चतुर्धा एकविंशतिः, तथाहि–हास्यरतियुगलारतिशोकयुगलाभ्यां द्विधा, सा च प्रत्येकं स्त्रीवेदे पुरुषवेदे च प्राप्यते, इति चतुर्धा । सप्तदशादि-बन्धकास्तु पुरुषवेदमेवैकं बध्नन्ति, न स्त्रीवेदमपि, अनन्तानुबन्ध्युदयाभावात् , अतस्ते द्विधैव ॥२०॥

मिच्छाबंधिगवीसो सत्तर तेरो नवो कसायाणं। अरईदुगं पमत्ते ठाइ चउक्कं नियट्टिंमि ॥२१॥

(स्वो०)—मोहनीयस्योत्कृष्टबन्धात् द्वाविंशतिसंख्यात् मिथ्यात्वस्याबन्ध इति बन्धोपरमे एकविंशो बन्धो भवति सास्वादने। ततोऽपि प्रथमकषायाणां बन्धोपरमे (सम्यग्मिथ्यादृष्टौ अविरते च सप्तदशो बन्धः, ततोऽपि द्वितीयकषायाणां बन्धोपरमे) देशविरते त्रयोदशो बन्धः । ततोऽपि तृतीयकषायाणां बन्धोपरमे प्रमत्ताप्रमत्तापूर्वकरणेषु नवको बन्धः । अरतिशोकयोः प्रमत्ते बन्धोपरमः, 'अरईदुगं पमत्ते ठाइ' इति वचनात् । 'चउक्कं नियट्टिम्मि' इति, हास्यरतिभयजुगुप्साचतुष्कमपूर्वकरणान्ते तिष्ठति, ऊर्ध्वं न बध्यत इत्यर्थः । बादरकषायप्रथमपञ्चमभागान्ते पुंवेदस्य बन्धाभावः, ततो द्वित्रिचतुष्पञ्चमभागान्तेषु क्रोधादिनां क्रमेण बन्धोपरमः, कथमेतदनुक्तमप्यवसीयते ?, सुगममेतत् , काक्वाऽन्यत्रोक्तत्वात् । 'पुंवेए अड वासा' सर्वजघन्या स्थितिस्तथापि सञ्ज्वलनस्थितेर्महती, अतोऽवगम्यते भिन्नकाले (त्वम) ऽविशुद्धपरिणामस्य (त्वं) च । 'दो मासा इगि अद्धं अंतमुहुत्तं च' इति क्रोधादीनां स्थिति-भेदाद् भिन्नकालत्वमुत्तरोत्तरविशुद्धिश्चावसीयते, अन्यत्र चतुर्णामपि स्थितिरविशेषादिति गाथार्थः ॥२१॥ ॥२३२॥

(मलय०)—सम्प्रत्येकविंशत्यादिबन्धस्थानस्वरूपं प्रतिपादयति–स एव द्वाविंशतिबन्धो मिथ्यात्वाबन्धे एकविंशतिबन्धो भवति, स

एवंकविंशतिबन्धः प्रथमकषायाणामनन्तानुबन्धिनामबन्धे सप्तदशको बन्धो भवति । स च द्विधा–हास्यरतियुगले अरतिशोकयुगले च विकल्पेन प्रत्येकं प्राप्यमाणत्वात् । स एव च सप्तदशको बन्धो द्वितीयकषायाणामप्रत्याख्याननाम्नामबन्धे त्रयोदशको बन्धो भवति, सोऽपि प्राग्वि‍व द्विधा । त्रयोदशकबन्ध एव तृतीयकषायाणां प्रत्याख्यानावरणनाम्नामबन्धे नवको बन्धः, स च प्रमत्ताप्रमत्तापूर्वकरणेषु । तत्र प्रमत्तगुणस्थानके नवकबन्धो द्विधा–हास्यरतियुगले, अरतिशोकयुगले च, प्रत्येकं विकल्पेन प्राप्यमाणत्वात् । अप्रमत्तापूर्वकरणयोश्च हास्यरतिरूपमेकमेव युगलं प्राप्यते, यत आह–'अरतिद्विकं'–अरतिशोकरूपं द्विकं प्रमत्ते तिष्ठति, अग्रे न याति, ततोऽप्रमत्ते अपूर्वकरणे च नवकबन्ध एकरूपः । तथा 'चतुष्कं'–हास्यरतिभयजुगुप्सारूपम्, 'निवृत्तौ'–अपूर्वकरणे तिष्ठति, परतो न याति, ततोऽनिवृत्तिबादरप्रथमसमयादारभ्य पञ्चको बन्धः, स चानिवृत्तिबादरसंपरायाद्धायाः प्रथमपञ्चमभागान्तं यावत् । ततः परतः पुरुषवेदस्य बन्धाभावात् चतुर्विधो बन्धः, सोऽपि अनिवृत्तिबादरसम्परायाद्धाया द्वितीयपञ्चमभागान्तं यावत् । ततः परतः संज्वलनक्रोधस्य बन्धाभावात् त्रिको बन्धः, सोऽपि तृतीयपञ्चमभागान्तं यावत् । ततः परतः संज्वलनमानस्य बन्धाभावात् द्विको बन्धः, सोऽपि चतुर्थपञ्चमभागान्तं यावत् । ततः परतः सञ्ज्वलनमायाबन्धाभावात्सञ्ज्वलनलोभस्यैवैकस्य बन्धः, स चानिवृत्तिबादरसंपरायगुणस्थानकचरमसमयं यावदिति ॥२१॥

देसूणपुव्वकोडी नव तेरे सत्तरे उ तेत्तीसा । बावीसे भगतिग ठिसिसेसेसु मुहुत्तंतो ॥२२॥

(स्वो०)—नवत्रयोदशयोरुत्कृष्टा स्थितिर्देशोनपूर्वकोटिमात्रा भवति, यतस्तौ बन्धौ सर्वविरतदेशविरतयोः । सागरोपमाणां त्रयस्त्रिंशत् सप्तदशबन्धो भवति । द्वाविंशतिबन्धकाले भङ्गत्रयं भवति, अनाद्यपर्यवसितः, अनादिसपर्यवसितः–सादिसपर्यवसितः । शेषेषु

पञ्चादिषु बन्धेष्वन्तर्मुहूर्त्तमात्रा स्थितिरुत्कृष्टा इति, इयमेव प्रागुक्तेषु जघन्या, पञ्चादिषु सामयिकी इति, उत्क्रमभणनादेकविंशबन्धे सास्वादनकालो, यतः स तस्यैव भवतीति गाथार्थः ॥२२॥

(मलय०)—सम्प्रत्यमीषामेव बन्धस्थानानां कालप्रमाणमभिधित्सुराह–नवकबन्धे त्रयोदशकबन्धे चोत्कृष्टा स्थितिर्देशोना पूर्वकोटी, यतस्त्रयोदशबन्धो देशविरतौ नवकबन्धश्च सर्वविरतौ, देशविरतिः सर्वविरतिश्चोत्कर्षतो देशोनपूर्वकोटिप्रमाणा, सप्तदशबन्धे चोत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि किञ्चित्समधिकानीतिशेषः, त्रयस्त्रिंशत्सागरोपमाणि हि अनुत्तरसुरेषु प्राप्यन्ते, तत इह च्युत्वा यावदद्यापि देशविरतिं सर्वविरतिं वा न प्रतिपद्यते तावत्सप्तदशबन्ध इति किञ्चित्समधिकानीत्युच्यते। द्वाविंशति बन्धे च भङ्गत्रयम्, तद्यथा–अभव्यानां द्वाविंशतिबन्धोऽनाद्यपर्यवसितः, भव्यानामनादिसपर्यवसितः, सम्यक्त्वपरिभ्रष्टानां सादिसपर्यवसानः, स च जघन्येनान्तर्मुहूर्त्तप्रमाणः, उत्कर्षेण देशोनापार्द्धपुद्गलपरावर्त्तमानः, शेषेषु च पञ्चादिषु बन्धस्थानेषूत्कर्षतोन्तर्मुहूर्त्तप्रमाणा स्थितिः, इदमुत्कर्षतोऽवस्थाने कालमानम्। जघन्यतः पुनर्द्वाविंशतिसप्तदशत्रयोदशनवकबन्धेष्वन्तर्मुहूर्त्तम्, पञ्चादिषु त्वेकसमयम्, तथाहि–उपशमश्रेण्यां पञ्चविधं बन्धमारभ्य द्वितीयसमये कश्चित्कालं कृत्वा देवलोके च गतः सन्नविरतो भवति, अविरतत्वे च सप्तदशबन्ध इत्येकसमयता, एवं चतुर्विधादिष्वपि भावनीयम्। एकविंशतिबन्धस्तु सासादनभावे लभ्यते, ततो यावानेव सासादनभावस्य जघन्यत उत्कर्षतो वा कालस्तावानेवैकविंशतिबन्धस्यापीति कृत्वा सूत्रकृतैकविंशतिबन्धकालो नोक्तः, तत्र जघन्य एकविंशतिबन्धस्य काल एकः समयः, उत्कर्षतः षडावलिका ॥२२॥

इगिदुगचउ एगुत्तरआदसगं उदयमाहु मोहस्स। संजलणवेयहासरइभयदुगुंछातिकसायदिट्ठी य ॥२३॥

॥२३३॥

## मोहनीयस्योदयस्थानानि(९)

| उदय स्थानाङ्क | स्थानान्तर्गतप्रकृतयः | उदयस्थान कतिविधं | | जघन्य कालमान | उत्कृष्ट कालमान |
|---|---|---|---|---|---|
| १ | संज्वलनानां अन्यतमा | ४ विध ( क्रोधादिभिः ) | कषायस्य वेदस्य गुणकार गुणनेन भङ्गा भवन्ति | १ समय | अन्तर्मु० |
| २ | अन्यतमवेदप्रक्षेपे | १२ ,, ( ४ कषाय ३ वेदैः ) | | ,, | ,, |
| ४ | हास्यरतिप्रक्षेपे ( कुयुगल प्र० ) | २४ विध ( क+वे×यु० / ४ ३ २ इति ) | | ,, | ,, |
| ५ | भयप्रक्षेपे | ,, ,, | | ,, | ,, |
| ६ | कुत्सा ,, | ,, ,, | | ,, | ,, |
| ७ | अन्यतमप्रत्याख्यानप्रक्षेपे | ,, ,, | | ,, | ,, |
| ८ | ,, अप्रत्या० ,, | ,, ,, | | ,, | ,, |
| ९ | ,, अनन्ता० ,, | ,, ,, | | ,, | ,, |
| १० | मिथ्यात्वप्रक्षेपे | ,, ,, | | ,, | ,, |

(स्वो०)—एकद्विचतुरेकोत्तरमादशकमुदयमाहुः, मोहनीयस्य नवोदयस्थानान्याचार्या ब्रूयुः, कथं ? सञ्ज्वलनान्यतमस्योदये एकम्, वेदान्यतमोदययुक्तस्य द्वितीयम्, सञ्ज्वलनवेदयोर्हास्यरत्युदययुक्तयोस्तृतीयम्, तत्रैव भयप्रक्षेपाच्चतुर्थम्, जुगुप्साप्रक्षेपात्पञ्चमम्, तृतीयकषायप्रक्षेपात् षष्ठम्, द्वितीयकषायप्रक्षेपात् सप्तमम्, प्रथमकषायप्रक्षेपादष्टमम्, दृष्टिप्रक्षेपान्नवमं स्थानमिति, सामान्यदृष्टिनिर्देशान्मिथ्यात्वं (मिश्रं) सम्यक्त्वं वा यथासम्भवं वाच्यम्, चशब्दात् सास्वादनापूर्वकरणयोः अदृष्टित्वं च मन्तव्यमिति गाथार्थः ॥२३॥

(मलय०)—तदेवमुक्तानि मोहनीयस्य बन्धस्थानानि, संप्रत्युदयस्थानान्याह—एकं द्विकं चतुष्कं, ततः क्रमेणैकोत्तरं यावद्दशकं तावदुदयमुदयस्थानमाहुर्मोहनीयस्य, एतदुक्तं भवति—नव मोहनीयस्योदयस्थानानि, तद्यथा—एकं, द्वे, चत्वारि, पञ्च, षट्, सप्त, अष्टौ, नव, दश, एतान्येवानिवृत्तिबादरसंपरायगुणस्थानकादारभ्य पश्चानुपूर्व्या प्रतिपादयति—'संजलणेत्यादि', संज्वलने वेदे हास्यरतियुगले भयजुगुप्सायां त्रिषु कषायेषु दृष्टौ च प्रक्षिप्तायां क्रमेणैकादीनि नवाप्युदयस्थानानि भवन्ति । इयमत्र भावना—चतुर्णां संज्वलनानामेकतमस्योदये एककमुदयस्थानं, तदेव च वेदत्रयान्यतमवेदोदयप्रक्षेपे द्विकं, तत्रापि हास्यरतियुगलप्रक्षेपे चतुष्कं, तत्रैव भयप्रक्षेपात्पञ्चकं, ततो जुगुप्साप्रक्षेपात् षट्कं, तत्रैव चतुर्णां प्रत्याख्यानावरणकषायाणामन्यतमस्य प्रक्षेपे सप्तकं, तत्रैवाप्रत्याख्यानकषायाणामन्यतमस्य प्रक्षेपे अष्टकं, तत्रैव चतुर्णामनन्तानुबन्धिकषायाणामन्यतमस्य प्रक्षेपे नवकं, तत्रैव मिथ्यात्वप्रक्षेपे दशकमिति ॥२३॥

**दुगआइ दसंतुदया कसायभेया चउव्विहा ते उ । बारसहा वेयवसा अदुगा पुण जुगलओ दुगुणा ॥२४॥**

(स्वो०)—द्विकादयो दशान्ता उदयाः कषायभेदाच्चतुर्विधाः ते तु द्वादशधा वेदवशादद्विकाः पुनः युगलतो द्विगुणा इति पदानि। पदार्थस्तु द्विकोदयाद्या अष्टावुदयाः कषायायां तु क्रोधादीनां चातुर्विध्याच्चतुर्विधा भवन्ति, पुनर्वेदत्रैविध्याद् द्वादशधा भवन्ति, अद्वि-

का द्विकोदयरहिता', शेषाः सप्तोदया भूयो युगलद्वैविध्यात् द्विगुणाश्चतुर्विंशतिभङ्गा भवन्तीति । क्रोधादिचतुष्कं वेदत्रयं युगलद्वय अभ्युपगमाच्चतुर्विंशतिभङ्गा एकद्विकोदयरहितोदयेषु भवन्ति, क्रोधादिभि' पुंवेदोदययुक्तैश्चत्वारः, स्त्रीवेदोदययुक्तैश्च, नपुंसकोदययुक्तैश्च, एवं द्वादश द्विकोदया' । एवं च भङ्गकरणनयैव वेदत्रयस्य बादरकषाये उदय' कथितो भवति, तदनन्तरात् ॥ च प्रथमपञ्चभागे यदा पञ्चमन्यकः, न परत', एकोदयस्य चातुर्विध्यात् । त एव द्वादश द्विगुणा इति भणता अपूर्वकरण यावद्धास्यरत्यरतिशोकानामुदयो दर्शितो भवति । यतस्ते द्वादश द्विकोदया हास्यरतियुक्ताश्चतुष्कोदया भवन्ति, त एव पूर्वोक्ता द्वादश द्विकोदया अरतिशोकोदययुक्ता द्वादश चतुष्कोदया एवं चतुर्विंशति चतुष्कोदया भवन्ति । तत एव चतुर्विंशतिः चतुष्कोदया भययुक्ताः पञ्चोदया भवन्ति, तेऽपि जुगुप्सा युक्ता' षट्कोदया । एवं शेषेष्वपि षट्प्रभृत्या चतुर्विंशति' उदयविशेषा मन्तव्या इति गाथार्थः ॥२४॥

(मलय०)—संप्रति प्रकृत्युदयस्थानभङ्गानयनाय प्रकारमाह-द्विकादयो दशान्ताः दशपर्यन्ता उदयाः प्रत्येकं क्रोधे माने मायायां लोभे च प्राप्यन्ते, इति क्रोधादिकषायभङ्गाश्चतुर्विधा भवन्ति, ते च चतुर्विधाः सन्तः प्रत्येकमेकैकस्मिन् वेदे प्राप्यन्ते इति वेदत्रयभावात् द्वादशधा भवन्ति, द्वादशधा सन्तोऽद्विका.-द्विकोदयरहिता शेषा उदयाः प्रत्येकमेकैकस्मिन् युगले प्राप्यन्ते इति युगलतो द्विगुणा भवन्ति, तेन द्विकोदये द्वादशैव भङ्गाः, शेषेषु तूदयेषु प्रत्येकं चतुर्विंशतिः ॥२४॥

अणसम्मभयदुगुछाण णोदओ सभवे त्ति वा जम्हा। उदया चउवीसा विय एक्केक्कगुणे अओ वद्धहा॥

(स्वो०)— अनन्तानुबन्धिनां मिथ्यादृष्टौ विपाकोदयो वा भवति, यतस्तद्बुद्धलकस्य सम्यग्दृष्टेर्मिथ्यात्वप्राप्तस्यावलिकामात्रं कालं नोदयः स्यात् , सम्यक्त्वोदयोऽप्यविरतादीनामौपशमिकक्षायिकदृष्टीनां न भवति, वेदकदृष्टीनां भवत्येव, भयजुगुप्सयोस्तु मिथ्याद-

दृष्टयादिषु अपूर्वकरणान्तेष्वध्रुवोदयित्वात् भवत्युदयो न वा, अतोऽनेन कारणेनोदयास्तद्भवविकल्पाश्चतुर्विंशतयश्चैकैकगुणे बहुधा भवेयुरिति गाथार्थः ॥२५॥

(मलय०)—सा च चतुर्विंशतिरेकैकस्मिन् गुणस्थानके अनेकधा प्राप्यते यत आह—यस्मात्कारणादनन्तानुबन्धिनां वेदकसम्यक्त्वस्य भयजुगुप्सयोः कदाचिदुदयो न भवति, कदाचित् संभवेदपि वा। तथाहि—प्रथमतः सम्यक्त्वप्रभावेणानन्तानुबन्धिन उद्वल्य भूयोऽपि परिणामह्रासान्मिथ्यात्वं प्रतिपन्नस्य मिथ्यादृष्टेर्मिथ्यात्वप्रत्ययत उपचितानामनन्तानुबन्धिनामावलिकामात्रमुदयो न भवति, शेषकालं तु भवत्येव। अविरतादीनामप्यौपशमिकसम्यग्दृष्टीनां क्षायिकसम्यग्दृष्टीनां वा वेदकसम्यक्त्वस्योदयो न भवति, शेषाणां तु भवति। भयजुगुप्सयोस्त्वध्रुवोदयत्वात्सर्वेष्वपि मिथ्यादृष्टयादिष्वपूर्वकरणपर्यवसानेषु कदाचिदुदयो भवति कदाचिन्नेति। तेन कारणेन एकैकस्मिन् गुणे—गुणस्थानके, उदयास्तद्भाविनश्च भङ्गाश्चतुर्विंशतयो 'बहुधा'—बहुप्रकारा भवन्ति ॥२५॥

तदेवानेकविधत्वं दर्शयति—

**मिच्छे सगाइचउरो सासणमीसे सगाइ तिण्णुदया। छप्पंचचउरपुव्वा तिअ चउरो अविरयाईणं॥२६॥**

(स्वो०)—मिथ्यादृष्टौ सप्ताद्याश्चत्वारो भवन्त्युदयाः सप्त अष्ट नव दशेति। सास्वादनमिश्रयोः सप्तादयस्त्रय उदयाः सप्ताष्ट नवेति। अविरते षडाद्याश्चत्वारः, षट् सप्ताष्ट नवेति। देशविरते पञ्चाद्याश्चत्वारः पञ्च षट्सप्ताष्टेति। प्रमत्ते चतुष्काद्याश्चत्वारः चतुष्पञ्च षट् सप्तेति। अप्रमत्तेऽपि एवमेव चत्वारो गुणं प्रतिविशेषः। अपूर्वकरणेऽपि चतुष्काद्यास्त्रय उदयास्तस्य वेदकसम्यक्त्वाभावादिति। एत एवोदया भाव्यन्ते—अनन्तानुबन्धिरहितस्त्रिविधः क्रोधो मानो माया लोभो वा वेदो युग्मं मिथ्यात्वमेष सर्वजघन्यो मिथ्यादृष्टौ सप्तो- ॥२३५॥

दय', भङ्गानामत्रैका चतुर्विंशतिः। स एव भयोदययुक्तोऽष्टोदयो भवति, अथवा जुगुप्सया, अथवानन्तानुबन्धिना युक्तो सप्तोदयोऽष्टोदयो भवति, अत्र भङ्गानां चतुर्विंशतीनां त्रितयम्। भयजुगुप्सायुतः सप्तोदयो नवोदयो भवति, अथवा भयानन्तानुबन्धियुक्तोऽथवा जुगुप्सानन्तानुबन्धियुक्तो नवोदयो भवति, अत्रापि भङ्गानां चतुर्विंशतित्रिकम्। भयजुगुप्सानन्तानुबन्धिना युक्तः सप्तोदयो दशोदयो भवति, अत्रैका भङ्गानां चतुर्विंशतिः। एवं चतुर्ष्वप्युदयेष्वष्टौ चतुर्विंशतयो मिथ्यादृष्टाविति। सास्वादने चत्वारः क्रोधाः माना वा, एवं माया लोभा वा, वेदो, युग्ममिति सप्तोदयः, भङ्गानामेका चतुर्विंशतिः। भयप्रक्षेपात् स एवाष्टोदयो, जुगुप्साप्रक्षेपाद्वाष्टोदयोऽत्र भङ्गानां चतुर्विंशतिद्विकम्। उभययुक्तसप्तोदयो नवोदयो भवति, भङ्गानामेका चतुर्विंशतिः। एवं सास्वादने चतस्रश्चतुर्विंशतयः। सम्यग्मिथ्यादृष्टौ अनन्तानुबन्ध्युदयो नास्ति, तत्स्थाने सम्यग्मिथ्यात्वस्य (प्रक्षेपो) भवति, शेषं सास्वादनवदिति। अविरतस्य क्रोधादीनामन्यतमत्रय वेदो युग्ममिति षट्कोदयोऽत्रैका चतुर्विंशतिः। स च भययुक्तः सप्तोदयोऽथवा जुगुप्सया युक्तोऽथवा वेदकसम्यक्त्वेन युक्तः सप्तोदयो भवति, अत्र त्रयं चतुर्विंशतीनाम्। भयजुगुप्साप्रक्षेपात् स एवाष्टोदयो भवति, भयसम्यक्त्वप्रक्षेपाद्वा जुगुप्सासम्यक्त्वप्रक्षेपाद्वाष्टोदयोऽत्र तिस्रो भङ्गानां चतुर्विंशतयः। षट्कोदयो भयजुगुप्सासम्यक्त्वयुक्तो नवोदयो भवति, भङ्गानामत्रैका चतुर्विंशतिरेव चतुर्ष्वप्युदयेष्वष्टौ चतुर्विंशतयः। देशविरते एत एवोदयाः द्वितीयकषायोदयरहिता वाच्याः। प्रमत्तेऽप्रमत्ते च द्वितीय (तृतीय) कषायोदयरहिता अविरतोदयास्तथैव वाच्याः। अपूर्वकरणे एका चतुष्कोदयचतुर्विंशति, द्वे पञ्चोदयचतुर्विंशतिके, एका षट्कोदयचतुर्विंशतिरिति गाथार्थः ॥२६॥

(मलय०)—तानेवोदयान् दर्शयति-मिथ्यादृष्टौ सप्तादयो दशपर्यन्ताश्चत्वार उदया भवन्ति, तद्यथा—सप्ताष्टनवदश। तत्र

मिथ्यात्वं, अप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनक्रोधादीनामन्यतमे त्रयः क्रोधादिकाः, यत एकस्मिन् क्रोधे वेद्यमाने सर्वेऽपि क्रोधा वेद्यन्ते, समानजातीयत्वात् । एवं मानमायालोभा अपि द्रष्टव्याः । न च युगपत्क्रोधमानमायालोभानामुदयः परस्परविरोधादित्यन्यतमे त्रयो गृह्यन्ते । तथा त्रयाणां वेदानामन्यतमो वेदः, हास्यरतियुगलाऽरतिशोकयुगलयोरन्यतरद्युगलम् , एतासां सप्तानां प्रकृतीनां मिथ्यादृष्टावुदयो ध्रुवः । अत्र भङ्गाश्चतुर्विंशतिः, तथाहि–हास्यरतियुगले अरतिशोकयुगले च प्रत्येकमेकैको भङ्गः प्राप्यते, इति द्वौ भङ्गौ, तौ च प्रत्येकं त्रिष्वपि वेदेषु प्राप्येते इति त्रिभिर्गुणितौ जाताः षट्, ते च प्रत्येकं क्रोधादिषु चतुर्षु प्राप्यन्ते इति षट् चतुर्भिर्गुणिता जाता चतुर्विंशतिः, तस्मिन्नेव सप्तके भये वा जुगुप्सायां अनन्तानुबन्धिनि वा प्रक्षिप्ते अष्टानामुदयः. अत्र त्रयाणामादौ प्रत्येकमेकैका चतुर्विंशतिः प्राप्यते, इति तिस्रश्चतुर्विंशतयः । ननु मिथ्यादृष्टेरवश्यमनन्तानुबन्धिनामुदयः संभवति, तत्कथमिह मिथ्यादृष्टिः सप्तोदये अष्टोदये वा कस्मिंश्चिदनन्तानुबन्ध्युदयरहितः प्राप्यते ? उच्यते–इह सम्यग्दृष्टिना सता केनचित्प्रथमतोऽनन्तानुबन्धिनो विसंयोजिताः, एतावतैव च स विश्रान्तो, न मिथ्यात्वादिक्षयाय उद्युक्तवान् , तथाविधसामग्र्यभावात्, ततः कालान्तरे मिथ्यात्वं गतः सन् मिथ्यात्वप्रत्ययतो भूयोऽपि अनन्तानुबन्धिनो बध्नाति, ततो बन्धावलिका यावन्नाद्याप्यतिक्रामति तावदुदयो न भवति, बन्धावलिकायां त्वतिक्रान्तायां भवेदपि । ननु कथं बन्धावलिकातिक्रमेऽप्युदयः संभवति, यतोऽबाधाकालक्षये सत्युदयः, अबाधाकालश्चानन्तानुबन्धिनां जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतश्चत्वारि वर्षसहस्राणीति ? नैष दोषः, यतो बन्धसमयादारभ्य तेषां तावत्सत्ता भवति, सत्तायां च सत्यां बन्धकालं यावत्पतद्ग्रहता, पतद्ग्रहतायां च सत्यां शेषसमानजातीयप्रकृतिदलिकसंक्रान्तिः, संक्रान्तं च पतद्ग्रहप्रकृतिरूपतया परिणमते, ततः संक्रमावलिकायामतिक्रान्तायामुदयः, ततो बन्धावलिकायामतीतायामुदयोऽभिधीयमानो न विरुध्यते । तथा तस्मिन्नेव

सप्तके भयजुगुप्सयोरथवा भयाऽनन्तानुबन्धिनोर्यद्वा जुगुप्साऽनन्तानुबन्धिनोः प्रक्षिप्तयोर्नवानामुदयः, तत्राप्येकैकस्मिन् विकल्पे प्रागुक्त-क्रमेण भङ्गकानां चतुर्विंशतिः प्राप्यते इति तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव सप्तके भयजुगुप्सानन्तानुबन्धिषु प्रक्षिप्तेषु दशाना-मुदयः, अत्रैकैव भङ्गकानां चतुर्विंशतिः। सर्वसंख्यया मिथ्यादृष्टावष्टौ चतुर्विंशतयः। 'सासणमीसे सगाइतिण्णुदया'—सासादने मिश्रे च प्रत्येकं सप्तादयो नवपर्यन्तास्त्रय उदया भवन्ति, तद्यथा—सप्त, अष्टौ, नव। तत्राऽनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलन क्रोधादिनामन्यतमे चत्वारः क्रोधादिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति सप्त। एतासां सप्तानां प्रकृतीनामुदयः सासादने ध्रुवः। अत्र प्रागुक्तक्रमेण भङ्गकानामेका चतुर्विंशतिः। तथा तस्मिन्नेव सप्तके भये वा जुगुप्सायां वा प्रक्षिप्तायामष्टानामुदयः, अत्र द्वे चतुर्विंशती भङ्गकानाम्। भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोर्नवानामुदयः, अत्र चैका भङ्गकानां चतुर्विं-शतिः। सर्वसङ्ख्यया सासादने चतस्रश्चतुर्विंशतयः। तथा सम्यग्मिथ्यादृष्टौ अनन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादयः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलं सम्यग्मिथ्यात्वं चेति सप्तानां प्रकृतीनामुदयो ध्रुवः। अत्र प्रागुक्तक्रमेण भङ्गका-नामेका चतुर्विंशतिः। अस्मिन्नेव सप्तके भये वा जुगुप्सायां वा प्रक्षिप्तायामष्टानामुदयः, अत्र द्वे चतुर्विंशती भङ्गकानाम्। भयजु-गुप्सयोस्तु युगपत्प्रक्षिप्तयोर्नवानामुदयः, अत्र चैका चतुर्विंशतिर्भङ्गकानाम्। सर्वसङ्ख्यया सम्यग्मिथ्यादृष्टौ चतस्रश्चतुर्विंशतयः। तथा 'अविरयाईणं'—अविरतसम्यग्दृष्ट्यादीनां यथासङ्ख्यं षडादिपूर्वाः प्रत्येकं चत्वार उदया भवन्ति। तत्राविरतसम्यग्दृष्टौ षडा-दयश्चत्वार उदयाः, तद्यथा—षट् सप्त अष्टौ नव, तत्रौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा अविरतसम्यग्दृष्टेरनन्तानुबन्धिवर्जास्त्रयोऽ-न्यतमे क्रोधादिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति षण्णामुदयो ध्रुवः, अत्रापि प्रागिव भङ्गकानामेका

चतुर्विंशतिः। अस्मिन्नेव षट्के भये वा जुगुप्सायां वा वेदकसम्यक्त्वे वा प्रक्षिप्ते सप्तानामुदयः, अत्र भयादिषु प्रत्येकमेकैका चतुर्विंशतिः प्राप्यते, इति तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव षट्के भयजुगुप्सयोर्भयवेदकसम्यक्त्वयोर्जुगुप्सावेदकसम्यक्त्वयोर्वा प्रक्षिप्तयोरष्टानामुदयः, अत्राप्येकैकस्मिन् विकल्पे भङ्गकानां चतुर्विंशतिः प्राप्यते, इति तिस्रश्चतुर्विंशतयः। भयजुगुप्सावेदकसम्यक्त्वेषु युगपत्प्रक्षिप्तेषु नवानामुदयः, अत्र चैका भङ्गकानां चतुर्विंशतिः। सर्वसङ्ख्यया अविरतसम्यग्दृष्टावष्टौ चतुर्विंशतयः। देशविरते पञ्चादयश्चत्वार उदयास्तद्यथा—पञ्च षट् सप्ताष्टौ। तत्रौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा देशविरतस्य प्रत्याख्यानावरणसंज्वलनक्रोधादीनामन्यतमौ द्वौ क्रोधादिकौ, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति पञ्च, एतासां पञ्चानां प्रकृतीनामुदयो देशविरतेर्ध्रुवः, अत्र प्रागुक्तक्रमेण भङ्गकानामेका चतुर्विंशतिः। भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते षण्णामुदयः, अत्र भयादिभिस्त्रयो विकल्पाः, एकैकस्मिंश्च विकल्पे भङ्गकानां चतुर्विंशतिरिति तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव पञ्चके भयजुगुप्सयोरथवा भयवेदकसम्यक्त्वयोर्यद्वा जुगुप्सावेदकसम्यक्त्वयोः प्रक्षिप्तयोः सप्तानामुदयः, अत्रापि तिस्रश्चतुर्विंशतयो भङ्गकानाम्। भयजुगुप्सावेदकसम्यक्त्वेषु पुनर्युगपत्प्रक्षिप्तेषु अष्टानामुदयः, अत्र चैका चतुर्विंशतिर्भङ्गकानाम्। सर्वसंख्यया देशविरतेरष्टौ चतुर्विंशतयः। प्रमत्तसंयते चतुरादयश्चत्वार उदयास्तद्यथा—चतस्रः पञ्च षट् सप्त। तत्र प्रमत्तसंयतस्यौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा संज्वलनक्रोधादीनामन्यतम एकः क्रोधादिः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति चतस्रः, एतासां चतसृणां प्रकृतीनामुदयः प्रमत्तसंयते ध्रुवः, अत्रैका भङ्गकानां चतुर्विंशतिः। अस्मिन्नेव चतुष्के भये वा जुगुप्सायां वा वेदकसम्यक्त्वे वा प्रक्षिप्ते पञ्चानामुदयः, अत्र भङ्गकानां तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव चतुष्के भयजुगुप्सयोर्वा भयवेदकसम्यक्त्वयोर्वा जुगुप्सा-

वेदसम्यक्त्वयोर्वा प्रक्षिप्तयोः षण्णामुदयः, अत्रापि तिस्रश्चतुर्विंशतयो भङ्गकानाम्। भयजुगुप्सावेदकसम्यक्त्वेषु तु युगपत्प्रक्षिप्तेषु सप्तानामुदयः, अत्र भङ्गकानामेका चतुर्विंशतिः। सर्वसंख्यया प्रमत्तेऽष्टौ चतुर्विंशतयः। एवमेवाप्रमत्तसंयतेऽपि चतुरादयस्त्रयस्त्वार उदया अष्टौ चतुर्विंशतयः। अपूर्वकरणे चतुरादयस्त्रय उदयास्तद्यथा–चत्वारः पञ्च षट्। तत्रापूर्वकरणस्यौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा चतुर्णां सञ्ज्वलनानामन्यतम एकः क्रोधादिः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति चतसृणामुदयः, अत्रैका भङ्गकानां चतुर्विंशतिः। अस्मिन्नेव चतुष्के भये वा जुगुप्सायां वा प्रक्षिप्तायां पञ्चानामुदयः, अत्र द्वे चतुर्विंशती। भयजुगुप्सयोस्तु (युगपद्) प्रक्षिप्तयोः षण्णामुदयः, अत्र चैका चतुर्विंशतिर्भङ्गकानाम्। सर्वसंख्ययाऽपूर्वकरणे चतस्रश्चतुर्विंशतयः। इहाप्रमत्तोदया अपूर्वकरणोदयाश्च प्रमत्तोदयापेक्षया गुणस्थानकभेदमात्रेणैव भिन्नाः, न परमार्थतः, इति प्रमत्तोदयग्रहणेनैव ते गृहीता द्रष्टव्याः, अत एवाग्रेऽप्रमत्तोदयापूर्वकरणोदयभाविन्यश्चतुर्विंशतयो न पृथग्गणयिष्यन्ते ॥२६॥

दसगाइसु चउवीसा एक्काछिक्कारदससगचउक्क। एक्का य नवसयाइं सट्ठाइं एवमुदयाण ॥२७॥

(स्वो०)—दशकादिषु चतुष्कान्तेषूदयेषु चतुर्विंशतयो यथासंख्येन मन्तव्याः, दशकोदये एका, नवोदये षट्, अष्टोदये एकादश, सप्तोदये दश, षडुदये सप्त, पञ्चोदये चतुर्विंशतीनां चतुष्कम्, चतुष्कोदये एका चतुर्विंशतिरिति। एवं चत्वारिंशच्चतुर्विंशतयो भवन्ति। ताश्च चतुर्विंशतिभिरुदयैर्गुणिता नवशतानि षष्ठ्यधिकान्युदयानां भवन्ति। प्रागुदिताश्चतुर्विंशतीः भावयति–मिथ्यादृष्टेर्मोहनीय[1]स्मो-दये दशकाख्ये एका चतुर्विंशतिर्भवति। नवकोदये तु मिथ्यादृष्टेः तिस्रः चतुर्विंशतयः, सास्वादनमिश्राविरतानामेकैका, एवं षट्चतुर्विंशतय इति, अष्टोदये मिथ्यादृष्ट्यविरताः तिस्रः तिस्रः, सास्वादनमिश्रयोर्द्वे द्वे, देशविरतस्यैका, एवमेकादश चतुर्विंशतयो

भवन्ति। सप्तोदये मिथ्यादृष्टिसास्वादनमिश्राप्रमत्तानामेकैका, अविरतदेशविरतयोस्तिस्रस्तिस्रः, एवं दश चतुर्विंशतयः। षडुदये अविरतस्यैका देशविरतप्रमत्तयोस्तिस्रस्तिस्रः, एवं सप्त चतुर्विंशतयः। पञ्चोदये देशविरतस्यैका, तिस्रः प्रमत्तस्यैवं चतस्रश्चतुर्विंशतयः। चतुष्कोदये प्रमत्तस्यैका चतुर्विंशतिरिति गाथार्थः ॥२७॥

(मलय०)—संप्रति दशोदयादिषु यावत्यश्चतुर्विंशतयो भवन्ति तावतीर्निर्दिदिक्षुराह–दशोदयादिषु चतुरुदयपर्यन्तेषूदयेषु यथा संख्यं भङ्गकानां चतुर्विंशतिरेका, षट्, एकादश, दश, सप्त, चतस्रः, एका चेति भवन्ति। तत्र दशके एका चतुर्विंशतिर्मिथ्यादृष्टौ। नवोदये षट्, तत्र तिस्रो मिथ्यादृष्टौ, सासादने मिश्रे अविरतौ चैकैका। अष्टोदये एकादश, तद्यथा–तिस्रो मिथ्यादृष्टौ, द्वे सासादने, द्वे मिश्रे, तिस्रोऽविरतसम्यग्दृष्टौ, एका देशविरते। सप्तोदये दश, तद्यथा–मिथ्यादृष्टिसासादनमिश्रप्रमत्तसंयतेष्वेकैका, अविरतसम्यग्दृष्टौ देशविरते च तिस्रस्तिस्रः। षडुदये सप्त, तद्यथा–अविरतसम्यग्दृष्टावेका, देशविरते प्रमत्ते च तिस्रस्तिस्रः। पञ्चकोदये चतस्रः, तत्र देशविरतस्यैका, प्रमत्तस्य तिस्रः। चतुष्कोदये एका, सा च प्रमत्तस्य। इति सर्वसंख्यया चत्वारिंशच्चतुर्विंशतयः, ततश्चत्वारिंशच्चतुर्विंशत्या गुण्यते, जातानि उदयविकल्पानां नवशतानि षष्ट्यधिकानि ॥२७॥

**बारस चउरो तिदुएक्कगा उ पंचाइ बन्धगे उदया। अबन्धगे वि एक्को तेसीया नवसया एवं ॥२८॥**

(स्वो०)—द्वादश पञ्चबन्धके द्विकोदयाः, चतुर्बन्धके चत्वार एकोदयाः, त्रिबन्धके त्रयः एकोदयाः, द्विबन्धके द्वावेकोदयौ, एकबन्धे एक एकोदयः, अबन्धकेऽप्येक एकोदयः, एभिस्त्रयोविंशतिभिरुदयैर्युक्ताः प्रागुदया नवशतानि त्र्यशीत्यधिकानि उदयानां भवन्ति। यद्यपि सञ्ज्वलनानामुदयं प्रति भेदो नास्ति तथापि बन्धकभेदाद्भेदः, तुशब्दात् यद्यप्यत्राप्रमत्तापूर्वकरणौ गुणं प्रति भिन्नौ,

तथापि नवकबन्धबन्धकत्वात् न बन्धोदयाभ्यां भिन्नावतो बन्धभेद एव विवक्षितः, नैवात्र गुणभेद इति गाथार्थः ॥२८॥

(मलय०)—तथा-पञ्चादिषु बन्धस्थानेषु यथासङ्ख्य द्वादश चत्वारस्त्रयो द्वौ एककमेत्युदयविकल्पा भवन्ति । तथाहि-पञ्चविधबन्धकाले द्वयोः प्रकृत्योरुदय', तद्यथा-चतुर्णां संज्वलनानामन्यतम एकः क्रोधादिः, त्रयाणां वेदानामन्यतमो वेदः, अतस्त्रिभिर्वेदैश्चतुर्भि' संज्वलनैर्द्वादश भङ्गाः । चतुर्विधबन्धे त्वेककोदय', तथाहि-चतुर्विधो बन्धो भवति पुरुषवेदबन्धव्यवच्छेदे सति, पुरुषवेदस्य च बन्धोदयौ युगपद्व्यवच्छिद्येते, ततश्चतुर्विधबन्धकाले एककोदय एव, स च चतुर्णां संज्वलनानामन्यतमः, अत्र च चत्वारो भङ्गाः, यतः कोऽपि संज्वलनक्रोधेनोदयमागतेन श्रेणिं प्रतिपद्यते, कोऽपि संज्वलनमानेन, कोऽपि संज्वलनमायया, कोऽपि संज्वलनलोभेनेति चत्वारो भङ्गाः । संज्वलनक्रोधबन्धव्यवच्छेदे त्रिविधो बन्धः, तत्राप्येकविध उदयः, नवरं संज्वलनक्रोधवर्जानां त्रयाणामन्यतम इति वक्तव्यः, अत्र त्रयो भङ्गाः । संज्वलनमानबन्धव्यवच्छेदे द्विविधो बन्धः, अत्राप्येकविध उदयः, केवलमेष संज्वलनमायालोभयोरन्यतरो द्रष्टव्यः, अत्र द्वौ भङ्गौ । संज्वलनमायाबन्धव्यवच्छेदे एकविधो बन्धः, तत्राप्युदय एकविधः, स च संज्वलनलोभोदयरूपोऽवगन्तव्यः, अत्रैक एव भङ्गः । यद्यपि पञ्चादिषु बन्धस्थानेषु संज्वलनानामुदयमधिकृत्य न विशेषः, तथापि बन्धस्थानापेक्षया भेदोऽस्तीति भङ्गाः पृथग् गण्यन्ते । प्रमत्ताप्रमत्तापूर्वकरणानां तु बन्धस्थानापेक्षयापि न भेदः, सर्वेषामपि नव बन्धकत्वात्, अतस्तेषां भङ्गाः पार्थक्येन न गण्यन्ते स्म । तथा अबन्धकेऽपि सूक्ष्मसंपराये एककोदयः, सर्वसङ्ख्यया उदयविकल्पा इमे त्रयोविंशतिः, एते च पूर्वोदयविकल्पेषु प्रक्षिप्यन्ते, जातानि नवशतानि त्र्यशीत्यधिकानि ॥२८॥

कषाय ४ वेद ३ युगल २ गुणनेन भङ्गा भवन्ति

| उदय स्थानानि | प्रकृतयः<br>मिथ्या० अनं० ४ अप्र० ४ प्र० ४ सं० ४ वे० ३ युग० ४ भय जुगुप्सा | चतुर्विंशतिभंगा | उदय स्थानानि | प्रकृतयः<br>मिथ्या० अनं० ४ अप्र० ४ प्र० ४ सं० ४ वे० ३ युग० ४ भय जुगुप्सा | चतुर्विंशतिभंगाः |
|---|---|---|---|---|---|
| ७ | १-०-१-१-१-१-२-०-० | २४ | ७ | ०-१-१-१-१-१-२-०-० | २४ |
| ८ | १-०-१-१-१-१-२-१-० | २४ | ८ | ०-१-१-१-१-१-२-०-१ | २४ |
| ८ | १-०-१-१-१-१-२-०-१ | २४ | ८ | ०-१-१-१-१-१-२-१-० | २४ |
| ८ | १-१-१-१-१-१-२-०-० | २४ | ९ | ०-१-१-१-१-१-२-१-१ | २४ |
| ९ | १-०-१-१-१-१-२-१-१ | २४ | | इति सास्वादने ४ चतुर्विंशतयः | ९६ भंगाः |
| ९ | १-१-१-१-१-१-२-१-० | २४ | ७ | मिश्रे-०-१-१-१-१-२-०-० | २४ |
| ९ | १-१-१-१-१-१-२-०-१ | २४ | ८ | ,,-०-१-१-१-१-२-१-० | २४ |
| १० | १-१-१-१-१-१-२-१-१ | २४ | ८ | ,,-०-१-१-१-१-२-०-१ | २४ |
| | | | ९ | ,,-०-१-१-१-१-२-१-१ | २४ |
| | इति मिथ्यात्वे ८ चतुर्विंशतयः | १९२ भंगाः | | इति मिश्रे ४ चतुर्विंशतयः | ९६ भंगाः |

| | | | |
|---|---|---|---|
| ४ | ०-०-०-०-१-१-२-०-० | २४ | औप० क्षा० सम्यग्दृशां |
| ५ | ०-०-०-०-१-१-२-१-० | २४ | ,, ,, ,, |
| ५ | ०-०-०-०-१-१-२-०-१ | २४ | ,, ,, ,, |
| ५ | स०-०-०-०-१-१-२-०-० | २३ | क्षयोप० ,, |
| ६ | ,,-०-०-०-१-१-२-१-० | २४ | ,, ,, |
| ६ | ,,-०-०-०-१-१-२-०-१ | २४ | ,, ,, |
| ६ | ०-०-०-०-१-१-२-१-१ | २४ | औप० क्षा० ,, |
| ७ | स०-०-०-०-१-१-२-१-१ | २४ | क्षयोप० ,, |
| | इति प्रमत्ते ८ चतुर्विंशतयः | १९२ भं० | |
| | अप्रमत्ते चापि ता एव | ,, | |
| ४ | ०-०-०-०-१-१-२-०-० | २४ | औप० क्षा० ,, |
| ५ | ०-०-०-०-१-१-२-१-० | २४ | ,, ,, ,, |
| ५ | ०-०-०-०-१-१-२-०-१ | २४ | ,, ,, ,, |
| ६ | ०-०-०-०-१-१-२-१-१ | २५ | ,, ,, ,, |
| | इति अपूर्वकरणे ४ चतुर्विंशतयः | ९६ | |

अत्र अप्रमत्ताऽपूर्वकरणयोः चतुर्विंशतयः प्रमत्तात् पृथक् नावसेयाः, तदंतर्गतत्वात् । अग्रे चतुर्विं० न प्राप्यन्ते

पूर्वोक्ताः चतुर्विंशतयः क्व प्राप्यन्ते तन्निरूप्यन्ते

| बन्धकाले | चतुर्विंशतयः | मिथ्यात्वे चतु० | सास्वादने " | मिश्रे " | सम्यक्त्वे " | देशविरते " | प्रमत्ते " | भंगाः |
|---|---|---|---|---|---|---|---|---|
| १०के | १ | १ | ० | ० | ० | ० | ० | २४ |
| ९ " | ६ | ३ | १ | १ | १ | ० | ० | १४४ |
| ८ " | ११ | ३ | २ | २ | ३ | १ | ० | २६४ |
| ७ " | १० | १ | १ | १ | ३ | ३ | १ | २४० |
| ६ " | ७ | ० | ० | ० | १ | ३ | ३ | १६८ |
| ५ | ४ - | ० | ० | ० | ० | १ | ३ | ९६ |
| ४ | १ | ० | ० | ० | ० | ० | १ | २४ |
| | ४० चतुर्विं० | | | | | | | ९६० भंगाः |

प्रमत्तान्तर्गतत्वात् अप्रमत्तापूर्वकरणयोः न भिन्नाः चतुर्विंशतयः

(बंधकाले) उदयविकल्पाः (भंगाः) २३

| बंधे | उदयप्रकृतयः | | भंगाः | भंगोत्पत्ति |
|---|---|---|---|---|
| | संज्व० | वेद० | | |
| ५ | १ | १ | १२ | क०४×वे०३=१२ |
| ४ | १ (१मतांतरे) | | ४(१२म) | संज्व० प्रत्यकमेल (सं०४× वे०३=१२मता०) |
| ३ | १ | | ३ | संज्व०त्रिकेन (मान मा०-लो०) |
| २ | १ | | २ | स० माया-लोभेन |
| १ | १ | | १ | स० लोभेन |
| ० | १ | | १ | " |
| | | | २३ | पूर्वोक्त ९६०मिलने ९८३ सर्वभं- |

चउबन्धगे वि बारस दुगोदया जाण तेहि छूढेहिं । बन्धगभेएणेवं पंचूणसहस्समुदयाणं ॥२९॥

(स्वो०)—चतुर्विधबन्धकस्याद्यविभागे वेदानामुदयं केचिदिच्छन्ति, अतश्चतुर्बन्धकेऽपि द्वादश द्विकोदयान् जानीहि, अथवा येषां मतेन तैस्तु 'छूढैः'-प्रक्षिप्तैः, पूर्वोदयेष्विति गम्यते, तेषां बन्धकभेदेनैवं पञ्चोनं सहस्रं मोहनीयस्योदयानां भवतीति गाथार्थः ॥२९॥

(मलय०)—अत्रैव मतान्तरमाह-इह केचिदाचार्याश्चतुर्विधबन्धस्याप्याद्यविभागे वेदोदयमिच्छन्ति, ततश्चतुर्विधबन्धकेऽपि तन्मतेन द्विकोदयभङ्गान् त्रिभिर्वेदैश्चतुर्भिः संज्वलनैर्द्वादश जानीहि, ते च बन्धकभेदेन भिन्नाः, तथाहि-पाश्चात्याः पञ्चविधबन्धकसत्काः, इमे च चतुर्विधबन्धकसत्काः, तत एवं बन्धकभेदेन भिन्नैस्तैरेतैर्द्वादशभिर्भङ्गैः पूर्वोदयविकल्पेषु मध्ये प्रक्षिप्तैरुदयानाम्-उदयविकल्पानां पञ्चोनं सहस्रं भवति, नवशतानि पञ्चनवत्यधिकानि भवन्तीत्यर्थः। यदा पुनर्बन्धकभेदेन भङ्गानां भेदो न विवक्ष्यते तथा ये पञ्चविधबन्धे ये च चतुर्विधबन्धे द्विकोदयभङ्गास्ते एकरूपा एवेति तदा द्वादशैव सर्वसङ्ख्यया द्विकोदयभङ्गाः, तथा ये एककोदयभङ्गास्तेऽपि बन्धस्थानभेदेऽप्येकरूपा एवेति परमार्थतश्चत्वारः, तत एतेषु षोडशभङ्गेषु पूर्वोदयविकल्पेषु षष्ट्यधिकेषु नवशतप्रमाणेषु मध्ये प्रक्षिप्तेषु षट्सप्तत्यधिकानि नवशतान्युदयविकल्पानां भवन्ति ॥२९॥

बारसदुगोदएहिं भंगा चउरो य संपराएहिं । सेसा तेच्चिय भंगा नवसयछावत्तरा एवं ॥३०॥

(स्वो०)—द्वादश द्विकोदयानां भङ्गाः-प्रकाराः, चत्वारः सम्परायाणां-कषायाणां क्रोधादीनां, षष्ठ्यर्थे तृतीया, एते षोडश भेदाः षष्ट्यधिकनवशतयुक्ताः षट्सप्तत्यधिकानि नवशतानि मोहनीयस्योदयानां भवन्ति, शेषास्त एव भङ्गाः-प्रकाराः, यद्युदयविवक्षैवाङ्गी-

क्रियते, न बन्धकगुणविशेषविवक्षेति गाथार्थः ॥३०॥

(मलय०)—तथा चाह—अत्र षष्ठ्यर्थे तृतीया, ततोऽयमर्थः—द्वादश भङ्गा द्विकोदययोः, चत्वारः 'संपरायाणां'—सञ्ज्वलनानां शेषा उदयविकल्पास्त एव पूर्वोक्ताः पञ्चाधिकनवशतप्रमाणाः, तत एव सर्वसंख्यया उदयविकल्पानां नव शतानि पञ्चसप्तत्यधिकानि भवन्ति ॥३०॥

गुणविवक्षया मोहनीयोदयानाह—

मिच्छाइ अप्पमत्तयाण अट्ठट्ठ होंति उदयाणं । चउवीसाओ सासणमीसअपुव्वाण चउ चउरो ॥३१॥

चउवीसगुणा एए बायरसुहुमाण सत्तरसअण्णे । सव्वेसु वि मोहुदया पण्णसट्ठा बारससयाओ ॥३२॥

(स्वो०)—मिथ्यादृष्टेर्दशकसप्तकोदययोरेकैका चतुर्विंशतिरुदयानाम्, नवाष्टोदययोस्तिस्रस्तिस्रः, एवमष्टौ चतुर्विंशतयः। अविरतस्य नवषट्कोदययोरेकैका सप्ताष्टोदययोस्तिस्रस्तिस्रः, एवमष्टौ चतुर्विंशतयः । देशविरतस्य पञ्चाष्टोदययोरेकैका, षट्कसप्तोदययोस्तिस्रस्तिस्रः, एवमष्टौ चतुर्विंशतयः । प्रमत्तस्याप्रमत्तस्य वा चतुष्कसप्तोदययोरेकैका, षट्पञ्चोदययोस्तिस्रस्तिस्रः, एव अष्टावष्टौ चतुर्विंशतयः । अपूर्वकरणस्य चतुष्षट्कोदययोरेकैका, द्वे पञ्चोदये, चतस्र एव चतुर्विंशतयः । सास्वादनस्य सम्यग्मिथ्यादृष्टेश्च नवसप्तोदययोरेकैका, द्वे अष्टोदये, एवं चतस्रश्चतस्रश्चतुर्विंशतयः । एवं द्विपञ्चाशदुदयानां चतुर्विंशतयो मिलिताः सर्वा अपि भवन्तीति गाथार्थः । चतुर्विंशतिभिरुदयैर्गुणाः सन्तो द्विपञ्चाशच्चतुर्विंशतयो द्वादश शतानि अष्टचत्वारिंशदधिकानि भवन्त्युदयानाम्, बादर

सूक्ष्मकषाययोः सप्तदशोदयाः, द्वादश द्विकोदयाश्चत्वार एकोदया बादरकषायस्य, सूक्ष्मसम्परायस्यैक-एकोदयः, एते सर्वेऽपि सर्वेष्वपि गुणस्थानेषु मोहनीयस्योदयाः पञ्चषष्टयधिकद्वादशशतप्रमाणा भवन्ति, तुशब्दादत्र गुणं प्रतिविशेषो न तूदयबन्धकत्वकृतो विशेष इति गाथार्थः ॥३१-३२॥



(मलय०)—संप्रत्यमूनेव मोहनीयोदयान् गुणस्थानकेषु चिन्तयन्नाह–उदयानाम्–उदयविकल्पानां चतुर्विंशतयो मिथ्यादृष्ट्यादी नामप्रमत्तान्तानाम्–मिथ्यादृष्टयविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तानामष्टावष्टौ भवन्ति। सासादनमिश्रापूर्वकरणेषु तु चतस्रश्चतस्रः, एताश्च सर्वा अपि प्रागेव सप्रपञ्चं भाविता इति नेदानीं भूयो भाव्यन्ते। एताश्च सर्वसंख्यया द्विपञ्चाशत्, सा च चतुर्विंशत्या गुण्यते, ततो जातानि द्वादशशतानि अष्टचत्वारिंशदधिकानि, अन्ये च बादरसूक्ष्मयोः सप्तदश भङ्गाः, तथाहि–अनन्तरगाथोक्तप्रकारेणानिवृत्ति-बादरसंपराये पञ्चविधादौ सर्वसंख्यया षोडश, एकस्तु भङ्गो बन्धाभावे सूक्ष्मसंपराये, ततः सर्वेष्वपि गुणस्थानकेषु सर्वसंख्यया मोह-नीयस्योदयाः पञ्चषष्ठयधिकानि द्वादश शतानि। एते एव च भङ्गा उदीरणायामपि द्रष्टव्याः ॥३१-३२॥

अतिदेशमाह–

**उदयविगप्पा जे जे उदीरणाए वि होंति ते ते उ। अंतमुहुत्तियउदया समयादारब्भ भंगा य ॥३३॥**

(स्वो०)—उदयभेदतो बन्धकभेदतो वा गुणभेदतो वा यावन्तो मोहनीयोदयविकल्पा भेदास्तावन्त उदीरणाया अपि भवन्ति। यद्यपि मिथ्यात्वसम्यक्त्ववेदत्रयसंज्वलनलोभानां उदयेऽप्युदीरणा भजनीया तथापि तावती संख्या न व्यभिचरत्युदयानाम्, यत उदयोदीरणयोरत्रावलिकामात्रकाल एवान्तरम्, शेषं तथैव, कालेन च नात्राधिकारः तुशब्दात् प्रागुक्तकर्म्मस्वपि उदया एवमेवोदीरणां

प्रति मन्तव्याः। कालतश्च सर्वेऽप्युदया एकोदयादिदशपयन्ता अन्तर्मुहूर्तिका उत्कृष्टतोऽवगन्तव्याः जघन्यतस्तु सामयिकाः, यतः पश्चादिकेषूदयेषु भयजुगुप्सोदयेन भाव्यम्, स चाध्रुवत्वाद्विवक्षितोदयमुदयान्तरं नयति। चतुष्कोदयोऽपि यः प्रमत्ताप्रमत्तयोः स भयादीनां उदयप्राप्तौ पञ्चादिषु परावृत्तिमुपयाति। यस्तु अपूर्वकरणस्य स तद्गुणाभावादेवान्तर्मुहूर्तान्तरतो विनश्यत्येव। एवं द्विकैकोदयावपि। अतोऽन्तर्मुहूर्तिकाः सर्वेऽप्युदया, उदयभङ्गाः—तत्प्रकारा अन्तर्मुहूर्तिका एवोत्कृष्टतो, जघन्यत' सामयिकाः, यतो युग्मेन वेदेन चाऽवश्यमन्तर्मुहूर्तादारतः परावर्तितव्यम्। द्विकादिषु सर्वेष्वप्युदयेषु तदुदयप्रारम्भसमय एव यदा गुणी(णो) विनश्यति तदोदयास्तद्भेदा वा सामयिका भवन्ति, तदन्तर्गतो यः काल' स भावित एवेति गाथार्थः॥३३॥

(मलय०)—तथा चाह-ये ये उदयविकल्पाः स्वरूपतो बन्धस्थानभेदतो गुणस्थानभेदतश्च प्रागुक्तास्ते ते सर्वेऽप्युदीरणायामप्यवगन्तव्याः, उदयोदीरणयोः सहभावित्वात्। यद्यपि च वेदत्रयसंज्वलनानां पर्यन्तावलिकायामुदीरणा न भवति किन्तु केवल उदयः, तथापि पर्यन्तावलिकां मुक्त्वा शेषकालमुदीरणा लभ्यते इति भङ्गसंख्या न व्याहन्यते। एते चैकोदयादयो दशोदयपर्यन्ता उदया', तदन्तर्गता भङ्गाश्च सर्वेऽपि समयादारभ्यान्तर्मौहूर्त्तिकाः, जघन्यत एकसामयिकाः, उत्कर्षतश्चान्तर्मौहूर्त्तिका इत्यर्थः। तथाहि—चतुरुदयादिषु दशोदयपर्यन्तेष्ववश्यमन्यतमो वेदोऽन्यतरच्च युगल विद्यते, वेदयुगलयोश्च मध्ये अन्यतरदवश्य मुहूर्त्तादारतः परावर्त्तते, तदुक्तं मूलटीकायां—"युग्मेन वेदेन वा अवश्य मुहूर्त्तादारतः परावर्तितव्यम्" इति। तत उत्कर्षतः सर्वेऽप्युदया भङ्गाश्चान्तर्मौहूर्त्तिका इति द्विकोदयैकोदयावान्तर्मौहूर्त्तिकाः सुप्रतीता एव। एकसामयिकता कथमिति चेत्, उच्यते-यदा विवक्षिते उदये उदयभङ्गे वा समयं वर्त्तित्वा द्वितीये (समये) गुणस्थानान्तरे गच्छेत्तदाऽवश्य बन्धस्थानभेदाद् गुणस्थानकभेदात्स्वरूपतो वा भिन्नमुदयान्तरं भङ्गान्तरं

वा यातीति सर्वेऽप्युदया भङ्गाश्च जघन्यत एकसामयिकाः ॥२३॥

पञ्चसंग्रहः मिच्छत्तं अणमीसं चउरो चउरो कसाय वा संमं । ठाइ अपुव्वे छक्कं वेयकसाया [परे] तओ लोभं ॥२४॥ मोहस्योदयविच्छेदः गुणस्थानकेषु

॥२४३॥ (स्वो०)—मिथ्यात्वोदयो मिथ्यादृष्टावेव तिष्ठति, अनन्तानुबन्ध्युदयः सास्वादने तिष्ठति, सम्यग्मिथ्यात्वोदयः सम्यग्मिथ्यादृष्टौ तिष्ठति, द्वितीयः कषायाणामुदयोऽविरते तिष्ठति, तृतीयकषायाणामुदयो देशविरते तिष्ठति, अविरताद्येष्वप्रमत्तान्तेषु गुणेषु सम्यक्त्वोदयो भजनीयः, यतस्तदन्यतरः सप्तकस्योपशामको भवति, क्षपको वा, अपूर्वकरणोच्चारणात्प्रागुक्ता यथासंख्येन प्रकृतयो गुणस्थानेषु मन्तव्याः, हास्यरत्यरतिशोकभयजुगुप्सा एता हास्यादिषट्कमस्योदयोऽपूर्वकरणे तिष्ठति, वेदसाहचर्याद्वेदत्रयस्य कषायत्रयस्य च परे बादरकषाये ततोऽपि परे सूक्ष्मकषाये सञ्ज्वलनलोभस्योदयस्तिष्ठतीति गाथार्थः ॥२४॥

(मलय०)—संप्रति कस्य कर्मण उदयः कुत्र गुणस्थानके व्यवच्छिद्यते ? इत्येतन्निरूपयति—मिथ्यात्व मिथ्यादृष्टावुदयमधिकृत्य तिष्ठति, तत्र भवति, उत्तरत्र न भवतीत्यर्थः । अनन्तानुबन्धिनः सासादने । 'मिश्रे'—सम्यग्मिथ्यात्वं मिश्रे । तथा चत्वारोऽप्रत्याख्यानसंज्ञाः कषायाः क्रोधादयोऽविरतसम्यग्दृष्टौ । चत्वारः प्रत्याख्यानावरणसंज्ञाः कषाया देशविरते । 'वा सम्मं'ति—एतेष्वेवाविरतादिषु अप्रमत्तसंयतपर्यन्तेषु सम्यक्त्वं वा तिष्ठति, सम्यक्त्वमुदयमधिकृत्य भजनीयमित्यर्थः । कदाचिद्भवति कदाचिन्नेति । तत्रौपशमिकसम्यग्दृष्टीनां क्षायिकसम्यग्दृष्टीनां वा न भवति, शेषाणां तु भवति । तथा अपूर्वकरणे हास्यरतिअरतिशोकभयजुगुप्सारूपं षट्कमुदयमधिकृत्य तिष्ठति, परतो न यातीत्यर्थः । तथा परे अनिवृत्तिबादरसंपराये त्रयो वेदाः, संज्वलनक्रोधमानमायारूपास्त्रयः कषायास्तिष्ठन्ति । ततः सूक्ष्मसंपराये 'लोभः'—संज्वलनलोभस्तिष्ठति, तत्र भवति, परतो न भवतीत्यर्थः ॥२४॥ ॥२४३॥

## मोहनीयस्य सत्तास्थानानि (१५)

| स० स्था० | प्रकृतयः | जघन्य कालमान | उत्कृष्ट कालमान |
|---|---|---|---|
| २८ | सर्वप्रकृतिकं | अन्तर्मु० | पल्यो० असं० भागाधिक० ६६ सागराणि |
| २७ | सम्यक्त्वे उद्वलिते | प० असं० भा० | प० असं० भाग |
| २६ | मिश्रे उद्वलिते अनादिमिथ्यादृशां वा | अन्तर्मु० | देशोनार्ध पुद्ग० परा० (अना० सांतमनाद्यनंतं च) |
| २४ | अनन्तानुबन्धीनामुद्वलने क्षपणे वा | " | ६६ सागराणि |
| २३ | मिथ्यात्वस्य क्षये | " | अन्तर्मुहूर्त |
| २२ | मिश्रस्य " | " | " |
| २१ | सम्यक्त्वस्य " | " | नरभवत्रयाधिक ३३ सागराणि |
| १३ | कषायाष्टक० " | " | अन्तर्मुहूर्त |
| १२ | नपु० क्षये | " | " |
| ११ | स्त्री० " | " | " |
| ५ | हास्यषट्कक्षये | " | " |
| ४ | पु० क्षये | " | " |
| ३ | सं० क्रोधक्षये | " | " |
| २ | " मान " | " | " |
| १ | " माया " | " | " |

मोहनीयसत्स्थानान्याह–

अट्ठगसत्तगच्छक्कगचउतिगदुगएक्कगाहिया वीसा। तेरस बारेक्कारस संते पंचाइ जा एक्कं ॥३५॥

मोहस्य-सत्स्थानानि गुणस्थानकेषु

(स्वो०)––अष्टकसप्तकषट्कचतुस्त्रिद्व्येकाधिका भवेद्विंशतिः, त्रयोदश द्वादशैकादश सत्कर्म्माणि पञ्चादियावदेकमिति पदानि, पदार्थः सुगमः ॥३५॥

(मलय०)––तदेवमुक्तानि मोहनीयस्य सप्रपञ्चमुदयस्थानानि, संप्रति सत्तास्थानान्याह–विंशतिरष्टकसप्तकषट्कचतुस्त्रिद्व्येकैकाधिका, तथा त्रयोदश द्वादश एकादश, 'संते' इति भावप्रधानो निर्देशः, ततः सत्ताया स्थानानि भवन्ति। तथा पञ्चादि यावदेकम्, इदमुक्तं भवति–मोहनीयस्य सत्तास्थानानि पञ्चदश, तद्यथा–अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिः, त्रयोदश, द्वादश, एकादश, पञ्च, चतस्रः, तिस्रः, द्वे, एका चेति ॥३५॥

अधुना गुणस्थानेषु मोहनीयप्रकृतीनां सत्कर्मव्यवच्छेदं सत्स्थानानि चाभिधीयन्ते–

अणमिच्छमीससम्माण अविरया अप्पमत्त जा खवगा। समयं अट्ठ कसाए नपुंस इत्थी कमा छक्क ॥३६॥

पुंवेयं कोहाई नियट्टि नासेइ सुहुमतणुलोभं। तिण्णेगातिपणचउसुं तेक्कारसचउतिसंताणि ॥३७॥

(स्वो०)—सार्द्धगाथया सत्कर्म्मव्यवच्छेदः, द्वितीयगाथापश्चार्द्धेन तु गुणस्थानेषु सत्स्थानान्यभिहितानि। तानि चामूनि–मिथ्यादृष्टेस्त्रीणि–अष्टाविंशतिसप्तविंशतिषड्विंशतयः। सास्वादनस्यैकाष्टाविंशतिः। सम्यग्मिथ्यादृष्टेस्त्रिणि–अष्टाविंशतिसप्तविंशतिचतुर्विंशतयः। अविरतदेशविरतप्रमत्ताप्रमत्तानां पञ्च–अष्टाविंशतिचतुर्विंशतित्रिद्व्येकविंशतयः। अपूर्वकरणस्य त्रीणि–अष्टाविंशतिचतुर्विंशत्येकविंशतयः। ॥२४४॥

अनिवृत्तिबादरस्य त्वेकादश—अष्टाविंशतिचतुर्विंशत्येकविंशत्यादीनि, सूक्ष्मरागस्य चत्वारि—अष्टाविंशतिचतुर्विंशत्येकविंशत्येकरूपाणि। उपशान्तस्य त्रीणि—अष्टाविंशतिचतुर्विंशत्येकविंशतिरूपाणीति गाथाद्वयार्थः ॥२६–२७॥

(मलय०)—संप्रत्येषामेव सत्तास्थानानां गुणस्थानकेषु व्यवच्छेदमाह—अविरतादयो यावदप्रमत्ताः—अप्रमत्तपर्यवसानाः अनन्तानुबन्धिमिथ्यात्वमिश्रसम्यक्त्वानां क्षपका भवन्ति। ततो ये क्षपकास्तेष्वविरतादिषु सप्तक क्षपितकाले प्राप्यते, परतः सर्वथा न भवतीति। तथा अनिवृत्तिबादरसंपरायः प्रथमतः 'समकम्'—एककालम् अष्टौ कषायान्—अप्रत्याख्यानप्रत्याख्यानावरणसंज्ञान् विनाशयति। ततो नपुंसकवेदम्, ततः स्त्रीवेदम्, ततो हास्यादिषट्कम्, ततः पुरुषवेदम्, ततः क्रमेण क्रोधमानमायारूपान् त्रीन् त्रीन् संज्वलनान् विनाशयति। सूक्ष्मसंपरायस्तनुलोभ—किट्टीकृतलोभं विनाशयति। एतेन चतुर्विंशत्यादीनि द्वादशसत्तास्थानानि व्याख्यातानि द्रष्टव्यानि, त्रीणि चाग्रे व्याख्यास्यति, तथाप्यसमोहार्थं सर्वाण्यपि भाव्यन्ते—तत्र सर्वप्रकृतिसमुदायोऽष्टाविंशतिः, ततः सम्यक्त्वे उद्वलिते सप्तविंशतिः, ततोऽपि सम्यग्मिथ्यात्वे उद्वलिते षड्विंशतिः, अनादिमिथ्यादृष्टेर्वा षड्विंशतिः, अष्टाविंशतिसत्कर्मणोऽनन्तानुबन्धिचतुष्टयक्षये चतुर्विंशतिः, ततोऽपि मिथ्यात्वे क्षपिते त्रयोविंशतिः, ततोऽपि सम्यग्मिथ्यात्वे क्षपिते द्वाविंशतिः, ततः सम्यक्त्वे क्षपिते एकविंशतिः, ततोऽष्टसु अप्रत्याख्यानप्रत्याख्यानावरणसंज्ञेषु कषायेषु क्षपितेषु त्रयोदश, ततो नपुंसकवेदे क्षपिते द्वादश, ततः स्त्रीवेदे क्षपिते एकादश, ततः षट्सु नोकषायेषु क्षीणेषु पञ्च, ततोऽपि पुरुषवेदे क्षीणे चतस्रः, ततोऽपि संज्वलनक्रोधे क्षीणे तिस्रः, ततः संज्वलनमाने क्षीणे द्वे, ततोऽपि संज्वलनमायायां क्षीणायामेको लोभ इति। संप्रति गुणस्थानेषु सत्तास्थानानि चिन्तयन्नाह—मिथ्यादृष्टिगुणस्थानके त्रीणि सत्तास्थानानि, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिश्च। सासादनसम्यग्दृष्टिगुणस्थाने एकं सत्तास्थान

### गुणस्थानेषु मोहस्य सत्तास्थानानि

| गुणस्थाने | सत्तास्थानानि |
|---|---|
| १मे | २८-२७-२६ |
| २ये | २८ |
| ३ये | २८-२७-२४ |
| ४र्थे | २८-२४-२३-२२-२१ |
| ५मे | ,, ,, ,, ,, ,, |
| ६ष्ठे | ,, ,, ,, ,, ,, |
| ७मे | ,, ,, ,, ,, ,, |
| ८मे | ,, ,, २१ |
| ९मे | २८-२४-२१-१३-१२-११-५-४-३-२-१ |
| १०मे | ,, ,, ,, १ |
| ११मे | ,, ,, ,, |
| १२मे | ० |
| १३मे | ० |
| १४मे | ० |

अष्टाविंशतिः। सम्यग्मिथ्यादृष्टिगुणस्थानके त्रीणि सत्तास्थानानि, तद्यथा—अष्टाविंशतिः सप्तविंशतिश्चतुर्विंशतिश्च। तथा चतुर्षु गुणस्थानकेषु अविरतदेशविरतप्रमत्ताप्रमत्तलक्षणेषु प्रत्येकं पञ्च सत्तास्थानानि भवन्ति, तद्यथा—अष्टाविंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिश्च। अपूर्वकरणे त्रीणि सत्तास्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिः। अनिवृत्तिबादरसंपराये एकादश सत्तास्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिस्त्रयोदश द्वादश एकादश पञ्च चतस्रस्तिस्रो द्वे एका च। सूक्ष्मसंपराये चत्वारि सत्तास्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिरेका च। उपशान्तमोहगुणस्थानके त्रीणि सत्तास्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिश्च। एतानि सर्वाण्यपि संवेधचिन्तायां भावयिष्यन्ते, इति नेह भाव्यन्ते ॥

सत्पदानां सम्भवकारणमाह—

**छव्वीसणाइमिच्छे उव्वलणाए व सम्ममीसाणं । चउवीस अणविजोए भावो भूओ वि मिच्छाओ ॥३८॥**

(स्वो०)—षड्विंशतिप्रकृत्यात्मकं सत्स्थानमनादिमिथ्यादृष्टौ भवति, अष्टाविंशतिसत्कर्मणो वा सम्यक्त्वोद्वलनात् सप्तविंशतिसत्स्थान, सम्यग्मिथ्यात्वोद्वलिते द्वितीयप्रकारेण षड्विंशतिर्भवति । चतुर्विंशतिस्थानं पुनरनन्तानुबन्धिवियोजनया भवति, सम्पूर्णमोहनीयसत्कर्म्मा सम्यग्दृष्टिर्यदानन्तानुबन्धिनो वियोजयति, शेषकषायनोकषायेषु सङ्क्रमेण स्थापयति, तदा चतुर्विंशतिसत्स्थान भवति । आह—तेषामसद्भूतानामपि कथं भूयोऽपि सत्ता प्रादुर्भावो भवति ? अत्रोच्यते—मिथ्यात्वोदयाद्धेतोर्निमित्तात् तेषां सम्भवसत्ता भूयोऽपि भवति, तस्यैव सम्यग्दृष्टेः परिणामवशाद्यदा मिथ्यात्वोदयो भवति तदाऽनन्तानुबन्धिनां बन्धकोऽष्टाविंशतिसत्कर्म्मा च भवतीति गाथार्थः ॥३८॥

(मलय०)—संप्रति षड्विंशत्यादीनां सत्तास्थानानां प्रागनुक्तानां सम्भवमाह—षड्विंशतिः सत्तास्थानमनादिमिथ्यादृष्टेः प्राप्यते, अथवा अष्टाविंशतिसत्कर्मणः सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलने सति । सम्यक्त्वं चोद्वल्य यावदद्यापि सम्यग्मिथ्यात्वं नोद्वलयति तावत्सप्तविंशतिः प्राप्यते । अनन्तानुबन्धिनां विसंयोजने कृते चतुर्विंशतिः, विसंयोजना क्षपणा । ननु यदि अनन्तानुबन्धिनो विसंयोजितास्ततस्तेषामसद्भूतानां कथं भूयोऽपि सत्ताप्रादुर्भावः ? उच्यते—मिथ्यात्वात्, तथा चाह—'भावो भूओ वि मिच्छाओ' ॥३८॥

मोहनीयप्रकृतीनामुद्वलकानाह—

**सम्ममीसाण मिच्छो सम्मो पढमाण होइ उव्वलगो । चउआवलिया उप्पिं उदओ सकंतदालियस्स ॥३९॥**

(स्वो०)—सम्यक्त्वसम्यग्मिथ्यात्वयोर्मिथ्यादृष्टिरुद्वलकः, सम्यग्दृष्टिः प्रथमानाम्—अनन्तानुबन्धिनामुद्वलको भवति, तेषामुद्वलितानामसद्भूतानां मिथ्यात्वोदयबद्धानामपि उदयोऽबाधावर्षशतैरतीतैर्भवतीति कस्यचिदभिप्रायस्तद् व्युदासायाह—बन्धसमयादारभ्य तत्सत्ता भवति, तत्सत्तायां च प्रतिग्रहता, तस्यां च सत्यां शेषप्रकृतिभ्यो दलसंक्रमः, तस्य च संक्रमावलिकात्यये उदय इति सूत्रेऽप्युक्तम् 'बंधावलिया उप्पिं उदओ' इत्यत्राविरोधः, यतो बन्धादुत्तरसमये संक्रमोऽपि भवतीति गाथार्थः ॥३९॥

(मलय०)—संप्रति यो यस्या मोहनीयप्रकृतेरुद्वलकस्तस्यास्तमाह—सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलको मिथ्यादृष्टिः, 'प्रथमानां'—कषायाणामनन्तानुबन्धिनामुद्वलकः सम्यग्दृष्टिरविरतसम्यग्दृष्ट्यादिः, तेषामनन्तानुबन्धिनामुद्वलितानां भूयोऽपि मिथ्यात्वप्रत्ययतो बद्धानां बन्धावलिकायामतीतायां बन्धप्रथमसमये यत्प्रकृत्यन्तरदलिकं संक्रान्तं तत्संक्रमावलिकाक्रान्तं भवतीति तस्य संक्रान्तस्योदयो भवति । एतच्च प्रागेव भावितम् ॥३९॥

सद्बन्धोदयसंवेधमाह—

**बावीसं बन्धन्ते, मिच्छे सत्तोदयंमि अडवीसा। संतं छसत्तवीसा य होंति सेसेसु उदएसु ॥४०॥**

(स्वो०)—द्वाविंशतिप्रकृतिबन्धके मिथ्यादृष्टौ सप्तकोदये अष्टाविंशतिसत्स्थानं भवति, नेतरे, कुत एतत् निश्चीयते, यतो भयजुगुप्सानन्तानुबन्ध्यु(न्ध्यनु)दयविकल्पतया सप्तोदयो भवति, अनन्तानुबन्ध्यनुदयश्च यत्र यत्रोदये भवति तत्र तत्र मिथ्यादृष्टेरष्टाविंशतिसत्कर्म्मतया भाव्यम् , प्रयोजनं प्रागभिहितमेव, तेषामुदये भजनीया सा, यतो नियमात् षड्सप्तविंशतिसत्त्वयोस्तदुदयेन भाव्यम् , 'शेषेषु'—दशनवाष्टोदयेषु षड्सप्तविंशतिसत्स्थाने भवतः, षड्विंशतिरनादिमिथ्यादृष्टेरुभयोरुद्वलनाद्वा, सम्यक्त्वोद्वलनात् सप्तविंशति-

ष्टाविंशतिः प्रागमिहितैव। सासादने एकविंशतिबन्धकेऽष्टाविंशतिसत्कर्म्मणि सप्ताष्टनवोदया भवन्ति, द्वितीयसमुत्पादेव निश्चीयत इति गाथार्थः ॥४०॥

(मलय०)—तदेवमुक्तानि समपर्य सत्तास्थानानि, संप्रति बन्धोदयसत्तास्थानानां परस्परं संवेधमाह—द्वाविंशतिं बध्नन्ति मिथ्यादृष्टौ सप्तोदये अष्टाविंशतिरेक सत्तास्थान भवति नेतरे, कथमेतदवसीयते ? इति चेत्, उच्यते—इह यतः सप्तोदयो अनन्तानुबन्ध्युदयरहितो भवति, अनन्तानुबन्ध्युदयरहितश्च मिथ्यादृष्टिरवश्यमष्टाविंशतिसत्कर्मा, तथाहि—येन पूर्वं सम्यग्दृष्टिना सता अनन्तानुबन्धिन उद्वलितास्ततः कालान्तरे परिणामवशतो मिथ्यात्वं गतेन भूयोऽपि मिथ्यात्वप्रत्ययेन ते बध्नुमारभ्यन्ते, स एव मिथ्यादृष्टिर्बन्धावलिकामात्र कालं यावत् अनन्तानुबन्ध्युदयरहितः प्राप्यते, नान्य', स चाष्टाविंशतिसत्कर्मेति सप्तोदये सत्तास्थानमष्टाविंशतिरेव। शेषेषु तूदयेष्वष्टनवदशकरूपेषु षड्विंशतिः, सप्तविंशतिः, चशब्दादष्टाविंशतिमेति त्रीणि त्रीणि सत्तास्थानानि भवन्ति। तथाहि—अष्टोदयो द्विधा, अनन्तानुबन्ध्युदयरहितोऽनन्तानुबन्ध्युदयसहितश्च, तत्र योऽनन्तानुबन्ध्युदयरहितस्तत्र प्रागुक्तयुक्तेरष्टाविंशतिरेव सत्तास्थानम्। अनन्तानुबन्ध्युदयसहिते तु त्रीण्यपि सत्तास्थानानि। तत्र यावन्नाद्यापि सम्यक्त्वमुद्वलयति तावदष्टाविंशतिः, सम्यक्त्वे उद्वलिते सप्तविंशतिः, सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशति', अनादिमिथ्यादृष्टेर्वा षड्विंशति'। एवं नवोदयेऽपि द्रष्टव्यम्। दशोदयस्त्वनन्तानुबन्ध्युदयसहित एव भवतीति। तत्रापि त्रीणि सत्तास्थानानि भावनीयानि। सासादने त्वेकविंशतिबन्धके त्रिष्वपि सप्ताष्टनवरूपेषूदयेष्वष्टाविंशतिरेवैकं सत्तास्थानम्, तथाहि—सासादनत्वमौपशमिकसम्यक्त्वात्प्रच्यवमानस्योपजायते, सम्यक्त्वगुणेन च तेन मिथ्यात्वं त्रिधा कृतम्, तद्यथा—सम्यक्त्वं सम्यग्मिथ्यात्वं मिथ्यात्वं चेति, ततो दर्शनत्रिकस्यापि सत्कर्मतया प्राप्यमाणत्वात् सासादने त्रिष्वप्युदय-

स्थानेष्वष्टाविंशतिरेवैकं सत्तास्थानम् । एतच्च सुगमत्वादाचार्येण नोक्तम् ॥४०॥

**सत्तरसबंधगे छोदयम्मि संतं इगट्ठचउवीसा । सगातिदुवीसा य सगट्ठगोदए नेयरिगिवीसा ॥४१॥**

(स्वो०)—सप्तदशबन्धके षडुदये सन्ति एकाष्टचतुर्विंशतयः, सप्तत्रिद्विविंशतयश्च सप्तोदये अष्टोदये, नेतरे एकविंशतिरिति समासार्थः । विस्तरेणैवं पदघटना—सप्तदशबन्धकस्याविरतस्य, षष्ठ्यर्थे सप्तमी, षडुदये सन्ति त्रीणि सत्स्थानानि क्षीणसप्तकस्यैकविंशतिरुपशान्तसप्तकस्याष्टाविंशतिरुद्वलितानन्तानुबन्धिनः उपशान्तदर्शनत्रिकस्य चतुर्विंशतिरिति, अन्यत्रापि यत्र सम्यक्त्वोदयो न भवति तत्रैतत्स्थानत्रयमनेनैव क्रमेण भाव्यम् । तस्यैव सप्तदशबन्धकस्याविरतस्य सप्तोदये भयकृते जुगुप्साकृते वा प्रागुक्तं सागित्र सत्रयं भवति, यथव षट्कोदये अष्टोदयेऽपि भयजुगुप्साभ्यां कृते तदेव सत्रयं भवति । सप्तोदयाष्टोदययोश्च तयोः वेदकोदयकृतयोः सत्स्थानचतुष्कं भवति द्वित्रिचतुरष्टाविंशतयः, यत एतेषूदयेषु वेदकसम्यक्त्वस्योदयो भवति, नेतरस्मिन्–नवोदये एकविंशतिसत्स्थानं भवति, यतः–तत्स्थानं क्षीणसप्तकस्य, नवोदयस्तु वेदकोदयं विना न भवति, शेषाणि तु द्वित्रिचतुरष्टाविंशतिसत्स्थानानि प्राग्वद् भावयितव्यानीति । सम्यग्मिथ्यादृष्टेरपि सप्तदशबन्धकस्य सप्ताष्टनवोदयेष्वनयं सम्यग्मिथ्यात्वोदयेन भाव्यम्, सम्यग्दृष्टेरष्टाविंशतिसत्कर्मणो यदाध्यवसायविशेषतः सम्यग्मिथ्यात्वोदयो भवति, तदा अष्टाविंशतिसत्कर्म त्रिष्वप्युदयेषु भवति, एवं चतुर्विंशतिसत्कर्मणोऽपि अविरतस्यैव मिथ्यादृष्टिना यदा सम्यक्त्वमुद्वलितं भवति तदा सप्तविंशतिसत्कर्मा भवति, एवंभूतस्य च तस्य सम्यग्मिथ्यात्वोदयो यदा तदा त्रिष्वप्युदयेषु सप्तविंशतिसत्स्थानं भवतीति गाथार्थः ॥४१॥

(मलय०)—सप्तदशबन्धके षडुदये सत्तास्थानमेकविंशतिरष्टाविंशतिश्चतुर्विंशतिश्च । सप्तोदये अष्टोदये च सप्तविंशतिस्त्रयोविंशतिद्वौ-

विंशतिः, यस्मादष्टाविंशतिचतुर्विंशत्येकविंशतयश्च, नेतरस्मिन्–नवकोदये एकविंशतिरिति । इयमत्र भावना–सप्तदशबन्धो द्वयानाम्, तद्यथा–सम्यग्मिथ्यादृष्टीनामविरतसम्यग्दृष्टीनां च । तत्र सम्यग्मिथ्यादृष्टीनां त्रीण्युदयस्थानानि, तद्यथा–सप्त अष्टौ नव । अविरतस म्यग्दृष्टीनां चत्वारि, तद्यथा षट् सप्त अष्टौ नव । तत्र षडुदयोऽविरतानामौपशमिकसम्यग्दृष्टीनां क्षायिकसम्यग्दृष्टीनां वा प्राप्यते, तत्रौपशमिकसम्यग्दृष्टीनां द्वे सत्तास्थाने, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिश्च । तत्राष्टाविंशतिः प्रथमसम्यक्त्वोत्पादकाले, उपशमश्रेणि-प्रतिपाते तूपशान्तानन्तानुबन्धिनामष्टाविंशतिः, उद्वलितानन्तानुबन्धिनां चतुर्विंशतिः । क्षायिकसम्यग्दृष्टीनां त्वेकविंशतिरेव, क्षायिकं हि सम्यक्त्वं सप्तकक्षये भवति । सप्तकक्षये जन्तुरेकविंशतिसत्कर्मेति । सप्तोदये मिश्रदृष्टीनां त्रीणि सत्तास्थानानि । तद्यथा–अष्टाविंशतिः सप्तविंशतिश्चतुर्विंशतिश्च । तत्र योऽष्टाविंशतिसत्कर्मा सन् सम्यग्मिथ्यात्वं प्रतिपद्यते तस्याष्टाविंशतिः, येन पुनर्मिथ्यादृष्टिना सता प्रथमं सम्यक्त्वमुद्वलितम्, सम्यग्मिथ्यात्वं च नाद्याप्युद्वलयितुमारभ्यते, अत्रान्तरे परिणामवशेन मिथ्यात्वाद्विनिवृत्य सम्यग्मिथ्यात्वं प्रतिपद्यते, तस्य सप्तविंशतिः, य पुनः पूर्वं सम्यग्दृष्टिः सन् अनन्तानुबन्धिनो विसंयोज्य पश्चात्परिणामवशतः सम्यग्मिथ्यात्वं प्रतिपद्यते तस्य चतुर्विंशतिः, सा चतसृष्वपि गतिषु प्राप्यते, यतश्चतुर्गतिका अपि सम्यग्दृष्टयोऽनन्तानुबन्धिनो विसंयोजयन्ति । अनन्तानुबन्धिविसंयोजनानन्तरं च केचित्परिणामवशतः सम्यग्मिथ्यात्वमपि प्रतिपद्यन्ते, ततश्चतसृष्वपि गतिषु सम्यग्मिथ्यादृष्टीनां चतुर्विंशतिः संभवति । अविरतसम्यग्दृष्टीनां तु सप्तोदये पञ्च सत्तास्थानानि, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिश्च । तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा, चतुर्विंशतिरप्युभयेषाम्, नवरमनन्तानुबन्धिविसंयोजनानन्तरं सावगन्तव्या, त्रयोविंशतिर्द्वाविंशतिश्च वेदकसम्यग्दृष्टीनामेव । तथाहि–कश्चिन्मनुष्यो वर्षाष्टकस्योपरि वर्तमानो वेदकसम्यग्दृष्टिः सन्

क्षपणायाऽभ्युद्यत', तस्यानन्तानुबन्धिषु मिथ्यात्वे च क्षपिते त्रयोविंशतिः, तस्यैव च सम्यग्मिथ्यात्वे क्षपिते द्वाविंशति', स च द्वाविंशतिसत्कर्मा सम्यक्त्वं क्षपयन् तच्चरमग्रासे वर्तमान' कश्चित्पूर्वबद्धायुष्कः कालमपि करोति, कालं च कृत्वा चतसृणां गतीनामन्यत मस्यां गतावुत्पद्यते, यदुक्तं–"पट्ठवगो य मणुस्सो। निट्ठवगो चउसु वि गईसु", ततो द्वाविंशतिश्चतसृष्वपि गतिषु प्राप्यते, एकविंशतिः क्षायिकसम्यग्दृष्टीनाम् । एवमष्टोदयेऽपि मिश्रदृष्टीनामविरतसम्यग्दृष्टीनां चोक्तरूपाणामन्यूनातिरिक्तानि सत्तास्थानानि भावनीयानि। एव नवोदयेऽपि, नवरं नवोदयोऽविरतानां वेदकसम्यग्दृष्टीनामेव सम्भवतीति कृत्वा तत्र चत्वारि सत्तास्थानानि वाच्यानि, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिश्च, एतानि च प्रागिवानुगन्तव्यानि ॥४१॥

देसाइसु चरिमुदए इगिवीसा वज्जियाइ सत्ताइं। सेसेसु होंति पंच वि तिसु वि अपुव्वंमि सततिग ॥४२॥

(स्वो०)—देशविरतादीनां चरमोदये एकविंशतिसत्स्थानवर्जितानि शेषाणि चत्वारि भवन्ति, शेषेषु पञ्चापि भवन्ति, अपूर्वकरणोदयेषु त्रिष्वपि सप्तकमिति समुदायार्थः–विशेषार्थघटना त्वेवं कार्या, देशविरतस्य त्रयोदशबन्धकस्य, त्रयोदशबन्धकस्य देशविरतग्रहणेनैव सिद्ध तेन नोच्चार्यते, चरमेऽष्टकोदये एकविंशतिसत्स्थान (न) भवति, यतस्तत्सप्तकक्षयेण संवृत्त, स चोदयो भयजुगुप्सावेदकोदयेन सयुक्तः, शेषाणि चत्वारि सत्स्थानानि द्वित्रिचतुरष्टाविंशत्याख्यानि भवन्त्येव, यतस्तेषु वेदकोदयोऽपि भवति। 'शेषेषु भवन्ति पञ्चापी' ति–सप्तकोदयो यो भयजुगुप्साकृतस्तत्रैकविंशतिसत्स्थानम्, यौ तु सप्तकोदयौ भयजुगुप्सापेक्षया वेदकोदयकृतौ तयोर्द्वित्रिचतुरष्टाविंशतिसत्स्थानानि स्यु', यतस्तेषु वेदकोदयो भवति। षडुदयो यदा भयकृतो जुगुप्साकृतो वा भवति तदैकविंशतिः सत्स्थानम्, वेदककृते षडुदये शेषाणि चत्वारि प्राग्वत्। पञ्चोदये त्रीणि सत्स्थानानि एकचतुरष्टाविंशत्याख्यानि सप्तकोपशमक्षयादिति।

बहुवचनकरणं नोदयत्रिकग्राहकं, प्राकृते द्वयोरपि तद्भावात्, मध्यमोदययोरथवा प्रतिभेदख्यापनार्थम्, कुत एतदवसीयते ? प्रथमे षडुदयेऽविरतस्यापि तत्सत्त्रिकं सूत्रेणैवोक्तम्, तच्चोपशमश्रेणीमङ्गीकृत्य अविरताद्येपूपशान्तान्तेषु भणनीयम्, वेदकोदयरहितेषूदयस्थानेष्विति । प्रमत्ताप्रमत्तयोर्नवकबन्धकत्वं चतुष्कोदयस्य प्रथमत्वं पञ्चषट्कोदययोः शेषोदयत्वं सप्तोदयस्य चरमोदयत्वमिति विशेषः, शेषं देशविरतवदनयोरपीति । अपूर्वकरणस्य नवबन्धकस्य त्रिष्वप्युदयेषु चतुष्पञ्चषडात्मकेषु प्रत्येकं त्रीण्यपि सत्स्थानानि भवन्ति, यतस्तेषूदयेषु वेदकोदयो नास्ति, तान्यपि वेदकक्षयेणोपशमनेन वा संयुक्तानीति गाथार्थः ॥४२॥

(मलय०)—देशविरतादिषु–देशविरतप्रमत्ताप्रमत्तेषु, चरमोदये एकविंशतिवर्जितानि शेषाणि चत्वारि सत्तास्थानानि प्रागुक्तानि भवन्ति । शेषेषु तूदयेषु प्रथमवर्जेष्विति शेषः, पञ्चापि । अपूर्वकरणोदयेषु तु त्रिष्वपि त्रीणि त्रीणि सत्तास्थानानि भवन्तीति गाथाक्षरार्थः । भावनात्वियं–देशविरतानां त्रयोदशबन्धकानां चत्वार्युदयस्थानानि, तद्यथा–पञ्च षट् सप्त अष्ट । तत्र देशविरता द्विधा–तिर्यञ्चो मनुष्याश्च । तत्र ये तिर्यञ्चस्तेषां चतुर्ष्वप्युदयेषु द्वे द्वे सत्तास्थाने, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिश्च । तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां च, तत्रौपशमिकसम्यग्दृष्टीनां प्रथमसम्यक्त्वोत्पादकाले, तथाहि–तदानीमन्तरकरणाद्धायां वर्त्तमान औपशमिकसम्यग्दृष्टिः कश्चिद्देशविरतिमपि प्रतिपद्यते, कश्चिन्मनुष्यः पुनः सर्वविरतिमपि । तदुक्तं शतकबृहच्चूर्णौ–"उवसमसम्मद्दिट्ठी अन्तरकरणे ठिओ कोइ देसविरइंपि लहइ, कोइ पमत्तापमत्तभावं पि, सासायणो पुण न किंपि लहइत्ति" । वेदकसम्यग्दृष्टीनां त्वष्टाविंशतिः, चतुर्विंशतिरनन्तानुबन्धिषु विसंयोजितेषु वेदकसम्यग्दृष्टीनामवगन्तव्या । शेषाणि तु त्रयोविंशत्यादीनि सत्तास्थानानि तिरश्चां न भवन्ति, तानि हि क्षायिकसम्यक्त्वमुत्पादयतः प्राप्यन्ते, न च तिर्यञ्चः क्षायिकसम्यक्त्वमुत्पादयन्ति, किन्तु मनुष्या एव । अथ मनुष्यः क्षायि-

कसम्यक्त्वमुत्पाद्य यदा तिर्यक्षूत्पद्यते तदा विरतोऽप्येकविंशतिः प्राप्यते एव, तत्कथमुच्यते शेषाणि त्रयोविंशत्यादीनि सर्वाण्यपि न समवन्तीति ? तदयुक्तम्, यतः क्षायिकसम्यग्दृष्टिस्तिर्यक्षु न संख्येयवर्षायुष्केषु मध्ये समुत्पद्यते, किन्त्वसंख्येयवर्षायुष्केष्वेव, न च तत्र देशविरतिरस्ति, संप्रति देशविरते सत्तास्थानानि चिन्त्यमानानि वर्तन्ते, तत एकविंशतिरपि तिर्यक्षु देशविरतेषु न प्राप्यते । तदुक्तं सप्ततिकाचूर्णौ–"एगवीसा तिरिक्खेसु संजयासंजएसु न उववज्जइ, कहं ? भण्णइ–संखेज्जवासाउएसु तिरिक्खेसु खाइगसम्मद्दिट्ठी न उववज्जइ, असंखिज्जवासाउएसु उववज्जेज्जा, तस्स देसविरई नत्थि" । ये तु मनुष्या देशविरतास्तेषां पञ्चकोदये त्रीणि सत्तास्थानानि, एकविंशतिचतुर्विंशत्यष्टाविंशतिरूपाणि । षट्कोदये सप्तोदये च प्रत्येकं पञ्चापि सत्तास्थानानि । अष्टकोदये चैकविंशतिवर्जानि शेषाणि चत्वारि स्थानानि भवन्ति । तानि चाविरतसम्यग्दृष्ट्युक्तभावनानुसारेण भावनीयानि । एवं प्रमत्तेऽप्रमत्ते च नवबन्धके प्रत्येकं चतुष्कोदये त्रीणि त्रीणि सत्तास्थानानि । तद्यथा–अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिश्च । पञ्चकोदये षट्कोदये प्रत्येकं पञ्च पञ्च सत्तास्थानानि । तद्यथा–अष्टाविंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिश्च । एतान्येवैकविंशतिवर्जानि शेषाणि चत्वारि सप्तोदये, एतानि च सर्वाण्यपि प्रागुक्तभावनानुसारेण भावनीयानि । अपूर्वकरणस्य तु नवबन्धकस्य त्रीण्युदयस्थानानि, तद्यथा–चत्वारि पञ्च षट्, एतेषु च त्रिष्वपि उदयेषु प्रत्येकं त्रीणि त्रीणि सत्तास्थानानि, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिश्च । अपूर्वकरणो हि वेदकसम्यग्दृष्टिर्न भवति, किन्त्वौपशमिकसम्यग्दृष्टिः क्षायिकसम्यग्दृष्टिर्वा, तत्रौपशमिकसम्यग्दृष्टीनामष्टाविंशतिचतुर्विंशती, ते च प्रागिव भावनीये, क्षायिकसम्यग्दृष्टेस्त्वेकविंशतिरिति ॥४२॥

पचाइ बंधगेसु इगट्ठ चउवीस बन्धगाग च । तेरस बारेक्कारस य होंति पण बन्धि खवगस्स ॥४३॥

एगाहियाय बन्धा चउबन्धगमाइयाण संतंसा । बन्धोदयाण विरमे जं संतं छुभइ अण्णत्थ ॥४४॥

(स्वो०)—पञ्चचतुस्त्रिव्येकबन्धकेऽबन्धके सूक्ष्मसंपराये उपशान्तकषाये सत्स्थानत्रयं भवति-एकविंशतिः क्षीणसप्तकस्याष्टाविंशतिरुपशान्तसप्तकस्य चतुर्विंशतिरनन्तानुबन्धिविसंयोजकस्येति, उदयमाश्रित्य तानि द्विकोदये एकोदयेऽनुदये चोपशमश्रेण्यां भवन्ति, अबन्धकसूक्ष्मसम्परायक्षपके सञ्ज्वलनलोभैकप्रकृत्यात्मकं चतुर्थं सत्स्थानं भवति, तस्यैवोदयोऽपीति । प्रागभिहितैकविंशतिरष्टाभिः कषायैः क्षपितैः त्रयोदशकं सत्स्थानं बादरकषायस्य, ततोऽपि नपुंसकवेदे क्षपिते द्वादशकं तस्यैव, ततोऽपि स्त्रीवेदे क्षपिते तस्यैवैकादशकम् , ततो हास्यादिषट्कक्षपिते पञ्चप्रकृत्यात्मकं सत्स्थानं तस्यैव चतुर्थं बादरक्षपकस्य । एतानि चत्वार्यपि पञ्चबन्धकस्य द्विकोदयेन भवन्ति। ततः स एव चतुर्बन्धको भवति, पुरुषवेदोदयी पञ्चसत्कर्म्मा च । तस्य चतुर्बन्धकत्वे वर्तमानस्य पुरुषवेदोदयस्तिष्ठति, यतो बन्धः प्रथमं ततश्चोदयः ततः सत्कर्म्मता पुरुषादीनां नश्यति। पुरुषवेददलं ध्यानाग्निना दन्दह्यमानं क्रोधे प्रक्षिपति। ततश्चैकोदयो भवति, चतुःसत्कर्म्मता च बादरस्य, तस्मादेकोदयित्वं त्रिबन्धकत्वे चतुःसत्कर्म्मता। पुनः क्रोधे माने प्रक्षिप्ते त्रिकसत्कर्म्मता, पश्चाद् द्विकबन्धकत्वं त्रिसत्कर्म्मता च । पुनर्माने मायायां प्रक्षिप्ते द्विकसत्कर्म्मता, ततश्चैकबन्धकत्वं द्विसत्कर्म्मता च। ततश्च मायायां लोभे प्रक्षितायामेकसत्कर्म्मता भवति, ततश्च बादरगुणस्थानान्ते एकबन्धकत्वं निवर्त्तते, सत्कर्म्मता तदुदयश्च भवति । सूक्ष्मसम्परायगुणस्थानप्राप्तौ लोभोदयसत्कर्म्मता च सूक्ष्मसंपरायचारित्रं तद्गुणपर्यन्तं यावत् भवति । तच्चातिक्रम्याकषायित्वमुपगच्छति, यथाख्यात-

१ पञ्चविधबन्धकस्यैतत् स्थानं केनाभिप्रायेण न्यगादीति न ज्ञायते, पुरुषवेदबन्धहास्यषट्कयोः समकं व्यवच्छेदेन चतुर्विधबन्धस्यैव संभवात् ।

चारित्रं च क्षपकश्रेण्यां क्षीणकषायगुणमिति गाथाद्वयार्थः ॥४३–४४॥

'गुणेषु सत्स्थानसंख्या 'तिन्नेग' इति—

त्रीणि मिथ्यादृष्टौ—षड्विंशतिः सप्तविंशतिरष्टाविंशतिर्भावना कर्तव । सास्वादनेऽष्टाविंशतिरेका । [उपशमसम्यक्त्वप्राप्तावत्र च षड्-क्षपनवकव्यस्वान्नोच्यते] सम्यग्मिथ्यादृष्टौ त्रीणि सत्स्थानानि—चतुर्विंशतिः सप्तविंशतिरष्टाविंशतिरिति । अविरतदेशविरतप्रमत्तामम चेषु पञ्च सत्स्थानानि—एकविंशतिः सप्तकक्षये, द्वाविंशतिः सम्यग्मिथ्यात्वक्षये, त्रयोविंशतिर्मिथ्यात्वक्षये भवति, अनन्तानुबन्धिक्षपा-त्तदुद्वलनाद्वा चतुर्विंशतिर्भवति, सम्यक्त्वप्राप्तौ वेदकोदये चोपशान्तसप्तकस्य चाष्टाविंशतिर्भवति । अपूर्वकरणे सभयं एकविंशतिः चतुर्विंशतिरष्टाविंशतिरिति भावना कर्तव । बादरस्यैकादशसत्स्थानानि, उपशमकस्यैतदेव त्रिकम्, क्षपकस्यैतत् सदष्टकम्—त्रयोदश द्वादशैकादश पञ्चचतुस्त्र्येकमिति, भावना कर्तव। उपशमे सूक्ष्मस्य त्रिकं तदेव, क्षपकस्यैकप्रकृत्यात्मक चतुर्थम् । उपशान्तस्यैतदेव त्रिकं तत्परतो मोहनीयस्य सर्वथाभाव इति गाथार्थः ॥

(मलय०)—'पञ्चादिबन्धकेषु'—पञ्चचतुस्त्रिद्व्येकबन्धकेषु, उपलक्षणमेतत्, अबन्धके च सूक्ष्मसंपराये उपशान्तमोहे च प्रत्येकं त्रीणि त्रीणि सत्तास्थानानि, तद्यथा—'इगचउवीस'त्ति, एकविंशतिश्चतुर्विंशतिरष्टाविंशतिश्च । तत्रैकविंशतिः क्षीणसप्तकस्य, अष्टाविंशतिरुपशा-न्तसप्तकस्य, चतुर्विंशतिरुद्वलितानन्तानुबन्धिनो यथासंभव द्विकोदये एकोदये अनुदये चोपशमश्रेण्यां भवन्ति । अबन्धके च सूक्ष्मसपराये क्षपके एकप्रकृत्यात्मकं चतुर्थं सत्तास्थानं भवति । तथा पञ्चविधबन्धकस्यानिवृत्तिबादरसंपरायस्य क्षपकस्य प्रागुक्ताया एकविंशतेरष्टसु

१ सप्तत्रिंशत्तमगाथोत्तरार्धं पूर्वं व्याख्यातमप्यत्र पुनः किमर्थं व्याख्यायते तदभिप्रायं त एव जानन्ति ।

कषायेषु क्षीणेषु त्रयोदशकं सत्तास्थानम्, ततो नपुंसकवेदे क्षपिते द्वादशकम्, ततः स्त्रीवेदे क्षपिते एकादशकमित्येतान्यन्यानि त्रीणि सत्तास्थानानि, त्रीणि च प्रागुक्तानि, सर्वसंख्यया पञ्चविधबन्धकस्य षट् सत्तास्थानानि। तथा इह कश्चिन्नपुंसकवेदेन क्षपकश्रेणीं प्रतिपन्नः, स च स्त्रीवेदनपुंसकवेदौ युगपत्क्षपयति, स्त्रीवेदनपुंसकवेदक्षयसमकालमेव च पुरुषवेदस्य बन्धो व्यवच्छिद्यते तदनन्तरं च पुरुषवेदहास्यादिषट्के युगपत्क्षपयति। यदि पुनः स्त्रीवेदेन क्षपकश्रेणिं प्रतिपन्नस्ततः स प्रथमतो नपुंसकवेदं क्षपयति, ततोऽन्तर्मुहूर्त्तेन स्त्रीवेदम्, स्त्रीवेदक्षयसमकालमेव च पुरुषवेदबन्धव्यवच्छेदः, तदनन्तरं पुरुषवेदहास्यादिषट्के युगपत्क्षपयति, यावच्च उभयत्रापि ते न क्षीयन्ते तावच्चतुर्विधबन्धकस्य वेदोदयरहितस्यैकोदये वर्त्तमानस्य एकादशकं सत्तास्थानमवाप्यते। पुरुषवेदहास्यादिषट्कयोस्तु युगपत्क्षीणयोश्चतुष्प्रकृत्यात्मकम्। एवं च स्त्रीवेदेन नपुंसकवेदेन वा क्षपकश्रेणिं प्रतिपन्नस्य पञ्चप्रकृत्यात्मकं सत्तास्थानं नावाप्यते। यस्तु पुरुषवेदेन क्षपकश्रेणिं प्रतिपद्यते तस्य षट्नोकषायक्षयसमकालं पुरुषवेदस्य बन्धव्यवच्छेदो भवति। ततस्तस्य चतुर्विधबन्धकाले एकादशप्रकृत्यात्मकं सत्तास्थानं न प्राप्यते, किन्तु पञ्चप्रकृत्यात्मकम्, द्वे च प्रागुक्ते चतुष्कैकादशकरूपे. त्रीणि चोपशमश्रेणिमधिकृत्य प्रागुक्तानि। ततः सर्वसंख्यया चतुर्विधबन्धकस्य षट् सत्तास्थानानि। तथा संज्वलनक्रोधस्य प्रथमस्थितावावलिकाशेषायां बन्धोदयोदीरणा युगपद्व्यवच्छिद्यन्ते। व्यवच्छिन्नासु तु तासु बन्धस्त्रिविधो भवति। संज्वलनक्रोधस्य च तदानीं प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च दलिकं मुक्त्वा अन्यत्सर्वं क्षीणम्। तदपि च सत् समयद्वयोनावलिकाद्विकमात्रेण कालेन क्षयमुपयास्यति, यावच्च न याति तावच्चतस्रः प्रकृतयस्त्रिविधबन्धे सत्यः, क्षीणे तु तस्मिन् तिस्रः, तदेवं त्रिविधबन्धस्यैते द्वे सत्तास्थाने, त्रीणि च प्रागुक्तान्युपशमश्रेणिमधिकृत्य प्राप्यन्ते। सर्वसंख्यया त्रिविधबन्धकस्य पञ्च सत्तास्थानानि। तथा संज्वलनमानस्य प्रथमस्थिता-

मोहस्य सद्बंधोदय संवेध.

चावलिकामात्रशेषायां बन्धोदयोदीरणा युगपद् व्यवच्छिद्यन्ते । व्यवच्छिन्नासु तु तासु बन्धो द्विविधो भवति । संज्वलनमानस्य तदानीं प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च दलिकं मुक्त्वा अन्यत्सर्वं क्षीणम् , तदपि च सत् समयद्वयोनावलिकामात्रेण कालेन क्षयमापत्स्यते यावच्च नापयाति तावदिदं सत्त्वं, क्षीणे च तस्मिन् द्वे, तदेवं द्विविधबन्धकस्य द्वे सत्तास्थाने, त्रीणि चोपशमश्रेणिमधिकृत्य प्रागुक्तानि, सर्वसङ्ख्यया पञ्च । तथा संज्वलनमायायाः प्रथमस्थितौ आवलिकाशेषायामुदयोदीरणाबन्धा युगपद्व्यवच्छेदमायान्ति, व्यवच्छिन्नेषु तेषु एकविधो बन्धो भवति, संज्वलनमायायाश्च तदानीं प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च सदस्ति, अन्यत्समस्तं क्षीणम् , तदपि च सत् समयद्वयोनावलिकाद्विकेन कालेन क्षयमुपगमिष्यति । यावच्च न क्षयमुपयाति तावद् द्वे सती, क्षीणे तु तस्मिन्नेका । तदेवमेकविधबन्धकस्येमे द्वे सत्तास्थाने, त्रीणि चोपशमश्रेणिमधिकृत्य प्रागुक्तानीति सर्वसङ्ख्यया पञ्च । एतदेवाह—चतुर्बन्धकादीनां चतुर्बन्धकत्रिकबन्धकद्विकबन्धकैकबन्धकानां यथासङ्ख्यं चतुष्कं त्रिकं द्विकं एककं च सत्तास्थानं नावतिष्ठते एव, किन्तु 'बन्धात्'—बन्धापेक्षया, एकाधिकाश्च सत्तांशाः सत्तारूपा अंशा भवन्ति, तद्यथा—चतुर्विधबन्धकानां पञ्चप्रकृत्यात्मकाः, त्रिविधबन्धकानां चतुष्प्रकृत्यात्मका इत्यादि बन्धोदयोदीरणासत्ताश्च कर्मणोऽंशा इति व्यवह्रियन्ते, ततः सत्तांशा इत्युक्तम् । अथ बन्धादभ्यधिकाः सत्तांशाः संभवन्तीत्यत आह—'बन्धो' इत्यादि, बन्धोदययोर्विरमे यत्—यस्मात्कारणात्सत् विद्यमान सत् अन्यत्र 'छुभति'—प्रक्षिपति, यथा—पुरुषवेदस्य बन्धोदयव्यवच्छेदे तस्य यत्सत्तच्चतुर्विधबन्धकः सन् संज्वलनक्रोधे प्रक्षिपति, संज्वलनक्रोधस्यापि बन्धोदयव्यवच्छेदे तस्य यत्सत्तत्त्रिविधबन्धकः सन् संज्वलनमाने प्रक्षिपतीत्यादि, यावच्च न निःशेषं प्रक्षिपति तावत्सत्। ततश्चतुर्विधबन्धकादीनां बन्धादेकप्रकृत्यधिकाश्च सत्तांशाः संभवन्ति। क्षपकश्रेणिमधिकृत्य चतुर्विधबन्धकानामिमे द्वे सत्ता-

स्थाने, स्त्रीवेदेन नपुंसकवेदेन वा क्षपकश्रेणिं प्रतिपन्नस्य चतुर्विधबन्धकस्य एकादशकं प्रागुक्तयुक्तेर्लभ्यम्, सर्वेषामपि चोपशमश्रेणिमधिकृत्य प्रागुक्तानि प्रत्येकं त्रीणि त्रीणि । ततः सर्वसंख्यया चतुर्विधबन्धकस्य षट्, शेषाणां तु प्रत्येकं पञ्चसत्तास्थानानि ॥४३-४४॥

मोहस्य सत्तास्थानानां कालः

**सत्तावीसे पल्लासंखंसो पोग्गलद्ध छव्वीसे । बे छावट्ठी अडचउवीसिगिवीसे उ तेत्तीसा ॥४५॥**

**अंतमुहुत्ता उ ठिई तमेव दुहओ विसेससंताणं । होइ अणाइ अणंता अणाइ संतं च छव्वीसा ॥४६॥**

(स्वो०)—सप्तविंशतिसत्स्थानस्य पल्योपमासंख्येयभागमात्रा स्थितिः, पुद्गलपरावर्त्तार्द्धं षड्विंशस्य, द्वे षटषष्टी सागरोपमाणां अष्टाविंशस्य, चतुर्विंशस्य च, एकविंशस्य तु त्रयस्त्रिंशत्सागरोपमाणि स्थितिरिति । एतेषां जघन्या सर्वेषां शेषसत्स्थानानां द्विधापि जघन्यत उत्कृष्टतश्च स्थितिरन्तर्मुहूर्त्तं भवति, अनाद्यपर्यवसितकालमभव्यानां सपर्यवसितमनादिकालं भव्यानां षड्विंशं सत्स्थानं भवतीति समासतो गाथाद्वयार्थः ॥ विस्तरार्थस्तु सप्तविंशतिसत्स्थानस्य पल्योपमासंख्येयभागमात्रा कथं कालस्थितिः ? औपशमिकसम्यक्त्वस्थेनाष्टाविंशतिसत्कर्मतां कृत्वा ततः सास्वादनं गत्वा मिथ्यादृष्टित्वं प्रतिपद्यते, अनन्तरमेव वेदकसम्यक्त्वं वा गत्वाऽन्तर्मुहूर्त्तात्परतः कालान्तरेण वा मिथ्यादृष्टित्वं प्रतिपद्यते, तदुदये सम्यक्त्वमुद्वर्त्त(ल)यितुमारभते, न तत्सत्तायां सम्यग्मिथ्यात्वम्, तच्च पल्योपमासंख्येयभागमात्रेण कालेनोद्वर्त्त(ल)यति, मिथ्यात्वभावेन परिणमयतीत्यर्थः, ततः सप्तविंशतिः भवति, सा च मिथ्यादृष्टेः द्वितीयं सत्स्थानम्, सम्यग्मिथ्यादृष्टेश्च, यत उद्वलनाया अप्रारम्भे तस्य सम्यग्मिथ्यात्वोदयो भवति, तद्गुणप्रत्ययादेवान्तर्मुहूर्त्तिकं मन्तव्यम्, यत्तु मिथ्यादृष्टेस्तस्योद्वर्त्त(ल्य)मानस्य पल्योपमासंख्येयभागोऽतिक्रामति, अत इयन्मात्रा स्थितिः

उत्कृष्टा, जघन्योत्कृष्टता चास्य गुणभेदादवसेया। तदुद्वर्ते(ल)ने च षड्विंशतिसत्स्थानम्, तच्च पुद्गलपरावर्त्तार्द्धं देशोनं भवति। अन्तर्मुहूर्त्तात्परतो वा औपशमिकसम्यक्त्वमासादयति, ततश्चाष्टाविंशतिसत्कर्म्मा भूयोऽपि भवति, एवमेतद् भाव्यम्–'बे छावट्ठी अडचउवीस'इति,द्वे षट्षष्टीसागरोपमाणामष्टाविंशतिसत्स्थानं चतुर्विंशतिसत्स्थानं च,यतो वेदकसम्यक्त्वेनाऽव्यवच्छिन्नेन षट्षष्टिः सागरोपमाणि जीवस्तिष्ठति, ततः सम्यग्मिथ्यात्वं गच्छति, तत्रान्तर्मुहूर्त्तं स्थित्वा भूयोऽपि सम्यक्त्वं गच्छति, तत्स्थानस्थित एव भूयोऽपि षट्षष्टिसागरोपमाणि तिष्ठति, तदूर्द्ध्वायां क्षपकश्रेण्यां मिथ्यात्वं यावद्यं गच्छति। आह–एवं उभयगुणस्थस्यैतत्कालप्राप्तिर्भवति एवं हि सप्तविंशतिसत्स्थाने (सप्तदशबन्धस्थाने) जघन्यस्थितेरभाव इत्यत्रोच्यते–सम्यग्मिथ्यात्वं सम्यक्त्ववद् दृश्यते, यतः उभयोदयेऽपि सप्तदशको बन्ध', तस्मादर्द्धस्य उदयाभागमे प्रतिपादिताः, तद्वल च सम्यक्त्वाभिमुखः किञ्चिद्विशुद्धं क्षोभ्यमान तद्दुपचर्यते, 'कज्जमाणे कडे' इति वचनात् न दोषः। जघन्या अन्तर्मुहूर्त्तिका स्थितिः,यतोऽष्टाविंशतिसत्कर्म्मा यदा वेदकोदयप्राप्तस्तस्मिन्नेव क्षणे सप्तरूक्षपणमारम्भयति तदाविरतदेशविरतप्रमत्ताप्रमत्तेषु (अष्टाविंशतिचतुर्विंशतित्रयोविंशतिद्वाविंशतिरूपाणि) चत्वार्यपि सत्स्थानानि परिपाट्यान्तर्मुहूर्त्तिकानि भवन्ति, एकविंशतिसत्स्थानस्य तु त्रयस्त्रिंशत्सागरोपमाणि स्थिति ,यदा क्षपितसप्तकः सर्वार्थादिषु गच्छति तदा तस्य त्रयस्त्रिंशत्सागरोपमाणि आयुर्भवति तस्य च स्थानस्य स्थितिस्तस्मादागतेनानन्तरभवेऽवश्य वेद्यम्। तुशब्दाधिक्यादष्टाविंशति चतुर्विंशत्येकविंशतिसत्स्थानेषु नरभवसमधिका मन्तव्या। एकविंशतेर्जघन्यान्तर्मुहूर्त्तिका स्थिति' सप्तकक्षयानन्तरमेव क्षपकश्रेणीमारोहतो भवति, यतः क्षपणा प्रकृतीनां अन्तर्मुहूर्त्तिका भवति। एकविंशतेरष्टाभिर्मध्यकषायैः क्षपिते' त्रयोदशकं सत्स्थानम्, तदादीनां जघन्योत्कृष्टा च स्थितिरन्तर्मुहूर्त्तिकाद्यानामपि भवति, यतः क्षपकश्रेण्यां प्रतिपाताभावः, मरणाभावश्चैव भाव्यम्। षड्विंशतिस्थान

भव्यानामनादिसपर्यवसितम् , अभव्यानामनाद्यपर्यवसितं कालं भवति, यतस्तयोरियन्मात्रा स्थितिः, एवं मोहनीयबन्धोदयसत्स्थानप्ररूपणा कृता, अधुना नाम्न आरभ्यत इति गाथाद्वयार्थः । मोहनीयं समाप्तम् ॥४५-४६॥

मोहस्य सत्तास्थान-कालः

(मलय०)—संप्रत्येतेषामेव सत्तास्थानानामवस्थानकालमाह–सप्तविंशतिसत्तास्थानस्याजघन्योत्कर्षमवस्थानकालः पल्योपमासंख्येयभागः, तथाहि–अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेः सम्यक्त्वे उद्वलिते सति सप्तविंशतिसत्तास्थानमवाप्यते, तदनन्तरं च कश्चिद्यावन्नाद्यापि सम्यग्मिथ्यात्वमुद्वलयितुमारभते तावत्सम्यग्मिथ्यात्वोदयमपि गच्छति, तदुक्तं मूलटीकायां–'उद्वलनाया अप्रारम्भे तस्य सम्यग्मिथ्यात्वोदयो भवतीति' स च सम्यग्मिथ्यात्वोदय आन्तर्मौहूर्त्तिकः, ततः सम्यग्मिथ्यादृष्टेरप्यन्तर्मुहूर्त्तकालं यावत्सप्तविंशतिसत्तास्थानं प्राप्यते, अन्तर्मुहूर्त्तानन्तरं चासावप्यवश्यं मिथ्यात्वं गच्छति, मिथ्यात्वं च गतः सन् सम्यग्मिथ्यात्वमुद्वलयितुमारभते, पल्योपमासंख्येयभागमात्रेण च कालेन निःशेषमुद्वलयति, यावच्च न निःशेषमुद्वलयति तावत्सदित्यजघन्योत्कर्षं सप्तविंशतिसत्तास्थानस्य पल्योपमासंख्येयभागः कालः । सम्यग्मिथ्यात्वे चोद्वलिते सति षड्विंशतिसत्तास्थानम् , तस्य चावस्थानमुत्कर्षतः पुद्गलपरावर्त्तार्द्धं देशोनः, ततः परमवश्यमौपशमिकं सम्यक्त्वं करणत्रयेणासादयन्ति, तथा च सत्यष्टाविंशतिसत्कर्मा भूयोऽपि भवति । जघन्यतः पुनः षड्विंशतिसत्तास्थानमन्तर्मुहूर्त्तम् । तथा अष्टाविंशतिचतुर्विंशतिसत्तास्थानयोरुत्कर्षतोऽवस्थानकालो द्वे षट्षष्टी सागरोपमाणाम् , तथाहि–अष्टाविंशतिसत्कर्मणो वेदकसम्यक्त्वसहितस्यैका षट्षष्टिः सागरोपमाणाम् , ततोऽन्तर्मुहूर्त्तं सम्यग्मिथ्यात्वे. ततो भूयोऽपि सम्यक्त्वसहितस्यैका षट्षष्टिः सागरोपमाणाम् , ततः परमवश्यं क्षपकश्रेणिं प्रतिपद्यन्ते, मिथ्यात्वं वा, तद्यदि क्षपकश्रेणिं तर्हि तस्य मिथ्यात्वादि- ॥२५३॥
क्षयादष्टाविंशतिसत्तास्थानमपैति, अपान्तरालवर्त्ति चान्तर्मुहूर्त्तं सम्यग्मिथ्यात्वसत्कं स्तोकत्वान्न विवक्षितम् , ततः क्षपकश्रेणिं प्रति-

पद्यमानानपेक्ष्याष्टाविंशतिसत्तास्थानस्यावस्थानकालो द्वे षट्षष्टी सागरोपमाणाम्। यस्तु मिथ्यात्वं प्रतिपद्यते स पल्योपमासंख्येयभागमात्रेण कालेन सम्यक्त्वं निःशेषमुद्वलयति, यावच्च न निःशेषमुद्वलयति तावत्तत्सदिति तस्य पल्योपमासंख्येयभागमात्राधिके द्वे षट्षष्टी सागरोपमाणामष्टाविंशतिसत्तास्थानस्यावस्थानकालः। एवं चतुर्विंशतिसत्तास्थानस्यापि भावनीयम्, नवरं योऽपि सागरोपमद्विषट्षष्ट्यनन्तरं मिथ्यात्वं प्रतिपद्यते तस्यापि प्रथमसमये एवानन्तानुबन्धिसंभवाच्चतुर्विंशतिसत्तास्थानमपगच्छतीति परिपूर्णे द्वे षट्षष्टी सागरोपमाणां चतुर्विंशतिसत्तास्थानस्यावस्थानकालः, जघन्यतः पुनर्द्वे अप्यान्तर्मौहूर्तिके। तथाहि–अष्टाविंशतिसत्कर्मा वेदकसम्यक्त्वोदयं प्राप्तः सन् तस्मिन्नेव वक्ष्यमाणसप्तकक्षपणमारभते, क्षपणं च कुर्वन्यावन्नाद्यापि अनन्तानुबन्धिनः क्षपयति तावदष्टाविंशतिरेव सत्तास्थानम्, अनन्तानुबन्धिषु तु क्षपितेषु चतुर्विंशतिः, सापि तावत् यावन्नाद्यापि मिथ्यात्वं क्षपयति, मिथ्यात्वे तु क्षपिते त्रयोविंशतिः, तत एवं द्वे अपि चतुर्विंशत्यष्टाविंशती जघन्यतोऽन्तर्मुहूर्तप्रमाणे। एकविंशतिसत्तास्थानस्योत्कर्षतोऽवस्थानकालस्त्रयस्त्रिंशत्सागरोपमाणि, तुशब्दात्किञ्चित्समधिकानि वेदितव्यानि। तथाहि–मनुष्यभवे सप्तकक्षयं कृत्वा सर्वार्थसिद्धिविमाने देवो जातः, तत्र च त्रयस्त्रिंशत्सागरोपमाण्यनुभूय पुनरपीह मनुष्यभवे आयातः, ततो यावन्नाद्यापि क्षपकश्रेणिमारभते तावत्तस्यैकविंशतिरेव सत्तास्थानम्, जघन्यतः पुनरेकविंशतिसत्तास्थानस्यावस्थानमान्तर्मौहूर्तिकम्, तच्च सप्तकक्षयानन्तरं क्षपकश्रेणिमारोहतो द्रष्टव्यम्। 'अंतमुहुत्ताओ' इत्यादि–सप्तविंशतिवर्जानां शेषाणामुक्तानां सत्तास्थानानां जघन्यतः स्थितिरन्तर्मुहूर्तप्रमाणा, सा च प्रागेव भाविता। अथ शेषाणां च सत्तास्थानानामुभयतो जघन्यत उत्कर्षतश्च सदैवान्तर्मुहूर्तमवगन्तव्यम्, तच्च सुप्रतीतमेव। तथा अनादिमिथ्यादृष्टीनां षड्विंशतिसत्तास्थानमभव्यानधिकृत्यानाद्यपर्यवसानम्, भव्यानधिकृत्यानादिसपर्यवसानम्। तदेवं कृता सत्तास्थानानां कालप्ररूपणा,

तत्करणाच्च समाप्तं मोहनीयम् ॥४५-४६॥

**अपज्जत्तगजाईपज्जत्तगईहि पेरिया बहुसो। बंध उदयं च उवेंति सेसपगई उ नामस्स ॥४७॥**

(स्वो०)—अपर्याप्तकजातिपर्याप्तगतिभिः प्रेरिता बहुशः बन्धं उदयं चोपयान्ति शेषप्रकृतयो नाम्न इति पदानि। पदार्थस्तु-अपर्याप्तकनामहेतवस्तत्प्राधान्येन काश्चित्प्रकृतयो मनुष्यगतितिर्यग्गतिप्रायोग्याश्च बन्धं उदयं वा नाम्नो गच्छन्ति। काश्चिज्जातिहेतव इन्द्रियप्राधान्येनेत्यर्थः। काश्चित्पर्याप्तकहेतवोऽन्या देवनरकगतिहेतवो 'बहुशो'-बाहुल्येन वा, यतः स्थावरत्रसतीर्थङ्करप्रकृतीनामपि प्रति हेतुत्वं काराश्चिद् दृश्यत इति गाथार्थः ॥४७॥

(मलय०)—संप्रति नामकर्मणो बन्धादिस्थानानि वक्तव्यानि, याभिः प्रकृतिभिः सहिता नामकर्मणो बह्वयः प्रकृतयो बन्धमुदयं वा गच्छन्ति ता निर्दिदिक्षुराह-अपर्याप्तकजातिपर्याप्तकगतिनामकर्मभिः प्रेरिता इव प्रेरिता नामकर्मणो बहुश इति आर्षत्वात् बह्वयः शेषाः प्रकृतयो, यद्वा बहुश इति अनेकवारं, शेषाः प्रकृतयो बन्धमुदयं वा उपयान्ति, तथाहि-अपर्याप्तकनाम्नि बध्यमाने उदयप्राप्ते वा मनुष्यगतिप्रायोग्यास्तिर्यग्गतिप्रायोग्याश्च नामकर्मणो बह्वयः प्रकृतयो बन्धमुदयं वा गच्छन्ति, जातिनाम्नि चैकेन्द्रियादिरूपे बादरसूक्ष्मादयः, पर्याप्तकनाम्नि च यशःकीर्त्यादयः, देवादिगतौ च वैक्रियद्विकादय इति ॥४७॥

**उदयप्पत्ताणुदओ पएसओ अणुवसंतपगईणं। अणुभागओ उ निच्चोदयाण सेसाण भइअव्वो ॥४८॥**

(स्वो०)—उदयप्राप्तानां प्रकृतीनामुदयो भवति, स चोदयस्त्रिविधः स्थितिक्षयोदयः, संप्राप्त्युदयः, प्रयोगोदयश्च। सर्वासां प्रकृतीनां प्रतिसमयं बन्धस्थितीनां वा स्वकीयाबाधासमाप्तौ उदयावलिकाप्रविष्टादिसमयस्य यः स स्थितिक्षयोदयः, स च सर्वासामुपश-

प्रभावपर्जितानां प्रदेशोदयाख्यः स्वरसानुभवनिरपेक्षः सकर्म्मप्रकृत्यन्तर्गतः प्रतिसमयं भवति संसारस्थप्राणिनाम्। यस्तु तथाविध द्रव्यादिकारणमातो भवति स संप्राप्त्युदयः, स च विपाकोदयाख्यः शुभाशुभरसानुभवनरूपो ध्रुवोदयानामेव प्रतिसमय भवति, इतरासां तु भजनीयः। प्रयोगोदयश्च विपाकोदये सति जीववीर्यप्रयोगेणानुदयप्राप्तदलमुदयप्राप्तस्थितौ यत्प्रक्षिपति सत्प्रयोगोदय उदीरणाभिधान इति गाथार्थः ॥४८॥

(मलय०)—संप्रत्युदयवक्तव्यतामाह–उदयप्राप्तानामबाधाकालक्षयेणोदयसमयप्राप्तानामुदयो भवति, स च द्विधा, प्रदेशतो अनुभागतश्चेत्यर्थः। तत्रानुदयवतीनां प्रकृतीनामबाधाकालक्षये सति दलिकं प्रतिसमयमुदयवतीषु मध्ये स्तिबुकसंक्रमेण संक्रमय्य यदनुभवति स प्रदेशोदयः। स चानुपशान्तानां प्रकृतीनामवसेयः, उपशान्तानां तु न भवति। अनुभागोदयः कश्चिद्विपाकोदय', स च नित्योदयानां ध्रुवोदयानां प्रकृतीनां सर्वदैव प्रवर्त्तते, शेषाणां तु भजनीयः, कदाचिद्भवति कदाचिन्नेति। यस्तु प्रयोगोदय उदीरणाऽपरनामा स विपाकोदये एव प्रवर्त्तमाने प्रवर्त्तते, नान्यथेति न पृथगुक्तः ॥४८॥

देवगतिहेतुमाह–

अथिरासुभचउरंस परघायदुग तसाइ धुवबन्धी। अजसपणिंदि विउव्वाहारगसुभखगइसुरगइया ॥४९॥

(स्वो०)—अस्थिराशुभचतुरस्रसंस्थान पराघातोच्छ्वासं त्रसादयो दश नामध्रुवबन्धिन्यो नव वर्णगन्धरसस्पर्शतैजसकार्म्मणागुरुलघुनिर्माणोपघाताख्याः अयशःपञ्चेन्द्रियवैक्रियद्विकाहारकद्विकशुभविहायोगतयो देवानुपूर्विका चैता द्वात्रिंशत्प्रकृतयो देवगतिसहचरा पन्यमुदय वा गच्छन्ति। अस्थिराशुभायशोऽधिकोपन्यासादष्टौ भङ्गा मन्तव्या इति गाथार्थः ॥४९॥

(मलय०)—संप्रति याः प्रकृतयो देवगत्या सह बन्धमुदयं वा गच्छन्ति ताः प्रतिपादयति—अस्थिरमशुभम्, समचतुरस्रम्, पराघातद्विकम्—पराघातोच्छ्वासरूपम्, त्रसादिदशकम्, 'ध्रुवबन्धिन्यो'—वर्णगन्धरसस्पर्शतैजसकार्मणागुरुलघुनिर्माणोपघातरूपा नवसंख्याः, अयशःकीर्त्तिः, पञ्चेन्द्रियजातिर्वैक्रियद्विकमाहारकद्विकम्, शुभा विहायोगतिर्देवानुपूर्वी चानुक्तापि लभ्यते, एता द्वात्रिंशत्प्रकृतयः 'सुरगतिगाः'—सुरगत्या सह बन्धमुदयं वा गच्छन्तीत्यर्थः। यदा पुनस्तीर्थकरनामापि बध्नाति तदा बन्धे तीर्थकरनामसहितास्त्रयस्त्रिंशत्प्रकृतयो वेदितव्याः ॥४९॥

**बन्धइ तित्थनिमित्ता मणुउरलदुरिसभदेवजोगाओ। नो सुहुमतिगेण जसं नो अजसऽथिराऽसुभाहारे॥**

(स्वो)—तीर्थंकरनाम यदा मनुजगतिस्थितः बध्नाति तदा तन्निमित्ता देवगत्या सह त्रयस्त्रिंशद् बध्नाति। यदा तु देवगतिस्थितः तीर्थकरनाम बध्नाति तदा तन्निमित्तानि मनुष्यद्विकौदारिकद्विकवज्रऋषभनाराचसंहननानि देवद्विकाहारकद्विकवैक्रियद्विकरहिता देवयोग्याश्च सप्तविंशतिं बध्नाति, एवं द्वात्रिंशद् बध्नाति, सपत्नोच्चारणात् भङ्गा ज्ञेयाः। अपवादमाह—सूक्ष्मसाधारणापर्याप्तकमित्यनेन सह यशःकीर्त्तिबन्धो न भवति। न चायशोऽस्थिराशुभप्रकृतय आहारकद्विकेन सह बन्धमुदयं वा यान्तीतिगाथार्थः ॥५०॥

(मलय०)—यदा देवगतौ स्थितः सन् तीर्थकरनाम बध्नाति तदा तीर्थकरनिमित्ताः—तीर्थकरसहिताः मनुष्यद्विकं—मनुष्यगति मनुष्यानुपूर्वीरूपम्, उरलद्विकम्—औदारिकशरीरौदारिकाङ्गोपाङ्गरूपं, वज्रर्षभनाराचमित्येताः पञ्चप्रकृतीर्देवद्विकवैक्रियाहारकद्विकरहिताः शेषाः सप्तविंशतिप्रकृतीर्देवगतिप्रायोग्या बध्नाति। सर्वसंख्यया द्वात्रिंशत्प्रकृतीर्बध्नातीत्यर्थः। तथा 'नो सुहुम' इत्यादि—न सूक्ष्मत्रिकेण—सूक्ष्मसाधारणापर्याप्तकरूपेण सह यशःकीर्त्तिं बध्नाति, नाप्युदयेनानुभवति, नाप्याहारकद्विके बध्यमाने उदयप्राप्ते वा

अयश.कीर्त्यस्थिराशुभरूपास्तिस्रः प्रकृतयो बन्धमुदयं वा गच्छन्ति ॥५०॥

अप्पज्जत्तगबन्ध दूसरपरघायसासपज्जत्त । तसअपसत्थाखगइं वेउव्व नरयगइहेऊ ॥५१॥

(स्वो०)—अपर्याप्तनामहेतुक य बन्ध द्वाविंशतिप्रकृत्यात्मक तन्नरकगतिनिमित्त–तत् साहचर्येण बध्नाति, दुःस्वरपराघातोच्छ्वासपर्याप्तप्रकृतीश्च, पर्याप्तोच्चारणादपर्याप्तस्याबन्ध एव, नापर्याप्तनामापि, नरकगतिसाहचर्यादनुपूर्विकामपि तद्विपामेव । प्रसाप्रशस्तविहायोगतिवैक्रियद्विकमेवग्रहणादौदारिक सामान्योक्त त्यजनीयम् । एव हि हुण्डसंस्थानवर्णगन्धरसस्पर्शागुरुलघूपघाततैजसकार्म्मणनिर्माणास्थिराशुभदुर्भगानादेयायशःपञ्चेन्द्रियजातिबादरप्रत्येकदुःस्वरपराघातोच्छ्वासपर्याप्तकत्रसवैक्रियद्विकाऽप्रशस्तविहायोगत्याऽनुपूर्व्यो नरकगतिहेतवो बन्धमुपयान्ति, अत्र च सपत्नप्रकृतिराहित्यत्वाद्विकल्पो नास्तीति गाथार्थः ॥५१॥

(मलय०)—संप्रति बन्धमधिकृत्य नरकगतिसहचराः प्रकृतीरुपदिशति–अपर्याप्तकप्रायोग्यानां वक्ष्यमाणानां द्वाविंशतिप्रकृतीनां बन्धोऽपर्याप्तकबन्धः, प्राकृतत्वात्सूत्रे नपुंसकनिर्देशः, उत्तरत्र वैक्रियग्रहणादपर्याप्तकबन्धे औदारिकं वक्ष्यते तदिह न ग्राह्यम् । पर्याप्तकग्रहणादपर्याप्त च, तिर्यग्द्विकमनुष्यद्विकयोरन्यतरस्ये नरकद्विकम्, तथा दुःस्वरपराघातोच्छ्वासपर्याप्तकनामानि, [त्रसनामानि] त्रसनाम अप्रशस्तविहायोगतिर्वैक्रियद्विक चेत्येता अष्टाविंशतिप्रकृतयो बन्धमधिकृत्य नरकगतिहेतवो नरकगत्या सह बन्धमायान्तीत्यर्थः ॥५१॥

तिर्यग्मनुष्यभङ्गप्ररूपणार्थं चक्रारणनामाह–

हुंडोराल धुवबन्धिणीउ अथिराइदूसरविहूणा । गइ आणुपुव्वि जाई बायरपत्तेयऽपज्जत्ते ॥५२॥

बन्धइ सुहुमं साहारणं च थावरतसंगछेवट्टं । पज्जत्ते उ सथिरसुभजससासुज्जोवपरघायं ॥५३॥
आयावं एगिंदिय अपसत्थविहदूसरं व विगलेसु । पंचेंदिएसु सुसराइखगइसंघयणसंठाणा ॥५४॥

(स्वो०)—हुण्डसंस्थानमौदारिकशरीरं नामध्रुवबन्धिन्यो नव प्रतीता एव, अस्थिरादयो दुःस्वरं विना पञ्चास्थिराशुभदुर्भगानादेयायश इति षोडश, तिर्यग्द्विकम् मनुष्यद्विकं वा, अन्यतरा जातिः, बादरप्रत्येकनाम अपर्याप्तनाम च एता अपर्याप्तका द्वात्रिंशतिः आहुण्डसंस्थानाच्च उपरि क्रमेण स्थापनीया, अपर्याप्तकसहचरा इति प्रथमगाथार्थः ॥५२॥ स एवापर्याप्तको यदा स्थावरविशेषणविशिष्टो भवति तदा सूक्ष्मसाधारणस्थावरप्रकृत्यात्मिका वामपार्श्वे तदुपरि लता कर्त्तव्या, तिर्यग्द्विकं च दण्डे व्यक्तं भवति, एवं तस्मिन्नपर्याप्तके त्रसनामविशेषिते त्रसौदारिकाङ्गोपाङ्गचरमसंहननात्मिका दक्षिणपार्श्वे हुण्डोपरि लता कर्त्तव्या, एवमुभयलतयोः पञ्चविंशतिः प्रकृतयो भवन्ति, यदा तु पर्याप्तकप्राधान्यं भवति तदा अपर्याप्तकस्थाने तत् क्रियते, ततश्चोभयलतयोः तत्साहचर्यात् स्थिरशुभयशउच्छ्वासोद्योतपराघातप्रकृतयोऽन्या अपि षट् पूर्वाभिः सह बध्नाति, एवं चोभयलतयोरेकत्रिंशत्प्रकृतयो भवन्ति, एते पर्याप्तकलते स्थावरत्रसविशिष्टे इति द्वितीयगाथार्थः ॥५३॥ यदा पर्याप्तकैकेन्द्रियत्वविशिष्टो भवति तदातपनाम द्वात्रिंशत्तमं वामलतायां क्रियते । यदा तु पर्याप्तको विकलेन्द्रियविशिष्टो भवति तदात्वप्रशस्तविहायोगतिः दुःस्वरनाम च दक्षिणलतायां स्थाप्यं त्रयस्त्रिंशत्तममिति । यदा तु पर्याप्तकः पञ्चेन्द्रियतिर्यग्मनुष्यो वा भवति तदा तद्विशिष्टस्य सुस्वरसुभगादेयप्रकृतयो, न यशो अभिहितत्वात्, प्रशस्तविहायोगतिः, इतरस्या(स्यानु)उक्तत्वात्, पञ्चसंस्थानानि पञ्चसंहननान्येवमेताश्चतुर्दश दक्षिणलतोपरि स्थाप्यन्ते । एवं हि पर्याप्तकपञ्चेन्द्रियस्य

सप्तचत्वारिंशत्प्रकृत्यात्मिका दक्षिणा लता ४७। पर्याप्तकविकलेन्द्रियाणां त्रयस्त्रिंशत्प्रकृत्यात्मिका दक्षिणैव लता ३३। अपर्याप्तकत्रसानां पञ्चविंशतिप्रकृत्यात्मिका दक्षिणैव लता २५। पर्याप्तकस्यैकेन्द्रियस्य द्वात्रिंशत्प्रकृत्यात्मिका वामलता ३२। अपर्याप्तकैकेन्द्रियस्य पञ्चविंशतिप्रकृत्यात्मिका वामैव लता। एवं लतापञ्चकस्यापि प्रकृतयः प्रत्येकं स्थापिता एव। एवं सर्वबन्धोदयेषु स्वस्वसंख्याभ्यधिकप्रकृतिभिः सप्तलतारूपाभिर्भङ्गप्ररूपणा कर्तव्येति तृतीयगाथार्थः ॥५४॥

(मलय०)—सम्प्रत्यपर्याप्तकबन्धमेवाह—हुण्डसंस्थानमौदारिकशरीरं नामध्रुवबन्धिन्यो वर्णगन्धरसस्पर्शागुरुलघुतैजसकार्मणोपघात-निर्माणाख्या', अस्थिरादय दुःस्वरविहीनाः—अस्थिराशुभदुर्भगानादेयायशःकीर्तिरूपाः पञ्च प्रकृतय इत्यर्थः'। तथा अन्यतरा गतिरन्यतरानुपूर्वी मनुष्यद्विकं तिर्यग्द्विकं चेत्यर्थः', अन्यतरा जातिर्बादरप्रत्येकापर्याप्तनामानि, एता द्वाविंशतिप्रकृतयोऽपर्याप्तकबन्धसंज्ञाः, पर्याप्तकनाम्ना सहैतासां बन्धे उदये चाऽसंभवात्। इह पूर्वोक्ता अपर्याप्तकबन्धसंज्ञाः प्रकृतीर्बध्नन् यदा एकेन्द्रियप्रायोग्या बध्नाति, तदा अन्या अपि स्थावरसूक्ष्मसाधारणरूपास्तिस्रः प्रकृतयो बन्धयोग्या भवन्ति। अथ त्रसप्रायोग्या बध्नाति तदा त्रसनाम औदारिकाङ्गोपाङ्गं सेवार्तसंहननमित्येवास्तिस्रः प्रकृतयोऽन्या बन्धयोग्या अवसेयाः। तदेवं पर्याप्तकैकेन्द्रियप्रायोग्या अपर्याप्तकप्रायोग्याश्च प्रकृतयः प्रत्येकं पञ्चविंशतिः पञ्चविंशतिरिति। पर्याप्ते पर्याप्तकनामकर्मणि बध्यमाने पूर्वोक्ताः पञ्चविंशतिसंख्याः प्रकृतीरपर्याप्तरहिताः स्थिरशुभयशःकीर्त्युच्छ्वासोद्योतपराघातैः सह बध्नाति। इयमत्र भावना—यदा पर्याप्तकनामबन्धश्चिन्त्यते तदा पूर्वोक्तानां पञ्चविंशतिप्रकृतीनां मध्ये अपर्याप्तकस्थाने पर्याप्तकं प्रक्षिप्यते, तस्मिंश्च प्रक्षिप्ते सति पश्चादेता गाथोक्ताः षट् प्रकृतयः प्रक्षिप्यन्ते, ततो जाता एकत्रिंशत्। एषा च पर्याप्तस्थावरैकेन्द्रियप्रायोग्ये पर्याप्तत्रसप्रायोग्ये च बन्धे प्रत्येकं संभवतो वेदितव्या। इह यदा स्वरबादर-

पर्याप्तैकेन्द्रियप्रायोग्यं बध्नाति तदा द्वात्रिंशत्तममातपनामापि द्रष्टव्यम्। यदा तु पर्याप्तविकलेन्द्रियप्रायोग्यं बध्नाति तदा अप्रशस्तविहायोगतिं दुःस्वरनाम च बध्नातीति पर्याप्तविकलेन्द्रियप्रायोग्यत्रयस्त्रिंशत्प्रकृतयः संभवन्ति। यदा तु पर्याप्तकतिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यबन्धारम्भस्तदा सुस्वरसुभगादेयानि, प्रशस्तविहायोगतिः, अन्तिमवर्जानि पञ्च संस्थानानि, अन्तिमवर्जानि पञ्च संहननानि, अन्तिमे च संस्थानसंहनने प्रागेव प्रक्षिप्ते, इत्यन्तिमवर्जानीत्युच्यते। एताश्चतुर्दशप्रकृतयोऽन्या अपि संभवन्तीति सप्तचत्वारिंशत्प्रकृतयोऽवगन्तव्याः ॥५२-५३-५४॥

उक्ता चक्ररचना, बन्धस्थानान्याह-

**तेवीसा पणुवीसा छव्वीसा अट्ठवीसगुणतीसा। तीसेगतीस एगो बंधट्ठाणाइ नामेऽट्ठ ॥५५॥**

(स्वो०)--त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत् त्रिंशदेकत्रिंशदेकमित्येतानि नाम्नो बन्धस्थानानि-बन्धप्रकारा अष्टौ भवन्तीति गाथार्थः ॥५५॥

(मलय०)—तदेवं पर्याप्तापर्याप्तस्थावरत्रसप्रायोग्यबन्धे यावत्यः प्रकृतयः संभवन्ति तावत्यः प्ररूपिताः, संप्रति यति बन्धस्थानानि नामकर्मणः सर्वात्मना संभवन्ति तति प्ररूपयति-त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका, इत्येतानि नाम्नोऽष्टौ बन्धस्थानानि ॥५५॥

तान्येव गतिषु मृग्यन्ते-

**मणुयगईए सव्वे तिरियगईए छ आइमा बंधा। नरएगुणतीसतीसा पंचछव्वीसा य देवेसु ॥५६॥**

(स्वो०)—'मनुजगतौ'–मनुजभवस्थस्य सर्वेऽप्यखिला नाम्नो बन्धविशेषाः बन्धकत्वं प्रतिपद्यन्ते, सर्वानपि बध्नातीति भावः। कथं? यत तस्य चतसृष्वपि गतिषु गमनमस्ति, तत एकेन्द्रियेषूत्पत्तुमना त्रिपञ्चषड्विंशतीर्बध्नाति, विकलेन्द्रियेषूत्पत्तुमनाः पञ्चविंशत्येकोनत्रिंशत् त्रिंशद् बन्धान् बध्नाति, नारकेषु गन्तुमना अष्टाविंशतिं बध्नाति, देवेषूत्पत्तुकामो जीवोऽष्टाविंशत्येकोनत्रिंशद् त्रिंशदेकत्रिंशत् बन्धान् बध्नाति, उभयश्रेण्योरेकविधबन्धो भवति, एवं मनुष्यगतिस्थस्य सर्वेऽपि बन्धाः सम्भवन्ति। 'तिर्यग्गतौ'–तिर्यग्गतिस्थः षडाद्यान् बन्धान् जीवो बध्नाति, त्रिकपञ्चषडष्टनवाधिका विंशतिः त्रिंशच्च। देवगतिप्रायोग्यैकत्रिंशद्बन्धः तीर्थकराहारकबन्धेन सह भवति, एकबन्धश्च श्रेणिगतस्य, एतौ तस्य न भवत', शेषा मनुष्यस्येव स्वबुध्या भावनीयाः। 'नरकगतौ'–नरकस्थः एकोनत्रिंशद्बन्धं त्रिंशद्बन्धं च बध्नाति, यतोऽवश्यं नारकः पर्याप्तः तिर्यक्षु मनुष्येषु चोत्पद्यते, तयोश्चैकोनत्रिंशद्बन्धप्रायोग्य', यस्तु नारकः तीर्थकरो भविष्यति श्रेणिकवत् स मनुष्यगतिप्रायोग्य त्रिंशद्बन्धं बध्नाति। देवगतौ–देवगतिस्थितः एकोनत्रिंशत्रिंश दूबन्धं बध्नाति भावना नारकवत्, पञ्चविंशतिं पृथिव्यम्बुवनस्पतिषूत्पत्तुकामो बध्नाति। सातपा सैव षड्विंशतिर्भवति, सा तु पृथिवीकायिकानामेव योग्या, एवं देवगतौ चत्वारो बन्धा बध्यन्त इति गाथार्थः ॥५६॥

(मलय०)—सम्प्रत्येतेषां बन्धस्थानानां मध्ये यति बन्धस्थानानि यस्यां गतौ वर्तमानो बध्नाति तस्यां गतौ तानि प्ररूपयति–मनुजगतौ वर्तमानस्य सर्वेऽपि नाम्नो बन्धाः संभवन्ति। इदमुक्तं भवति–मनुजगतौ वर्तमानो जीवः सर्वाण्यपि नामकर्मणो बन्धस्थानानि यथासंभवं बध्नाति। तथाहि मनुष्यः सर्वास्वपि गतिषूत्पद्यते, तत्रैकेन्द्रियेषु मध्ये उत्पद्यमानस्त्रयोविंशतिं पञ्चविंशतिं षड्विंशतिं वा बध्नाति। विकलेन्द्रियेषूत्पद्यमानः पञ्चविंशतिमेकोनत्रिंशतं त्रिंशत बध्नाति। नरकेषूत्पद्यमानोऽष्टाविंशतिम्। देवगता-

वुत्पद्यमानोऽष्टाविंशतिमेकोनत्रिंशतं त्रिंशतमेकत्रिंशतं च बध्नाति। क्षपकश्रेण्यामुपशमश्रेण्यां च वर्त्तमान एकामिति। तथा तिर्यग्गतौ वर्त्तमान आद्यानि षट् बन्धस्थानानि त्रयोविंशतिपञ्चविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपाणि यथासंभवं बध्नाति, तिरश्चोऽपि चतसृष्वपि गतिषु गमनसंभवात्। यस्तु देवगतिप्रायोग्य एकत्रिंशद्बन्धः स तीर्थकराहारकबन्धसहितः, एकविधश्च श्रेणिगतस्येति तौ तिरश्चो न संभवतः। तथा नरके नरकगतौ वर्त्तमान एकोनत्रिंशतं त्रिंशतं वा बध्नाति, यतोऽवश्यं नारकः पर्याप्तेषु तिर्यक्षु मनुष्येषु वा मध्ये समुत्पद्यते, तेषु च प्रायोग्य एकोनत्रिंशद्बन्धः, यस्तु नारकस्तीर्थकरो भविष्यति श्रेणिकवत्, स मनुष्यगतिप्रायोग्यं बध्नन् त्रिंशतं बध्नाति। तथा देवेषु मध्ये स्थितो-देवगतौ वर्त्तमान इत्यर्थः, पञ्चविंशतिं षड्विंशतिं, चशब्दादेकोनत्रिंशतं त्रिंशतं वा बध्नाति। तत्र पञ्चविंशतिं पृथिव्यम्बुवनस्पतिषूत्पद्यमानो बध्नाति, सैव च पञ्चविंशतिरातपेन सहिता षड्विंशतिर्भवति, तां च पृथिवीकायिकेष्वेव मध्ये समुत्पद्यमानो बध्नाति, एकोनत्रिंशत्त्रिंशद्बन्धभावना च नारकवदवसेया ॥५६॥

तानेव गतिप्रायोग्यान् बन्धमाह—

**अडवीसनरयजोग्गा अडवीसाई सुराण चत्तारि। तिगपणछव्वीसेगिंदियाण तिरिमणुयबंधतिगं ॥५७॥**

(स्वो०)—अष्टाविंशतिबन्धो नरकगमनयोग्यप्राणिनां भवति। अष्टाविंशत्याद्याः चत्वारो देवगतिगमनयोग्यानां प्राणिनां भवन्ति। त्रिकपञ्चषड्विंशतिबन्धाः एकेन्द्रियतिर्यग्गतियोग्यानां भवन्ति। पञ्चविंशत्येकोनत्रिंशत्त्रिंशद्बन्धत्रिकं द्वीन्द्रियादितिर्यङ्मनुष्यगतिगमनयोग्याः प्राणिनो बध्नन्ति, यत एवं अतस्ते प्रागुक्तबन्धास्तासां गतीनां योग्या भवन्तीति गाथार्थः ॥५७॥

(मलय०)—तदेवं नाम्नो बन्धस्थानानां बन्धका उक्ताः, संप्रति कस्या गतेः प्रायोग्यं बध्नतः कतिबन्धस्थानानि प्रायोग्यानि भवन्ती-

स्येतन्निरूपयति–*अष्टाविंशतिर्नरकयोग्या*, नरकगतिप्रायोग्यं बध्नत एवमेवाष्टाविंशतिरूपबन्धस्थानमित्यर्थः । तथा 'सुराणां'–देवानां प्रायोग्यं बध्नतोऽष्टाविंशत्यादीनि चत्वारि बन्धस्थानानि, तद्यथा–*अष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च । एकेन्द्रियाणां प्रायोग्यं बध्न*-तस्त्रीणि बन्धस्थानानि, तद्यथा–त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिश्च । द्वीन्द्रियादि(तिर्यङ्म)नुष्यगतिगमनयोग्यं बध्नतो बन्धत्रिकम्, तद्यथा–पञ्चविंशतिरेकोनत्रिंशत्त्रिंशच्च । एतानि सर्वाण्यपि बन्धस्थानानि सप्ततिकायामग्रे भावयिष्यतीति नेह भाव्यन्ते ॥५७॥

गुणस्थानेषु बन्धानाह—

मिच्छम्मि सासणाइसु तिअट्ठवीसाइनामबंधाओ । छत्तिण्णि दोतिदोदो चउ पण सेसेसु जसबंधो ॥५८॥

(स्वो०)—मिथ्यादृष्टौ सास्वादनादिषु त्रयोविंशाद्या नाम्नो बन्धा भवन्ति, यथासङ्ख्येन मिथ्यादृष्टौ षट् त्रयोविंशाद्याः, भावना तिर्यग्गताविव । अष्टाविंशत्याद्यास्त्रयः सास्वादने, यतो देवनरकगतिस्थ एकोनत्रिंशद्बन्धं तिर्यग्मनुष्यप्रायोग्यम्, तिर्यक्प्रायोग्यं त्रिंशद्बन्धं वा बध्नाति, तिर्यग्मनुष्यगतिस्थस्तु देवगतिप्रायोग्यमष्टाविंशतिबन्धं बध्नाति, एवं त्रयो बन्धा भवन्ति । सम्यग्मिथ्यादृष्टौ द्वौ, देवप्रायोग्यमष्टाविंशतिबन्धं तिर्यग्मनुष्यगतिस्थो बध्नाति, देवनरकगतिस्थः मनुष्यगतिप्रायोग्यमेकोनत्रिंशद्बन्धं बध्नाति । अविरते त्रयो बन्धा भवन्ति, तिर्यङ्मनुष्यगतिस्थो देवप्रायोग्यमष्टाविंशतिबन्धं बध्नाति, मनुष्यगतिस्थो देवप्रायोग्यं एकोनत्रिंशद्बन्धं बध्नाति, देवनरकगतिस्थो मनुष्यगतिप्रायोग्यमेकोनत्रिंशद्बन्धं त्रिंशद्बन्धं वा बध्नाति । देशविरतप्रमत्तयोर्द्वौ बन्धौ, तौ मनुजो देवप्रायोग्यमष्टाविंशतिबन्धमेकोनत्रिंशद्बन्धं वा बध्नाति (देशविरतस्तिर्यक्तु अष्टाविंशतिबन्धं बध्नाति) तुशब्दात् यद्यपि आहारकस्य संयमो हेतुः, तथापि प्रमत्तस्य बादरादीनां च यतःसोऽतिमन्दत्वात् तीव्रत्वाच्च न भवति तेन प्रमत्तस्य द्वौ बन्धौ । अप्रमत्तस्य चत्वारोऽष्टाविंशत्याद्या देवप्रायोग्याः, अपूर्वकरणस्य पञ्चापि बन्धा भवति । बादरसूक्ष्मयोः स एवेति गाथार्थः ॥५८॥

नामकर्मणो वंधस्थानानि २३-२५-२६-२८-२९-३०-३१-१ इति ८ तानि गतिषु भाव्यन्ते

मनुष्यस्य वंध प्रा० सर्वाण्यपि तत्प्रदर्श्यंते
एकेंद्रियोत्पित्सोः २३-२५-२६
विकलेंद्रियतिर्यग्पञ्चेन्द्रियोत्पित्सोः २५-२९-३०
नरकोत्पित्सोः २८
देवोत्पित्सोः २८-२९-३०-३१
नरेषूत्पित्सोः २५-२९
क्ष० उ० श्रेण्यां १

तिरश्चो वंध प्रा० २३-२५-२६-२८-२९-३० इति ६
एकें० २३-२५-२६
विक० ति० प० २५-२९-३०
नरको० २८
देवो० २८
नरेषूत्पित्सोः २५-२९

नारकस्य वंध प्रा० २९-३० इति २
तिर्यगु० २९-३०
मनुष्यो० २९-३०

देवस्य वंध प्रा० २५-२६-२९-३० इति ४
२५ पृथिव्यम्बुवनस्पतिषूत्पित्सोः
२६ खरबादरपृथ्वीषूत्पित्सोः
२९ तिर्यङ्नरेषूत्पित्सोः
३० „

कस्या गतेः प्रायोग्यं वध्नतः
कतिवंधस्थानानि ? तत् प्ररूप्यन्ते
नरकगतौ वध्यमाने २८
देवगतौ „ २८-२९-३०-३१
एकेंद्रिये „ २३-२५-२६
द्वीन्द्रियादौ „ २५-२९-३०
पञ्चे० तिर्यग्नरेषु „ „ „

## गुणस्थानेषु नाम्नो बन्धस्थानानि

| गुणस्थानानि | बन्धस्थानानि | बन्धकजीवा | गतिप्रायोग्यानि | गुणस्थानानि | बन्धस्थानानि | बन्धकजीवाः | गतिप्रायोग्यानि |
|---|---|---|---|---|---|---|---|
| १ मे | २३ | तिर्यग्मनुष्याः | एकेन्द्रिय प्रा० | ४ थे | २९ | देवनारकाः | मनुष्य प्रा० |
| " | २५-२६ | विनानारकं सर्वे | " | " | ३० | देवनारकाः | मनुष्य प्रा० |
| " | २५ | तिर्यग्मनुष्याः | तिर्यग्मनुष्य प्रा० | ५ मे | २८ | तिर्यग्नराः | देव प्रायो० |
| " | २८ | " | देवनरक प्रा० | " | २९ | नराः | " |
| " | २९-३० | चातुर्गतिकाः | तिर्यग्मनुष्य प्रा० | ६ ठे | २८-२९ | " | " |
| २ ये | २८ | तिर्यग्नराः | देव प्रा० | ७ मे | २८-२९ | " | " |
| " | २९ | देवनारकाः | ति० मनु० प्रा० | | ३०-३१ | | |
| " | ३० | " | तिर्य० प्रा० | | २८-२९ | | |
| ३ ये | २८ | तिर्यग्नराः | देव प्रा० | ८ मे | ३०-३१ | " | " |
| " | २९ | देवनारकाः | मनु० प्रा० | | १ | | |
| ४ थे | २८ | तिर्यग्नराः | देव प्रायो० | ९ मे | १ | " | |
| " | २९ | मनुष्याः | " | १० मे | १ | " | |

(मलय०)—संप्रति गुणस्थानकेषु बन्धस्थानानि चिन्तयन्नाह–इह पदानां यथासंख्येन योजना, सा चैवं–मिथ्यादृष्टौ त्रयोविंशत्यादयः षट् नामबन्धाः, तद्यथा–त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशत्। 'सासादनादिषु' सासादनमिश्राविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तापूर्वकरणेषु यथासंख्यं त्रिद्व्यादयो नामबन्धाः। तत्र सासादने त्रीणि बन्धस्थानानि, तद्यथा–अष्टाविंशतिरेकोनत्रिंशत् त्रिंशत्। तत्र तिरश्चो मनुष्यस्य वा सासादनस्य देवगतिप्रायोग्यं बध्नतोऽष्टाविंशतिः, देवस्य नारकस्य वा सासादनस्य तिर्यग्मनुष्यप्रायोग्यं बध्नत एकोनत्रिंशत्, तिर्यक्प्रायोग्यं बध्नतस्त्रिंशत्। सम्यग्मिथ्यादृष्टौ द्वे बन्धस्थाने, तद्यथा–अष्टाविंशतिरेकोनत्रिंशच्च। तत्र तिरश्चो मनुष्यस्य वा देवगतिप्रायोग्यं बध्नतोऽष्टाविंशतिः, देवस्य नारकस्य वा मनुष्यगतिप्रायोग्यं बध्नत एकोनत्रिंशत्। अविरतसम्यग्दृष्टौ त्रीणि बन्धस्थानानि, तद्यथा–अष्टाविंशतिरेकोनत्रिंशत्त्रिंशत्। तत्र तिर्यग्मनुष्याणां देवगतिप्रायोग्यं बध्नतामष्टाविंशतिः, मनुष्याणां देवगतिप्रायोग्यं बध्नतामेकोनत्रिंशत्। देवनारकाणां मनुष्यगतिप्रायोग्यं बध्नतामेकोनत्रिंशत् त्रिंशच्च। देशविरते प्रमत्ते च द्वे द्वे बन्धस्थाने, तद्यथा–अष्टाविंशतिरेकोनत्रिंशत्, एते च द्वे अपि देवगतिप्रायोग्यं बध्नतो वेदितव्ये, तत्रापि देशविरतस्य तिरश्चोऽष्टाविंशतिरेव, मनुष्यस्य तु द्वे अपि। नन्वाहारकद्विकबन्धः संयमप्रत्ययः "सम्मत्तगुणनिमित्तं। तित्थयरं संजमेण आहारं" इति वचनात्, संयमश्च प्रमत्तसंयतेऽपि विद्यते, ततस्तत्राहारकद्विकस्यापि बन्धसंभवात्त्रिंशदपि बन्धस्थानं कस्मान्न भवति? तदयुक्तम्, प्रमत्तसंयतसंयमस्य मन्दत्वेनाहारकद्विकबन्धहेतुत्वाभावात्। सुविशिष्टो हि संयम आहारकद्विकबन्धहेतुः, न चासौ प्रमत्तसंयते विद्यते इति तत्र त्रिंशद्बन्धस्थानाऽभावः। अप्रमत्ते अष्टाविंशत्यादीनि चत्वारि बन्धस्थानानि, तद्यथा–अष्टाविंशतिरेकोनत्रिंशत् त्रिंशत् एकत्रिंशच्च। अपूर्वकरणे अष्टाविंशत्यादीनि पञ्च बन्धस्थानानि, तत्र चत्वारि पूर्वोक्तान्येव, पञ्चमं तु यशःकीर्तिरूपैकप्रकृत्यात्मकमिति।

क्षेपयोः पुनरनिवृत्तिबादरसूक्ष्मसंपराययोर्यशःकीर्तिरेवैका बन्धः, न शेषनामप्रकृतीनामतिशुद्धत्वात् । तदेवं गुणस्थानेष्वपि बन्धस्थानान्युक्तानि ॥५८॥

तग्गयणुपुव्विजाई थावरमाईय दूसरविहूणा । धुवबंधिहुंडविग्गह तेवीसा पज्जथावरए ॥५९॥

(स्वो०)—'तद्गती' त्यत्र विवक्षिता तिर्यग्गतिरानुपूर्वी च, एकेन्द्रियजातिः स्थावरसूक्ष्मापर्याप्तकसाधारणास्थिराशुभदुर्भगानादेयायशःकीर्तिनामध्रुवाः, हुण्डसंस्थानं 'विग्रह' इति अपर्याप्तकविशेषणादौदारिकं शरीरं एतास्त्रयोविंशतिप्रकृतयोऽपर्याप्तकैकेन्द्रियस्य भवन्ति । अत्र चत्वारो भङ्गकाः, कथं ? स्थावरैकेन्द्रियापर्याप्तकप्रायोग्यायां पञ्चविंशतिप्रकृतयः, तस्यां द्वे अधिके ते च सपत्ने, बादरसूक्ष्माभ्यां द्वौ भङ्गौ तौ तु साधारणे प्रत्येके चैव चत्वारो भाव्या इति गाथार्थः ॥५९॥

(मलय०)—संप्रत्येकेन्द्रियादीनां प्रायोग्यानि यानि त्रयोविंशत्यादीनि स्थानानि प्रागुक्तानि, तानि भावयितव्यानि । तत्र प्रथमं त्रयोविंशतिं भावयति—इह तच्छब्देन तिर्यञ्चः परामृश्यन्ते, स्थावरादिशब्दसान्निध्यात् । ततश्च तद्गतिः-तिर्यग्गतिः, तदानुपूर्वी-तिर्यगानुपूर्वी, एकेन्द्रियजातिः स्थावरादयो दुःस्वरविहीनाः स्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुर्भगानादेयायशःकीर्तिरूपाः, नामध्रुवबन्धिन्यस्तैजसकार्मणवर्णादिचतुष्टयोपघातागुरुलघुनिर्माणाख्याः हुण्डसंस्थानं विग्रह इति अपर्याप्तकाद्विपदप्रस्तावनमस्तौदारिकशरीरं गृह्यत इत्येता त्रयोविंशतिरपर्याप्तस्थावरे अपर्याप्तकैकेन्द्रियस्य प्रायोग्या द्रष्टव्या । इहापर्याप्तकैकेन्द्रियप्रायोग्याः प्राक् पञ्चविंशतिप्रकृतयः संभवत उपात्ताः, ततो बादरप्रत्येकरूपे द्वे प्रकृती अद्याप्युद्धरिते तिष्ठतः, ते च सूक्ष्मसाधारणयोः प्रतिपक्षभूते, ततो विकल्पेनासामेव त्रयोविंशतौ प्रक्षिप्यते, तथा च सत्यत्र भङ्गाश्चत्वारस्तद्यथा—बादरनाम्नि बध्यमाने एका त्रयोविंशतिः प्रत्येकनाम्ना सह प्राप्यते,

द्वितीया साधारणनाम्ना, एवं सूक्ष्मनाम्नापि बध्यमानेन द्वे त्रयोविंशती इति ॥५९॥

यस्तु स्थावरैकेन्द्रियपर्याप्तकयोग्यं पञ्चविंशतिबन्धं बध्नाति तद्विवक्षयाऽऽह—

**पगईणं वच्चासो होइ गईइंदियाइ आसज्ज । सपराघाऊसासा पणुवीस छवीस साया वा ॥६०॥**

(स्वो०)—प्रकृतीनां पूर्वोक्तानां गतीन्द्रियाद्याश्रित्य व्यत्यासः कर्त्तव्यः, यथा देवनरकगतिप्रकृतीराश्रित्य स्थावरादिचतुष्कस्य व्यत्ययः, यथा द्वीन्द्रियादिजातिमाश्रित्य स्थावरसूक्ष्मसाधारणानां व्यत्यासः, एवं वैक्रियाहारकग्रहणे औदारिकव्यत्यासः, एवं स्वबुद्ध्या योज्यम् । अत्र त्वपर्याप्तकं परित्यज्य पर्याप्तकं स्थाप्यते, शेषं तदेव । सैव प्रागुक्ता त्रयोविंशतिः सपराघातोच्छ्वासा पञ्चविंशतिर्भवति, अत्र भङ्गाः—कथं ? पर्याप्तकैकेन्द्रियवामलता द्वात्रिंशत्प्रकृत्यात्मिका, तस्याः पञ्चविंशतिबन्धे उद्योतातपयोरसंभवात् शेषाः पञ्चाधिकाः सपत्नप्रकृतयः स्थिरास्थिरशुभाशुभबादरसूक्ष्मप्रत्येकसाधारणाभिः षोडश, चतुष्प्रकृतिसापत्न्ये भूयोऽयशः परित्यज्य पञ्चमा यशःप्रकृतिः स्थाप्यते, तेन च सह सूक्ष्मसाधारणाभ्यां न बन्धो, 'नो सुहुमतिगेण जसं' इति वचनात्, स्थिरास्थिराभ्यां द्वौ तौ शुभेऽशुभे चैवं चत्वारो यशसि एवं विंशतिरिति । तस्यैव पर्याप्तकैकेन्द्रियस्य सैव पञ्चविंशतिरातपेन सह बध्यमाना षड्विंशतिर्भवति, अस्मिन् बन्धे षट् सपत्नप्रकृतयो लतायामभ्यधिकास्ताभ्य उद्योतातपाभ्यां सह सूक्ष्मसाधारणयोर्न बन्धः, शेषाश्चत्वारः, स्थिरास्थिराभ्यां द्वौ तावशुभे शुभे चैवं चत्वारो ते अयशसि यशसि चैवमष्टौ ते चातपे उद्योते च षोडश, एवं अत्र "उज्जोएणायवं" इत्यादिवचनाच्चतुःषष्टिभ्यो भङ्गेभ्यः षोडशैव भवन्ति, एवं बन्धत्रयेऽप्येकेन्द्रियाणां चत्वारिंशद् भङ्गा भवन्ति । व्याख्याता चक्रवामलतेति गाथार्थः ॥६०॥

(मलय०)—तदेवमुक्तमपर्याप्तैकेन्द्रियप्रायोग्यं बन्धस्थानम्। संप्रति पर्याप्तैकेन्द्रियप्रायोग्यं वक्तव्यम्, तत्र च काश्चित्प्रकृतिरपनेतव्या, काश्चिच्च प्रक्षेप्तव्या, एवमुत्तरेष्वपि बन्धस्थानेषु, ततः सामान्येन प्रकृतिव्यत्यासे युक्तिमाह—प्रकृतीनां पूर्वोक्तानां गतीन्द्रियादि आदिशब्दात् वैक्रियादि चाश्रित्य व्यत्यासः कर्तव्यः, किमुक्तं भवति? तां गतिं द्वीन्द्रियादित्वमधिकृत्य पूर्वोक्तानां प्रकृतीनां मध्ये स्वयमेव काश्चित्प्रकृतयोऽपनेतव्याः, काश्चिच्च प्रक्षेप्तव्याः, यथा देवगतिं नरकगतिं वा समाश्रित्य स्थावरादिचतुष्कमपनेतव्यम् त्रसादिचतुष्कं च प्रक्षेपणीयम्, द्वीन्द्रियादित्वमाश्रित्य स्थावरसूक्ष्मसाधारणानां स्थाने त्रसबादरप्रत्येकानि प्रक्षेप्तव्यानि, वैक्रियमाहारकं वाधिकृत्यौदारिकस्य स्थाने वैक्रियमाहारकं चेति। संप्रति तु पर्याप्तैकेन्द्रियप्रायोग्यबन्धस्थाने चिन्त्यमाने अपर्याप्तकमपनीय पर्याप्तकं प्रक्षेप्तव्यम्, शेषं तदेव, तथा चाह—सैव प्रागुक्ता त्रयोविंशतिः सपराघातोच्छ्वासा पञ्चविंशतिर्भवति। सा च पर्याप्तैकेन्द्रियप्रायोग्यं बध्नतो मिथ्यादृष्टेरवगन्तव्या। इह पर्याप्तैकेन्द्रियप्रायोग्याः प्रागातपेन सह द्वात्रिंशत्प्रकृतयः सम्भवत उपात्ताः, तत्र च पञ्चविंशतिबन्धे आतपमुद्योतं वा न संभवति। उच्छ्वासपराघाते च प्रकृत्यैव स्वयमेव प्रक्षिप्ते, ततः स्थिरशुभयशःकीर्तिरूपास्तिस्रः प्रकृतयोऽत्राप्युद्धरितास्तिष्ठन्ति, ताश्चास्थिराशुभायशःकीर्तीनां प्रतिपक्षभूता, ततो विकल्पेन तासामेव स्थाने प्रक्षेप्तव्याः, तथा च सत्येवमभिलापः—तिर्यग्गतिस्तिर्यगानुपूर्वी, एकेन्द्रियजातिः, औदारिकतैजसकार्मणानि, हुण्डसंस्थानम्, वर्णादिचतुष्टयम्, अगुरुलघु, उपघातनाम, पराघातनाम, उच्छ्वासनाम, स्थावरनाम, बादरसूक्ष्मयोरेकतरम्, पर्याप्तम्, प्रत्येकसाधारणयोरेकतरम्, स्थिरास्थिरयोरेकतरम्, शुभाशुभयोरेकतरम्, यशःकीर्त्ययशःकीर्त्योरेकतरा, दुर्भगमनादेयं निर्माणमिति। अत्र भङ्गा विंशतिः, तत्र बादरपर्याप्तकप्रत्येकस्थिरशुभेषु बध्यमानेषु यशःकीर्त्या सह एकः, द्वितीयोऽयशःकीर्त्या, एतौ च द्वौ भङ्गौ शुभपदेन लब्धौ, एवमशुभपदेनापि द्वौ भङ्गौ लभ्येते,

ततो जाताश्चत्वारः, एते चत्वारः स्थिरपदेन लब्धाः, एवमस्थिरपदेनापि चत्वारो लभ्यन्ते, ततो जाता अष्टौ, एते बादरपर्याप्तप्रत्येकैः सह लब्धाः। यदा तु प्रत्येकपदस्थाने साधारणं गम्यते, तदा स्थिरास्थिरशुभाशुभायशःकीर्तिपदैश्चत्वारः, यतः साधारणेन सह यशःकीर्तिबन्धो न भवति। "नो सुहुमतिगेण जसं" इति वचनात्। ततस्तदाश्रिता विकल्पा न प्राप्यन्ते। सूक्ष्मपर्याप्तनाम्नोश्च बध्यमानयोः प्रत्येकसाधारणस्थिरास्थिरशुभाशुभायशःकीर्तिभिरष्टौ, सूक्ष्मेनापि सह यशःकीर्तिबन्धाभावादत्रापि तदाश्रिता विकल्पा न प्राप्यन्ते। तदेवं सर्वसंख्यया पञ्चविंशतिबन्धे विंशतिर्भङ्गाः। नैव पञ्चविंशतिगतपदनिर्जिता षड्विंशतिर्भवति। तत्रापि उक्तस्थाने विकल्पेनोद्योतमपि प्रक्षेप्तव्यम्। पर्याप्तैकेन्द्रियप्रायोग्यबन्धे उद्योतस्यापि बन्धसम्भवात्। अत्र भङ्गाः षोडश, ते चातपोद्योतस्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैरवसेयाः। आतपोद्योताभ्यां च सह सूक्ष्मसाधारणयोर्बन्धो न भवति, ततस्तदाश्रिता विकल्पा नोपजायन्ते, तदेवमेकेन्द्रियप्रायोग्यबन्धस्थानकैः सर्वसंख्यया चत्वारिंशद्भङ्गाः ॥६०॥

**तग्गइयाइदुवीसा संघयणतसंगतिरियपणुवीसा। दूसरपराघाउस्सासखगइ गुणतीसतीसमुज्जोवा॥६१॥**

(स्वो०)—तद्गत्यादयो द्वाविंशतिः, पूर्वोक्तास्त्रयोविंशतिः या सा स्थावरनामवर्जिता द्वाविंशतिरिति। तदभावे सूक्ष्मसाधारणयोर्व्यत्यासः, चक्रे तयोर्मूलस्तम्भे यद्ग्रहणात्, सा द्वाविंशतिः संहननमौदारिकाङ्गोपाङ्गयुक्ता पञ्चविंशतिर्भवति अस्याः नास्त्यन्यो विकल्पः। कथं? यतो द्वीन्द्रियापर्याप्तकदक्षिणलतायां पञ्चविंशतिरेव भवति, नास्त्यधिका, नापि न्यूना प्रकृतिरिति। सैव पञ्चविंशतिः दुःस्वरपराघातोच्छ्वासाशुभविहायोगतियुक्ता पर्याप्तकद्वीन्द्रियस्यैकोनत्रिंशद् भवति। तस्यां अष्टौ भङ्गाः, कथं? यतस्तद्दक्षिणलतायां त्रयस्त्रिंशच्चत्वारोऽधिकास्त्रयः सपन्ना उद्योतस्याभासंभवाद् स्थिरास्थिराभ्यां द्वौ, तौ शुभे अशुभे चैवं चत्वारः, ते च यशस्ययशसि

जातिषु नाम्नः बन्धस्थानानां भङ्गाः

चैवमष्टौ। सैकोनत्रिंशदुद्योतेन युक्ता त्रिंशत् द्वीन्द्रियपर्याप्तकस्य भवति, अत्राप्यष्टौ भङ्गाः, अत्रापि त्रयस्त्रिंशत्प्रकृत्यात्मिकैव दक्षिणलता त्रयोऽधिकाः सपत्नाश्च, स्थिरास्थिराभ्यां द्वौ भङ्गौ, तौ शुभेऽशुभे चैवं चत्वारः ते यशस्ययशसि चैवमष्टौ। एवं त्रिष्वपि बन्धेषु सप्तदश। एवं त्रिष्वपि विकलेन्द्रियेषु इन्द्रियभेदेनैकपञ्चाशत् भवति इति गाथार्थः। तामेव गाथां पञ्चेन्द्रियतिर्यक्षु प्रत्याह—या द्वीन्द्रियस्यापर्याप्तकस्य पञ्चविंशतिः पञ्चेन्द्रियत्वकृतो विशेषः, अत्राऽप्येको भङ्गः, यतोऽपर्याप्तकत्रसस्य दक्षिणलता पञ्चविंशतिप्रकृत्यात्मिकैव, अविकसापरत्वरहितत्वादेको भङ्ग इति। दुःस्वरपराघातोच्छ्वासविहायोगतिभिः सहैकोनत्रिंशत् भवति, अस्यां च षट्चत्वारिंशच्छतान्यष्टाभ्यधिकानि भङ्गानाम्। कथं? अत्र पञ्चेन्द्रियपर्याप्तकत्रसस्य दक्षिणलता सप्तचत्वारिंशत्प्रकृत्यात्मिका बन्धश्चैकोनत्रिंशतः, उद्योतश्च त्रिंशद्बन्धे संभवति, शेषा उभययोरपि बन्धयोः, सप्तदशाभ्यधिकाः सपत्नाश्च, ताभ्यः सप्तयुग्मसपत्नाः पञ्चसंस्थानसपत्नाः (पञ्चसंहननसपत्नाः) मङ्गाश्चैवमुभयबन्धयोरपि, स्थिरास्थिराभ्यां द्वौ, तौ शुभेऽशुभे चैवं चत्वारस्ते दुर्भगे सुभगे चैवमष्टौ, तेऽप्यनादेये आदेये चैवं षोडश, ते अयशसि यशसि चैव द्वात्रिंशत्, ते च दुःस्वरे सुस्वरे चैवं चतुष्षष्टिः, ते च प्रशस्ताप्रशस्तविहायोगतौ चैव शतमष्टाविंशत्यधिकम्, तच्चैकैकसंहनने भवति एवं षड्भिः संहननैः सप्तशतान्यष्टषष्ट्यधिकानि भवन्ति, तानि चैकैकसंस्थाने भवन्त्येव हि षड्भिः संस्थानैः षट्चत्वारिंशच्छतान्यष्टाभ्यधिकानि भवन्ति, एवमेकोनत्रिंशद्बन्धे त्रिंशद्बन्धे च ४६०८। एवं त्रिष्वपि बन्धेषु द्वानवति (शतानि) सप्तदशाधिकानि ॥९२१७॥ सर्वेषां तिर्यग्गतौ त्रिनवतिशतानि अष्टाधिकानि। एकेन्द्रियाणां ४०, विकलेन्द्रियाणां ५१, पञ्चेन्द्रियाणां ९२१७, तिर्यग्गतौ ९३०८। व्याख्यातास्तिर्यग्गतिबन्धा इति गाथार्थः ॥९१॥

(मलय०)—सम्प्रति द्वीन्द्रियप्रायोग्यबन्धस्थानप्रतिपादनार्थमाह—तद्गत्यादयस्तिर्यग्गत्यादयो द्वाविंशतिप्रकृतयः पूर्वोक्ता एव,

किमुक्तं भवति ? "तग्गयणुपुव्विजाई थावरमाईय" इत्यादिना त्रयोविंशतिः प्रागुक्ता, सैव स्थावरनामवर्जिता द्वाविंशतिरिहाव-गन्तव्या । केवलं स्थावरनामापनयनादवश्यमिह सूक्ष्मसाधारणयोः स्थाने बादरप्रत्येकनाम्नी प्रक्षेप्तव्ये । ततः संहननं सेवार्त्ताख्यम्, त्रसनाम, औदारिकाङ्गोपाङ्गनाम चेत्येतास्तिस्रः प्रकृतयोऽन्याः प्रक्षिप्यन्ते । ततस्तिरश्चो द्वीन्द्रियस्य प्रायोग्या पञ्चविंशतिर्भवति । सा चैवमभिलापनीया-तिर्यग्गतिस्तिर्यगानुपूर्वी द्वीन्द्रियजातिरौदारिकतैजसकार्मणानि हुण्डसंस्थानं सेवार्त्तसंहननं औदारिकांगोपांगं वर्णादिचतुष्टयं अगुरुलघु उपघातनाम त्रसनाम बादरनाम पर्याप्तकनाम प्रत्येकनामास्थिरमशुभं दुर्भगमनादेयमयशःकीर्त्तिर्निर्माणमिति, एषा चापर्याप्तकद्वीन्द्रियप्रायोग्यं बध्नतो मिथ्यादृष्टेरवसेया । अत्र प्रतिपक्षभूता परावर्त्तमाना प्रकृतिरेकापि न बन्धमायातीत्येक एव भङ्गः । एषैव पञ्चविंशतिर्दुःस्वरपराघातोच्छ्वासाशुभविहायोगतियुक्ता एकोनत्रिंशद्भवति । एषा च पर्याप्तद्वीन्द्रियप्रायोग्यं बध्नतो मि-थ्यादृष्टेः प्रत्येया। अत एवापर्याप्तकस्थाने पर्याप्तकं प्रक्षिप्यते । पर्याप्तकबन्धे च स्थिरशुभयशःकीर्त्तयोऽपि बन्धमायान्ति, ततस्ता अपि अस्थिराशुभायशःकीर्त्तिस्थाने विकल्पेन प्रक्षेप्तव्याः । ततश्चैवमभिलापः-तिर्यग्गतितिर्यगानुपूर्व्यौ, द्वीन्द्रियजातिः, तैजसकार्मणे, हुण्डसंस्थानम्, सेवार्त्तसंहननम्, औदारिकमौदारिकाङ्गोपाङ्गम्, वर्णादिचतुष्टयमगुरुलघु, पराघातमुपघातमुच्छ्वासनाम, अप्रशस्तविहा-योगतिस्त्रसनाम, बादरनाम, पर्याप्तनाम, प्रत्येकं, स्थिरास्थिरयोरेकतरम्, शुभाशुभयोरेकतरम्, दुःस्वरम्, दुर्भगमनादेयम्, यशःकीर्त्त्य-यशःकीर्त्त्योरेकतरा, निर्माणमिति । अत्र स्थिरास्थिरशुभाशुभयशःकीर्त्त्ययशःकीर्त्तिपदैरष्टौ भङ्गाः । सैवैकोनत्रिंशत् उद्योतसहिता त्रिंशदपि । त एवाष्टौ भङ्गाः । एवं सर्वसंख्यया सप्तदश । एवं त्रीन्द्रियप्रायोग्यं चतुरिन्द्रियप्रायोग्यं च बध्नतो मिथ्यादृष्टेस्त्रीणि त्रीणि बन्धस्थानानि सभङ्गानि वाच्यानि । नवरं त्रीन्द्रियाणां त्रीन्द्रियजातिरभिलपनीया, चतुरिन्द्रियाणां चतुरिन्द्रियजातिः, भङ्गाश्च

प्रत्येक सप्तदश सप्तदश। तिर्यक्पञ्चेन्द्रियप्रायोग्यमपि बध्नतस्त्रीणि बन्धस्थानानि, तद्यथा—पञ्चविंशतिरेकोनत्रिंशत् त्रिंशत्। तत्र पञ्चविंशतिर्द्वीन्द्रियप्रायोग्यं बध्नत इव वेदितव्या, नवरं द्वीन्द्रियजातिस्थाने पञ्चेन्द्रियजातिरवसेया। सैव पञ्चविंशतिः पराघातोच्छ्वास-दुःस्वराप्रशस्तविहायोगतिभिः सहैकोनत्रिंशद्भवति। सा च पर्याप्तकतिर्यक्पञ्चेन्द्रियप्रायोग्यं बध्नतो वेदितव्या। पर्याप्ततिर्यक्पञ्चेन्द्रियप्रायोग्यबन्धारम्भे च 'पंचेन्दिए सुसराइ' इत्यादिवचनप्रामाण्यात् सुस्वरसुभगादेयप्रशस्तविहायोगतयः, आद्यानि पञ्चसंस्थानानि, आद्यानि च पञ्च संहननानीत्येताश्चतुर्दशप्रकृतयोऽन्या अपि बन्धमाश्रित्य संभवन्ति, ताश्च दुःस्वरादीनां प्रतिपक्षभूताः, अतो विकल्पेन दुःस्वरदुर्भगानादेयानां स्थाने सुस्वरसुभगादेयप्रकृतयोऽप्रशस्तविहायोगतिस्थाने प्रशस्तविहायोगतिर्हुण्डसंस्थानस्य स्थाने विकल्पेन पञ्चसंस्थानानि, सेवार्तसंहननस्य स्थाने पञ्चसंहननानि प्रक्षेप्तव्यानि। तत्रैवमभिलापः—तिर्यग्गतितिर्यगानुपूर्व्यौ, पञ्चेन्द्रियजातिः, औदारिकमौदारिकाङ्गोपाङ्गम्, तैजसकार्मणे, षण्णां संस्थानानामेकतमत्संस्थानम्, षण्णां संहननानामेकतमत्संहननम्, वर्णादिचतुष्टयमगुरुलघूपघातपराघातोच्छ्वासनाम प्रशस्ताप्रशस्तयोरेकतरा विहायोगतिः त्रसनाम बादरनाम पर्याप्तनाम, प्रत्येकम्, स्थिरास्थिरयोरेकतरम्, शुभाशुभयोरेकतरम्, सुभगदुर्भगयोरेकतरम्, सुस्वरदुःस्वरयोरेकतरम्, आदेयानादेययोरेकतरम् यशःकीर्त्ययशःकीर्त्योरेकतरा, निर्माणमिति। अत्र षड्भिः संस्थानैः, षड्भिः संहननैः, प्रशस्ताप्रशस्तविहायोगतिभ्यां, स्थिरास्थिराभ्याम्, शुभाशुभाभ्याम्, सुभगदुर्भगाभ्याम्, सुस्वरदुःस्वराभ्याम्, आदेयानादेयाभ्याम्, यशःकीर्त्ययशःकीर्तिभ्यां भङ्गा अष्टाधिकषट्चत्वारिंशच्छतसंख्या भवन्ति। सैवैकोनत्रिंशदुद्योतसहिता त्रिंशद्भवति। अत्रापि भङ्गाः प्रागिवाष्टाधिकानि षट्चत्वारिंशच्छतानि। सर्वसंख्यया तिर्यक्पञ्चेन्द्रियप्रायोग्यबन्धस्थानेषु भङ्गा द्वानवतिशतानि सप्तदशाधिकानि (९२१७)। सर्वस्यां तिर्यग्गतौ सर्वसंख्यया भङ्गास्त्रिनवतिशतानि अष्टाधिकानि

(९३०८)। तदेवं व्याख्यातानि तिर्यग्गतिप्रायोग्यानि बन्धस्थानानि ॥६१॥



मनुष्यप्रायोग्यान् बन्धानाह—

**तिरिबंधा मणुयाणं, तित्थगरं तीसमंति इह भेओ। संघयणूणिगुतीसा अडवीसा नारए एक्का ॥६२॥**

(स्वो०)—तिरश्चो बन्धा ये प्रागुक्तास्ते मनुजानां भवन्ति, यद्यप्येकेन्द्रियादयस्तिर्यश्चोऽभिधायन्ते, मनुजानां त्रसत्वात् तेऽपि त्रसप्रायोग्या गृह्यन्ते, अतो ये द्वीन्द्रियादीनां तेऽत्र पञ्चविंशत्येकोनत्रिंशत्रिंशद्बन्धा भवन्ति, मनुजगतिस्तदाऽनुपूर्वी पञ्चेन्द्रियजातिः, त्रसबादरप्रत्येकास्थिराशुभदुर्भगानादेयायशांसि नव नामध्रुवबन्धिन्यो हुण्डसंस्थानं औदारिकं तदङ्गोपाङ्गं अन्त्यसंहननं पञ्चविंशतितममपर्याप्तकमिति। आस्वपर्याप्तकसहचरास्वेको विकल्पो, यतस्तसापर्याप्तकलतायामेतावत्य एव प्रकृतयः, सैव पञ्चविंशतिः स्वरपराघातोच्छ्वासविहायोगतिभिः सहैकोनत्रिंशत्पर्याप्तकसहचरा भवन्ति, पर्याप्तमनुष्यप्रायोग्या इत्यर्थः। तस्यां भङ्गानां षट्चत्वारिंशच्छतान्यष्टाभ्यधिकानि। कथं? यतः पर्याप्तकत्रसपञ्चेन्द्रियस्य सप्तचत्वारिंशत्प्रकृत्यात्मिका दक्षिणलता, तस्यां उद्योतं तन्नात्र संभवति, बन्धे स्वविपक्षाभावात्, शेषाः सप्तदश सपत्नाः प्रकृतयः, सप्त सेतराः पञ्च संहननस्य पञ्च संस्थानस्य सपत्नाः, एवं स्थिरास्थिराभ्यां द्वौ भङ्गौ, तौ शुभेऽशुभे चैवं चत्वारस्ते सुस्वरे दुःस्वरे चैवमष्टौ, ते च सुभगे दुर्भगे च एवं षोडश, ते चाऽऽदेयेऽनादेये चैवं द्वात्रिंशत्, ते यशसि अयशसि चैव चतुःषष्टिः, ते शुभविहायोगतौ अशुभायां चैवं अष्टाविंशत्यधिकशतम्, तच्चैकस्मिन् संहनने, तैः षड्भिः सप्तशतानि अष्टषष्ट्यभ्यधिकानि भवन्ति, तानि चैकैकसंस्थाने, तैः षड्भिः षट्चत्वारिंशच्छतानि अष्टाभ्यधिकानि भवन्ति, एष बन्धश्चतुर्गतिस्थस्यापि मनुष्यप्रायोग्यो भवति। पञ्चविंशतिबन्धस्तु नरतिर्यग्गतिस्थस्यैव नेतरयोरिति। 'तित्थयरं तीसमन्ति' तिर्यक्प्रा-

योग्ये त्रिंशत्तमं उद्योत अत्र तीर्थकरमिति विशेषः । अत्राष्टौ भङ्गाः, कथं ? यदा सदेवनरकगतिस्थो बध्नाति, तदा मनुष्यप्रायोग्या त्रिंशद्विषये तीर्थकरसद्भावात्स्वयस्थितत्वकृतयोऽभिहितास्ताश्चेमाः—अस्थिराशुभसमचतुरस्रं पराघातोच्छ्वास त्रसादयो दश नामध्रुवबन्धिन्यो नव अयशः पञ्चेन्द्रियजाति शुभविहायोगतिः मनुजद्विकौदारिकशरीरमङ्गोपाङ्गं वज्रऋषभनाराचसंहनन तीर्थकरमित्याम्यस्त्रिंशः सप्तला अन्यधिकाश्च । तत्र स्थिरास्थिरयोरेकेन भाव्यमेव द्वौ भङ्गौ, तौ शुभेऽशुभे चैव चत्वार, ते यशस्ययशसि चैवमष्टौ । एवं मनुजगतौ षट्चत्वारिंशच्छतानि सप्तदशाधिकानि भवन्ति ॥४६१७॥ द्वीन्द्रियाणां एकोनत्रिंशत् सैव संहननवर्जिता नारकप्रायोग्या अष्टाविंशतिर्भवति, ताश्चेमाः—हुण्डसंस्थान नव नामध्रुवबन्धिन्यः अस्थिराशुभदुर्भगानादेयायशःपञ्चेन्द्रियजातिबादरप्रत्येकदुःस्वरपराघातोच्छ्वासपर्याप्तत्रसाप्रशस्तविहायोगतिवैक्रियनरकद्विकमित्येतासु यतोऽधिका नास्ति, अत एक एव विकल्प इति गाथार्थः ॥६२॥

(मलय०)—संप्रति मनुष्यगतिप्रायोग्याणि बन्धस्थानान्याह—य एव पञ्चेन्द्रियतिरश्चां प्राग्बन्धा उक्तास्त एव मनुष्याणामपि द्रष्टव्याः, यद्यपि च प्राक् तिर्यञ्चः सामान्येनैकेन्द्रियादय उक्तास्तथापि मनुष्याणां पञ्चेन्द्रियत्वादिह 'तिरिबंधा' इत्युक्तेऽपि तिर्यक्पञ्चेन्द्रियबन्धा इति द्रष्टव्यम् । तथा तिर्यग्गतितिर्यगानुपूर्वीस्थाने मनुष्यगतिमनुष्यानुपूर्व्यौ वक्तव्ये, शेषं तथैव, नवरमिह त्रिंशद्बन्धस्थाने त्रिंशत्तमं तीर्थकरनाम वक्तव्यमिति भेदः । तत्र पञ्चविंशतिबन्धस्थाने प्रागिवैको भङ्गः, एकोनत्रिंशद्बन्धस्थाने अष्टाधिकानि षट्चत्वारिंशच्छतानि । सैवैकोनत्रिंशत्तीर्थकरनामसहिता त्रिंशद्भवति, नवरमस्यां संस्थानं समचतुरस्रमेव, संहननं वज्रर्षभनाराचमेव, विहायोगतिः प्रशस्तैव वक्तव्या, शेषसंस्थानसंहननविहायोगतीनां तीर्थकरनाम्ना सह बन्धासंभवात् । एवं चाभिलपनीया—मनुष्यगतिर्मनुष्यानुपूर्वी पञ्चेन्द्रियजातिरौदारिकशरीरमौदारिकाङ्गोपाङ्गम्, तैजसकार्मणे समचतुरस्रं संस्थानम्, वज्रर्षभनाराचसंहननम्, वर्णादि-

चतुष्टयमगुरुलघु पराघातमुपघातमुच्छ्वासनाम, प्रशस्तविहायोगतिस्त्रसनाम, बादरनाम, पर्याप्तकनाम, प्रत्येकं स्थिरास्थिरयोरेकतरम्, शुभाशुभयोरेकतरम्, सुभगम्, सुस्वरम्, आदेयम्, यशःकीर्त्त्ययशःकीर्त्त्योरेकतरा, तीर्थकरनाम, निर्माणमिति। एनां च त्रिंशतं देवा नारका वा अविरतसम्यग्दृष्टयो मनुष्यगतिप्रायोग्यं बध्नतो बध्नन्ति। अत्र च स्थिरास्थिरशुभाशुभयशःकीर्त्त्ययशःकीर्त्तिपदैरष्टौ भङ्गाः। सर्वसङ्ख्यया मनुष्यगतिप्रायोग्यबन्धस्थानेषु पट्चत्वारिंशच्छतानि सप्तदशाधिकानि (४६१७)॥

संप्रति नरकगतिप्रायोग्यमष्टाविंशतिरूपं बन्धस्थानमाह—नारके नरकगतौ प्रायोग्या एकैवाष्टाविंशतिः, सा च यैव द्वीन्द्रियाणां प्राक् एकोनत्रिंशदुक्ता, सैव संहननवर्जिता द्रष्टव्या। एषा च 'अपज्जत्तबंधं दूसरपराघाए' इत्यादिना प्रागेवोक्ता। तथापीह स्थानाशून्यार्थं भूयोऽपि लिख्यते, नरकगतिर्नरकानुपूर्वी पञ्चेन्द्रियजातिर्वैक्रियं वैक्रियाङ्गोपाङ्गं तैजसकार्मणे हुण्डसंस्थानं वर्णादिचतुष्टयमगुरुलघु उपघातं पराघातमुच्छ्वासनाम अप्रशस्तविहायोगतिः त्रसनाम बादरनाम पर्याप्तकनाम प्रत्येकनाम अस्थिरमशुभं दुर्भगं दुःस्वरमनादेयमयशः-कीर्त्तिर्निर्माणमिति। अत्र सर्वाण्यशुभान्येव कर्माणीत्येक एव भङ्गः॥६२॥

देवप्रायोग्यान् बन्धानाह—

**तित्थयराहारगदोतिसंजुओ बन्धो नारयसुराणं। अनियट्टीसुहुमाणं जसकित्ती एस इगिबन्धो॥६३॥**

(स्वो०)—य एव नारकाणामष्टाविंशतिप्रकृत्यात्मको बन्ध', स एव शुभप्रकृतिविशेषितो देवानां भवति। सैवाष्टाविंशतिः तीर्थककरयुक्ता एकोनत्रिंशद् भवति। आहारकद्विकेन पुनर्युक्ता त्रिंशद् भवति। आहारकद्विकतीर्थकराभ्यां युक्तैकत्रिंशद् भवति। यदा तिर्यग्मनुष्यो वा सामान्यदेवगतिप्रायोग्यं बन्धं बध्नाति, तदाऽष्टाविंशतिप्रकृत्यात्मकमिति। ताश्चेमाः—त्रसादयो दश नव नामध्रुवबन्धि-

न्यो देवगतिस्तदाऽनुपूर्वी पञ्चेन्द्रियजातिः पराघातोच्छ्वासप्रशस्तविहायोगतिचतुरस्रसंस्थान वैक्रियशरीरं तदङ्गोपाङ्गमित्येता अष्टाविंशतिः । अत्राष्टौ भङ्गाः, कथं ? यतो देवगतिसहचराः प्रशस्ता एवागमिहितास्ताश्च आहारकद्विकं नात्र सम्भवति, शेषास्तिस्रोऽपि सविपक्षभूताश्च तास्वष्टौ भङ्गाः, स्थिरास्थिराभ्यां द्वौ, शुभे अशुभे चैव चत्वारस्ते यशस्ययशसि चेत्यष्टाविति । तामेवाष्टाविंशतिं सतीर्थकरां यदा बध्नाति, तदैकोनत्रिंशत् भवति, अत्राप्यष्टौ भङ्गास्त एव, किन्त्वेते मनुजानामविरतादीनां नान्येषामिति विशेषः । यदा सैवाष्टाविंशतिराहारकद्विकेन सह बध्नाति, तदा त्रिंशत् भवति, अस्यामेको भङ्गः, यत उक्तम्-"णोऽससअथिरासुभाहारे" नाहारकेण सहायशोऽस्थिराशुभानां बन्धो भवति, एवं तीर्थकराहारकद्विकेन सहिता सैवाष्टाविंशतिरेकत्रिंशत् भवति, अत्राप्येक एव भङ्गः प्राग्वत् । एतौ च बन्धावप्रमत्तापूर्वकरणयोरेव भवतो नान्यस्येति। एवं देवगतावष्टादश भङ्गाः । अनिवृत्तिबादरसूक्ष्मकषायाणां यशःकीर्तिरेव एकबन्ध इति गाथार्थः ॥६३॥

नरकगतावेकः । तिर्यग्गतौ त्रिनवतिशतान्यष्टोत्तराणि । मनुजगतौ षट्चत्वारिंशच्छतानि सप्तदशाधिकानि । देवगतावष्टादश । यशोबन्धश्चोभयश्रेण्योरेवं बन्धविकल्पानां त्रयोदशसहस्राणि नवशतानि पञ्चचत्वारिंशदधिकानि भवन्ति, १३९४५ ।

(मलय०)—संप्रति देवगतिप्रायोग्याणि बन्धस्थानान्याह-य एव नारकाणां प्रायोग्योऽष्टाविंशतिप्रकृत्यात्मको बन्धः प्रागुक्तः, स एव शुभप्रकृतिविशेषितो देवानां प्रायोग्यो भवति।अस्थिराशुभायशःकीर्तयोऽपि च देवगत्या सह बन्धमायान्ति, ताश्च स्थिरशुभयशःकीर्तीनां प्रतिपक्षभूताः, तत एतासां स्थाने विकल्पेन प्रक्षेपणीयाः। एवं चाभिलापः-देवगतिर्देवानुपूर्वी, पञ्चेन्द्रियजातिर्वैक्रियं वैक्रियाङ्गोपाङ्गं तैजसकार्मणे समचतुरस्रं संस्थानं वर्णादिचतुष्टयं अगुरुलघु पराघातमुपघातमुच्छ्वासनाम प्रशस्तविहायोगतिस्त्रसनाम बादर-

नाम पर्याप्तकनाम प्रत्येकनाम स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं सुभगं सुस्वरमादेयं यशःकीर्त्ययशःकीर्त्योरेकतरा निर्माणमिति। एषा च मिथ्यादृष्टिसासादनमिश्राविरतसम्यग्दृष्टिदेशविरतप्रमत्तानां देवगतिप्रायोग्यं बध्नतामवसेया। अत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्त्तिपदैरष्टौ भङ्गाः। एषैवाष्टाविंशतिस्तीर्थकरसहिता एकोनत्रिंशद्भवति। अत्रापि त एवाष्टौ भङ्गाः। नवरमेनां देवगतिप्रायोग्यां बध्नन्तोऽविरतसम्यग्दृष्ट्यादयो बध्नन्ति। त्रिंशत्पुनरियं–देवगतिर्देवानुपूर्वी पञ्चेन्द्रियजातिर्वैक्रियं वैक्रियाङ्गोपाङ्गं आहारकमाहारकाङ्गोपाङ्गं तैजसकार्मणे समचतुरस्रसंस्थानं वर्णादिचतुष्टयं अगुरुलघु उपघातं पराघातं उच्छ्वासनाम प्रशस्तविहायोगतिस्त्रसनाम बादरनाम पर्याप्तकनाम प्रत्येकनाम शुभनाम स्थिरनाम सुभगनाम सुस्वरनाम आदेयनाम यशःकीर्तिर्निर्माणमिति। एषा च देवगतिप्रायोग्यं बध्नतोऽप्रमत्तसंयतस्यापूर्वकरणस्य वा वेदितव्या। अत्र सर्वाण्यपि कर्माणि शुभान्येवेति एक एव भङ्गः। अक्षरयोजना त्वियं–'नारयसुराणं'ति–यैव नारकाणामष्टाविंशतिरुक्ता, सैव शुभपदविशेषिता सुराणामपि। सैव चाष्टाविंशतिस्तीर्थकरसहिता एकोनत्रिंशत्, आहारकद्विकसहिता त्रिंशत्, केवलमत्र पदानि सर्वाण्यपि शुभान्येव, तानि च तथैव प्राक् दर्शितानि। तीर्थकराहारकाहारकाङ्गोपाङ्गरूपाभिस्तु तिसृभिः प्रकृतिभिर्युक्ता एकत्रिंशत्, साऽपि त्रिंशदिवैकान्तशुभपदा द्रष्टव्या, अत्राप्येक एव भङ्गः। तदेवं सर्वसंख्यया देवगतिप्रायोग्येषु बन्धस्थानेष्वष्टादश भङ्गाः। अनिवृत्तिबादरसूक्ष्मसंपराययोर्यशःकीर्त्तिरेका बन्धमायाति, न शेषाः प्रकृतयः स एकविधो बन्धः ॥६३॥

| बन्धस्थाने | भङ्गाः | भङ्गोत्पत्तिः | प्रायोग्यबन्धे |
|---|---|---|---|
| | | एकेन्द्रिय प्रा० बन्धे (४०) | |
| २३ | ४ | $\frac{\text{बा० सू०}}{२}\times\frac{\text{साधा० प्र०}}{२}=४$ | अपर्याप्त एकेन्द्रियप्रा० बन्धे |
| २५ | २० | $\frac{\text{य० अय०}}{२}\times\frac{\text{शु० अशु०}}{२}\times\frac{\text{स्थि० अस्थि०}}{२}=८$ | पर्या० बा० प्रत्येक० ,, |
| | | अयशासा $\frac{\text{स्थि० अस्थि०}}{२}\times\frac{\text{शु० अशु०}}{२}=४$ | ,, ,, साधारण० |
| | | ,, $\frac{\text{स्थि० अस्थि०}}{२}\times\frac{\text{शु० अशु०}}{२}\times\frac{\text{सा० प्र०सूक्ष्म०}}{२}=८$ | सूक्ष्मसाधारण सू०प्र०प्रा०बन्धे |
| २६ | १६ / ४० | $\frac{\text{आत० उद्यो०}}{२}\times\frac{\text{स्थि० अस्थि०}}{२}\times\frac{\text{शु० अशु०}}{२}\times\frac{\text{य० अय०}}{२}=१६$ | पर्या० प्रत्ये० बाद० प्रा० |
| | | विकलेन्द्रिय प्रा० बन्धे ५१ (१७-१७-१७ इति) | |
| २५ | १ | प्रतिपक्षप्रकृत्यभावात् | अपर्या० विकले० प्रा०बन्धे |
| २९ | ८ | $\frac{\text{स्थि०अस्थि०}}{२}\times\frac{\text{शु० अशु०}}{२}\times\frac{\text{य० अय०}}{२}=८$ | पर्या ,, ,, |
| ३० | ८ / १७* | ,, ,, ,, =८ | ,, ,, ,, |

* १७ भङ्गा द्वीन्द्रियप्रायोग्य ज्ञेया, एवं त्रीन्द्रियचतुरिन्द्रियप्रायोग्यबन्धेऽपि संवेधिका भङ्गा ५१

| | | | |
|---|---|---|---|
| | | तिर्यक्पञ्चेन्द्रियप्रा० बन्धे भङ्गाः (९२१७) | |
| २५ | १ | प्रतिपक्षप्रकृत्यभावात् | अपर्या० ति० पंचे०प्रा० बन्धे |
| २९ | ४६०८ | संघ० (६) × संस्था० (६) × गगतिः (२) × स्थि० अस्थि० (२) × शुभेतरं (२) × सुभगेतरं (२) × आदे०अना० (२) × सुस्व०दुःस्व० (२) × यश० अय० (२) = ४६०८ | पर्या " " |
| ३० | ४६०८ / ९२१७ | " " " " | " " " |
| | | मनुष्यगतिप्रायो० बन्धे भंगाः (४६१७) | |
| २५ | १ | प्रतिपक्षप्रकृत्यभावात् | अपर्या० मनु० प्रा०बन्धे |
| २९ | ४६०८ | तिर्य० पंचे० वत् | पर्या० " " |
| ३० | ८ | स्थि० शु० यशः सेतरैः | तीर्थं०सह " " |
| | ४६१७ | | |
| | | नरकप्रायो० बन्धे भंगः (१) | |
| २८ | १ | सर्वाशुभपदत्वात् | नरक० प्रा०बन्धे |

| | | | |
|---|---|---|---|
| | | देवप्रायो० बन्धे भंगाः (१८) | |
| २८ | ८ | स्थि० शु० यशः सेतरैः | देवप्रा० बन्धे |
| २९ | ८ | " | " |
| ३० | १ | सर्वशुभपदत्वात् | " |
| ३१ | १ | " | " |
| | १८ | | |
| | | सूक्ष्मसंपराये भंग १ | |
| १ | १ | यशोमात्रबन्धेन | यशः मात्रबन्धेन |

नाम्न' प्रकृतीनां गुणेषु बन्धसम्भवमाह—

साहारणाइ मिच्छो सुहुमायवथावर सनरयदुग। इगिविगलिंदियजाई हुंडमपज्जत्तछेवट्ठं ॥६४॥

(स्वो०)—साधारणोपन्यासात् साधारणादिकपञ्चेन्द्रियपर्यन्तानां चतुःषष्टिप्रकृतीनां मिथ्यादृष्टिः बन्धक इति, काश्च ताः ? साधारणसूक्ष्मातप स्थावरं नरकत्रिक एकेन्द्रियविकलेन्द्रियजातयः हुण्डसंस्थानं अपर्याप्त चरमसंहननं एतास्त्रयोदश सास्वादनादयो मुक्त्वा शेषा बध्नन्तीति गाथार्थः ॥६४॥

(मलय०)—संप्रति नामप्रकृतीनां गुणस्थानकेषु बन्धव्यवच्छेदमाह–साधारणादीनां त्रयोदशप्रकृतीनां मिथ्यादृष्टय एव बन्धकाः,

न सास्वादनादयः, तेन साधारणादीनां मिथ्यादृष्टिगुणस्थानके बन्धव्यवच्छेदः, अक्षरयोजना त्वियं-मिथ्यादृष्टिर्बध्नाति साधारणादि, आदिशब्दलभ्याः प्रकृतीः साक्षाद्दर्शयति-सूक्ष्मं आतपं स्थावरं सनरकद्विकम् एकद्वित्रिचतुरिन्द्रियजातीः हुण्डसंस्थानमपर्याप्तं सेवार्त्तसंहननमिति ॥६४॥

सासायणोऽपसत्था विहगगई दुसरदूभगुज्जोवं । अणएज्जं तिरियदुगं मज्झिमसंघयणसंठाणा ॥६५॥

(स्वो०)—सास्वादनोऽप्रशस्तविहायोगतिपूर्वाणां पञ्चेन्द्रियान्तानामेकपञ्चाशत्प्रकृतीनां बन्धकः । कास्ताः ? अप्रशस्तविहायोगतिः दुःस्वरं दुर्भगोद्योतं अनादेयं तिर्यग्द्विकं ऋषभनाराचं नाराचमर्धनाराचं कीलिकान्यग्रोधमण्डलं सादि वामनं कुब्जं एताः पञ्चदश पूर्वोक्ताभिः सहाष्टाविंशतिप्रकृतीः सम्यग्मिथ्यादृष्ट्याद्या न बध्नन्तीति गाथार्थः ॥६५॥

(मलय०)—'सासादनः' सासादनपर्यवसाना अप्रशस्तविहायोगतिदुःस्वरदुर्भगोद्योतानादेयतिर्यग्द्विकाद्यन्तवर्जसंहननसंस्थानरूपाः पञ्चदश बध्नन्ति, शेषास्तु सम्यग्मिथ्यादृष्ट्यादयो न बध्नन्ति ॥६५॥

मीसो सम्मो ओराल-मणुयदुगयाइ आइसंघयणं । बंधइ देसो विरओ अथिरासुभअजसपुव्वाणि ॥६६॥

(स्वो०)—सम्यग्मिथ्यादृष्टिरविरतश्च औदारिकद्विकाद्यानां पञ्चेन्द्रियान्तानां षट्त्रिंशत्प्रकृतीनां बन्धकः । कास्ताः ? औदारिकद्विकं मनुष्यद्विकं वज्रऋषभनाराचसंहननं, एताः पञ्च पूर्वोक्ताभिः सह त्रयस्त्रिंशतो देशविरताद्याः न बध्नन्ति, शेषा एकत्रिंशद् बध्नन्ति । देशविरताः प्रमत्ताश्चास्थिराद्यानां पञ्चेन्द्रियान्तामेकत्रिंशत्प्रकृतीनां बन्धकाः । कास्ताः ? अस्थिरमशुभमयशः, शेषाः स्वस्थाने भणिष्यति, सर्वत्रैवं एताः, पूर्वोक्ताभिः सह षट्त्रिंशदेता अप्रमत्ताद्या न बध्नन्तीति गाथार्थः ॥६६॥

गुणेषु नाम्नः बन्धप्रकृतयः

(मलय०)—मिश्रोऽविरतसम्यग्दृष्टिश्च औदारिकद्विकम्, मनुष्यद्विकम्, आदिमं संहननं वज्रर्षभनाराचरूपमित्येताः पञ्च प्रकृतीर्बध्नाति, किमुक्तं भवति ? मिथ्यादृष्ट्यादयोऽविरतसम्यग्दृष्टिपर्यन्ता पञ्चप्रकृतीर्बध्नन्ति, परे तु न बध्नन्तीति। देशविरतः प्रमत्तश्चास्थिराशुभायशःपूर्वाणि बध्नाति, नाममधादिः, अत्रापीय भावना—मिथ्यादृष्ट्यादयः प्रमत्तपर्यवसाना अस्थिराशुभायशःकीर्तीर्बध्नन्ति, न शेषा अयशःपूर्वाणीति, अयशःशब्दः पूर्वं यस्य कर्मणस्तदयशःपूर्वमयशःकीर्तिरित्यर्थः ॥६६॥

अपमत्तो सनियट्टी सुरदुगवेउव्वजुगलधुवबंधी। परघाउसासखगई तसाइचउरसपचेंदी ॥६७॥

(स्वो०)—अप्रमत्तोऽपूर्वकरणश्च सुरद्विकादीनां पञ्चेन्द्रियान्तानामष्टाविंशतिप्रकृतीनां बन्धकः। कास्ताः ? सुरद्विकं वैक्रियशरीरं तदङ्गोपाङ्गं नामध्रुवबन्धिन्यो नव प्रतीता एव, पराघातमुच्छ्वासं प्रशस्तविहायोगतिः, त्रसादयो दश, चतुरस्रसंस्थानं, पञ्चेन्द्रियजातिः एता अष्टाविंशतिः प्रागुक्ताभिः सह चतुःषष्टिरेता ( यशःकीर्तिविहीना) बादरसूक्ष्मा न बध्नन्ति, मिथ्यादृष्टिरपि अखिला बध्नन्ति, सास्वादनादयः प्रागुक्ताभि० २ हीनां २ बध्नन्तीति गाथार्थः ॥६७॥

(मलय०)—अप्रमत्तः सनिवृत्तिः अपूर्वकरणसहितः, अप्रमत्तोऽपूर्वकरणश्चेत्यर्थः। सुरद्विकवैक्रियद्विकयुगलतैजसकार्मणवर्णादिचतुष्टयागुरुलघूपघातनिर्माणरूपनवध्रुवबन्धिपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकसमचतुरस्रसंस्थानपञ्चेन्द्रियजातिरूपा अष्टाविंशति संख्याः प्रकृतीर्बध्नाति 'न परे' किमुक्तं भवति ? मिथ्यादृष्ट्यादयोऽपूर्वकरणपर्यवसाना एता अष्टाविंशतिप्रकृतीर्बध्नन्ति, न परे अनिवृत्तिबादरसंपरायादयः ॥६७॥

विरए आहारुदओ बंधो पुण जा नियट्टि अपमत्ता। तित्थस्स अविरयाओ जा सुहुमो ताव कित्तीए ॥६८॥

(स्वो०)—'विरते' प्रमत्ताप्रमत्तरूपे, आहारकद्विकस्योदयो भवति, बन्धः पुनराहारकद्विकस्य यावन्निवृत्तिः—यावदपूर्वकरणोऽप्रमत्तादिति, अप्रमत्तेऽपूर्वकरणे चेत्यर्थः। तीर्थङ्करनाम्नोऽविरतसम्यग्दृष्टेर्यावदपूर्वकरणमध्यभागं तावत् बन्धः, उदयस्तु तत्रैव भणिष्यति। यावत्सूक्ष्मसम्परायस्तावत् यशःकीर्त्तिबन्धः, अपूर्वकरणं यावत्प्रागभिहित एव बादरसूक्ष्मकषायार्थोऽयमारम्भः। बन्धं प्रत्येव नाम्नः सप्तषष्टिप्रकृतयोऽभिहिता इति गाथार्थः ॥६८॥

(मलय०)—विरते प्रमत्ते अप्रमत्ते च आहारकद्विकस्योदयो भवति, बन्धः पुनरप्रमत्तादारभ्य यावदपूर्वकरणस्तावद्भवति, शेषेषु तु गुणस्थानकेषु न भवति। तीर्थकरनाम्नः पुनरविरतसम्यग्दृष्टेरारभ्य यावदपूर्वकरणमध्यभागस्तावद्बन्धः, उदयः पुनः सयोगिकेवलिन्ययोगिकेवलिनि च। यशःकीर्त्तेः पुनर्मिथ्यादृष्टेरारभ्य यावत्सूक्ष्मसंपरायस्तावद्बन्धः ॥६८॥

समासो नामबन्ध इति। उदयापवादमाह—

उज्जोवआयवाणं उदओ पुव्विंपि होइ पच्छावि। ऊसाससरेहिंतो सुहुमतिगुज्जोयनायावं ॥६९॥

(स्वो०)—उद्योतातपयोरुदयः 'पूर्वं' प्रथमं भवति, पश्चादपि योज्यम्, केभ्यः? एकेन्द्रियानधिकृत्योच्छ्वासात्, द्वीन्द्रियादीनधिकृत्योच्छ्वासस्वराभ्यामिति। द्वितीयापिशब्दात् न प्राग् न पश्चादिति। कथमेतदवमीयते त्रैविध्यं? चक्रे वामलतायामुच्छ्वासोपरिभणनात् उद्योतातपयोरुपर्युदयो भवति, दक्षिणलतायां स्वराधो भणनादुद्योतस्य प्रथमं भवति, पराघातस्योच्छ्वासादधःस्थानं तत्परित्यजता तदनुदयोऽपि ख्यापित एव। भावार्थस्य दुरवसेयत्वात् सूत्रमिदमकारि। उद्योतमुभयलतयोर्दर्शयता सर्वतिरश्चां संभवः ख्यापितः, आतपस्य त्वेकेन्द्रियाणामेव। हुण्डौरालयोः स्तम्भोपरि स्वस्थानम्, यतस्ते प्रथमपर्याप्त्या सह प्रारभेते, न त्वन्तरभवे।

तत्परित्यज्यादौ निवेशयता एतद् ज्ञापितम्, यदुतोदयमाश्रित्य स्थिरशुभप्रकृती अपर्याप्तकममाश्रये भजतः, अत उभयलतयोस्तस सप्तविंशतिः, शेषं तथैव। सूक्ष्मत्रिकोदये उद्योतस्य चोदये सति नातप उदयं गच्छति, एवं हि बादरे पर्याप्ते प्रत्येके एकेन्द्रिये तदुदयो भवतीति गाथार्थः ॥६९॥

(मलय०)--संप्रति उदये यद्वक्तव्यं तदाह-एकेन्द्रियानधिकृत्योच्छ्वासाद्, द्वीन्द्रियादीनधिकृत्योच्छ्वासस्वराभ्यां पूर्वं पश्चादुद्योतात पर्योर्यथायोगमुदयो भवति, तथैवाग्रे भावयिष्यते। तथा सूक्ष्मत्रिकस्य सूक्ष्मापर्याप्तसाधारणरूपस्योद्योतस्य चोदयेन सह नातपमुदय मागच्छति ॥६९॥

उज्जोवेणायाव सुहुमतिगेण न बज्झए उभय। उज्जोवजसाणुदए जायइ साहारणस्सुदओ ॥७०॥

(स्वो०)—उद्योतेन सहातपम्, सूक्ष्मत्रिकेण सहोभय-आतपमुद्योतं ॥ न बध्यत इति। उदयाधिकारे बन्धप्रतिषेधादेतद् ज्ञापयति, सूक्ष्मत्रिकेण सहातपोद्योतयोरुदयो न भवति, यतोऽयमर्थोऽपवदति, उद्योतयशसोरुदये जायते साधारणस्योदयः, साधारणं चापवदता एतद् ज्ञापितम्, यथा-भूजलाभ्यां विना बादरवनस्पतेरभावः, अत एवातपोद्योतयोरुदयो न वातग्न्योरिति गाथार्थः ॥

(मलय०)-उद्योतेन सहातप तु न बध्यते, नापि 'सूक्ष्मत्रिकेण' सूक्ष्मापर्याप्तसाधारणरूपेण सह 'उभयम्, आतपोद्योतरूपम्। तदे-वमुक्तो बन्धविषयेऽपवादः, साम्प्रतमुदयविषये तमभिधित्सुराह-'उज्जोय' इत्यादि उद्योतयशसोरुदये जायते साधारणस्योदयो, न तु न जायते, किमुक्त भवति ? साधारणोदयेऽप्युद्योतयशःकीर्त्योरुदयो भवतीति ॥७०॥

अमुमेवार्थं भूयोऽपि पुष्णाति-

दुभगाईणं उदए बायरपज्जो विउव्वए पवणो । देवगईए उदओ दुभगअणाएज्ज उदएवि ॥७१॥

(स्वो०)--दुर्भगादीनां तिसृणामशुभानां प्रकृतीनामुदये बादरः पर्याप्तकः वैक्रियशरीरं कुरुते पवनो वायुकायिकः, न तु सुभगादीनामुदये, अतोऽवसीयते वैक्रियशरीरकरणकालेऽपि तस्योद्योतोदयो न भवति, शुभप्रकृतित्वात्, तस्य चाधमजातित्वात्, एवमग्निकायिकानामपि । देवगतिसहचराणामुदयं प्रति विशेषमाह—देवगतेरुदयो भवति दुर्भगानादेयोदयेऽपि, अपिशब्दादाहारकद्विकस्य यथा दुर्भगादिभिः सह बन्धो न भवति, तथोदयोऽपि, अस्थिराशुभाभ्यां सह भवति तयोर्ध्रुवोदयित्वात् । द्विकोपचयापचयात् प्राक्थितैव त्रयस्त्रिंशत्सहचरा आहारकादयो मनुजेषु प्रमत्ताप्रमत्तगुणस्थेषु भवन्ति । देवगत्या सह नाहारकोदय इत्येतद् भावितमिति गाथार्थः ॥७१॥

(मलय०)—'दुर्भगादीनां' दुर्भगानादेयायशःकीर्त्तीनामुदये पवनो बादरः पर्याप्तो 'विकुरुते' वैक्रियशरीरमारभते । बादरपर्याप्तग्रहणे पर्याप्तापर्याप्तसूक्ष्मापर्याप्तबादरव्युदासः, तेषां हि वैक्रियलब्धिरेव न विद्यते, तदुक्तं प्रज्ञापनाचूर्णौ—तिण्हं रासीणं वेउव्वियलद्धी चेव नत्थि, बायरपज्जत्ताणंपि संखेज्जइमे भागे ताण लद्धि अत्थीत्ति"। तथा दुर्भगानादेययोरुदयेऽपि देवगतेरुदयो भवति, दुर्भगानादेययोरुदयेन देवगतेरुदयो न विरुध्यते इत्यर्थः। अपिशब्दस्य बहुलार्थत्वादाहारकद्विकस्योदयो दुर्भगानादेयायशःकीर्त्त्युदयेन सह न भवति, अस्थिराशुभाभ्यां च सह भवति, तयोर्ध्रुवोदयत्वादित्यत्रसेयम् ॥७१॥



सूसरउदओ विगलाण होइ विरयाण देसविरयाणं । उज्जोवुदओ जायइ वेउव्वाहारगद्धाए ॥७२॥

(स्वो०)—चक्रे विकलपर्याप्तकसाहचर्यात्रयस्त्रिंशदुक्तास्तामोदय प्रति विशेषयति—सुस्वरोदयो विकलेन्द्रियाणां भवति, चतुस्त्रिंशत्प्रकृतिभिस्तेषां दक्षिपलता भवतीत्यर्थः । 'विरतानां' प्रमत्ताप्रमत्तानाम्, देशविरतानां विरतसाहचर्यान्मनुष्याणां उद्योतस्योदयो भवति वैक्रियाहारकशरीरकरणकाले ग्रन्थकरणात् ज्ञापयति, यथा पूर्वग्रन्थे देशविरत यावदुद्योतोदयः स च तिरश्चि न मनुष्य इति गाथार्थः ॥७२॥

(मलय०)—'विकलानां विकलेन्द्रियाणाम्, सुस्वरोदयो भवति, सुस्वरोदयस्तेषां न विरुध्यते इति भाव'। तथा मनुष्याणां देशविरतानां सर्वविरतानां वा यथायोग वैक्रियाहारककरणाद्वायां वर्तमानानामुद्योतोदयो भवति, न शेषाणाम् ॥७२॥

नाम्न उदयस्थानान्याह—

अडनववीसिगवीसा चउवीसेगाहिय जाव इगितीसा । चउगइएसु बारस उदयट्ठाणाइ नामस्स ॥७३॥

(स्वो०)—अष्टनवविंशतिरेकविंशतिश्चतुर्विंशतिस्ततो भूयो भूय एकाधिका यावदेकत्रिंशच्चतुर्गतिकेष्वेव प्राणिषु द्वादशोदयस्थानानि भवन्ति, द्वादशैवोदयप्रकारा इति गाथार्थ' ॥७३॥

(मलय०)—तदेवमुदयविषये समयचिन्तामाभाय, साम्प्रतमुदयस्थानान्याह—चतुर्गतिकेषु प्राणिषु द्वादश नाम्न उदयस्थानानि, किमुक्त भवति ? चतुर्गतिकान् प्राणिनोऽधिकृत्य सर्वसङ्ख्यया नाम्नो द्वादशोदयस्थानानि भवन्ति, तद्यथा—अष्टौ नव विंशतिरेकविंशतिश्चतुर्विंशतिः, एवैकाधिकैकाधिका यावदेकत्रिंशत्, पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत् त्रिंशदेकत्रिंशच्चेत्यर्थः ॥७३॥

## अथ जीवस्थानेषु नाम्न उदयस्थानानि भङ्गाश्च (तत्र प्रथममेकेन्द्रियाणां)

| उदय स्थान | उदयस्थानगतप्रकृतयः | भङ्गा | भङ्गोत्पत्तिः | कस्य जीवस्य |
|---|---|---|---|---|
| | ॥ एकेन्द्रियेषु उदयस्थानानि ५ भंगाः ४२ ॥ | | | |
| २१ | तै०-का०-अगु०-स्थि०-अस्थि०-शु०-अशु०—वर्णादि ४-निर्माण इति १२ ध्रुवोदयाः। पुनः तिर्यं० २-स्था०-एके०-[1]बा० सू०-पर्या० अप०-दुर्भ०-अना०-यशः अयशः वा-इति ९ सहिता २१ | ५ | वा०स०/२ × पर्या०अप०/२ = ४ अयशसा<br>बाद०पर्या० यशसा १ बा० पर्या० एके० | पर्याप्तापर्याप्तैकेन्द्रियाणां |
| २४ | औ०-हुं०-उप०-प्रत्ये०-साधा०-सहिता तिर्यगानुपूर्वीरहिता पूर्वोक्ता | १० | प्र०सा०/२ × यशः०अयशः०/२ = ४<br>प्र०सा०/२ = अयशसा<br>पर्या०अप०/२ × प्र०सा०/२ = अयशसा सह | बा०पर्या० तेजस्थानां<br>बा० अप० „<br>सूक्ष्माणां „ |
| २४ | वैक्रियत्रिकसहिता औदा० त्रिकरहिता पूर्वोक्ता | १ | बा० पर्या० प्र० अयशःपदेन १ | वैक्रियस्य बा०वायूनां |

१ अत्र द्वाभ्यां एका मात्रा, एवं यत्र यत्र परस्परविरुद्धाः प्रकृतयः तत्र तत्र एका मात्रा.

| | | | | |
|---|---|---|---|---|
| २४ | १४ परघाते क्षिप्ते २४ | ७ | (प्र०सा / २) × (प०अप० / २) = ४<br>(प्र०सा० / २) अयशसा २<br>सा० पर्या० प्र० अयशसा १ | देहपर्याप्तसाधारणां<br>देहपर्याप्तसूक्ष्माणां<br>वैक्रियिकवायूनां |
| २५ | उच्छ्वासे क्षिप्ते २५ | ७ | पूर्ववत् | उच्छ्वासपर्याप्तानां |
| २६ | उच्छ्वासात् प्राक् उद्योतेन आतपेन वा अधिका २५ | ६ | (प्र० सा० / २) × (प० अप० / २) = ४ उद्योतेन<br>(प्र० / १) × (पर्या० अप० / २) = २ आतपेन | देहपर्याप्तबादराणां |
| २७ | आतपेन उद्योतेन वा सहिता (सोच्छ्वासा) २६ | ६ | " " | उच्छ्वासपर्याप्तानां " |
| | | ४२ | | |
| | द्वीन्द्रियाणां उदयस्थानेषु भंगाः २२ | | | |
| २१ | तिर्य० २-द्वी०-प्रत्येक-पात्र०-पर्या०अप०-दुर्भ०-अना०-य०अय०-१२ ध्रुवोदया | ३ | अयशसा १ अपर्याप्तानां<br>यशोऽयशोभ्यां २ पर्याप्तानां | गत्यन्तराले<br>" |
| २६ | औदा० इत्यादि ५ सहिता तिर्यगानु० वर्जा २१ | ३ | पूर्ववत् | देहस्थानां |
| २८ | परा०मनुप्रगगतिमधिका २६ | २ | यशोऽयशोभ्याम् पर्याप्तानां | देहपर्याप्तानां |

| | | | | |
|---|---|---|---|---|
| २९ | उच्छ्वासाधिका २८ | २ | यशोऽयशोभ्याम् प्रर्याप्तानां | उच्छ्वासपर्याप्तानां |
| २९ | उद्योतसहिता २८ उच्छ्वासात् प्राक् | २ | ,, ,, | देहपर्याप्तानां |
| ३० | स्वरसहिता २९ | ४ | सुस्व० दुःस्व० / २ × य०अय० / २ = ४ | भाषापर्याप्तानां |
| ३० | उद्योतसहिता २९ स्वरात् प्राक् | २ | यशोऽयशोभ्यां | उच्छ्वासपर्याप्तानां |
| ३१ | उद्योतसहिता ३० | ४ | य०अय० / २ × स्वराभ्यां / २ = ४ | भाषापर्याप्तानां |

एवं २२ द्वीन्द्रियाणां २२ त्रीन्द्रियाणां २२ चतुरिन्द्रिणां च=६६ विकलेन्द्रियाणां भंगाः

प्राकृततिर्यक्पञ्चेन्द्रिणामुदयस्थानेषु भङ्गाः (४९०६)
,, मनुष्याणां ,, ,, (२६०२) (मनुष्यस्योद्यतसत्का भङ्गा न भवन्ति)

| | | | | |
|---|---|---|---|---|
| २१ | गति०२-पंचे०-त्र०-बा० पर्या०अपर्या०सुभ० आदे०-यशः-अयशः० १२ ध्रुवोदयाः | ९ | सुभ०दुर्भ० / २ × आदे०अना० / २ × य०अय० / २ =८पर्याप्त० | गत्यन्तराले ति०नराणां |
| | | (मतांतरेण ५) | दुर्भगानादेयायशोभिः १ अपर्याप्तस्य | ,, ,, ,, |
| | | | वा सुभगादेय-दुर्भगाना० / २ × य०अय० / २ =४पर्याप्तस्य | ,, ,, ,, |
| | | | दुर्भगानादेयायशोभिः १=अपर्याप्तस्य | ,, ,, ,, |

| | | | | |
|---|---|---|---|---|
| २९ | औ०२-सं०प०-सं०स्था०-उप-प्र०-सहिता आनुपूर्वी वर्जा सा चैव २१ | २८९ | $\frac{सं०}{६}\times\frac{सं०}{६}\times\frac{सुभ०दुभ०}{२}\times\frac{आदे०अना०}{२}\times\frac{य०अय०}{२}$=२८८ पर्याप्तस्य<br>हुण्डसेवार्तदुर्भगानादेयायशोभिः १ अपर्याप्तस्य | वैक्रियस्थानाम् ,, ,,<br>,, ,, ,, |
| २८ | पराघातखगतियुक्ता २६ | ५७६ | पूर्वोक्त २८८×२ खगतिभ्यां=५७६ पर्याप्तस्य | वैक्रपर्याप्तानां ,, ,, |
| २९ | उच्छ्वासयुक्ता २८ | ५७६ | पूर्ववत् | उच्छ्वा०पर्या०नां ,, |
| २९ | उद्योतयुक्ता वा २८ | ५७६ | ,, | वैक्रपर्याप्तानां ,, |
| ३० | स्वरयुक्ता २९ (सोच्छ्वासा) | ११५२ | ५७६×२ स्वराभ्यां=११५२ | भाषापर्याप्तानां ,, ,, |
| ३० | उद्योतयुक्ता वा २९ ( ,, ) | ५७६ | पूर्वोक्तप्रमाणा | उच्छ्वा० प० ति० |
| ३१ | ,, ३० (सस्वरा) | ११५२ | ,, | भाषा०पर्या०तिरश्चां |
| | एवं सामान्यतिर्य० पंचे०षु | ४९०४ | भंगाः | |
| | ,, ,, मनुष्येषु | २६०२ | भंगाः (उद्योतसत्कानां ३१स्थानसत्कानां चाभावात्) | |

| | वैक्रियतिर्यक्पंचेन्द्रियाणां | | उदयस्थानेषु भंगाः | |
|---|---|---|---|---|
| २५ | वै०२-समच०-उप०-प्रत्येकयुक्ता तिर्यगानु०वर्जा ति०पं० प्रायोग्या २१ | ८ | सुभ०दुर्भ०/२ × आदे०अनादे०/२ × य०अ०/२ = ८ | देहस्थानां |
| २७ | परा०सुखग० युक्ता २५ | ८ | पूर्ववत् | देहपर्याप्तानां |
| २८ | उच्छ्वासयुक्ता २७ | ८ | " | उच्छ्वासपर्याप्तानां |
| २८ | उद्योतयुक्ता वा २७ | ८ | " | देहपर्याप्तानां |
| २९ | सुस्वरसहिता २८ ( सोच्छ्वासा ) | ८ | " | भाषापर्याप्तानां |
| २९ | उद्योतयुक्ता वा २८ ( " ) | ८ | " | उच्छ्वासपर्याप्तानां |
| ३० | " २९ ( सस्वरा ) | ८ | " | भाषापर्याप्तानां |
| | | ५६ | | |

| | | | | |
|---|---|---|---|---|
| | वैक्रियिकनराणां उदयस्थानेषु भंगाः (३५) | | | |
| २५ | नृग०-पंचे०-वै०२-समच०-उप०-प्रत्यादि ४-सुभ०-आदे०-यशः०-१२ ध्रुवोदया | ८ | $\frac{\text{सुभ०दुर्भ०}}{२} \times \frac{\text{आदे०अना०}}{२} \times \frac{\text{य०अय०}}{२} = ८$ | वै०देहस्थानां |
| २७ | परा०-शुभगतिसहिता २५ | ८ | पूर्ववत् | वै०देहपर्याप्तानां |
| २८ | उच्छ्वाससहिता २७ | ८ | " | वै०उच्छ्वासपर्याप्तानां |
| २८ | उद्योतसहिता या २७ | १ | सुभगादेययशोभिः १ (संयतानां) | वै०देहपर्याप्तानां |
| २९ | सुस्वरसहिता २८ ( सोच्छ्वासा ) | ८ | पूर्वोक्तप्रकारेण | वै०भाषापर्याप्तानां |
| २९ | उद्योतसहिता या २८ ( " ) स्वरात् प्राक् | १ | प्रशस्तत्रिभिः (संयतानां) | वै०उच्छ्वासपर्याप्तानां |
| ३० | " २९ ( ससुस्वरा ) | १ | " " | वै०भाषापर्याप्तानां |
| | | ३५ | | |
| | आहारकनराणामुदयस्थानेषु भंगाः (७) | | | |
| २५ | आहा०२-समच०-उप०-प्र० युक्ता नरानुपूर्वी वर्जा नामध्रुवप्रकृत्युदया २१ | १ | सर्वप्रशस्तपदैः १ | आहारकदेहस्थानां |

| | | | | |
|---|---|---|---|---|
| २७ | परा०-सुखगतिसहिता २५ | १ | ,, | आहा०देहपर्याप्तानां |
| २८ | उच्छवाससहिता २७ | १ | ,, | उच्छवास०पर्याप्तानां |
| २८ | उद्योतसहिता वा २७ | १ | ,, | आ०देहपर्याप्तानां |
| २९ | सुस्वरयुक्ता २८ (सोच्छवासा) | १ | ,, | भाषापर्याप्तानां |
| २९ | उद्योतयुक्ता वा २८ ( ,, ) | १ | ,, | उश्वा०पर्याप्तानां |
| ३० | ,, २९ (ससुस्वरा) | १ | ,, | भाषापर्याप्तानां |
| | | ७ | | |
| | केवलिनामुदयस्थानेषु भंगाः (६२) | | | |
| २० | नृग०-पंचे०-त्र०-बा०-पर्या०-सुभ०-आदे०-यशः० १२ ध्रुवाः | १ | सर्वप्रशस्तपदैः (समुद्घातेकार्मणयोगिनां) | अजिनानां |
| २१ | जिननामसहिता २० | १ | ,, ( ,, ) | जिनानां |
| २६ | औ०२-संस्था०१-वज्रर्ष-प्र०-उप० युक्ता २० | * ६ | ६संस्थानैः ६ (समुद्घाते औदा०मिश्रयोगिनां) | अजिनानां |
| २७ | जिननामसहिता २६ | १ | समच० संस्थानेन ( ,, ) | जिनानां |

| | | | | |
|---|---|---|---|---|
| ३० | पराο-उच्छ्वासο-रागο१-स्वर-१-युक्ता ३० | *२४ | $\frac{\text{संस्था०}}{६} \times \frac{\text{खग०}}{२} \times \frac{\text{स्व०}}{२}$ = २४ (औ०काययोगिनां) | अजिनानां |
| ३१ | जिननामयुक्ता ३० | १ | सर्वप्रशस्तपदैः ( " ) | जिनानां |
| ३० | स्वरवर्जा ३१ ( जिनयुक्ता ) | १ | " ( निरुद्धवाग्योगिनां ) | " |
| २९ | उच्छ्वासο वर्जा ३० ( " " ) | १ | " ( निरुद्धोच्छ्वासानां ) | " |
| २९ | स्वरवर्जा ३० ( जिनवर्जा ) | *१२ | $\frac{\text{संस्था०}}{६} \times \frac{\text{खग०}}{२}$ =१२ ( निरुद्धवाग्योगिनां ) | अजिनानां |
| २८ | स्वरवर्जा २९ | *१२ | पूर्ववत् ( निरुद्धोच्छ्वासानां ) | " |
| ९ | मनुο-पञ्चेο-त्रसादि ३-सुभο-आदेο-यο-जिन | १ | प्रशस्तपदत्वात् ( अयोगिचरमसमये ) | जिनानां |
| ८ | जिनवर्जा ९ | १ | " ( " ) | अजिनानां |
| | | ४२ | | |
| | देवानामुदयस्थानेषु भंगाः (६४) | | | |
| २१ | देवग-पंचेο-त्रसादि३-सुभο-आदेο-यशः १२ध्रुवाः | ८ | $\frac{\text{सुभ०दुर्भ०}}{२} \times \frac{\text{आदे०अना०}}{२} \times \frac{\text{यशः अयशः}}{२}$ = ८ | गत्यन्तराले |

* इमे भङ्गाः सामान्यमनुष्यभङ्गान्तर्गतत्वेन पृथक् न गण्यन्ते

| | | | | |
|---|---|---|---|---|
| २६ | वै०२-उप०-प्र०-समच०युक्ता आनुपूर्वी वर्जाच२१ | ८ | पूर्ववत | देहस्थानां |
| २७ | परा०-सुखग०युक्ता २६ | ८ | ,, | देहपर्याप्तानां |
| २८ | उच्छ्वासयुक्ता २७ | ८ | ,, | उच्छ्वासपर्याप्तानां |
| २८ | उद्योतयुक्ता वा २७ | ८ | ,, | देहपर्याप्तानां |
| २९ | सुस्वरयुक्ता २८ ( सोच्छ्वासा ) | ८ | ,, | भाषापर्याप्तानां |
| २९ | उद्योतयुक्ता वा २८ ( ,, ) | ८ | ,, | उच्छ्वासपर्याप्तानां |
| ३० | ,, २९ ( ससुस्वरा ) | ८ | ,, | भाषापर्याप्तानां |
| | | ६४ | | |
| | नारकाणामुदयस्थानेषु भगाः (५) | | | |
| २१ | नरक०२-पं०-त्रसादि३-दुर्भ०-अना०-अय०-१२ध्रु० | १ | सर्वाप्रशस्तपदैः | गत्यन्तराले |
| २५ | वै० २-हुं०-उप--प्र०-युक्ता आनु० वर्जा २१ | १ | ,, | देहस्थानां |
| २७ | परा०-कुखगतियुक्ता २५ | १ | ,, | देहपर्याप्तानां |
| २८ | उच्छ्वासयुक्ता २७ | १ | ,, | उच्छ्वासपर्याप्तानां |
| २९ | दुःस्वरयुक्ता २८ | १ | ,, | भाषापर्याप्तानां |
| | | ५ | | |

॥२७५॥

तानेव गतिष्वाह—

**मणुएसु अचउवीसा वीसड नव वज्जिया उ तिरिएसु। इग पण सगट्ठ नव वीस नारए सुरे सतीसा ते॥**

(स्वो०)—मनुजेष्वेकादशोदया भवन्ति, यतस्तेष्वेकेन्द्रियप्रायोग्या न चतुर्विंशतिः स्यात्, नवाष्टविंशतिभिर्वर्जिता नवोदयास्तिर्यक्षु भवन्ति, यतो नवाष्टकावुदयावयोगिनो विंशत्युदयः केवलिसमुद्घाते नान्यत्रेति। एकपञ्चसप्ताष्टनवविंशतयो नारके पञ्चैवोदया एव भवन्ति, सुरे-देवे त्रिंशदुदययुताः ते एव पञ्च नारकोदया भवन्ति, आत्यास्त्यायामेकवचनमिति गाथार्थः ॥७४॥

(मलय०)—एतान्येवोदयस्थानानि गतिषु चिन्तयन्नाह—मनुष्येषु चतुर्विंशतिवर्जाः शेषा एकादशाप्युदयाः संभवन्ति, चतुर्विंशतिस्तु न संभवति, तस्या एकेन्द्रियेष्वेव संभवात्। तथा विंशत्यष्टनववर्जिताः शेषा नवोदयास्तिर्यक्षु संभवन्ति, विंशत्यष्टनवोदयानां तु तेष्वसम्भवः, यतो नवाष्टोदयावयोगिकेवलिनि प्राप्येते, विंशत्युदयस्तु केवलिसमुद्घातावस्थायामिति। तथा 'नारके' नरकगतौ, पञ्च उदयाः, तद्यथा—एकविंशतिः, पञ्चविंशतिः सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशच्च। एते एव पञ्च उदयाः 'सुरे'[षु] सुरगतौ, 'सत्रिंशतः' त्रिंशत्सहिताः सन्तः षट् वेदितव्याः ॥७४॥

गुणेषूदयानाह—

**इगवीसाई मिच्छे सगट्ठवीसा य सासणे हीणा। चउवीसूणा सम्मे स पचवासाएँ जोगिम्मि ॥७५॥**

**पणवीसाई देसे छव्वीसूणा पमत्ते पुण पच। गुणवीसाई मीसे तीसिगुतीसा य अपमत्ते ॥७६॥**

अट्ठो नवो अजोगिस्स वीसओ केवलीसमुग्घाए। इगिवीसो पुण उदओ भवंतरे सव्वजीवाणं ॥७७॥

(स्वो०)—एकविंशत्यादयो नवोदया मिथ्यादृष्टौ भवन्ति, यतः—स सर्वजीवजातिषु भवति, सप्ताष्टाविंशतिभ्यां हीनास्त एव सप्त सास्वादने भवन्ति, कथम् ? एकविंशतिर्भवान्तरे, चतुर्विंशतिः प्रत्येकबादरपर्याप्तकैकेन्द्रियस्य जन्मादिसमये, एवं षड्विंशतिर्द्वीन्द्रियादिषूत्पद्यमानस्य, पञ्चविंशतिरुत्तरवैक्रियकरणादिकाले, एकोनत्रिंशत्पर्याप्तनारकाणाम्, त्रिंशत्पर्याप्तमनुष्यदेवानाम्, एकत्रिंशदुद्योतवेत्तॄणां पञ्चेन्द्रियतिरश्चां भवति। सप्तविंशतिरष्टाविंशतिश्च न संभवति, यतो मध्यपर्याप्तिकाले सास्वादनत्वं न भवति, तौ चोदयावुत्पत्तिकालान्तरभाविनावतो न भवति। ते एवैकविंशत्याद्याः नव चतुर्विंशत्युदयरहिता अष्टावविरते भवंति। कथं ? चतसृष्वपि गतिषु संज्ञिषूत्पद्यमानस्यैकविंशत्याद्याः स्वोदया भवन्ति, नचैकेन्द्रियेषु तस्योत्पत्तिरतश्चतुर्विंशत्युदयो न भवति, चतुर्विंशतिपञ्चविंशत्युदयरहितास्त एवैकविंशत्याद्या नव सयोगिनः सप्त भवन्ति, विंशतिः समुद्घाते भणिष्यति, एकषट्सप्ताष्टनवविंशतयोऽपि समुद्घाते योगनिरोधे वा, त्रिंशत्सामान्यकेवलिनः एकत्रिंशत्तीर्थकरस्येति गाथार्थः ॥७५॥ पञ्चविंशत्याद्याः सप्तोदया देशविरते षड्विंशत्या हीनाः षट् भवन्ति, पञ्चसप्ताष्टनवविंशतय उत्तरवैक्रियं कुर्वतो भवन्ति, त्रिंशत्तिर्यग्मनुष्ययोरेकत्रिंशदुद्योतमनुभवतस्तिरश्चो भवति। प्रमत्ते पञ्चविंशत्याद्याः षड्विंशत्या हीनाः पञ्च भवन्ति, न षष्ठः एकत्रिंशदुदयः, यतस्तिर्यग्भवस्थस्य सर्वविरतिर्न भवति। पुनः शब्दाधिक्यात् तस्योत्तरवैक्रियमाहारकं वा कुर्वतः पञ्चसप्ताष्टनवविंशतयो भवन्ति, त्रिंशदुदयो मनुष्ययोग्य एवेति। एकोनत्रिंशदाद्यास्त्रयः सम्यग्मिथ्यादृष्टौ उदया भवन्ति, एकोनत्रिंशत् नारकस्य, त्रिंशदुदयो देवमनुष्यतिर्यग्भवस्थस्य, एकत्रिंशदुदयस्तिर्यग्भवस्थस्यैव। एकोनत्रिंशत्त्रिंशच्चाप्रमत्तस्य उत्तरवैक्रिये आहारके वा प्रमत्तेन निष्पादिते यदाऽप्रमत्ततां भजति तदैकोनत्रिंशत्, त्रिंशन्मनुष्यस्य भवत्येव। तुशब्दादपूर्वकरणबादर-

सूक्ष्मोपशान्तक्षीणकषायेष्वपि त्रिंशन्मनुष्यस्वात् तेषामिति गाथार्थः ॥७६॥ अष्टकोदयः सामान्यायोगिनो, नवोदयः तीर्थकरायोगिनो भवति । विंशत्युदयः सामान्यकेवलिनः समुद्घाते, एकविंशत्युदयः पुनस्तीर्थकरस्य समुद्घाते, अथवा एकविंशत्युदयः पुनः भवान्तरे जन्मसंक्रमे सर्वजीवानां भवति इति गाथार्थः ॥७७॥

(मलय०)—संप्रति गुणस्थानकेषूदयस्थानानि चिन्तयन्नाह—मिथ्यादृष्टावेकविंशत्यादयो नव उदया भवन्ति, तद्यथा—एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशच्च । मिथ्यादृष्टेः सर्वजीवयोनिषु संभवात् । विंशत्यष्टनवोदया न संभवन्ति, तेषां केवलिसमुद्घाताद्यवस्थायां भावात् । एते एव नवोदयाः सप्तविंशत्यष्टाविंशतिभ्यां हीनाः शेषा सप्त सासादने संभवन्ति । तत्रैकविंशत्युदयो भवान्तरे, चतुर्विंशत्युदयः पर्याप्तप्रत्येकबादरैकेन्द्रियस्य जन्मप्रथमसमये, षड्विंशतिर्द्वीन्द्रियादिषूत्पद्यमानस्य, पञ्चविंशतिरुत्तरवैक्रियकरणप्रथमकाले, एकोनत्रिंशत्पर्याप्तनारकाणाम्, त्रिंशत्पर्याप्तमनुष्यदेवानाम्, एकत्रिंशत्पञ्चेन्द्रियतिरश्चामुद्योतवेदकानाम्, यौ तु सप्तविंशत्यष्टाविंशत्युदयौ तौ न संभवतः, यतस्तौ किञ्चिदूनापर्याप्तावस्थायां भवतः, तदानीं च सासादनत्वं न प्राप्यते । त एवैकविंशत्यादयो नवोदयाश्चतुर्विंशत्यूनाः शेषा अष्टौ उदया अविरतसम्यग्दृष्टौ भवन्ति, अविरतसम्यग्दृष्टेश्चतसृष्वपि गतिषु अपर्याप्तपर्याप्तावस्थायां वा प्राप्यमाणत्वात् । चतुर्विंशत्युदयस्तु तस्य न संभवति, एकेन्द्रियेष्वेव चतुर्विंशत्युदयस्य प्राप्यमाणत्वात्, एकेन्द्रियाणां चाविरतसम्यग्दृष्टित्वाभावात् । तथा एते एवाष्टौ पञ्चविंशत्या ऊनाः शेषाः सप्तोदयाः सयोगिकेवलिनि भवन्ति । अष्टमस्तु [एक]विंशत्युदयोऽग्रे भणिष्यते । तत्रैकविंशतिषड्विंशतिसप्तविंशत्युदयाः समुद्घातावस्थायाम्, अष्टाविंशतिनवविंशत्युदयौ योगनिरोधावस्थायाम्, त्रिंशदुदयः सामान्यकेवलिनः स्वभावस्थस्य, तीर्थकृतो वा कृतयोगनिरोधस्य, एक

त्रिंशदुदयस्तीर्थकरस्य । तथा पञ्चविंशत्यादयः सप्तोदयाः षड्विंशत्यूनाः षट् देशविरते भवन्ति। तत्र पञ्चविंशतिसप्तविंशत्यष्टाविंशतिनवविंशत्युदया उत्तरवैक्रियं कुर्वतो वेदितव्याः, त्रिंशदुदयस्तिर्यग्मनुष्ययोः पर्याप्तयोः, एकत्रिंशदुदय उद्योतमनुभवतस्तिरश्च इति। तथा 'प्रमत्ते'-प्रमत्तसंयते, पञ्चविंशत्यादयः षड्विंशतिहीनाः शेषाः क्रमेण पञ्च उदया भवन्ति । तत्र पञ्चविंशतिसप्तविंशत्यष्टाविंशतिनवविंशत्युदया वैक्रियमाहारकं वा कुर्वतः संयतस्य वेदितव्याः । त्रिंशदुदयस्तु सामान्यसंयतस्य, यस्त्वेकत्रिंशदुदयः स तिरश्चामेव भवतीति न संयतस्य प्राप्यते। तथा एकोनत्रिंशदादयस्त्रय उदयाः सम्यग्मिथ्यादृष्टौ भवन्ति, तत्रैकोनत्रिंशन्नारकाणाम्, त्रिंशद्देवमनुष्यतिरश्चाम्, एकत्रिंशत्तिरश्चाम्। तथा अप्रमत्ते द्वे उदयस्थाने, तद्यथा-एकोनत्रिंशत् त्रिंशत्, तत्र एकोनत्रिंशत्पूर्ववत् वैक्रिये आहारके वा व्यवस्थिते वेदितव्या, त्रिंशत्सामान्यमनुष्ये, तुशब्दस्य बहुलार्थत्वादपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहेष्वपि त्रिंशदेकमुदयस्थानमित्यवगन्तव्यम्। तथा अयोगिकेवलिनोऽष्टकोदयो नवोदयो वा, तत्राष्टकोदयः सामान्यायोगिकेवलिनः, नवोदयस्तीर्थकरायोगिकेवलिनः, विंशत्युदयः केवलिसमुद्घाते, एकविंशत्युदयः पुनस्तीर्थकरस्य समुद्घाते, संसारिणां तु सर्वेषामप्येकविंशतिकोदयो भवान्तरसंक्रमणकाले ॥७५-७६-७७॥

चउवीसाई चउरो उदया एगिंदिएसु तिरिमणुए । अडवीसाइ छवीसा एक्केक्कूणा विउव्वंति॥७८॥

(स्वो०)—चतुर्विंशत्याद्याश्चत्वार एकेन्द्रियेषु भवन्ति, चतुष्पञ्चषट्सप्तविंशतय इति। एकविंशतिर्भवान्तरे सर्वत्रोक्तैव। अष्टाविंशत्याद्याश्चत्वारः षड्विंशत्युदयश्चैवं पञ्चोदयास्तिर्यक्षु मनुष्येषु च भवन्ति । तयोरुत्तरवैक्रियमाहारकं वा कुर्वतोरेकैकप्रकृत्या संहननसंज्ञया हीनास्तथैव पञ्चसप्ताष्टनवविंशतयो भवन्ति, त्रिंशदुदयश्च भवति, यतस्तयोरुद्योतोदयोऽपि भवति, चशब्दादेकेन्द्रियेषूत्तरवैक्रियकालेऽपि

शदयस्था एव, स्वरूपेणैव संहननामाभावादिति गाथार्थः ॥७८॥

(मलय०)—संप्रत्येकेन्द्रियेषूदयस्थानानि चिन्तयन्नाह—एकेन्द्रियाणां चतुर्विंशत्यादयश्चतुर्विंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिरूपाश्चत्वार उदया भवन्ति, पञ्चमस्त्वेकविंशत्युदयः। 'पणवीसो पुण पढमो भवंतरे सव्वजीवाणं' इतिवचनात्सिद्ध'। एवं द्वीन्द्रियादिष्वप्येकविंशत्युदयोऽनुक्तोऽपि द्रष्टव्यः। तथा द्वीन्द्रियादिषु तिर्यक्षु मनुष्येषु च यथासंभवं अष्टाविंशत्यादयो अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपाश्चत्वार उदया भवन्ति, पञ्चमस्तु षड्विंशतिरूपः। तथा वैक्रियमाहारकं च कुर्वतां यथासंभव तिर्यग्मनुष्याणां त एव षड्विंशत्यादयः पञ्च उदया एकैकप्रकृत्या संहननसंज्ञया हीनाः पञ्च उदया' पञ्चविंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपा वेदितव्याः, चशब्दादेकेन्द्रियाणामपि वायुकायिकानां वैक्रियं कुर्वतां चतुर्विंशतिपञ्चविंशतिषड्विंशतिरूपास्त्रय उदया द्रष्टव्या' ॥७८॥

**गइआणुपुव्वि जाई थावर दुभगाइतिण्णि धुवउदया। पणिंदियइगिवीसा सेसाण य पगइ बच्चासो ॥७९॥**

(स्वो०)—गत्युदयो भवान्तरेऽपि जीवस्य नापसरति, यतोऽन्यतरगत्यभिधानं संसारस्थस्यावस्थितम्। अव्यक्तोच्चारणं सर्वासां स्वाधिकारस्यापनार्थम्। आनुपूर्व्युदयस्तत्रैव भवति। अत्र चाङ्गीकृता तिर्यग्गतिस्तत्सहचरा तदानुपूर्वी। इन्द्रियोदयश्च भवान्तरे भवति, यतोऽनुदये अतीन्द्रियस्यादसंसारित्वं भवति। अत्रैकेन्द्रियत्वमधिकृत्य तत्सहचरं स्थावरं सूक्ष्मं चाभिधानं भवति। अपर्याप्ताभिधानं यद्यप्यन्तराले भवति तथापि सर्वेन्द्रियसहचरम्। दुर्भगानादेयायशसामुदयो यद्यप्यन्तराले भवति तथापि न नियमः, यतस्तद्विपक्षाणामपि पर्याप्तसहचराणां भवति। ध्रुवोदया नाम्नो द्वादश, कास्ताः? निर्माणस्थिरास्थिरतैजसकार्मणवर्णगन्धरसस्पर्शागुरुलघुशुभाशुभप्रकृतयः, एता भवान्तरेऽपि स्वोदयं न मुञ्चन्त्येवमेवैकेन्द्रियाणामेकविंशतिरुदितेव। साधारणप्रत्येकत्वे शरीराभावे कस्य भवतः? तयोः शरीरस्य

विशेषणत्वात् । उपघातमपि शरीराभावे न भवति, घात्यघातकाभावात्, संस्थानमपि तदाकार एवेति । किमुक्तं भवति–साधारणप्रत्येकोपघातसंस्थानानि शरीरपञ्चमानि विवक्षितस्थानप्राप्तौ प्रादुर्भवन्ति, नान्तराले, शरीरप्राप्तावधिकानि भवन्ति, पञ्चानामेषामनुदयादपर्याप्तकसप्तविंशतेरेकाधिका सपत्ना च, द्वौ भङ्गौ सूक्ष्मबादरभेदादपर्याप्तकैकविंशतिरिति । पर्याप्तकविवक्षया तु त्रयो भङ्गाः, कथम् ? पर्याप्तकैकेन्द्रियवामलता द्वात्रिंशत्प्रकृत्यात्मिका, षड्विंशतेः कारणं प्रागुक्तम्, पराघातोच्छ्वासातपोद्योताः शरीरमाप्तेरप्युत्तरकाले प्रादुर्भवन्ति, अतोऽत्र द्वितीयमभ्यधिकम् । बादरसूक्ष्माभ्यां द्वौ भङ्गौ, तौ च द्वावप्ययशसि, यशसि त्वेकः, यतः न सूक्ष्मत्रिकेण सह यशस उदयो भवति । द्वेऽपर्याप्तकैकविंशती तिस्रः पर्याप्तकैकविंशतयः, एवं पञ्चेति गाथार्थः ॥७९॥

(मलय०)–संप्रत्येकेन्द्रियाणामेवोदयान् भावयति–'गतिः'। तिर्यग्गतिरानुपूर्वी–तिर्यगानुपूर्वी, एकेन्द्रियजातिः, स्थावरत्रिकं–स्थावरसूक्ष्मापर्याप्तरूपम्, दुर्भगादित्रिकं–दुर्भगानादेयायशःकीर्त्तिरूपम्, 'ध्रुवोदयाः'–तैजसकार्मणवर्णादिचतुष्टयागुरुलघुनिर्माणस्थिरास्थिरशुभाशुभरूपा द्वादश, सर्वसङ्ख्यया एकविंशतिरेकेन्द्रियाणां भवति, एषा चापान्तरालगतौ वर्त्तमानानां वेदितव्या । अपान्तराले च बादरपर्याप्तयशःकीर्त्तिनामप्युदयः संभवति, ततस्ता अप्यस्यामेकविंशतौ विकल्पेन प्रक्षेप्तव्याः । तथा च सत्यत्र भङ्गाः पञ्च, तद्यथा–बादरसूक्ष्माभ्यां प्रत्येकं पर्याप्तापर्याप्ताभ्यामयशःकीर्त्त्या सह चत्वारः, बादरपर्याप्तयशःकीर्तिभिः सहैकः, सूक्ष्मापर्याप्ताभ्यां सह यशःकीर्त्तेरुदयो न भवतीति तदाश्रिता विकल्पा न भवन्ति । शेषाणामपि द्वीन्द्रियादीनामपान्तरालगतौ वर्त्तमानानामेवैकविंशतिरवगन्तव्या। केवलं तां तां गतिं द्वीन्द्रियादित्वं च परिभाव्य गतिजात्यादिप्रकृतीनां 'व्यत्यासो'-विपर्यासः स्वयमेव करणीयः, स च तथैव करिष्यते ॥७९॥

एकेन्द्रियेषु नाम्न उदयस्थानानि

**सा आणुपुव्विहीणा अपज्जएगिंदितिरियमणुयाण । पत्तेउवघायसरीरहुंडसहिया उ चउवीसा ॥८०॥**

(स्वो०)-सा भवान्तरे एकविंशतिरानुपूर्विकया हीना विंशतिर्भवति, यतस्तस्यास्तत्रैवोदयः, नान्यत्र । अपर्याप्तकानामेकेन्द्रियाणां तिरश्चां द्वीन्द्रियाणां(यादीनां) मनुष्याणां संज्ञ्यसंज्ञिरूपाणां, प्रत्येकोपघातशरीरहुण्डसंस्थानैः सहिताश्चतुर्विंशतिर्भवति । अपर्याप्तकविवक्षया चत्वारो भङ्गाः, कथं ? अपर्याप्तकैकेन्द्रियलताया: सप्तविंशतेश्चतुर्विंशतिरुदितैव आनुपूर्विका त्यक्तैव शेषे द्वेऽप्यधिके सपत्ने च बादरसूक्ष्माभ्यां द्वौ भङ्गौ तौ प्रत्येके साधारणे चैवं चत्वारः । पर्याप्तकविवक्षया सप्त भङ्गाः, कथं ? तद्नामलतायां द्वात्रिंशत्प्रकृतयः, तस्याः पञ्चविंशतेः कारणं प्रागुक्तम् , पराघातोपघातोच्छ्वासातपोद्योता यद्यपि पर्याप्तकसहचराः, तथापि ते द्वीन्द्रियपर्याप्तेरुत्तरकाले प्रादुर्भवन्ति, अतस्तिस्रोऽधिकाः सपत्नाश्च, प्रत्येकसाधारणाभ्यां द्वौ भङ्गौ, तौ यशस्ययशसि चैव चत्वारः, भूयः सूक्ष्माभ्यां द्वौ, तावय शसि, यशसा सह न सूक्ष्मस्योदय इति षड्भङ्गाः, सप्तमो हि वायुकायिकस्योत्तरवैक्रियं कुर्वतः, यद्यपि पर्याप्तकलतायां वैक्रियशरीरं नाभिहितं तथापि सप्तमभङ्गो भवत्येव । अनभिधाने कारणम् , यतस्तत्स्थावरकाये वायुकायिकानामेव त्रसकाये संज्ञिनामेव, तयोरपि कादाचित्कम्, अत उभयलतास्वनभिधानम् । पृथक् सूत्रेणाभिहितमेव-'दुभगाइण उदये' त्यादिना बादरपर्याप्तवायुकायिकस्य दुर्भगादीनामुदये भवति । सूक्ष्मत्रिकसुभगादित्रिकपरावर्त्तनरहितत्वादेको भङ्गः । सप्त पर्याप्ते चत्वारोऽपर्याप्ते, एवं चतुर्विंशत्युदये एकादशभङ्गा भवन्ति । तुशब्दात्तिर्यग्मनुष्याणां द्वौ प्रावाधानुदयौ पर्याप्तापर्याप्तकयोः साधारणौ शेषाः पर्याप्तकानामेव, देवनारकाणां तु सर्वेऽपीति गाथार्थः ॥८०॥

(मलय०)-सा प्रागुक्ता एकविंशतिरानुपूर्वीरहिता विंशतिर्भवति, एषा चापर्याप्तानामेकेन्द्रियद्वीन्द्रियादितिर्यङ्मनुष्याणां ध्रुवा,

ततः प्रत्येकोपघातौदारिकशरीरहुण्डसंस्थानसहिता चतुर्विंशतिर्भवति, सा च शरीरस्थस्य भवति। अस्यां च चतुर्विंशतौ साधारणस्याप्युदयः संभवति, ततस्तदपि प्रत्येकस्थाने विकल्पेन प्रक्षेप्तव्यम्। तथा च सत्यत्र भङ्गा दश, तद्यथा—बादरपर्याप्तस्य प्रत्येकसाधारणयशःकीर्त्ययशःकीर्त्तिपदैश्चत्वारः, अपर्याप्तबादरस्य प्रत्येकसाधारणाभ्यामयशःकीर्त्या सह द्वौ, सूक्ष्मस्य पर्याप्तापर्याप्तप्रत्येकसाधारणैरयशःकीर्त्या सह चत्वार इति दश। तथा बादरवायुकायिकस्य वैक्रियं कुर्वत औदारिकस्थाने वैक्रियं वक्तव्यम्, ततश्च तस्यापि चतुर्विंशतिरुदये प्राप्यते, केवलमिह बादरपर्याप्तप्रत्येकायशःकीर्त्तिपदैरेक एव भङ्गः, तेजस्कायिकवायुकायिकयोर्यशःकीर्त्तिसाधारणयोरुदयो न भवति, ततस्तदाश्रिता विकल्पा न प्राप्यन्ते। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते प्रक्षिप्ते पञ्चविंशतिः, सा च पर्याप्तकस्यैवेत्यपर्याप्तकमपसार्यते। अत्र भङ्गाः षट्, तद्यथा—बादरस्य प्रत्येकसाधारणयशःकीर्त्ययशःकीर्त्तिपदैश्चत्वारः सूक्ष्मस्य प्रत्येकसाधारणाभ्यामयशःकीर्त्या सह द्वौ। तथा बादरवायुकायिकस्य वैक्रियं कुर्वतः शरीरपर्याप्तस्य पराघाते प्रक्षिप्ते पञ्चविंशतिः, अत्र च प्राग्वदेक एव भङ्गः, सर्वसंख्यया पञ्चविंशतौ सप्त भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे प्रक्षिप्ते षड्विंशतिः, अत्रापि भङ्गाः प्रागिव षट्। अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासे अनुदिते आतपोद्योतयोरन्यतरस्मिन्नुदिते षड्विंशतिर्भवति, अत्रापि भङ्गाः षट्, तद्यथा—बादरस्योद्योतेन सहितस्य प्रत्येकसाधारणयशःकीर्त्ययशःकीर्त्तिपदैश्चत्वारः, आतपसहितस्य च प्रत्येकयशःकीर्त्ययशःकीर्त्तिपदैर्द्वौ, बादरवायुकायिकस्य वैक्रियं कुर्वतः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते प्रागुक्ता पञ्चविंशतिः षड्विंशतिर्भवति, तत्र च प्राग्वदेक एव भङ्गः। तैजस्कायिकवायुकायिकयोरातपोद्योतयशःकीर्त्तीनामुदयाभावात्तदाश्रिता विकल्पा न भवन्ति, सर्वसङ्ख्यया षड्विंशतौ त्रयोदश भङ्गाः। तथा प्राणापानपर्याप्त्या पर्याप्तस्य उच्छ्वाससहितायां षड्विंशतौ आतपोद्योतयोरन्यतरस्मिन्नुदिते सति सप्तविंशतिर्भवति, अत्र भङ्गाः

षट् ये प्रागातपोद्योतान्यतरसहितायां षड्विंशतौ प्रतिपादिताः, सर्वसङ्ख्यया एकेन्द्रियाणां भङ्गा द्विचत्वारिंशत् ॥८०॥

**परघायसासआयवजुत्ता पणछक्कसत्तवीसा सा । संघयणअंगजुत्ता चउवीस छवीसमणुतिरिए ॥८१॥**

(स्वो०)—सैव चतुर्विंशतिः पराघातयुक्ता पञ्चविंशतिर्भवति, सा च पर्याप्तकस्यैव, यतः पराघातं पर्याप्तकस्योपरि विशेषेणाभिहितं तदुभयसन्ध्युदयप्राप्तमपि। सप्त भङ्गाः प्राग्वत्। पञ्चविंशतिरुदितैव, उच्छ्वासातपोद्योतानुपूर्विकाणां क्रमेण कथितमेव, शेषास्तिस्रोऽधिकाः, सपरनाम, प्रत्येकसाधारणाभ्यां बादराभ्यां द्वौ भङ्गौ यशसि अयशसि च चत्वारोऽप्ययशसो भङ्गद्वयं तत्सूक्ष्माभ्यां ताभ्यामेव षड्भङ्गाः, सप्तम उत्तरवैक्रियस्येति । सैव चतुर्विंशतिः पराघातोच्छ्वासयुक्ता षड्विंशतिर्भवति, उच्छ्वासं षड्विंशतितममधिकृत्य त एव सप्त भङ्गाः। उद्योतमधिकृत्य चत्वारो भङ्गाः, कथं ? प्रत्येकसाधारणाभ्यां बादराभ्यां द्वौ भङ्गौ तौ यशस्ययशसि चैव चत्वारः, सूक्ष्मस्योद्योतेन सह उदयो नास्ति। यथातपं च षड्विंशतितमं ततो द्वौ भङ्गौ यशोऽयशोभ्यां, यत उक्तम् 'उज्जोयमायवाण' मित्यादि। एवं षड्विंशत्युदये त्रयोदश भङ्गाः। सैव चतुर्विंशतिः पराघातोच्छ्वासोद्योतयुक्ता सप्तविंशतिर्भवति, अत्र भङ्गकषट्कं, कथं ? सप्तविंशतिरुदितैव, सूक्ष्मातपानुपूर्वित्रिभिः सहोद्योतस्योदयो न भवति, शेषयुग्ममधिकं यामलतायाम्, बादरप्रत्येकसाधारणाभ्यां द्वौ, तौ यशस्ययशसि चैवं चत्वारः। यदा तु पुनः सप्तविंशतितममातपं भवति तदा द्वौ भङ्गौ, सूक्ष्मत्रिकोद्योतानुपूर्विकाभिः सहातपस्योदयो न भवति, शेषा यामलतायामेका यशोऽयशोभ्यां द्वौ भङ्गौ, एवं षट् सर्वेऽप्येकेन्द्रियोदयविकल्पाः द्विचत्वारिंशत्, एकविंशत्याद्युदयेषु पञ्चैकादश सप्त त्रयोदश षडिति–५–११–७–१३–६–एकत्र ४२। द्वीन्द्रियस्यैकविंशतिः तिर्यग्गतिस्तदानुपूर्वी द्वीन्द्रियजातिस्त्रसबादरापर्याप्तदुर्भगानादेयायशांसि नामध्रुवोदया द्वादश भागुक्ता एव। अत्र त्रयो भङ्गाः, कथं ? अपर्याप्तकसप्तविंशतिरेकविंशतिरुदितैव प्रत्येकोपघा-

तसंस्थानसंहननौदारिकतदङ्गोपाङ्गानि उत्पत्तिस्थानप्राप्तस्य प्रादुर्भवन्ति, नापान्तराले, कार्मणयोगित्वाज्जीवस्य, अपर्याप्तकविवक्षया सपत्नाभावादेक एव भङ्गः। पर्याप्तकस्य द्वौ, कथं? चतुस्त्रिंशत् एकविंशतिरुदितैव, षण्णां कारणमुक्तमेव, पराघातविहायोगत्युच्छ्वाससुस्वरदुःस्वरोद्योताः स्वशरीरेन्द्रियपर्याप्तेरप्युत्तरकाले प्रादुर्भवन्ति, एवं दक्षिणलतायामेकाधिका सपत्ना च यशोऽयशोभ्यां द्वौ भङ्गौ, द्वयोरप्येवं त्रय इति। सैवैकविंशतिरानुपूर्व्या हीना प्रत्येकोपघातौदारिकशरीरहुण्डसंस्थानसहिता चतुर्विंशतिर्भवति, साप्यौदारिकाङ्गोपाङ्गसंहननयुक्ता द्वित्रिचतुरिन्द्रियासंज्ञितिरश्चां मनुष्याणां पर्याप्तकानां अपर्याप्तकानां च योग्या षड्विंशतिर्भवति। अस्यामपि त्रयो भङ्गाः, अपर्याप्तषड्विंशतिरुदितैवानुपूर्वी त्यक्तैव दक्षिणलता सप्तविंशतिरशेषत्वादेको भङ्गः, पर्याप्तकविवक्षया द्वौ, कथं? सप्तविंशतेः कारणमुक्तमेव पराघातविहायोगत्युच्छ्वाससुस्वरदुःस्वरोद्योताः शरीरप्राप्तावपि स्वपर्याप्तेरसम्भवात् नोदयं गच्छन्ति, एवं चतुस्त्रिंशत एका यशोऽयशोभ्यां द्वौ भङ्गौ, २ द्वयोरप्येवं त्रय इति गाथार्थः ॥ ८१ ॥

(मलय०)-यथोक्तान्येव पञ्चविंशत्यादीन्युदयस्थानानि सूत्रकृदाह-सा चतुर्विंशतिः पराघातेन सहिता पञ्चविंशतिर्भवति, सैव च पञ्चविंशतिरुच्छ्वासेन सहिता षड्विंशतिः, सैव षड्विंशतिरातपेन सहिता सप्तविंशतिर्भवति, आतपग्रहणमुपलक्षणम्, तेनोद्योतेन वा सहिता षड्विंशतिः सप्तविंशतिर्भवति। संप्रति द्वीन्द्रियाणामुदयस्थानान्युच्यन्ते-द्वीन्द्रियाणामुदयस्थानानि षट्, तद्यथा-एकविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। तत्र यैव प्राक् एकेन्द्रियाणामेकविंशतिरुक्ता सैव कतिपयप्रकृतिव्यत्यासेन द्वीन्द्रियाणामपि द्रष्टव्या। सा चैवं-तिर्यग्गतिस्तिर्यगानुपूर्वी, द्वीन्द्रियजातिस्त्रसनाम, बादरनाम, पर्याप्तापर्याप्तयोरेकतरम्, दुर्भगमनादेयम्, यशःकीर्त्ययशःकीर्त्योरेकतरा, तैजसकार्मणागुरुलघुस्थिरास्थिरशुभाशुभवर्णरसगन्धस्पर्शनिर्माणानीति। एषा चैकविंशति-

रपान्तरालगतौ प्राप्यते । अत्र भङ्गास्त्रयस्तद्यथा–अपर्याप्तकस्यायशःकीर्त्या सहैकः, पर्याप्तकस्य यशःकीर्त्ययशःकीर्तिभ्यां सह द्वाविति । ततः शरीरस्थस्य सैवैकविंशतिरानुपूर्वीरहिता प्रत्येकोपघातौदारिकशरीरहुण्डसंस्थानसहिता चतुर्विंशतिर्भवति, सा च प्रागेव प्रतिपादिता, ततः सैव सेवार्तसंहननौदारिकाङ्गोपाङ्गसहिता षड्विंशतिः । तथा चाह–सैव प्रागुक्ता चतुर्विंशतिरन्यतमेन संहननेन औदारिकाङ्गोपाङ्गेन च युक्ता षड्विंशतिर्मनुष्याणां तिरश्चां च द्वीन्द्रियादीनां भवति, अस्यां च द्वीन्द्रियाणां षड्विंशतौ भङ्गास्त्रयः, ते च प्रागिव द्रष्टव्याः । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघातविहायोगत्योः प्रक्षिप्तयोरष्टाविंशतिर्भवति ॥८१॥

परघायखगइजुत्ता अडवीसा गुणतीस सासेण । तीसा सरेण सुज्जोव तित्थातिरिमणुय इगतीसा ॥८२॥

(स्वो॰)—सैव षड्विंशतिः पराघातशुभविहायोगतियुता अष्टाविंशतिर्भवति, द्वावस्यां भङ्गौ, पर्याप्तकविकलेन्द्रियचक्षिणलतायां चतुस्त्रिंशतो मध्यात् त्रयस्त्रिंशदुक्तार्थेन यशोऽयशोभ्यां द्वौ भङ्गाविति । सैवाष्टाविंशतिरुच्छ्वासभावात्तेकोनत्रिंशत्, उद्योतोदयाद्वा, यशोऽयशोभ्यां द्वौ द्वौ भङ्गावेवमेकोनत्रिंशदुदये चत्वार इति । सैवाष्टाविंशतिरुच्छ्वासस्वराभ्यां युक्ता त्रिंशत्, उच्छ्वासोद्योताभ्यां वा युक्ता त्रिंशद् भवति । अस्यां षड् भङ्गाः, कथ ? त्रिंशदुदितैवानुपूर्व्युद्योतयोरनुदये द्वे अधिके सपत्ने च, सुस्वरदुःस्वराभ्यां द्वौ, तौ यशस्ययशसि च, एवं चत्वारः, आनुपूर्वीस्वरानुदयादेकाधिका यशोऽयशोभ्यां द्वावेव षड्भङ्गा इति । सैवाष्टाविंशतिरुच्छ्वासस्वरोद्योतैः सहैकत्रिंशद् भवति, आनुपूर्व्युदयो नास्ति, सुस्वरदुःस्वराभ्यां द्वौ, तौ यशस्ययशसि च एवं चत्वार इति । एकविंशत्यादिषु षट्स्वप्युदयेषु द्वाविंशतिर्भङ्गाः–त्रित्रिद्विचतुःषट्चत्वार इति । एवं त्रिचतुरिन्द्रिययोरिन्द्रियकृतो विशेषः, उदया भङ्गाश्च त एव । एवं च विकलेन्द्रियेषु षट्षष्टिरुदयविकल्पा इति, ३–३–२–४–६–४=२२, त्रिघ्नवि ६६। पञ्चेन्द्रियतिरश्चामुदयमाह–तिर्यग्गतिस्तद्दानुपूर्वी पञ्चे-

न्द्रियजातित्रसबादरापर्याप्तदुर्भगानादेयायशांसि द्वादश नामध्रुवोदया एपा भवान्तरे एकविंशतिः,अत्र नव भङ्गकाः, कथं? अपर्याप्तकसप्तविंशतेरेकविंशतिरुदितैव, शरीरसहचराणां पण्णामुदयो नास्ति, प्रत्येकोपघातहुण्डसंस्थानान्त्यसंहननाङ्गोपाङ्गौदारिकाण्येतानि षट्, एवं लतायामधिकप्रकृत्यभावादपर्याप्तकविवक्षया एको भङ्गः। सप्तचत्वारिंशत् पर्याप्तलतायां तत्रैकविंशतिरुदितैव त्रयोविंशतेरुत्पत्तिस्थानाभावादुदयो नास्ति, संहननसंस्थानौदारिकद्विकोद्योतखगतिद्विकस्वरद्विकोपघातत्रिकप्रत्येक इति २३। शेषास्त्रयः सपत्ना दुर्भगसुभगाभ्यां द्वौ, तावनादेये आदेये चैवं चत्वारः, ते यशस्ययशसि चैवमष्टौ (पर्याप्तकस्यापर्याप्तकस्य त्वेकः सर्वासामप्रशस्तत्वात्), पर्याप्तकापर्याप्तकयोरेवं नवेति ९। यस्तु पुनरेकेनैव समयेन जीव उत्पत्तिस्थानमवाप्नोति तस्यैकविंशत्युदयो न भवति। सैवैकविंशतिरानुपूर्विकहीना प्रत्येकोपघातौदारिकतदङ्गोपाङ्गान्त्यसंहननहुण्डसंस्थानयुक्ता षड्विंशतिर्भवति, अपर्याप्तकविवक्षया प्राग्वदेको भङ्गः। पर्याप्तकविवक्षया द्वे शते साष्टाशीते, कथं? षड्विंशतिरुदितैव, आनुपूर्वी त्यक्त्वैव, पराघातोच्छ्वासोद्योताः स्वरखगतिद्विके सप्तैता नाद्याप्युदयं यान्ति, शेषाः सप्तचत्वारिंशतस्त्रयोदशाऽधिकाः, सुभगदुर्भगाभ्यां द्वौ, तावनादेये आदेये चैवं चत्वारस्ते यशस्ययशसि चैवमष्टौ, तेऽप्येकैकसंस्थानेऽतोऽष्टचत्वारिंशत्, तेऽप्येकैकसंहनने अतो द्वे शते अष्टाशीते, पर्याप्तापर्याप्तकयोर्नवाशीते द्वे शते-२८९। सैव षड्विंशतिः पराघातविहायोगतियुक्ता अष्टाविंशतिर्भवति। अत्राप्यष्टाविंशतिरुदितैवानुपूर्वीस्वरद्वयोच्छ्वासोद्योतपञ्चकानुदयः सप्तचत्वारिंशतश्चतुर्दशाधिकाः सुभगादित्रयेणाष्टौ भङ्गाः, ते शुभखगतौ, अशुभायां चैवं षोडश ते संस्थानभेदात् षण्णवतिः, भूयः संहननभेदात् पञ्चशतानि षट्सप्तत्यधिकानि ५७६। सैवाष्टाविंशतिरुच्छ्वासयुक्ता एकोनत्रिंशदत्रापि अष्टाविंशतिवत् पञ्चशतानि षट्सप्तत्यधिकानि। अथवोद्योतयुक्ताऽष्टाविंशतिरेकोनत्रिंशद् भवति, तत्रापि भङ्गास्तावन्त एव, एवमेकोनत्रिंशदुदये एकादशशतानि द्वापञ्चाशदधिकानि।

सैवाष्टाविंशतिरुच्छ्वासस्वराभ्यां युक्ता त्रिंशद् भवति, आनुपूर्व्याउद्योतानुदयात् सप्तचत्वारिंशत् शेषाः पञ्चदशाधिकाः सप्तनाम, सुस्वरादिभिर्युग्मैः षोडश भङ्गाः, विहायोगतिभेदात् द्वात्रिंशत्संहननभेदात् द्विनवतं शत तदपि संस्थानभेदादेकादशशतानि द्वापञ्चाशदधिकानि। अथवा सैवाष्टाविंशतिरुच्छ्वासोद्योतयुक्ता त्रिंशद् भवति। अत्र स्वरयुग्माभावात् प्राग्वत्पञ्चशतानि षट्सप्तत्यधिकानि भङ्गानाम्। त्रिंशदुदये सप्तदशशतान्यष्टाविंशत्यधिकानीति। सैवाष्टाविंशतिरुच्छ्वासस्वरोद्योतैर्युक्तैकत्रिंशद् भवति, अत्रापि सुस्वरादिचतुर्युग्मानि, पञ्चमविहायोगतियुग्म, द्वात्रिंशदेतैर्भङ्काः, संहननभेदात् द्विनवत शत, संस्थानभेदादेकादश शतानि द्विपञ्चाशदधिकानि। एव सर्वेष्वपि पञ्चेन्द्रियतिर्यक्षूदयेषु एकोनपञ्चाशच्छतानि षडधिकानि। एकविंशत्यादिषु–९–२८९–५७६–११५२–१७२८–११५२=४९०६ ॥

भूयो गाथाख्या एव वक्तव्या इति। तैरेव ध्रुवैर्मनुष्योदयानाह–मनुष्यगतिः तदाऽनुपूर्वी पञ्चेन्द्रियजातित्रसबादरापर्याप्तदुर्भगानादेयायशांसि नामध्रुवोदया द्वादशैता भवान्तरे चकारगतावुदयमुपयान्ति, अपर्याप्तविवक्षया एको भङ्गः, पर्याप्तकविवक्षयाऽष्टावेव नव चक्रोभयपक्षयोर्दक्षिणयोर्भंगा। प्राग्वदिति। सैवैकविंशतिरानुपूर्वी हीना प्रत्येकोपघातौदारिकतदङ्गोपाङ्गहुण्डान्त्यसंहननैर्युक्ता षड्विंशतिर्भवति, अपर्याप्तकविवक्षया अत्राप्येको भङ्गः, पर्याप्तकविवक्षया दुर्भगादिव्यत्यासात् संहननसंस्थानभेदाच्च प्राग्वत् द्वे शतेऽष्टाशीतिरुभयोरपि द्वे शते नवाशीते। सैव षड्विंशतिः पराघातविहायोगतियुक्ता अष्टाविंशतिर्भवति, अत्र पर्याप्तकस्य प्रागुक्त शतद्वयमष्टाशीतम्, तद्विहायोगतिभेदात् व्याहत पञ्चशतानि षट्सप्तत्यधिकानि भवन्ति। सैवाष्टाविंशतिरुच्छ्वासयुक्तैकोनत्रिंशद् भवति, अत्रापि विशेषाभावादष्टाविंशतेरिव पञ्चशतानि षट्सप्ततिः, अत्रोद्योतोदयो न भवति, मनुष्यत्वादिति। सैवैकोनत्रिंशत्स्वरयुक्ता त्रिंशद्

भवति, त एवैकोनत्रिंशदुदयभङ्गाः स्वरभेदात् द्विगुणीभवन्ति, एकादशशतानि द्वापञ्चाशदधिकानि । एकत्रिंशत्यादिषु–९–२८९–५७६–५७६–११५२ । सर्वे २६०२ । एते सामान्यमनुष्योदयाः, तीर्थङ्करमेकत्रिंशत्तमं, तत्तु तस्यैवोदयेष्वभिधास्यति, भूयो गाथाचतुष्टयार्थः ॥८२॥

(मलय०)—आह च–सैष षड्विंशतिः पराघातेन अन्यतरया(अप्रशस्तया)च विहायोगत्या युक्ता तिर्यग्मनुष्याणां अष्टाविंशतिर्भवति। अस्यां च द्वीन्द्रियाणामष्टाविंशतौ द्वौ भङ्गौ, तौ च यशःकीर्त्ययशःकीर्त्तिभ्यां द्रष्टव्यौ। ततः प्राणापानपर्याप्त्या पर्याप्तस्य उच्छ्वासे क्षिप्ते एकोनत्रिंशत् । तथा चाह–अत्रापि तावेव द्वौ भङ्गौ, अथवा शरीरपर्याप्त्या पर्याप्तस्य उच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते एकोनत्रिंशत्, अत्रापि प्रागिव द्वौ भङ्गौ, सर्वसङ्ख्यया एकोनत्रिंशति चत्वारो भङ्गाः। ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायामेकोनत्रिंशति सुस्वरदुःस्वरयोरेकतरस्मिन् प्रक्षिप्ते त्रिंशद्भवति । तथा चाह–अत्र सुस्वरदुःस्वरयशःकीर्त्ययशःकीर्त्तिपदैश्चत्वारो भङ्गाः, अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरे अनुदिते उद्योतनाम्नि तूदिते त्रिंशद्भवति, अत्र यशःकीर्त्ययशःकीर्त्तिभ्यां द्वौ भङ्गौ, सर्वे त्रिंशति षट् भङ्गाः । ततो भाषापर्याप्त्या पर्याप्तस्य स्वरसहितायां त्रिंशति उद्योतनाम्नि प्रक्षिप्ते एकत्रिंशद्भवति । तथा चाह–तिर्यक्षु सैव त्रिंशत् उद्योतसहिता एकत्रिंशद्भवति, मनुजे तु सतीर्था तीर्थकरसहिता एकत्रिंशत् । तत्र तिर्यक्प्रायोग्यायामुद्योतसहितायामेकत्रिंशति सुस्वरदुःस्वरयशःकीर्त्ययशःकीर्त्तिभिश्चत्वारो भङ्गाः, सर्वसंख्यया द्वीन्द्रियाणां द्वाविंशतिर्भङ्गाः । एवं त्रीन्द्रियाणां चतुरिन्द्रियाणां च प्रत्येकं षट् षट् उदयस्थानानि भावनीयानि । नवरं द्वीन्द्रियजातिस्थाने त्रीन्द्रियाणां त्रीन्द्रियजातिः, चतुरिन्द्रियाणां चतुरिन्द्रियजातिरभिलपितव्या। प्रत्येकं च भङ्गा द्वाविंशतिर्द्वाविंशतिरितिसर्वसंख्यया भङ्गाः षट्षष्टिः । संप्रति प्राकृततिर्यक्पञ्चेन्द्रियाणामुदयस्था-

तिर्यक्पञ्चेन्द्रियमनुजेषु नाम्न उदयस्थानानि

नानि भाव्यन्ते—प्राकृततिर्यक्पञ्चेन्द्रियाणामुदयस्थानानि षड्, तद्यथा—एकविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। एतानि सर्वाण्यपि सूत्रकृता 'तिरिमणुए'त्ति पदेन सामान्यत उक्तानि, तथापि शिष्याऽसम्मोहार्थं विशेषतो भाव्यन्ते—तिर्यग्गतिस्तिर्यगानुपूर्वी पञ्चेन्द्रियजातिः, त्रसनाम, बादरनाम, पर्याप्तापर्याप्तयोरेकतरम्, सुभगदुर्भगयोरेकतरम्, आदेयानादेययोरेकतरम्, यशःकीर्त्ययशःकीर्त्योरेकतरा, तैजसकार्मणागुरुलघुस्थिरास्थिरशुभाशुभनिर्माणवर्णादिचतुष्टयानीत्येकविंशतिः, एषा चापान्तरालगतौ वर्तमानस्य तिर्यक्पञ्चेन्द्रियस्य वेदितव्या। अत्र भङ्गा नव, तत्र पर्याप्तकनामोदये वर्तमानस्य सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां चाष्टौ भङ्गाः, अपर्याप्तकनामोदये वर्तमानस्य तु दुर्भगानादेयायशःकीर्तिभिरेकः। अपरे पुनराहुः—सुभगादेये युगपदुदयमायातो दुर्भगानादेये च, ततः पर्याप्तकस्य सुभगादेययुगलदुर्भगानादेययुगलाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां चत्वारो भङ्गाः, अपर्याप्तकस्य त्वेक इति सर्वसंख्यया पञ्च, एवमुत्तरत्रापि मतान्तरेण भङ्गवैषम्यं स्वधिया परिभावनीयम्। तत शरीरस्थस्यानुपूर्वीमपनीय औदारिकमौदारिकाङ्गोपाङ्गं षण्णां संस्थानानामेकतमत्संस्थानं षण्णां संहनननामेकतमत्संहननमुपघातं प्रत्येकमिति षट्कं प्रक्षिप्यते, ततो जाता षड्विंशतिः, अत्र भङ्गानां द्वे शते एकोननवत्यधिके, तत्र पर्याप्तकस्य षड्भिः संस्थानैः, षड्भिः संहननैः, सुभगदुर्भगाभ्यामादेयानादेयाभ्याम्, यशःकीर्त्ययशःकीर्तिभ्यां च, द्वे शते भङ्गानामष्टाशीत्यधिके, अपर्याप्तकस्य हुण्डसंस्थानसेवार्तदुर्भगानादेयायशःकीर्तिभिरेक इति। तस्यामेव षड्विंशतौ शरीरपर्याप्त्या पर्याप्तस्य पराघातप्रशस्ताप्रशस्तविहायोगत्यन्यतरविहायोगतौ च प्रक्षिप्तायामष्टाविंशतिः। तत्र ये प्राक् पर्याप्तानां द्वे शते भङ्गानामष्टाशीत्यधिके उक्ते ते अत्र विहायोगतिद्विकेन गुणिते अवगन्तव्ये, तथा च सत्यत्र भङ्गानां पञ्चशतानि षट्सप्तत्यधिकानि भवन्ति। ततः प्राणापानपर्याप्त्या पर्याप्तस्य

उच्छ्वासे क्षिप्ते एकोनत्रिंशत् , अत्रापि भङ्गाः प्रागिव पञ्चशतानि पट्सप्तत्यधिकानि, अथवा शरीरपर्याप्त्या पर्याप्तस्य उच्छ्वासे अनुदिते उद्योतनाम्नि तूदिते एकोनत्रिंशद्भवति, अत्रापि भङ्गाः पञ्चशतानि पट्सप्तत्यधिकानि, सर्वसंख्यया भङ्गानामेकोनत्रिंशति द्विपञ्चाशदधिकानि एकादशशतानि। ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरदुःस्वरयोरन्यतरस्मिन् प्रक्षिप्ते त्रिंशद्भवति, अत्र यान्युच्छ्वासेन पञ्चशतानि पट्सप्तत्यधिकानि उक्तानि तान्येव स्वरद्विकेन गुण्यन्ते, ततो जातानि द्विपञ्चाशदधिकान्येकादशशतानि। अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरे अनुदिते उद्योतनाम्नि तूदिते त्रिंशद्भवति, अत्रापि भङ्गानां पञ्चशतानि पट्सप्तत्यधिकानि, सर्वसंख्यया त्रिंशति भङ्गानां सप्तदशशतान्यष्टाविंशत्यधिकानि। ततः स्वरसहितायां त्रिंशति उद्योतनाम्नि प्रक्षिप्ते एकत्रिंशद्भवति, तत्र ये प्राक् स्वरसहितायां त्रिंशति भङ्गा द्विपञ्चाशदधिकैकादशशतसंख्या उक्तास्त एवात्रापि द्रष्टव्याः ॥८२॥

तिरिउदयछ्वीसाई संघयणविवज्जियाउ ते चेव । उदया नरतिरियाणं विउव्वगाहारगजईणं ॥८३॥

(स्वो०)—तिरश्च उदयाः पड्विंशतिरष्टाविंशत्याद्याश्च ये ते एव संहननप्रकृतिवर्जिता उत्तरवैक्रियशरीरिणां आहारकशरीरिणां च भवन्ति, तिरश्चां मनुष्याणां च। तथाऽऽहारकयतीनां मनुष्यगतिः पञ्चेन्द्रियजातिः त्रसबादरपर्याप्तप्रत्येकसुभगादेययशांसि ध्रुवोदया द्वादशोपघाताहारकद्विकचतुरस्राण्येताः पञ्चविंशतिराहारकसंयतानाम्। अत्रैको भङ्गः, दुर्भगादीनां गुणप्रत्ययेनैवानुदयात्। सैव पञ्चविंशतिः पराघातप्रशस्तविहायोगतियुक्ता सप्तविंशतिर्भवति, अत्राप्येको भङ्गः। सैव सप्तविंशतिरुच्छ्वासयुक्ता उद्योतयुक्ता वाष्टाविंशतिर्भवति, उभयोरप्येकैको भङ्गः २। सैव सप्तविंशतिरुच्छ्वासस्वराभ्यां युक्ता एकोनत्रिंशदथवा उच्छ्वासोद्योताभ्यां युक्ता एकोनत्रिंशद् भवति, उभयोरप्येकैको भङ्गः। सैव सप्तविंशतिरुच्छ्वासस्वरोद्योतयुक्ता त्रिंशद् भवति, अत्राप्येको भङ्गः, एवं सर्वोदयेषु सप्त भङ्गाः।

तिर्यक्पञ्चेन्द्रियमनुजेषु नाम्न उदयस्थानानि

एवमुत्तरवैक्रियाणामपि यतीनां सप्तैव भङ्गाः । आह–दुःस्वराप्रशस्तविहायोगतिभेदात् कथं चतुर्दश २ न भवन्ति ? अत्रोच्यते–यद्यपि मनुष्यगत्या सहोदयो विशेषसूत्रेणानयोः प्रदर्शितस्तथापि देवगतिसहचरावेतौ प्रदर्शिताप्रशस्तविहायोगतिदुःस्वरौ न तस्याः सहचरौ अतः सप्तैव भङ्गाः, यतो मिथ्यादृष्टीनामपि न वैक्रियोदयेऽप्यनयोरुदयप्राप्तोऽप्युदयो भवति । आह–नारकाणां भवत्येव, अत्रोच्यते, नरकगतिसहचरवैक्रियस्य तयोरेव तत्र तद्गतिप्राधान्याद् भवत्येवाप्रशस्तम् , एवं तत्राप्येको भङ्गः । अत्र गतिप्राधान्यं न, गुणवैक्रिययो रिति । अन्यच्च चतुर्गतिकानामुत्तरवैक्रियं भवति, तत्र यद्यपि देवनारकगत्योः सहचरमुक्तम् , तथाप्यनेन विशेषसूत्रेण तिर्यग्मनुष्य-गतिसहचरमपि भवति विवक्षितकालेन तिर्यग्मनुष्यविशेषणभूतानां सहचरप्रकृतीनां, किमुक्तं भवति–चतसृष्वपि गतिषु यदुत्तरवैक्रियं तैव तस्या गतिभेदाद् भेदो, नान्यो विशेषः । देवनारकयोर्वैक्रियेणोत्पत्तौ एकविंशत्युदयोऽधिको भवति, मनुजगतायुभयोरपि पञ्चविंश-त्याद्याः, अतो नारकदेवयोर्नोत्तरवैक्रियमुक्तमितरयोर्विशेषेणोक्तमिति । पञ्चेन्द्रियजातित्रसादिचतुष्कं सुभगादित्रयं ध्रुवोदया द्वादशो-पघातं वैक्रियं तदङ्गोपाङ्गं[1] चतुरस्रसंस्थानं मनुष्यगतिस्तिर्यग्गतिर्वा एताः पञ्चविंशतिर्वैक्रियकरणादायुदयमुपगच्छन्ति, यतः औदारिक-शरीरं परित्यज्य कार्म्मणयोगेन वैक्रियशरीरं करोति, तत्सहचराः शेषाः, अत्राष्टौ भङ्गाः, कथं ? पञ्चविंशतिरुदितैव आनुपूर्विकाया अन्तर गतेरभावादनुदयः, पराघातविहायोगत्युच्छ्वासस्वरोद्योतानामुदय उपरिमपर्याप्तिषु आहारकद्विकस्य संयतानामेव नियतं भवति, शेषं दुर्भ-गादिष्वप्यस्यासदष्टौ भङ्गाः । पराघातविहायोगतियुक्ता सैव पञ्चविंशतिः सप्तविंशतिर्भवति । अत्रापि ते एवाष्टौ भङ्गाः, नाप्रशस्तवि हायोगतेरुदयः । सैव सप्तविंशतिरुच्छ्वासेनोद्योतेन वा युक्ताष्टाविंशतिर्भवति, उभयत्राप्यष्टावष्टौ भङ्गाः, एवं षोडश । सैव सप्तविंशति-

१ वैक्रियशरीरतदङ्गोपाङ्गयोः

रुच्छ्वासस्वराभ्यां युक्ता उच्छ्वासोद्योताभ्यां वा युक्ता एकोनत्रिंशद् भवति, अत्रापि उभयोरप्यष्टावष्टौ भङ्गाः, एवं षोडश। तेन सप्तविंशतिरुच्छ्वासोद्योतस्वरयुक्ता त्रिंशद् भवति, अत्राप्यष्टौ भङ्गा दुःस्वरोदयाभावादिति। एवं तिर्यग्गतौ षट्पञ्चाशन्मनुष्यगतावुद्योतस्यानुदयात् द्वात्रिंशद् भङ्गाः स्युः, ५६-३२, इति गाथार्थः ॥८३॥

(मलय०)--संप्रति तिर्यक्पञ्चेन्द्रियाणां वैक्रियं कुर्वतामुदयस्थानानि वक्तव्यानि। तत्र सामान्यतः गर्भजपञ्चेन्द्रियतिरश्चां मनुष्याणां च यथायोगं वैक्रियाहारकशरीरिणामुदयस्थानान्याह—य एव तिरश्चामुदयाः पञ्चविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपा उक्तास्त एव संहननवर्जिता उत्तरवैक्रियशरीरिणां नरतिरश्चामाहारकशरीरिणां च यतीनां वेदितव्याः। अतिसंक्षिप्तमिदमुक्तमिति विशेषतो भण्यते—तत्र मनुष्याणां वैक्रियशरीरिणामाहारकशरीरिणां चाग्रे भणिष्यन्ते। संप्रति तिरश्चामुत्तरवैक्रियं कुर्वतामुदयस्थानानि पञ्च, तद्यथा—पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्र वैक्रियं वैक्रियाङ्गोपाङ्गं समचतुरस्रं, उपघातं, प्रत्येकं तिर्यग्गतिः, पञ्चेन्द्रियजातिः त्रसबादरपर्याप्तनामानि सुभगदुर्भगयोरेकतरं आदेयानादेययोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरा तैजसकार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्कं निर्माणमिति पञ्चविंशतिः। अत्र सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां चाष्टौ भङ्गाः। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च क्षिप्तायां सप्तविंशतिः, अत्रापि प्रागिवाष्टौ भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्य उच्छ्वासनाम्नि प्रक्षिप्ते अष्टाविंशतिर्भवति, अत्रापि प्रागिवाष्टौ भङ्गाः, अथवा शरीरपर्याप्त्या पर्याप्तस्य उच्छ्वासे अनुदिते उद्योतनाम्नि तूदिते अष्टाविंशतिर्भवति, अत्रापि प्रागिवाष्टौ भङ्गाः, सर्वसंख्यया अष्टाविंशतौ भङ्गाः षोडश। ततो भाषापर्याप्त्या पर्याप्तस्य उच्छ्वाससहितायामष्टाविंशतौ सुस्वरे क्षिप्ते एकोनत्रिंशद्भवति,

अत्रापि प्रागिवाष्टौ भङ्गाः, अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरे अनुदिते उद्योतनाम्नि तूदिते एकोनत्रिंशद्भवति, अत्रापि प्रागिवाष्टौ भङ्गाः, सर्वसंख्यया एकोनत्रिंशति भङ्गाः षोडश। ततः सुस्वरसहितायामेकोनत्रिंशति उद्योते क्षिप्ते त्रिंशद्भवति, अत्रापि प्रागिवाष्टौ भङ्गाः। सर्वसंख्यया वैक्रियं कुर्वतां तिरश्चां भङ्गाः षट्पञ्चाशत्। सर्वेषां तिर्यक्पञ्चेन्द्रियाणां सर्वसंख्यया एकोनपञ्चाशच्छतानि द्विषष्ट्यधिकानि भङ्गानामवसेयानि।

सम्प्रति मनुष्याणामुदयस्थानानि वक्तव्यानि, तानि च प्राक् तिर्यक्पञ्चेन्द्रियोदयैः सहैव सामान्यत उक्तानि, ततो विशेषतो भाव्यन्ते—तत्र सामान्यमनुष्याणामुदयस्थानानि पञ्च, तद्यथा—एकविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्रैकविंशतिः षड्विंशतिरष्टाविंशतिश्च तिर्यक्पञ्चेन्द्रियवदविशेषेण वेदितव्या। नवरं तिर्यग्गतितिर्यगानुपूर्व्योः स्थाने मनुष्यगतिमनुष्यानुपूर्व्यौ वेदितव्ये। एकोनत्रिंशत्त्रिंशदपि तथैव वक्तव्या, केवलमुद्योतरहिता, वैक्रियसंयतान् मुक्त्वा शेषमनुष्याणामुद्योतोदयाभावात्। तत्र एकोनत्रिंशति भङ्गानां पञ्चशतानि षट्सप्तत्यधिकानि। त्रिंशत्येकादशशतानि द्विपञ्चाशदधिकानि वेदितव्यानि। सर्वसंख्यया प्राकृतमनुष्याणां षड्विंशतिशतानि द्व्यधिकानि भङ्गानां भवन्ति। वैक्रियमनुष्याणामुदयस्थानानि पञ्च तद्यथा—पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्र मनुष्यगतिः पञ्चेन्द्रियजातिः वैक्रियं वैक्रियाङ्गोपाङ्गं समचतुरस्रसंस्थानं उपघातं त्रसनाम बादरनाम पर्याप्तकनाम प्रत्येकनाम सुभगदुर्भगयोरेकतरं, आदेयानादेययोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरा, तैजसकार्मणे, वर्णादिचतुष्टयमगुरुलघु, स्थिरास्थिरे, शुभाशुभे, निर्माणमिति पञ्चविंशतिः। अत्र सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां चाष्टौ भङ्गाः। देशविरतानां सर्वविरतानां च वैक्रियं कुर्वतां सर्वप्रशस्त एव भङ्गो वेदितव्यः। ततः शरीर-

पर्याप्त्या पर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च प्रक्षिप्तायां सप्तविंशतिः, अत्रापि त एवाष्टौ भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते अष्टाविंशतिः, अत्रापि प्रागिवाष्टौ भङ्गाः, अथवा संयतानामुत्तरवैक्रियं कुर्वतां शरीरपर्याप्त्या पर्याप्तानामुच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते अष्टाविंशतिः, अत्रैक एव भङ्गः, संयतानां दुर्भगानादेयायशःकीर्त्त्युदयाभावात् , सर्व सङ्ख्यया अष्टाविंशतौ भङ्गा नव। ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायामष्टाविंशतौ सुस्वरे क्षिप्ते एकोनत्रिंशत् , अत्रापि प्रागिवाष्टौ भङ्गाः, अथवा संयतानां स्वरे अनुदिते उद्योतनाम्नि तूदिते एकोनत्रिंशद्भवति, अत्रापि प्रागिवैक एव भङ्गः, सर्वसङ्ख्यया एकोनत्रिंशति भङ्गा नव। सुस्वरसहितायां एकोनत्रिंशति संयतानामुद्योतनाम्नि प्रक्षिप्ते त्रिंशद्भवति, अत्रापि प्रागिवैक एव भङ्गः। सर्वसङ्ख्यया वैक्रियमनुष्याणां भङ्गाः पञ्चत्रिंशत्। आहारकसंयतानामुदयस्थानानि पञ्च, तद्यथा—पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। अत्राहारकमाहारकाङ्गोपाङ्गं समचतुरस्रसंस्थानं उपघातं प्रत्येकमिति पञ्चप्रकृतयो मनुष्यगतिप्रायोग्यायां प्रागुक्तायामेकविंशतौ प्रक्षिप्यन्ते, मनुष्यानुपूर्वी चापनीयते, ततो जाता पञ्चविंशतिः, केवलमिह पदानि सर्वाण्यपि प्रशस्तान्येव भवन्ति, आहारकसंयतानां दुर्भगानादेयायशःकीर्त्त्युदयाभावात्, तत एक एवात्र भङ्गः। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च प्रक्षिप्तायां सप्तविंशतिः, अत्राप्येक एव भङ्गः। ततः प्राणापानपर्याप्त्या पर्याप्तस्य उच्छ्वासे क्षिप्ते अष्टाविंशतिर्भवति, अत्राप्येक एव भङ्गः। अथवा शरीरपर्याप्त्या पर्याप्तस्य उच्छ्वासे अनुदिते उद्योतनाम्नि तूदिते अष्टाविंशतिः, अत्राप्येक एव भङ्गः, सर्वसंख्यया अष्टाविंशतौ द्वौ भङ्गौ। ततो भाषापर्याप्त्या पर्याप्तस्य उच्छ्वाससहितायामष्टाविंशतौ सुस्वरे क्षिप्ते एकोनत्रिंशत् , अत्राप्येक एव भङ्गः, अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरे अनुदिते उद्योतनाम्नि तूदिते एकोनत्रिंशत् , अत्राप्येक एव भङ्गः, सर्वसंख्यया एकोनत्रिंशति द्वौ

भङ्गौ। ततो भाषापर्याप्त्या पर्याप्तस्य स्वरसहितायामेकोनत्रिंशति उद्योते प्रक्षिप्ते त्रिंशद्भवति, अत्राप्येक एव भङ्गः, सर्वसंख्यया आहारकशरीरिणां सप्त भङ्गाः ॥८३॥

देवाण सव्वे वि हु त एव विगलोदया असंघयणा। संघयणुज्जोयविवज्जिया उ ते नारएसु पुणो ॥८४॥

(स्वो०)—देवानां य एव विकलेन्द्रियाणामुदया एकविंशत्याद्यास्त एव संहननवर्जिता भवन्ति, प्रकृतिव्यत्यासाद् देवगतिस्तदानुपूर्वी पञ्चेन्द्रियजातिः त्रसाद्यास्तिस्रः सुभगाद्याश्च(तिस्रः), द्वादश ध्रुवोदया एषा देवानां भवान्तरे एकविंशतिः,अत्रापि दुर्भगादिव्यत्यासादष्टौ भङ्गाः। देवगतावपि उत्तरवैक्रियवत् पदपञ्चकमत्र, एवं देवगतौ सर्वेऽपि चतुःषष्टिः,६४। त एव विकलेन्द्रियोदयाः संहननोद्योताभ्यां वर्जिता नारकोदया भवन्ति, नरकगतिस्तदानुपूर्वि पञ्चेन्द्रियजातिः त्रसाद्यास्तिस्रः दुर्भगाद्याश्च(तिस्रः)द्वादश नामध्रुवोदया एषा नारकाणां भवान्तरे एकविंशतिरत्रैको भङ्गः,यतो नारकगत्या सह न सुभगादीनामुदयः। सैव एकविंशतिः प्रत्येकोपघातवैक्रियशरीरतदङ्गोपाङ्गहुण्डसंस्थानयुक्तानुपूर्व्या हीना पञ्चविंशतिः अत्राप्येको भङ्गः, शेषसंस्थानानां नरकगत्या सहोदयाभावात्। सैव पञ्चविंशतिः पराघाताप्रशस्तविहायोगतियुक्ता सप्तविंशतिर्भवति, अत्राप्येको भङ्गः, प्रशस्तविहायोगतेरनुदयात्। सैव सप्तविंशतिरुच्छ्वासयुक्ता अष्टाविंशतिर्भवति, अत्राप्येको भङ्गः प्राग्वत्। सैवाष्टाविंशतिर्दुःस्वरयुक्ता एकोनत्रिंशद् भवति, अत्राप्येको भङ्गो नरकगत्या सह सुस्वरस्यानुदयादेव। नरकगतौ पञ्च भङ्गाः। उत्तरवैक्रियेऽपि त एव। देवनारकाणां एकत्रिंशत् भङ्गरहिता (नास्तीति तात्पर्यम्) इति गाथार्थः ॥८४॥

(मलय०)—तदेवमुक्तानि मनुष्याणामुदयस्थानानि, संप्रति देवानामाह—य एव विकलेन्द्रियाणामुदया एकविंशत्याद्याः पद् प्रागभिहितास्त एव संहननवर्जिताः सर्वेऽपि देवानां भवन्ति। केवलं देवगतिमधिकृत्य प्रकृतिव्यत्यासः स्वयं परिभावनीयः। तत्र प्रकृति-

व्यत्यासेनैकविंशतिरियं—देवगतिदेवानुपूर्व्यौ पञ्चेन्द्रियजातिः त्रसनाम बादरनाम पर्याप्तकनाम सुभगदुर्भगयोरेकतरं आदेयानादेययोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरा तैजसकार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयं निर्माणमित्येकविंशतिः, अत्र सुभगदुर्भगादेयानादेययशःकीर्त्ययशःकीर्त्तिपदैरष्टौ भङ्गाः, दुर्भगानादेयायशःकीर्त्तीनामुदयः पिशाचादीनामवगन्तव्यः। ततः शरीरस्थस्य वैक्रियं वैक्रियाङ्गोपाङ्गं उपघातं प्रत्येकं समचतुरस्रसंस्थानमिति पञ्च प्रकृतयः प्रक्षिप्यन्ते, देवानुपूर्वी चापनीयते, ततो भवति पञ्चविंशतिः, अत्रापि त एवाष्टौ भङ्गाः। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च प्रक्षिप्तायां सप्तविंशतिः, अत्रापि त एवाष्टौ भङ्गाः, देवानामप्रशस्तविहायोगतेरुदयाभावात्तदाश्रिता विकल्पा न भवन्ति। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते अष्टाविंशतिः, अत्रापि त एवाष्टौ भङ्गाः, अथवा शरीरपर्याप्त्या पर्याप्तस्य उच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते अष्टाविंशतिः, अत्रापि प्रागिवाष्टौ भङ्गाः, सर्वसंख्यया अष्टाविंशतौ भङ्गाः षोडश। ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरे क्षिप्ते एकोनत्रिंशद्भवति, अत्राप्यष्टौ भङ्गाः, दुःस्वरोदयो देवानां न भवतीति तदाश्रिता विकल्पा न भवन्ति, अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरे अनुदिते उद्योतनाम्नि तूदिते एकोनत्रिंशत्, उत्तरवैक्रियं कुर्वत उद्योतोदयो लभ्यते, अत्रापि त एवाष्टौ भङ्गाः, सर्वसंख्यया एकोनत्रिंशति भङ्गाः षोडश। ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरसहितायामेकोनत्रिंशति उद्योते प्रक्षिप्ते त्रिंशद्भवति, अत्रापि त एवाष्टौ भङ्गाः, सर्वसंख्यया देवानां चतुःषष्टिर्भङ्गाः। तदेवमुक्तानि देवानामुदयस्थानानि।

संप्रति नैरयिकाणामाह—त एव विकलेन्द्रियाणामुदया एकविंशत्याद्याः संहननोद्योताभ्यां वर्जिताः पुनर्नारकेषु नारकाणां भवन्ति, केवलमिहापि नरकगत्यनुसारेण प्रकृतिव्यत्यासः करणीयः। तत्रैकविंशतिरियं—नरकगतिर्नरकानुपूर्वी पञ्चेन्द्रियजातिः त्रसनाम

बादरनाम पर्याप्तकनाम दुर्भगनाम अनादेयनाम अयशःकीर्तिः वर्णादिचतुष्टयं अगुरुलघु स्थिरास्थिरे शुभाशुभे तैजसकार्मणे निर्माण मिति, अत्र सर्वाण्यपि पदान्यप्रशस्तान्येवेति एक एव भङ्गः । ततः शरीरस्थस्य वैक्रियं वैक्रियाङ्गोपाङ्ग हुण्डसंस्थान उपघातं प्रत्येक-मिति पञ्च प्रकृतयः प्रक्षिप्यन्ते नरकानुपूर्वी चापनीयते, ततः पञ्चविंशतिर्भवति, अत्राप्येक एव भङ्गः । ततः शरीरपर्याप्तिपर्याप्तस्य पराघाताप्रशस्तविहायोगत्योः प्रक्षिप्तयोः सप्तविंशतिः, अत्राप्येक एव भङ्गः । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते अष्टाविंशतिः, अत्राप्येक एव भङ्गः । ततो भाषापर्याप्त्या पर्याप्तस्य दुःस्वरे क्षिप्ते एकोनत्रिंशत्, अत्राप्येक एव भङ्गः, सर्वसंख्यया नैरयिकाणां पञ्च भङ्गाः ॥८४॥

अयोगिप्रकृतीः प्रतिपादयन्नाह—

तसबायरपज्जत्त सुभगाएज्ज पणिंदिमणुयगई । जसकित्ती तित्थयर अजोगिजिण अट्ठग नवग ॥८५॥

(स्वो०)—त्रसबादरपर्याप्तानि सुभगादेय पञ्चेन्द्रियजातिर्मनुष्यगतिर्यशःकीर्तिः सामान्यायोगिनोऽष्टावेता उदयमुपगच्छन्ति, अत्रैको भङ्गः, तीर्थकरायोगिनस्त एवाष्टौ तीर्थकरोदययुक्ता नवात्राप्येको भङ्ग इति गाथार्थः ॥८५॥

(मलय०)—संप्रति केवलिनामुदयस्थानानि वक्तव्यानि, तानि च दश, तद्यथा—अष्टौ, नव, विंशतिः, एकविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशदिति । तत्र प्रथमतो अष्टौ नव च प्रतिपादयति—त्रसबादरपर्याप्तानि सुभगमादेयं पञ्चेन्द्रियजातिः, मनुष्यगतिः यशःकीर्तिः, इत्येता अष्टौ प्रकृतयः सामान्यायोगिकेवलिनो युगपदुदयमायान्ति, अत्रैको भङ्गः । यस्तु तीर्थकरोऽयोगिकेवली, तस्य तीर्थकरनामाप्युदयमायातीति ता एवाष्टौ प्रकृतयस्तीर्थकरसहिता नव, अत्राप्येक एव भङ्गः ॥८५॥

निच्चोदयपगइजुया चरिमुदया केवलीसमुग्घाए। संठाणेसु सव्वेसु होंति दुसरा वि केवलिणो ॥८६॥

(स्वो०)—'नित्योदयाभिः'-ध्रुवोदयाभिः द्वादशभिः प्रकृतिभिः युक्तौ चरमोदयौ अनन्तरमतिपादितौ सयोगीनः समुद्घातकाले कार्मणयोगिनो द्वावुदयौ भवतः। यदा वेदनीयनामगोत्राणां प्रभूतकालावस्थानं मनुष्यायुष्कर्मणः स्वल्पकालं केवलज्ञानावलोकेनावलोकितं भवति तदा समुद्घातं तेषां स्थितिसाम्यकरणाय सामान्यस्तीर्थंकरो वा व्रजति, स च यदा कार्मणयोगी सर्वलोकव्यापी भवति तदा प्रागुक्ता अष्टौ ध्रुवोदया द्वादश सामान्यस्यैषा विंशतिरत्रैको भङ्गः, सतीर्थंकरा सैवैकविंशतिरत्राप्येको भङ्गः। संस्थानेषु सर्वेष्वपि भवन्ति, 'दुःस्वरा अपि केवलिनो' यदुक्तमप्युच्यते तत्सामान्यकेवलिख्यापनार्थमिति गाथार्थः ॥८६॥

(मलय०)—विंशत्येकविंशत्युदयप्रतिपादनार्थमाह-यौ चरमोदयावनन्तरोक्तावष्टकनवकरूपौ तौ नित्योदयाभिर्ध्रुवोदयाभिस्तैजसकार्मणवर्णादिचतुष्टयस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणरूपाभिर्द्वादशभिः प्रकृतिभिर्युक्तौ यथाक्रमं द्वावन्यावुदयौ भवतः, तद्यथा-विंशतिरेकविंशतिश्च, तथाहि-ता एव प्रागुक्ता अष्टौ ध्रुवोदयाभिर्द्वादशभिः प्रकृतिभिर्युक्ता विंशतिः, ता एव नव द्वादशभिर्ध्रुवोदयप्रकृतिभिर्युक्ता एकविंशतिः। अत्र च प्रत्येकमेकैको भङ्गः, एतौ च द्वावप्युदयौ यथासंख्यमतीर्थकरतीर्थकरकेवलिनोः समुद्घातगतयोः कार्मणकाययोगे वर्त्तमानयोरवगन्तव्यौ। संप्रति वक्ष्यमाणोदयभङ्गसूचनार्थं सामान्यकेवलिनां यावत्संभविसंस्थानस्वरप्रतिपादनार्थमाह-इह केवल्युदयस्थानचिन्ताधिकारे वर्त्तमाने भूयोऽपि केवलिग्रहणं तत् सामान्यकेवलिप्रतिपत्त्यर्थं, ततोऽयमर्थः-सामान्यकेवलिनः सर्वेष्वपि समचतुरस्रादिषु संस्थानेषु भवन्ति, तथा दुःस्वराः, अपिशब्दात्सुस्वराश्च। तीर्थकृतां तु केवलिनां समचतुरस्रमेवैकं संस्थानं स्वरोऽपि सुस्वर एवैकः ॥ ८६ ॥

पत्तेउवघायउरालदु छ य संठाण पढमसंघयणा। छूढे छसत्तवीसा पुव्वुत्ता सेसया उदया ॥८७॥

(स्वो०)—यदा कार्मणयोगी औदारिकमिश्रयोगी भवति तदा प्रत्येकोपघातौदारिकशरीरतदङ्गोपाङ्गप्रथमसंहननचतुरस्रसंस्थानयुक्ता सैव विंशतिः षड्विंशतिर्भवति, अत्र संस्थानभेदात् षड्भङ्गाः। सैव षड्विंशतिस्तीर्थकरयुक्ता सप्तविंशतिर्भवति, तत्रैकः सर्वप्रशस्तो भङ्गः। सैव षड्विंशतिः पराघातविहायोगतियुक्ताष्टाविंशतिर्भवति, द्वादशात्र भङ्गाः संस्थानविहायोगतिभेदादिति। सैवाष्टाविंशतिस्तीर्थकरयुक्ता एकोनत्रिंशदेकोऽत्र प्रशस्तो भङ्गः, उच्छ्वासेन वा युक्ता एकोनत्रिंशद् भवति, द्वादशात्र भङ्गाः, प्रागवदुभयोरपि त्रयोदश। सैवाष्टाविंशतिरुच्छ्वासस्वराभ्यां युक्ता त्रिंशद् भवति, अत्र चतुर्विंशतिर्भङ्गाः संस्थानविहायोगतिस्वरभेदात्, अथवोच्छ्वासतीर्थकरयुक्ताऽष्टाविंशतिः त्रिंशद् भवत्यत्रैको भङ्गः प्रशस्तः, उभयोरपि पञ्चविंशतिः। सैवाष्टाविंशतिः उच्छ्वासस्वरतीर्थकरयुक्ता एकत्रिंशद् भवति, प्रशस्तोऽत्रैको भङ्गः। सामान्यतीर्थकरायोगिसयोगिनोरेकत्र द्वाषष्टिर्भङ्गाः, किन्तु षड्विंशतौ षड् ६, अष्टाविंशतौ द्वादश १२, एकोनत्रिंशति द्वादश १२, त्रिंशति चतुर्विंशतिः २४, एवं चतुष्पञ्चाशद् भङ्गाः सामान्यमनुष्योदयेषु गतार्थाः, प्राक्तनास्तु केवलत्वादिति, भिन्ना अष्टाचुक्ता एवेति। अष्टाविंशत्याद्याः पूर्वोक्ता जन्मक्रमोक्त्वाः, ते च प्रदर्शिता एवेति गाथार्थः ॥८७॥

(मलय०)—सम्प्रति षड्विंशतिसप्तविंशत्युदयप्रतिपादनार्थमाह-पूर्वोक्तायामेव विंशतौ प्रत्येकमुपघातमौदारिकद्विकं षण्णां संस्थाना नामेकतमत्संस्थानं प्रथमं वज्रर्षभनाराचसंज्ञं संहननमित्येतासु षट्सु प्रकृतिषु प्रक्षिप्तासु षड्विंशतिर्भवति। अत्र च षड्भिः संस्थानैः षड्भङ्गाः। तथा पूर्वोक्तायामेव विंशतौ तीर्थकरनामसहितायां प्रत्येकादिषु षट्सु प्रकृतिषु प्रक्षिप्तासु सप्तविंशतिर्भवति। अत्र प्रथममेवैकं संस्थानमित्येक एव भङ्गः। एते च षड्विंशतिसप्तविंशती यथासम्भवं तीर्थकरातीर्थकरयोरौदारिकमिश्रकाययोगे वर्तमानयोर्वेदितव्ये।

शेषाश्चाष्टाविंशत्यादय उदयाः पूर्वोक्ता एव 'पराघायखगइजुत्ता अडवीसे'त्यादि ग्रन्थोक्ता एव द्रष्टव्याः। तद्यथा- सैव षड्विंशतिः पराघातान्यतरविहायोगतियुक्ता अष्टाविंशतिर्भवति, अत्र षड्भिः संस्थानैः प्रशस्ताप्रशस्तविहायोगतिभ्यां च द्वादश भङ्गाः। सैवाष्टाविंशतिस्तीर्थकरयुक्ता एकोनत्रिंशत् अत्र प्रशस्त एवैको भङ्गः, तीर्थकरस्याशुभसंस्थानाप्रशस्तविहायोगत्युदयाभावात्, अथवा सैवाष्टाविंशतिरुच्छ्वासेन युक्ता एकोनत्रिंशद्भवति, अत्र प्रागिव द्वादश भङ्गा। सैवाष्टाविंशतिरुच्छ्वासस्वराभ्यां युक्ता त्रिंशद् भवति, अत्र षड्भिः संस्थानैः प्रशस्ताप्रशस्तविहायोगतिभ्यां सुस्वरदुःस्वराभ्यां च भङ्गाश्चतुर्विंशतिः, अथवा प्रागुक्ता तीर्थकरनामसहिता एकोनत्रिंशदुच्छ्वासयुक्ता त्रिंशत्, अत्र तीर्थकरनाम विद्यते इत्येक एव प्रशस्तो भङ्गः। सैवानन्तरोक्ता स्वरोच्छ्वाससहिता त्रिंशत्, तीर्थकरनामप्रक्षेपे एकत्रिंशद्भवति, अत्राप्येक एव भङ्गः, तीर्थकरस्य प्रथमसंस्थानसुस्वरप्रशस्तविहायोगतीनामेवोदयभावात्। सर्वसंख्यया सामान्यतीर्थकरसयोग्ययोगिकेवलिभङ्गा द्विषष्टिः, किन्तु ये सामान्यकेवलिनो भङ्गाः षड्विंशतौ षट्, अष्टाविंशतौ द्वादश, एकोनत्रिंशति द्वादश, त्रिंशति चतुर्विंशतिः, सर्वसंख्यया चतुःपञ्चाशत्, ते सामान्यमनुष्योदयस्थानेष्वपि संभवन्तीति न पृथग्गण्यन्ते ततः शेषा एवाष्टावुदयभङ्गाः केवलिनां परमार्थतो द्रष्टव्याः, तेषां सामान्यमनुष्योदयस्थानेष्वप्राप्यमाणत्वात् ॥८७॥

**तित्थयरे इगतीसा तीसा सामण्णकेवलीणं तु। खीणसरे गुणतीसा खीणुस्सासम्मि अडवीसा ॥८८॥**

(स्वो०)—अथवौदारिकयोगिनः तीथकरस्यैकत्रिंशद् भवति, त्रिंशत्सामान्यकेवलिनाम्, स्वरनिरोधे तेषामेकोनत्रिंशदुच्छ्वासनिरोधेऽष्टाविंशतिः, पराघातविहायोगतिनिरोधे षड्विंशतिः औदारिकमिश्रयोगिनः, कार्म्मणयोगिनो विंशतिः, पश्चादयोगित्वं प्रतिपद्यते, तुशब्दात् षड्विंशत्याद्या उदयाः ख्यापिता इति गाथार्थः ॥

सर्वोदयविकल्पानां सप्तसप्तविशतान्येकनवतानि-७७९१। कथ? द्विचत्वारिंशदेकेन्द्रियाणाम्, षट्षष्टिर्विकलेन्द्रियाणाम्, पञ्चेन्द्रियाणामेकोनपञ्चाशच्छतानि षडधिकानि, तेषामेवोत्तरवैक्रियकाले षट्पञ्चाशदेव तिर्यग्गतौ पञ्चसहस्राः सप्तत्यधिकाः-५०७०। सामान्यमनुष्याणां षड्विंशतिशतानि द्व्यधिकानि, तीर्थंकरसयोग्ययोगिनोरष्टावाहारकस्य सप्त, उत्तरवैक्रियस्य पञ्चत्रिंशत्, कथ? यत्रैव सूत्रे तुशब्दाधिकथादेतत् ज्ञापयति यथा-मनुष्यगतावुद्योतोदयो नास्ति यस्तु देशविरत यायतुक्तः, स विरत्यामेव, कुतः एतदवसीयते?, 'विरयाण देसविरयाण'-देशविरतस्य गुणप्रत्ययोक्ताविति। एवं हि चतुर्ष्वपि उदयेष्वेकैके दुर्भगादिभिरष्टावष्टौ भङ्गाः, एवं द्वात्रिंशत्। यतीनां तु गुणप्रत्ययो विशेषप्रज्ञोक्तः उद्योतोदयो अष्टाविंशत्यादिषूदयेषु भवत्येव, तेषु दुर्भगादीनामनुदयादेकैको भङ्गः, एव त्रयः। शेषा यतीनामितरासौ च तुल्याः, एवं पञ्चत्रिंशत्। सर्वेऽपि मनुष्यगतौ षड्विंशतिशतानि द्विपञ्चाशदधिकानि। नरकगतौ पञ्च, देवगतौ चतुःषष्टिः, उत्तरवैक्रियेऽप्यनयोर्भङ्गास्त एवेवं सप्तसप्ततिशतानि एकनवतानि-७७९१-सर्वोदयानां भङ्गसंख्येति॥८८॥

(मलय०)—संप्रत्येतानेव केवलिनामुदयान् यस्यामवस्थायां संभवन्ति तस्यामाह-इह तीर्थंकरकेवलिन औदारिककाययोगे वर्तमानस्यैकत्रिंशद्भवति, सैव वाग्योगे निरुद्धे त्रिंशत्, उच्छ्वासेऽपि च निरुद्धे एकोनत्रिंशत्, अथवा सामान्यकेवलिनामौदारिककाययोगे वर्तमानानां त्रिंशत्। तथा चाह-'तीसा सामन्नकेवलीण तु'। सैव त्रिंशत् स्वरे क्षीणे वाग्योगे निरुद्धे एकोनत्रिंशद्भवति, सैव चैकोनत्रिंशत् उच्छ्वासेऽपि निरुद्धे अष्टाविंशतिः। सर्वोदयस्थानभङ्गसंख्या सप्तसप्ततिशतान्येकनवत्यधिकानि (७७९१)। तथाहि-एकेन्द्रियाणां द्विचत्वारिंशत्, विकलेन्द्रियाणां षट्षष्टिः, (प्राकृत)तिर्यक्पञ्चेन्द्रियाणामेकोनपञ्चाशत् शतानि षडधिकानि, वैक्रियतिर्यक्पञ्चेन्द्रियाणां षट्पञ्चाशत्, सामान्यमनुष्याणां षड्विंशतिशतानि द्व्यधिकानि, केवलिनामष्टौ, वैक्रियमनुष्याणां पञ्चत्रिंशत्, आहारकसंयतानां सप्त,

देवानां चतुःषष्टिः, नारकाणां पञ्च । ततः सर्वोदयस्थानेषु सर्वसंख्यया भङ्गाः सप्तसप्ततिशतान्येकनवत्यधिकानि भवन्ति ॥८८॥

**साहारणाउ मिच्छे सुहुमअपज्जत्तआयवाणुदओ । सासायणंमि थावरएगिंदियविगलजाईणं ॥८९॥**

(स्वो०)—साधारणनाम्न आरभ्य चतुःषष्टिप्रकृतीनां उदयो मिथ्यादृष्टौ भवति । पर्यायेण भिन्नकाले । मिथ्यादृष्टिषु वा सदैवोदयमानानां साधारणसूक्ष्मापर्याप्तकानां, सास्वादनेऽनन्तराश्चतस्रो वर्जयित्वा शेषाणां षष्टीनामुदयः (सास्वादनेषु सदैवोदयमानानां) स्थावरैकेन्द्रियविकलेन्द्रियजातीनामिति गाथार्थः ॥८९॥

(मलय०)—संप्रति नामकर्मण एव प्रकृतीनां यत्र गुणस्थानके यासामुदयमधिकृत्य व्यवच्छेदो भवति तत्राह—इह मिथ्यादृष्टिगुणस्थानके नानाजीवापेक्षया तीर्थकराहारकद्विकवर्जितानां शेषाणां सर्वासामपि नामकर्मप्रकृतीनां चतुःषष्टिसंख्यानामुदयः संभवति । तत्र साधारणस्य सूक्ष्मापर्याप्तातपानां च मिथ्यादृष्टावुदयो व्यवच्छिद्यते । व्यवच्छेदो नाम तत्र भाव उत्तरत्राऽभावः,तेनायमर्थः—उत्तरत्र साधारणादीनामुदयो न भवतीति । तथा सासादने स्थावरैकेन्द्रियविकलेन्द्रियजातीनामुदयव्यवच्छेदः, इह पूर्वोक्तानां साधारणादीनामुदयासंभवात् शेषाणां षष्टीसंख्यानां प्रकृतीनामुदयो वेदितव्यः । सम्यग्मिथ्यादृष्टौ च स्थावरादीनामपि पञ्चानां प्रकृतीनामुदयो न भवति, सासादने व्यवच्छेदात् , अपि च सम्यग्मिथ्यादृष्टिः कालं न करोति 'न सम्ममिच्छो कुणइ कालं' इति वचनात्, कालकरणाभावे चानुपूर्वीणामप्युदयस्तस्य नोपपद्यते, तेन सम्यग्मिथ्यादृष्टावेकपञ्चाशत्प्रकृतीनामुदयः ॥८९॥

**सम्मे विउव्विछक्कस्स दुभगणाएज्जअजसपुव्वीणं । विरयाविरए उदओ तिरिगइउज्जोयपुव्वाणं ॥९०॥**

(स्वो०)—सम्यग्मिथ्यादृष्टौ पूर्वोक्ता नव वर्जयित्वा तदग्रहणादानुपूर्वीचतुष्कं च वर्जयित्वा शेषाणामेकपञ्चाशतामुदयो भवति। अविरतसम्यग्दृष्टौ देवद्विकनारकद्विकवैक्रियद्विकमिति वैक्रियषट्कं दुर्भगानादेयायशोमनुष्यतिर्यगानुपूर्व्यौ—एताः पुरस्कृत्य—पञ्चपञ्चाशत्प्रकृतीनामुदयः। विरताविरते तिर्यग्गत्युद्योतपूर्वाणां पूर्वोक्तां विंशतिं परित्यज्य चतुश्चत्वारिंशतामुदय इति गाथार्थः ॥९०॥

(मलय०)—संभस्यविरतसम्यग्दृष्टौ यासां प्रकृतीनामुदयव्यवच्छेदस्ता आह—इहाविरतसम्यग्दृष्टिरपान्तरालगतावपि प्राप्यते, ततस्तस्य चतसृणामपि आनुपूर्वीणामुदयः सम्भवति, ततोऽविरतसम्यग्दृष्टौ पञ्चपञ्चाशत्प्रकृतीनामुदयः। 'वैक्रियषट्कस्य'—देवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियवैक्रियाङ्गोपाङ्गरूपस्य, दुर्भगानादेयायशःकीर्तितिर्यग्मनुष्यानुपूर्व्योश्च सर्वसंख्यया एकादशप्रकृतीनामुदयव्यवच्छेदः, तत्रोदयो भवति, विरताविरतादौ न भवतीत्यर्थः। वैक्रियवैक्रियाङ्गोपाङ्गनिषेधस्त्वत्राचार्येण कर्मस्तवाभिप्रायेण कृतो वेदितव्यः, न स्वमतेन, स्वयं देशविरतप्रमत्ताप्रमत्तेषु तदुदयाभ्युपगमात्, स्वकृतमूलटीकायां तथाभणनाकरणात्। अत्र च वैक्रियषट्काद्युदयव्यवच्छेदे विरताविरते चतुश्चत्वारिंशत्प्रकृतीनामुदय', तथा चाह—'विरयाविरये'त्यादि। विरताविरते—देशविरते तिर्यग्गत्युद्योतपूर्वाणां चतुश्चत्वारिंशत्प्रकृतीनामुदयः, किमुक्तं भवति? देशविरते तिर्यग्गत्युद्योतनाम्नी उदयमधिकृत्य व्यवच्छिद्येते ॥९०॥

विरयापमत्तएसुं अतातिसंघयणपुव्वगाणुदओ। अपुव्वकरणमादिसु दुइयतइज्जाण खीणाओ ॥९१॥

(स्वो०)—प्रमत्ताप्रमत्तयोरर्द्धनाराचकीलिकान्त्यसंहननाद्यानां द्विचत्वारिंशतां नामप्रकृतीनां उदयः 'अपूर्वकरणादिष्वि'ति—अपूर्वकरणबादरसूक्ष्मकषायोपशान्तेषु ऋषभनाराचनाराचाद्यानामेकोनचत्वारिंशतामुदयः, क्षीणकषायसयोगिनो वक्ष्यमाणानामिति गाथार्थः ॥९१॥

(मलय०)—'विरते'–प्रमत्तसंयतरूपे अप्रमत्तसंयते च तिर्यग्गत्युद्योतयोर्देशविरते व्यवच्छेदात् शेषाणामन्तिमत्रिसंहननपूर्वाणाम्–अर्द्धनाराचकीलिकासेवार्त्तसंहननपूर्वाणां द्विचत्वारिंशत्प्रकृतीनामुदयः, आहारकद्विकस्य चोदयो द्रष्टव्यः। अत्रापि 'अंततिसंहनन पुव्वगाणुदओ' इति वदता अन्तिमानां त्रयाणां संहनननामिहोदयव्यवच्छेद आदितो द्रष्टव्यः आहारकद्विकमपि श्रेणावुदयतो नावाप्यते, इति तस्याप्यत्रोदयव्यवच्छेदः, तेनापूर्वकरणादिषूपशान्तमोहपर्यवसानेष्वेकोनचत्वारिंशत्प्रकृतीनामुदयोऽवगन्तव्यः। तथा अपूर्वकरणादिषु क्षीणमोहादर्वाक् उपशान्तमोहपर्यवसानेष्वित्यर्थः द्वितीयतृतीयसंहननयोः–ऋषभनाराचनाराचसंज्ञयोरुदयो भवति, परतो न भवतीत्यर्थः, तेन क्षीणकषाये सयोगिकेवलिनि च शेषाणां सप्तत्रिंशत्प्रकृतीनामेवोदयो भवति, क्वचित्सयोगिकेवलिनि तीर्थकरनाम्नोऽपि ॥९१॥

**नामधुवोदयसूसरखगईओरालदुव य पत्तेयं। उवघायतिसंठाणा उसभजोगम्मि पुव्वुत्ता ॥९२॥**

(स्वो०)—नामध्रुवोदया 'णिम्माणथिराथिरे' त्याद्या द्वादश, सुस्वरविहायोगत्यौदारिकयुग्मत्रयं उपघातत्रयं चोपघातपराघातोच्छ्वासा इति, प्रत्येकं संस्थानषट्कं प्रथमसंहननं एता मिथ्यादृष्टेः सयोगिनं यावदुदयं गच्छन्ति। अयोगिनि पूर्वोक्ताः त्रसबादरपर्याप्तं सुभगादेयं पञ्चेन्द्रियजातिमनुजगतियशःकीर्त्तय इति एता अपि मिथ्यादृष्टेरारभ्य। आह–ध्रुवोदयानां सतीनामपि नामप्रकृतीनामयोगिनो कस्मादुदयो न भवतीत्यत्रोच्यते–काश्चित्प्रकृतयो भवविपाकिन्यो भवन्ति, ताभ्यो मनुजायुः भगवतो भवसद्भावादुदितम्। आनुपूर्व्यः क्षेत्रविपाकाः, तासां च भवान्तरादन्यत्र नास्त्युदयः। ध्रुवोदयाद्यानां षट्त्रिंशतां पुद्गलैर्विपाकः, तस्य च पुद्गलोपयोगो नास्त्येव भगवतः, अतः पुद्गलविपाकित्वान्न तासामुदयः। जीवविपाकिन्योऽपि घातिकर्मोद्भवाः क्षयं गताः, अघातिकर्मोदयास्तूदिता

एव। सातासातयोरन्यतरदुर्भगोऽपि च, गतिभ्यो मनुजगतिः, जातिभ्यः पञ्चेन्द्रियजाति, त्रसादित्रय सुभगादित्रयं च, आसां विपक्षा नोदयं यान्ति, जीवविपाकिन्योऽपि परावर्त्तमानत्वात्। सुस्वरदुःस्वरविहायोगत्युच्छ्वासाः यद्यपि जीवविपाकिनः तथापि ते कायसहचरिताः कायनिरोधाभिरुद्धा, न विपाकोदयं यान्ति। तीर्थंकरं तीर्थंकरस्य यात्येवेति। आह—कायनिरोधेन तदिन्द्रियाणामपि निरोधात् कथमुदयो घटते, अत्रोच्यते—यद्यपि कायनिरोधात् द्रव्येन्द्रियनिरोधस्तथापि तदुदयो भवत्येव, यथा पञ्चेन्द्रियस्तदावरणतीव्रोदयादपश्यन्नपि अशृण्वन्नपि न विकलेन्द्रियः, पञ्चेन्द्रिय एव, तदुदयसद्भावात्, द्रव्येन्द्रियाणां यद्यपि सयोगिनी दर्शनावरणक्षयोपशमाभावान्नेन्द्रियोपयोगस्तथापि भावेन्द्रियोदयात् (पञ्चेन्द्रियोऽयमिति व्यपदेशाप्याहतेः) पञ्चेन्द्रियत्वं भवत्येवेति। 'विरते' प्रमत्ताप्रमत्तरूपे आहारकद्विकस्योदयः पूर्वं प्रतिपादितः, तीर्थकरः तीर्थंकरकेवलिनो भवत्येवेति गाथार्थः ॥९२॥

(मलय०)—'नामध्रुवोदयाः'–स्थिरास्थिरशुभाशुभतैजसकार्मणवर्णादिचतुष्टयागुरुलघुनिर्माणरूपा द्वादश प्रकृतय', 'सुस्वरखगत्यौदारिक(द्विक)त्रयं'–सुस्वरदुःस्वरप्रशस्ताप्रशस्तविहायोगत्यौदारिकौदारिकाङ्गोपाङ्गरूपम्, प्रत्येकम्, उपघातत्रिकम्, उपघातपराघातोच्छ्वासरूपम्, संस्थानानि सर्वाणि वज्रर्षभनाराचमित्येता एकोनत्रिंशत्प्रकृतयः सयोगिकेवलिन्युदयमधिकृत्य प्राप्यन्ते, परतोऽयोगिकेवलिनि गुणस्थानके न भवन्तीत्यर्थः। अयोगिकेवलिनि पुनः 'पूर्वोक्ताः'–त्रसबादरपर्याप्तसुभगादेयपञ्चेन्द्रियजातिमनुजगतियशःकीर्तिरूपा अष्टौ प्रकृतय उदयमधिकृत्य वेदितव्याः, कस्यापि तीर्थंकरनाम च ॥९२॥

उदयः समाप्तः, सत्स्थानप्ररूपणायाह–

पिंडे तित्थगरूणे आहारूणे तदुभयविहूणे। पढमचउक्कं तस्स उ तेरसगखए भवे बीयं ॥९३॥

सुरदुगवेउव्वियगइदुगे य उव्वट्टिए चउत्थाओ। मणुयदुगे य नवट्ठय दुहा भवे संतयं एक्कं ॥९४॥

(स्वो०)—नाम्नामशेषप्रकृतिसमुदायः पिण्डः, स च त्रिनवतिप्रमाणः प्रथमं सत्स्थानं भवति, तस्मिंस्तीर्थकरनामविहीने द्विनवतिस्तच्च द्वितीयं सत्स्थानम्, आहारकशरीरबन्धनसङ्घाताङ्गोपाङ्गान्याहारकचतुष्कं तेनाहारकचतुष्केनोनपिण्डे एकोननवतिः भवति, सा च तृतीयं सत्स्थानं भवति, 'तथोभयविहीने' इति—आहारकचतुष्कतीर्थकराभ्यां विहीनपिण्डेऽष्टाशीतिर्भवति, एतच्चतुर्थं सत्स्थानम्, एभिः चतुर्भिरपि प्रथमचतुष्कं समवसेयम्। पञ्चम्यर्थे षष्ठी, तस्मात्प्रथमचतुष्कात्प्रकृतित्रयोदशके क्षयं गते तेनैव क्रमेण द्वितीयचतुष्कं भवति, तस्य प्रथममशीतिर्द्वितीयकमेकोनाशीतिस्तृतीयं षट्सप्ततिः चतुर्थं पञ्चसप्ततिरिति गाथार्थः। चतुर्थसत्स्थानादष्टाशीतिलक्षणात् सुरद्विके समुद्वर्त्ति(लि)ते स्थितिक्षयाद्वा सद्भावाच्च्युते षडशीतिप्रमाणं प्रथममध्रुवं सत्स्थानं भवति, वैक्रियशरीरादिचतुष्के नरकगत्यानुपूर्व्योः सुरद्विके चोद्वर्त्ति(लि)ते स्थितिक्षयादसद्भूते वा चतुर्थसत्स्थानादशीतिप्रमाणं द्वितीयमध्रुवं सत्स्थानं भवति, सुरद्विकवैक्रियशरीरतदङ्गोपाङ्गबन्धनसङ्घातनरकद्विके मनुष्यद्विके चोद्वर्त्ति(लि)ते स्थितिक्षयादसद्भूते वा चतुर्थसत्स्थानादष्टसप्ततिप्रमाणं तृतीयमध्रुवसत्स्थानं भवति, नवाष्ट चैवं त्रयोदश सत्स्थानानि। 'द्विधा'—द्विप्रकारं तुल्यसङ्ख्यमप्येकं सत्स्थानं भवति, त्रयोदशप्रकृतिक्षयेऽपि क्षपकश्रेण्यामशीतिः प्रकृत्यष्टकोद्वर्त्त(ल)नादप्येकेन्द्रियेष्वशीतिरिति।

तुशब्दोऽन्यमतसूचकः। 'पिण्ड' इति त्र्युत्तरं शतं प्रथमं सत्स्थानम्। तस्मिन् पिण्डे तीर्थकरोने द्व्यधिकं (शतं) द्वितीयं सत्स्थानम्। आहारकसप्तकोने पिण्डे षण्णवतिः तृतीयं सत्स्थानम्। आहारकशरीरं १ तदङ्गोपाङ्गं २ आहारकाहारकबन्धनम् ३ आहारकतैजसबन्धनं ४ आहारककार्म्मणबन्धनम् ५ आहारकतैजसकार्मणबन्धनम् ६ आहारकसङ्घातम् ७ इति आहारकसप्तकम्। तीर्थकराहारकसप्तकोने ॥२९१॥

पिण्डे पञ्चनवतिः चतुर्थं सत्स्थानम्। अत्राप्येतत् प्रथमचतुष्कम्। तस्मात्प्रथमचतुष्कात् त्रयोदशक्षये क्षपकश्रेण्यां द्वितीयचतुष्कं भवति, तत्रापि प्रथम नवतिः सत्स्थानम्, द्वितीयमेकोननवतिः, तृतीयं त्र्यशीतिश्चतुर्थं द्व्यधिकाशीतिरिति द्वितीयचतुष्कम्। चतुर्थसत्स्थानात् पञ्चनवतिप्रमाणात् सुरद्विके समुद्वर्तित(लि)ते त्रिनवतिरिति प्रथममध्रुवसत्स्थानम्। सुरद्विके वैक्रियशरीरतदङ्गोपाङ्गवैक्रियवैक्रियबन्धनवैक्रियतैजसबन्धनवैक्रियकार्मणबन्धनवैक्रियतैजसकार्मणबन्धनवैक्रियसङ्घातमिति वैक्रियसप्तके नरकद्विके चोद्वर्तित(लि)ते चतुर्थसत्स्थानाच्चतुरशीतिर्द्वितीयमध्रुवसत्स्थानं भवति। सुरद्विकवैक्रियसप्तके नरकद्विके नरद्विके चोद्वर्तित(लि)ते चतुर्थसत्स्थानाद् द्व्यशीतिस्तृतीयं अध्रुवसत्स्थान भवति। नवाष्टौ चैवं त्रयोदश सत्स्थानानि भवन्ति। द्विधैक सत्स्थानं द्व्यशीत्याख्य भवति, क्षपकश्रेण्यां सांसारिकाणां चेति गाथार्थः ॥९३–९४॥

(मलय०)—तदेवमुदयमधिकृत्य नामप्रकृतयो यत्र गुणस्थानके या व्यवच्छिद्यन्ते तास्तत्रोक्ताः, तदभिधानाच्चाभिहितः सप्तपञ्चाशदुदयः, संप्रति सत्तास्थानप्ररूपणार्थमाह—सर्वनामप्रकृतिसमुदायः पिण्डः, स च त्रिनवतिप्रमाण इहाभिधित्सितः, तथाविवक्षणात्, स प्रथम सत्तास्थानम्। तस्मिन् पिण्डे तीर्थकरनाम्नोने द्वितीय सत्तास्थानम्, तच्च द्विनवतिप्रकृतिप्रमाणम्। तथा तस्मिन्नेव पिण्डे 'आहारोने'-आहारकशरीराहारकाङ्गोपाङ्गाहारकबन्धनाहारकसंघातरूपाहारकचतुष्टयहीने तृतीय सत्तास्थान भवति, तच्चैकोननवतिप्रकृतिप्रमाणम्। तथा तस्मिन्नेव पिण्डे 'उभयविहीने'—तीर्थकराहारकचतुष्टयरूपोभयविहीने चतुर्थं सत्तास्थान भवति, तच्चाष्टाशीतिप्रकृतिप्रमाणम्। इद प्रथम सत्तास्थानचतुष्कम्। 'तस्स च' इत्यादि, अत्र पञ्चम्यर्थे षष्ठी, ततोऽयमर्थः-तस्मात्प्रथमचतुष्कात्प्रकृतित्रयोदशके क्षयमुपगते क्रमेण द्वितीय सत्तास्थानचतुष्कं भवति, तद्यथा—प्रथममशीतिः, द्वितीयमेकोनाशीतिः, तृतीय षट्सप्ततिः, चतुर्थं पञ्चसप्ततिरिति।

तथा प्रथमचतुष्कसत्काच्चतुर्थात्सत्तास्थानादष्टाशीतिप्रमाणात्सुरद्विके—देवगतिदेवानुपूर्वीरूपे उद्वलिते षडशीतिः, एषा च प्रथममध्रुवसंज्ञं सत्तास्थानम्। तथा तस्मादेव चतुर्थादष्टाशीतिरूपात्सत्तास्थानाद्वैक्रियचतुष्टयदेवद्विकनरकद्विकेषूद्वलितेषु अशीतिप्रकृतिप्रमाणं द्वितीयमध्रुवसंज्ञं सत्तास्थानम्। ततो मनुष्यद्विके उद्वलितेऽष्टसप्ततिप्रकृतिमानं तृतीयमध्रुवसंज्ञम्। एतानि च त्रीण्यपि सत्तास्थानानि चिरन्तनग्रन्थेष्वध्रुवसंज्ञानि व्यवह्रियन्ते। तथा 'नव'—नवप्रकृत्यात्मकं सत्तास्थानम्। 'अट्ठ'—अष्टप्रकृत्यात्मकं सत्तास्थानम्। सर्वसंख्यया द्वादश सत्तास्थानानि। ननु सर्वसंख्यया त्रयोदश सत्तास्थानानि प्राप्नुवन्ति। तथाहि—प्रथमं चतुष्कम्, द्वितीयं चतुष्कम्, ततोऽध्रुवसंज्ञत्रिकं नव अष्टौ चेति तत्कथमुच्यते—द्वादश सत्तास्थानानि? उच्यते-'दुहा' इत्यादि अशीतिप्रकृतिप्रमाणं सत्तास्थानं यद्यपि 'द्विधा' द्विप्रकारं तथापि तुल्यसंख्यत्वात्तदेकमेव भवति, एकमेव विवक्ष्यते इत्यर्थः। तदेवं द्वादशापि सत्तास्थानानि सप्ततिकाभिप्रायेण त्रिनवतिप्रभृतीनि व्याख्यातानि।

कर्मप्रकृत्याद्यभिप्रायेण त्वनेनैव प्रकारेण त्र्युत्तरशतप्रभृतीनि वेदितव्यानि, तद्यथा—त्र्युत्तरशतप्रकृतिसमुदायः पिण्डः, स प्रथमं सत्तास्थानम्। तस्मिन् पिण्डे तीर्थकरनामोने द्वितीयं सत्तास्थानम्, तद् द्व्युत्तरशतप्रमाणम्। तस्मिन्नेव पिण्डे आहारोने—आहारकसप्तकोने तृतीयं सत्तास्थानं षण्णवतिः। तथा तस्मिन्नेव पिण्डे तीर्थकराहारकसप्तकरूपोभयोने चतुर्थं सत्तास्थानं पञ्चनवतिः, इदं प्रथमं सत्तास्थानचतुष्कम्। एतस्मादेव प्रथमसत्तास्थानचतुष्कात्प्रकृतित्रयोदशके क्षयमुपगते क्रमेण द्वितीयं सत्तास्थानचतुष्कं भवति, तद्यथा—प्रथमं नवतिः, द्वितीयमेकोननवतिः, तृतीयं त्र्यशीतिः, चतुर्थं द्व्यशीतिः, इदं द्वितीयं सत्तास्थानचतुष्कम्। प्रथमसत्तास्थानचतुष्कसत्काच्चतुर्थात्सत्तास्थानात्पञ्चनवतिरूपात्सुरद्विके उद्वलिते त्रिनवतिः। तस्मादेव चतुर्थात्सत्तास्थानात्पञ्चनवतिरूपात्सुरद्विकवैक्रिय-

सप्तकनरकद्विकेषूद्वलितेषु चतुरशीतिः । ततोऽपि मनुष्यद्विके चोद्वलिते द्व्यशीतिः । एतानि त्रीण्यप्यध्रुवसंज्ञानि सत्तास्थानानि, तथा नव प्रकृतय', अष्टौ च । सर्वसंख्यया द्वादश । अत्र द्व्यशीत्याख्य सत्तास्थानं द्विधा प्राप्यते एकं क्षपकश्रेण्यामेकं संसारिणां च, तथापि तदेकमेव विवक्ष्यते तुल्यसंख्यत्वात्, इह द्वितीयं सत्तास्थानचतुष्क प्रकृतित्रयोदशकक्षयाद्भवति ॥९४॥

तदेव प्रकृतित्रयोदशकमाह—

थावरतिरिगइदोदो आयावेगेंदिविगलसाहार । नरयदुगुज्जोयाणि य दसाइमेगततिरिजोगा ॥९५॥

(स्वो०)—स्थावरद्विकमिति-स्थावरं सूक्ष्म च तिर्यग्गत्यानुपूर्व्यातपैकेन्द्रियविकलेन्द्रियजातयः साधारणं नरकद्विकोद्योतानि, आसां दशाद्याः प्रथमोपन्यस्ताः प्रकृतयः एकान्तेनैव तिरश्चां योग्याश्चशब्दादुदयमुदीरणां चाश्रित्य, न तु सद्बन्धावपि, यतस्तास्सद्बन्धा वाश्रित्यान्येषामपि भवन्तीति गाथार्थ' ॥९५॥

(मलय०)—अथतदेव प्रकृतित्रयोदशक निरूपयति-'स्थावरद्विक'-स्थावरसूक्ष्मरूपम् , 'तिर्यग्द्विक'-तिर्यग्गतितिर्यगानुपूर्वीरूपम् , आतपमेकेन्द्रियद्वित्रिचतुरिन्द्रियजातयः, साधारणम् , 'नरकद्विकम्'-नरकगतिनरकानुपूर्वीरूपम् , उद्योतं चेति त्रयोदश । आसां च त्रयोदशानां प्रकृतीनां मध्ये आदिमा दश प्रकृतयः साधारणपर्यन्ता उदयमुदीरणां चाधिकृत्यैकान्तेन तिरश्चामेव योग्याः, उदयमुदीरणां चाधिकृत्येति कुतो लभ्यत इति चेत् , उच्यते-चशब्दस्यानेकार्थत्वात् युक्तितश्च । तथाहि-बन्धसत्वे अधिकृत्यान्येषामपि ताः प्रकृतयो योग्या भवन्ति, नरवेकान्तेन तिरश्चामेव, तत उदयोदीरणे अधिकृत्येति व्याख्यातम् । अनेनाप्युक्तेन किं प्रयोजनमिति चेत्, उच्यते-पूर्वं हि तत्र तत्र प्रदेशे एकान्ततिर्यग्योग्या निर्दिष्टाः, न च तत्र नाममात्रमुपदर्शिताः, ग्रन्थगौरवभयात् , इह तु नामत्रयोदश

क्रमवश्यं वक्तव्यम् , ततो लाघवमुपजीव्येहाऽप्रस्तावेऽप्युक्ताः ॥९५॥

अध्रुवसत्स्थानानां स्वामित्वमाह—

**एगिंदिसु पढमदुगं वाऊतेऊसु तइयगमणिच्चं । अहवा पणतिरिएसुं तस्संतेगिंदियाईसुं ॥९६॥**

(स्वो०)—एकेन्द्रियेषु प्रथमं द्वितीयं चाध्रुवसत्स्थानं भवति, यत एकेन्द्रियेषु पञ्चप्रकारेष्वपि भ्रमतो जीवस्यासंख्येयपुद्गलपरावर्त्ताः स्थितिर्भवति, सुरद्विकस्य तु दशसागरोपमकोटाकोट्यः स्थितिरतः प्रागसद् भवति, वैक्रियचतुष्कनरकद्विकयोर्विंशतिकोटाकोट्यः स्थितिस्तेषामपि स्थितिक्षयादसत्ता, न च तत्र वैक्रियषट्कस्य बन्धोऽस्त्यत एतद्द्विकमेकेन्द्रियेषु भावनीयम् । वाय्वग्निकायिकेषु तृतीयमनित्यं भवति, ततस्तेषु मनुजद्विकमपि स्थितिक्षयादसद् भवति, न च तत्र तद् बध्यते, अथवा पञ्चेन्द्रियपर्यन्तेषु तिर्यक्षु भवति तत्सदेकेन्द्रियेभ्य आगतस्य यावन्मनुष्यद्विकाद्या न बध्यन्ते तावत्, नान्यासु तिसृषु गतिषु भवति, यतस्तासु न तेऽनन्तरमुत्पद्यन्ते । प्रथमद्वितीये अनित्यसत्स्थाने मनुष्येषु भवतः, पृथिवीजलवनस्पतिकायिकेभ्यो यतस्तेषूत्पद्यन्त इति गाथार्थः ॥९६॥

(मलय०)—अथ यानि त्रीण्यध्रुवसंज्ञानि सत्तास्थानानि प्रागुपदर्शितानि, तानि केषु जीवेषु प्राप्यन्ते इत्युच्यते—'एकेन्द्रियेषु' । पृथिव्यम्बुवनस्पतिरूपेषु 'प्रथमद्विकं' षडशीत्यशीतिरूपम् , नित्यं अध्रुवसंज्ञं प्राप्यते । तृतीयं पुनरनित्यम्—अध्रुवसंज्ञं अष्टसप्ततिरूपम् , सत्तास्थानं तेजोवायुषु प्राप्यते, नान्येषु, तेषामेव मनुष्यद्विकोद्वलकत्वात् । अथवा तेजोवायुभ्य उद्वृत्य एकेन्द्रियादिषु तिर्यक्पञ्चेन्द्रियपर्यवसानेषु मध्ये समागतस्य तत्तृतीयमध्रुवसंज्ञं सत्तास्थानं कियत्कालं लभ्यते, यावन्नाद्यापि मनुष्यद्विकं बध्नाति । इह तेजोवायवः स्वभवादुद्वृत्य तिर्यक्ष्वेवोत्पद्यन्ते, न मनुष्यादिषु, तत उक्तं एकेन्द्रियादिषु तिर्यक्पञ्चेन्द्रियपर्यवसानेष्विति ॥९६॥

गतिषु सत्स्थानान्याह—

पढमं पढमगहीण नरए मिच्छंमि अधुवतियजुत्तं। देवेसाइचउक्कं तिरिएसु अतित्थमिच्छसताणि ॥९७॥

(स्वो०)—'प्रथममि' ति प्रथमचतुष्कम्, प्रथमकसत्स्थानहीन 'नरके'–नरकगतौ भवति, मिथ्यादृष्टौ तदेव प्रथमसत्स्थानहीन प्रथमचतुष्कं अध्रुवस्थानत्रिकयुक्त भवति, 'देवेष्वादिचतुष्कं'–प्रथमचतुष्कम्, तिर्यक्षु वितीर्थानि मिथ्यादृष्टिसत्स्थानानि अध्रुवत्रिकप्रथमचतुष्कस्य द्वितीयचतुर्थे पञ्चैतानि। गत्युक्तममणनान्मनुष्येषु तृतीयमध्रुवं वर्जयित्वा सर्वाण्यपि भवन्ति इति गाथार्थः ॥९७॥

(मलय०)—संप्रति गतिषु सत्तास्थानप्ररूपणार्थमाह–प्रथम सत्तास्थानचतुष्क प्रथमकसत्तास्थानहीन 'नरके'–नरकगतौ प्राप्यते, इदमुक्त भवति–नरकगतौ त्रीणि सत्तास्थानानि प्राप्यन्ते, तद्यथा–द्विनवतिरेकोननवतिरष्टाशीतिश्च, त्रिनवतिस्तु न प्राप्यते, त्रिनवतिर्हि तीर्थकराहारकद्विकसहिता भवति, न च तीर्थकराहारकसत्कर्मा नरकेषूत्पद्यते इति। तथा तदेव प्रथमं सत्तास्थानचतुष्कं प्रथमकसत्तास्थानहीन अध्रुवसंज्ञसत्तास्थानत्रिकयुक्त मिथ्यादृष्टौ भवति, अत्रापीयं भावना–मिथ्यादृष्टौ षट् सत्तास्थानानि, तद्यथा–द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च, त्रिनवतिस्तु न भवति, तीर्थकराहारकसत्कर्मणो मिथ्यात्वे गमनाभावात्, 'उभये सन्ति न मिच्छो' इति वचनप्रामाण्यात्। शेषाणि तु क्षपकश्रेण्यां प्राप्यन्ते, इति मिथ्यादृष्टौ न लभ्यन्ते। तथा 'देवेषु'–देवगतौ 'आइचउक्क'–प्रथमसत्तास्थानचतुष्कम्, त्रिनवतिद्विनवत्येकोननवत्यष्टाशीतिरूप भवति, न शेषाणि सत्तास्थानानि, शेषाणामेकेन्द्रियेषु क्षपकश्रेण्यां वा संभवात्। तथा 'तिर्यक्षु' तिर्यग्गतौ, यानि मिथ्यादृष्टिसत्कानि सत्तास्थानानि प्रागुक्तानि तान्येव 'अतीर्थानि'–तीर्थकरनामरहितानि, एकोननवतिरहितानीत्यर्थः, शेषाणि भवन्ति, तद्यथा–द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च। मनुष्यगतौ

पुनस्तृतीयमध्रुवसंज्ञं अष्टसप्ततिलक्षणं सत्तास्थानं वर्जयित्वा शेषाणि सर्वाण्यपि द्रष्टव्यानि एतच्च गति( स्तुत् )क्रमभणनादवसेयम् ॥

गुणेषु सत्स्थानान्याह—

**पढमचउक्कं सम्मा बीयं खीणा उ बार सुहुमे य। सासणमीसि वितित्थं पढममजोगंमि अट्ठ नव ॥९८॥**

(स्वो०)—प्रथमचतुष्कमविरतसम्यग्दृष्टेरारभ्योपशान्तं यावद् भवति। द्वितीयचतुष्कं क्षीणकषायादारभ्यायोगिनं यावत् भवति, क्षपके बादरकषाये सूक्ष्मकषाये च। सास्वादनसम्यग्मिथ्यादृष्ट्योस्तीर्थकरोपलक्षिते प्रथमचतुष्कस्य द्वे स्थाने वर्जयित्वा शेषे द्वितीयचतुर्थे द्वे भवतः। अयोगिन्यष्टौ नवेति गाथार्थः ॥९८॥

(मलय०)—सम्प्रति गुणस्थानेषु सत्तास्थानप्ररूपणार्थमाह—प्रथमसत्तास्थानचतुष्कं अविरतसम्यग्दृष्टेरारभ्योपशान्तमोहगुणस्थानकं यावद्भवति, द्वितीयं सत्तास्थानचतुष्कं क्षीणकषायादारभ्य यावदयोगिकेवली तावद्वेदितव्यम्, तथा क्षपके अनिवृत्तिबादरे सूक्ष्मसंपराये च। तथा सासादने मिश्रे च प्रथमं सत्तास्थानचतुष्कं अतीर्थं त्रिनवत्येकोननवतिरहितं द्रष्टव्यम्। अष्टौ नव वाऽयोगिकेवलिनि, इयमत्र भावना—मिथ्यादृष्टौ सत्तास्थानानि प्रागेवोक्तानि, सासादनसम्यग्दृष्टौ द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। एते एव द्वे सम्यग्मिथ्यादृष्टावपि। अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तापूर्वकरणेषु प्रत्येकं चत्वारि चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशितिश्च। अनिवृत्तिबादरसंपराये सूक्ष्मसंपराये च प्रत्येकमष्टावष्टौ सत्तास्थानानि, तद्यथा—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च। तत्राद्यानि चत्वार्युपशमश्रेण्याम्, उत्तराणि तु चत्वारि क्षपकश्रेण्यां प्रकृतित्रयोदशकक्षये। उपशान्तमोहगुणस्थानके चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च। क्षीण-

मोहे सयोगिकेवलिनि च प्रत्येकं चत्वारि चत्वारि सत्तास्थानानि, तद्यथा–अशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च । अयोगिकेवलिनि च षट् सत्तास्थानानि, तद्यथा–अशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिर्नव अष्टौ च । तत्राद्यानि चत्वारि नानाजीवापेक्षया द्विचरमसमयं यावत्, चरमसमये तु तीर्थकरातीर्थकरानधिकृत्य नवाष्टाविति ॥९८॥

नाम्नो बन्धोदयसत्स्थानसंवेधमाह—

नवपंचोदयसत्ता तेवीसे पणवीसछव्वीसे । अट्ठ चउरट्ठवीसे नवसत्तिगतीसतीसे य ॥९९॥

एक्केक्के इगतीसे एक्के एक्कुदय अट्ठसतसा । उवरयबंधे दस दस नामोदय संतठाणाणि ॥१००॥

(स्वो०)—नवोदयाः पञ्च सत्स्थानानि त्रयोविंशतिबन्धेऽपर्याप्तकैकेन्द्रियप्रायोग्ये, पञ्चविंशतिबन्धे तस्य च पर्याप्तकस्य प्रायोग्ये, षड्विंशतिबन्धे च अपर्याप्तकद्वित्रिचतुष्पञ्चेन्द्रियतिर्यङ्मनुष्यप्रायोग्ये भवन्ति । एतदेव भावयति-एकविंशत्याद्यान्–२१–२४–२५–२६–२७–पञ्च स्वोदयाननुभवमानाः एकेन्द्रियास्त्रयोविंशतिबन्धं बध्नन्ति, प्रथमचतुष्कस्य द्वितीयचतुर्थेऽध्रुवत्रिकं पञ्च सत्स्थानानि ९२–८८–८६–८०–७८, द्वित्रिचतुःपञ्चेन्द्रियतिर्यञ्चः षट् २१–२६–२८–२९–३०–३१–स्वोदयाननुभवन्तस्त्रयोविंशतिबन्धं बध्नाति, तान्येव पञ्च सत्स्थानानि, मनुष्याः पञ्च स्वोदयानेकविंशत्याद्याननुभवन्त एकेन्द्रियप्रायोग्यं त्रयोविंशतिबन्धं बध्नन्ति, चत्वारि सत्स्थानानि भवन्ति, यतस्तृतीयाद्युष न मनुष्येषु सम्भवति । एकेन्द्रियप्रायोग्ये पञ्चविंशतिबन्धे षड्विंशतिबन्धे च प्रागुक्तं भवत्येव, विशेषमाह–ईशानपर्यन्ता देवा षट्कोदयाननुभवन्त एकेन्द्रियप्रायोग्यं पञ्चविंशतिबन्धं षड्विंशतिबन्धं वा बध्नन्ति, प्रथमचतुष्कस्य

द्वितीयचतुर्थे द्वे सत्स्थाने, यतो देवनारकेषु अध्रुवसत्स्थानानि न भवन्ति, पञ्चविंशतिबन्धं अपर्याप्ततिर्यक्त्रसानां पर्याप्तैकेन्द्रियाणां
च प्रायोग्यां सकलतिर्यञ्चः स्वोदयाननुभवमाना बध्नन्ति, प्रागुक्तानि पञ्च सत्स्थानानि ९२–८८–८६–८०–७८। एकेन्द्रियपर्याप्त-
कप्रायोग्यं पञ्चविंशतिबन्धं मनुष्या एकत्रिंशद्वर्जितान् स्वोदयाननुभवमाना बध्नन्ति, तृतीयाध्रुववर्जितानि तान्येव पञ्च सत्स्थानानि।
मनुष्या एकत्रिंशद्वर्जितान् सर्वो(स्वो)दयाननुभवन्तः अपर्याप्तकत्रसप्रायोग्यं पञ्चविंशतिबन्धं बध्नन्ति, प्रथमचतुष्कस्य द्वितीयचतुर्थे द्वे
सत्स्थाने, यतस्तीर्थंकरसत्कर्मा सूक्ष्मत्रिके नोत्पद्यते, प्रथमाध्रुवद्विकं च भवति, ९२–८८–८६–८०, नारको नैषां बन्धक इति। अष्टा-
विंशतिबन्धे देवनारकप्रायोग्ये अष्टावुदयाश्चत्वारि सत्स्थानानि भवन्ति, एतदेव भावयति–तिर्यञ्चोऽकर्मभूमिजाः षट्–२१–२६–२८–
२९–३०–३१–स्वोदयाननुभवमानाः पञ्चविंशतिसप्तविंशत्युदयौ चोत्तरवैक्रियकालेऽनुभवन्तो देवयोग्यमष्टाविंशतिबन्धं बध्नन्ति,
प्रथमचतुष्कस्य द्वितीयचतुर्थे सत्स्थाने ९२–८८, यतस्तीर्थंकरसत्कर्म्मा न तिर्यक्षु भवति। मनुष्या एकत्रिंशद्वर्जितान् स्वोदयाननुभ-
वमानाः अष्टाविंशतिबन्धं बध्नन्ति, तेषां प्रथमचतुष्कं प्रथमवर्जितं भवति। पञ्चेन्द्रियतिर्यग्मनुष्याणां द्वितीयाध्रुवसत्कर्म्मणां स्वोदया-
ननुभवतां प्रथममध्रुवमुभयगतियोग्यमष्टाविंशतिबन्धं बध्नतां चतुर्थं सत्स्थानं भवतीति। एकोनत्रिंशद्बन्धे च नवोदया एकविंशत्याद्याः,
सप्त सत्स्थानानि भवन्ति, प्रथमचतुष्कमध्रुवत्रिकम्। कथं? चतुर्गतिका अपि अविरताः स्वोदयाननुभवमानास्तिर्यक्प्रायोग्यं मनुष्य-
प्रायोग्यं चैकोनत्रिंशद्बन्धं बध्नन्ति, एवं हि नवोदया भाविता एव। सत्स्थानानि भावयति–देवोदयेषु प्रथमचतुष्कस्य द्वितीयचतुर्थे।
नारकोदयेषु तान्येव प्रथमवर्जितानि। तिर्यगुदयेषु तिर्यग्गतिसत्स्थानानि पञ्च। एकत्रिंशदुदये नाम्नो मनुष्या एकोनत्रिंशद्बन्धस्य अब-
न्धकाः, शेषेषूदयेषु षट् स्थानानि भवन्ति, कथं? तिर्यङ्मनुष्यप्रायोग्ये बन्धे बध्यमाने प्रथमचतुष्कस्य द्वितीयचतुर्थेऽध्रुवद्वयं चत्वारि,

देवप्रायोग्ये तु एकोनत्रिंशद्बन्धे बध्यमाने प्रथमचतुष्कस्य प्रथमतृतीये द्वे भवतः। त्रिंशद्बन्धं तिर्यक्प्रायोग्यं चतुर्गतिकाः स्वोदयान-नुभवन्तो बध्नन्ति, एवं हि सिद्धा नवोदया एकत्रिंशत्सत्ताकाः। देवनारकोदयेषु द्वे सत्स्थाने प्रथमचतुष्कस्य द्वितीयचतुर्थे, तिर्यगुदयेषु अध्रुवत्रिकं सर्वं पञ्च, मनुष्योदयेषु तृतीयाध्रुववर्जितानि तान्येव। देवनारकास्तीर्थकरोपलक्षितं पर्याप्तमनुष्यप्रायोग्यं त्रिंशद्बन्धं स्वो-दयाननुभवन्तो बध्नन्ति, तदा देवोदयेषु द्वे सत्स्थाने प्रथमचतुष्कस्य प्रथमतृतीये, नारकोदयेषु तृतीयमेव। देवप्रायोग्ये त्रिंशद्बन्धे मनुष्यैर्बध्यमाने प्रथमचतुष्कस्य (द्वितीय, न ) प्रथमत्रि(तृ)तीये द्वे सत्स्थाने तीर्थकरस्य ध्रुवबन्धित्वात्, (नापि चतुर्थं सत्स्थानं, आहारकद्वबन्धने तत्सत्ताया नियमात्।) पञ्चषड्दशबन्धेष्वेवोदयसत्स्थानानां नियमो नोदयेषु सत्स्थानानाम्, यतोऽनादिषु तिर्यगुदयेषु तीर्थकरोपलक्षिते सत्कर्मणी (न) भवतः न च मनुष्योदयेषु तृतीयाध्रुवम्, न च नारकोदयेषु सम्पूर्णसत्कर्म, न च देवनारकोदयेषु अध्रुवत्रिकम्, एवं हि तदुक्तसङ्ख्या न सम्पूर्णतां यातीति गाथार्थः।

एकत्रिंशद्बन्धे एकमुदयस्थानं सत्स्थानं च, एकत्रिंशद्बन्धो देवप्रायोग्य एव, स चाप्रमत्तापूर्वकरणयोरेव भवति, तयोश्च नियमात् त्रिंशत्प्रकृत्युदयः, यद्यप्यप्रमत्तस्य वैक्रियाहारककाले एकोनत्रिंशदुदयः प्रतिपादितस्तथापि तस्मिन् स्वल्पकालिकेऽविशुद्धपरिणामजे च तीर्थकराहारकयोरबन्धादेकत्रिंशद्बन्धो न संभवति, सत्कर्म च प्रथममेव भवति, तीर्थकराहारकयोरवश्यमावित्वाद् इति। यशःकी-र्त्याख्ये एकप्रकृतिबन्धे उपशामकक्षपकयोश्च बादरसूक्ष्मयोरेक एवोदयः त्रिंशत्प्रकृत्यात्मकः, अष्टौ सत्स्थानानि प्रथमचतुष्कमुपशाम कानाम्, द्वितीयं क्षपकाणाम्। नाम्नो 'बन्धोपरमे'—अबन्धकेषु दशोदया दश सत्स्थानानि, यथा भवन्ति तथा भावयति—उपशान्ते प्रथमचतुष्कम्, क्षीणकषायादिषु द्वितीयचतुष्कम्, अयोग्यन्तसमये नवाष्टसत्स्थाने, दशैव भवन्ति। सयोगिन्यष्टावुदया विंशत्येकविंश

तिषड्विंशत्याद्याः प्रागभिहिता एव, अयोगिनि द्वावुदयौ नवाष्टाविति दशोदयाः । एवं हि नाम्नः सदुदयस्थानानि तन्त्रेण सहाभिहितानि-कथितानि इति गाथार्थः ॥९९-१००॥ ॥सदुदयबन्धो नाम्नः समाप्तः॥

(मलय०)—तदेवं गुणस्थानेष्वपि सत्तास्थानान्यभिहितानि, साम्प्रतं बन्धोदयसत्तास्थानानां परस्परं संवेधमाह—त्रयोविंशतिबन्धे पञ्चविंशतिबन्धे षड्विंशतिबन्धे च प्रत्येकं नव नव उदयस्थानानि, पञ्च पञ्च सत्तास्थानानि । तत्र त्रयोविंशतिबन्धोऽपर्याप्तैकेन्द्रियप्रायोग्य एव । तद्बन्धकाश्च एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रिया मनुष्याश्च । एतेषां च त्रयोविंशतिबन्धकानां यथायोगं सामान्येन नवोदयस्थानानि, तद्यथा—एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत् , त्रिंशत् , एकत्रिंशत् । तत्रैकविंशत्युदयोऽपान्तरालगतौ वर्तमानानामेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणामवसेयः । तेषामपर्याप्तैकेन्द्रियप्रायोग्यबन्धसंभवात् । चतुर्विंशत्युदयोऽपर्याप्तपर्याप्तैकेन्द्रियाणाम् , अन्यत्र चतुर्विंशत्युदयस्याप्राप्यमाणत्वात् । पञ्चविंशत्युदयः पर्याप्तैकेन्द्रियाणां वैक्रियतिर्यग्मनुष्याणां च मिथ्यादृष्टीनाम् , षड्विंशत्युदयः पर्याप्तैकेन्द्रियाणां पर्याप्तापर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां च मिथ्यादृष्टीनाम् , सप्तविंशत्युदयः पर्याप्तैकेन्द्रियाणां वैक्रियतिर्यग्मनुष्याणां च मिथ्यादृष्टीनाम् , अष्टाविंशत्येकोनत्रिंशत्त्रिंशदुदयाः पर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां च मिथ्यादृष्टीनाम् , एकत्रिंशदुदयो विकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणां मिथ्यादृष्टीनाम् । उक्तशेषास्त्रयोविंशतिबन्धका न भवन्ति । तेषां च त्रयोविंशतिबन्धकानां सामान्येन पञ्च सत्तास्थानानि, तद्यथा—द्विनवतिः, अष्टाशीतिः, षडशीतिः, अशीतिः, अष्टसप्ततिश्च । तत्रैकविंशत्युदये वर्तमानानां सर्वेषामपि पञ्चापि सत्तास्थानानि, केवलं मनुष्याणामष्टसप्ततिवर्जानि चत्वारि सत्तास्थानानि च वक्तव्यानि, यतोऽष्टसप्ततिर्मनुष्यगति-

मनुष्यानुपूर्व्योरुद्वलितयोः प्राप्यते, न च मनुष्याणां तदुद्वलनसंभवः । चतुर्विंशत्युदयेऽपि पञ्चापि सत्तास्थानानि, केवलं वायुकायिकस्य वैक्रियं कुर्वतश्चतुर्विंशत्युदये वर्तमानस्याशीत्यष्टसप्ततिवर्जानि त्रीणि सत्तास्थानानि वेदितव्यानि, यतस्तस्य वैक्रियषट्कं मनुष्यद्विकं च नियमादस्ति, यतो वैक्रियं हि साक्षादनुभवन् वर्तते इति न तदुद्वलयति, तदभावाद्देवद्विकनरकद्विके अपि, समकालं वैक्रियषट्कस्योद्वलनसंभवात्, तथास्वाभाव्यात्, वैक्रियषट्के चोद्वलिते सति पश्चान्मनुष्यद्विकमुद्वलयति, न पूर्वम्, ततोऽष्टसप्तत्यशीतिसत्तास्थानासंभवः। पञ्चविंशत्युदयेऽपि पञ्चापि सत्तास्थानानि, तत्राष्टसप्ततिर्वैक्रियवायुकायिकतैजस्कायिकानवधीकृत्य प्राप्यते, नान्यान्, यतस्तेजस्कायिकवायुकायिकवर्जोऽन्यः सर्वोऽपि पर्याप्तको नियमान्मनुष्यगतिमनुष्यानुपूर्व्यौ बध्नाति, ततोऽन्यत्राष्टसप्ततिर्न प्राप्यते । षड्विंशत्युदयेऽपि पञ्चापि सत्तास्थानानि, तत्राष्टसप्ततिर्वैक्रियवायुकायिकतैजस्कायिकानाम्, द्वित्रिचतुःपञ्चेन्द्रियाणां वा तेजोवायुभवादनन्तरमागतानां पर्याप्तापर्याप्तानाम्, ते हि यावन्मनुष्यगतिमनुष्यानुपूर्व्यौ न बध्नन्ति तावत्तेषामष्टसप्ततिः प्राप्यते, नान्येषाम्। सप्तविंशत्युदये अष्टसप्ततिवर्जानि चत्वारि सत्तास्थानानि, सप्तविंशत्युदयो हि तेजोवायुवर्जपर्याप्तबादरैकेन्द्रियवैक्रियतिर्यङ्मनुष्याणाम्, तेषु चावश्यं मनुष्यद्विकसंभवादष्टसप्ततिर्न प्राप्यते। अथ कथं तेजोवायूनां सप्तविंशत्युदयो न भवति येन तद्वर्जनं क्रियते ? उच्यते–सप्तविंशत्युदय एकेन्द्रियाणामातपोद्योतान्यतरप्रक्षेपे सति भवति, न च तेजोवायुष्वातपोद्योतोदयः संभवति, ततस्तद्वर्जनम्। अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदुदयेषु नियमादष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि, अष्टाविंशत्याद्युदया हि पर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणाम्, एकत्रिंशदुदयश्च पर्याप्तविकलेन्द्रियाणां पञ्चेन्द्रियतिरश्चां च। ते चावश्यं मनुजगतिमनुजानुपूर्वीसत्कर्माण इति। तदेवं त्रयोविंशतिबन्धकानां यथायोगं नवाप्युदयस्थानान्यधिकृत्य चत्वारिंशत्सङ्ख्यानि सत्तास्थानानि भवन्ति। पञ्चविंशतिषड्विंश-

तिबन्धकानामप्येवमेव, केवलं पर्याप्तैकेन्द्रियप्रायोग्यं पञ्चविंशतिषड्विंशतिबन्धकानां देवानामेकविंशतिपञ्चविंशतिसप्तविंशतिअष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपेषु षट्सु उदयस्थानेषु द्विनवतिरष्टाशीतिश्चेति द्वे द्वे सत्तास्थाने वक्तव्ये, अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यां तु पञ्चविंशतिं देवा न बध्नन्ति, अपर्याप्तेषु विकलेन्द्रियेषु च मध्ये देवानामुत्पादाऽभावात्। सामान्येन पञ्चविंशतिषड्विंशतिबन्धे च प्रत्येकं नवाप्युदयस्थानानि अधिकृत्य चत्वारिंशच्चत्वारिंशत्सत्तास्थानानि।'अड चउरट्ठवीसे' इति–अष्टाविंशतौ बध्यमानायां अष्टावुदयस्थानानि, तद्यथा–एकविंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशच्च। इह द्विधाऽष्टाविंशतिः–देवगतिप्रायोग्या नरकगतिप्रायोग्या च, तत्र देवगतिप्रायोग्याया बन्धे अष्टावप्युदयस्थानानि नानाजीवापेक्षया प्राप्यन्ते, नरकगतिप्रायोग्यायास्तु बन्धे द्वे, तद्यथा–त्रिंशत् एकत्रिंशत्। तत्र देवगतिप्रायोग्याष्टाविंशतिबन्धकानामेकविंशत्युदयः क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा पञ्चेन्द्रियतिर्यग्मनुष्याणामपान्तरालगतौ वर्त्तमानानामवसेयः। पञ्चविंशत्युदय आहारकसंयतानां वैक्रियतिर्यग्मनुष्याणां च सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा, षड्विंशत्युदयः क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा पञ्चेन्द्रियतिर्यग्मनुष्याणां शरीरस्थानाम, सप्तविंशत्युदय आहारकसंयतानाम्, वैक्रियतिर्यग्मनुष्याणां तु सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा। अष्टाविंशत्येकोनत्रिंशदुदयावपि यथाक्रमं शरीरपर्याप्त्या पर्याप्तानां प्राणापानपर्याप्त्या पर्याप्तानां च तिर्यग्मनुष्याणां क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा, तथा आहारकसंयतानां, वैक्रियतिर्यग्मनुष्याणां च सम्यग्दृष्टीनां मिथ्यादृष्टीनां वाऽवसेयौ। त्रिंशदुदयस्तिर्यग्मनुष्याणां सम्यग्दृष्टीनां मिथ्यादृष्टीनां सम्यग्मिथ्यादृष्टीनां च, तथा आहारकसंयतानां वैक्रियसंयतानां च। एकत्रिंशदुदयः पञ्चेन्द्रियतिरश्चां सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा। नरकगतिप्रायोग्यां त्वष्टाविंशतिं बध्नतां त्रिंशदुदयः, पञ्चेन्द्रियतिर्यग्मनुष्याणां मिथ्यादृष्टीनाम्। एकत्रिंशदुदयः

पञ्चेन्द्रियतिरश्चां मिथ्यादृशाम् । अष्टाविंशतिबन्धकानां सामान्येन चत्वारि सत्तास्थानानि, तद्यथा–द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिः । तत्रैकविंशत्युदये वर्तमानानां देवगतिप्रायोग्याष्टाविंशतिबन्धकानां द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च । पञ्चविंशत्युदयेऽप्यष्टाविंशतिबन्धकानामाहारकसंयतवैक्रियतिर्यग्मनुष्याणां सामान्येनैते एव द्वे सत्तास्थाने । तत्राहारकसंयतो नियमादाहारकसत्कर्मा, ततस्तस्य द्विनवतिरेव सत्तास्थानम् । शेषाश्च तिर्यञ्चो मनुष्या वा आहारकसत्कर्माणस्तद्रहिताश्च भवन्ति, ततस्तेषां द्वे अपि सत्तास्थाने । षड्विंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशदुदयेष्वपि ते एव द्वे द्वे सत्तास्थाने । त्रिंशदुदये देवगतिनरकगतिप्रायोग्याष्टाविंशतिबन्धकानां सामान्येन चत्वारि सत्तास्थानानि, तद्यथा–द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिश्च । तत्र द्विनवतिरष्टाशीतिश्च प्रागिव भावनीया, एकोननवतिः पुनरेवम्–कश्चिन्मनुष्यस्तीर्थकरनामसत्कर्मा वेदकसम्यग्दृष्टिः पूर्वबद्धनरकायुष्को नरकाभिमुखः सम्यक्त्वात्प्रच्युत्य मिथ्यात्वं गतः, तस्य तदा तीर्थकरनामबन्धाभावान्नरकगतिप्रायोग्यामष्टाविंशतिं बध्नत एकोननवतिर्भवति । षडशीतिस्त्वेवम्–इह तीर्थकराहारकचतुष्टयदेवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियचतुष्टयरहिता त्रिनवतिरशीतिर्भवति, ततस्तत्सत्कर्मा पञ्चेन्द्रियतिर्यग्मनुष्यो वा जातः सन् सर्वाभिः पर्याप्तिभिः पर्याप्तो यदि विशुद्धस्ततो देवगतिप्रायोग्यामष्टाविंशतिं बध्नाति, तद्बन्धे च देवद्विकं वैक्रियचतुष्टयं प्राप्यते, इति तस्य षडशीतिः, अथ सर्वसंक्लिष्टस्ततो नरकगतिप्रायोग्यामष्टाविंशतिं बध्नाति तद्बन्धे च नरकद्विकं वैक्रियचतुष्टयं चावश्यं बध्यमानत्वात् सत्तायां प्राप्यते इत्येवमपि तस्य षडशीतिः । एकत्रिंशदुदये त्रीणि सत्तास्थानानि, तद्यथा–द्विनवतिरष्टाशीतिः षडशीतिश्च, एकोननवतिरिह न प्राप्यते, एकत्रिंशदुदयो हि तिर्यक्पञ्चेन्द्रियेषु प्राप्यते, न च तिर्यक्षु तीर्थकरनामसत्कर्म भवति । तीर्थकरनामसत्कर्मणस्तिर्यक्षूत्पादाभावात् । षडशीतिसत्तास्थानभावना प्रागिव वेदितव्या । तदेवमष्टाविंशतिबन्धकानामष्टास्वप्यु-

दयस्थानान्यधिकृत्यैकोनविंशतिसंख्यानि सत्तास्थानानि भवन्ति। 'नवसत्तुगतीसतीसे य'इति–एकोनत्रिंशति त्रिंशति च बध्यमानायां प्रत्येकं नव नव उदयस्थानानि, सप्त सप्त सत्तास्थानानि। तत्रोदयस्थानान्यमूनि, तद्यथा–एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। तत्रैकविंशत्युदयस्तिर्यग्मनुष्यप्रायोग्यामेकोनत्रिंशतं बध्नतां पर्याप्तापर्याप्तैकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियतिर्यग्मनुष्याणां देवनैरयिकाणां च। चतुर्विंशत्युदयः पर्याप्तापर्याप्तैकेन्द्रियाणाम्। पञ्चविंशत्युदयः पर्याप्तैकेन्द्रियाणां देवनैरयिकाणां वैक्रियतिर्यग्मनुष्याणां च मिथ्यादृष्टीनाम्। षड्विंशत्युदयः पर्याप्तैकेन्द्रियाणां पर्याप्तापर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणाम्। सप्तविंशत्युदयः पर्याप्तैकेन्द्रियाणां देवनैरयिकाणां वैक्रियतिर्यग्मनुष्याणां च मिथ्यादृष्टीनाम्। अष्टाविंशत्युदय एकोनत्रिंशदुदयश्च विकलेन्द्रियमनुष्याणां वैक्रियपञ्चेन्द्रियतिर्यग्मनुष्यदेवनैरयिकाणां च। त्रिंशदुदयो विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां देवानां च उद्योतवेदकानाम्। एकत्रिंशदुदयः पर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणामुद्योतवेदकानाम्। तथा देवगतिप्रायोग्यामेकोनत्रिंशतं बध्नतो मनुष्यस्याविरतसम्यग्दृष्टेरुदयस्थानानि पञ्च(सप्त), तद्यथा—एकविंशतिः, (पञ्चविंशतिः), षड्विंशतिः, (सप्तविंशतिः), अष्टाविंशतिः, एकोनत्रिंशत, त्रिंशत। आहारकसंयतानां वैक्रियसंयतानां चेमानि पञ्च उदयस्थानानि, तद्यथा—पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। असंयतानां संयतासंयतानां च वैक्रियं कुर्वतां मनुष्याणां त्रिंशद्वर्जानि चत्वारि उदयस्थानानि, त्रिंशत् कस्मान्न भवति इति चेद्, उच्यते–संयतान् मुक्त्वाऽन्येषां मनुष्याणां वैक्रियमपि कुर्वतामुद्योतोदयाभावात्। सामान्येनैकोनत्रिंशद्बन्धे सप्त सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च। तत्र विकलेन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यामेकोनत्रिंशतं बध्नतां पर्याप्तापर्याप्तैकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणा-

मेकविंशत्युदये वर्तमानानां पञ्च पञ्च सत्तास्थानानि, तद्यथा—द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च। एवं चतुर्विंशतिपञ्चविंशति षड्विंशत्युदयेष्वपि वक्तव्यम्। सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदुदयेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि। भावना यथा त्रयोविंशतिबन्धकानां प्रागुक्ता तथात्रापि कर्तव्या। मनुजगतिप्रायोग्यामेकोनत्रिंशतं बध्नतामेकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणां तिर्यग्गतिमनुष्यगतिप्रायोग्यां पुनर्बध्नतां मनुष्याणां च स्वस्वोदयस्थानेषु यथायोगं वर्तमानानामष्टसप्ततिवर्जानि तान्येव चत्वारि चत्वारि सत्तास्थानानि वेदितव्यानि। देवनैरयिकाणां तिर्यक्पञ्चेन्द्रियमनुष्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नतां स्वस्वोदये वर्तमानानां द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। केवलं नैरयिकस्य मिथ्यादृष्टेस्तीर्थकरसत्कर्मणो मनुष्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नतः स्वोदयेषु पञ्चसु यथायोगं वर्तमानस्यैकोननवतिरेवैका वक्तव्या, यतस्तीर्थकरनामसहितस्याहारकचतुष्टयरहितस्यैव मिथ्यात्वगमनसंभवः, तदुक्तं—'उभये संति न मिच्छो' इति वचनात्। तत्त्रिनवतेराहारकचतुष्टयेऽपनीते सत्येकोननवतिरेव तस्य सत्तायां भवति। देवगतिप्रायोग्यामेकोनत्रिंशतं तीर्थकरनामसहितां बध्नतः पुनरविरतसम्यग्दृष्टेर्मनुष्यस्यैकविंशत्युदये वर्तमानस्य द्वे सत्तास्थाने तद्यथा—त्रिनवतिरेकोननवतिश्च। एवं पञ्चविंशतिषड्विंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदुदयेष्वपि ते एव द्वे द्वे सत्तास्थाने वक्तव्ये। आहारकसंयतानां पुनः स्वस्वोदये वर्तमानानामेकमेव त्रिनवतिरूपं सत्तास्थानमवगन्तव्यम्। तदेवं सामान्येनैकोनत्रिंशद्बन्धे एकविंशत्युदये सप्त सत्तास्थानानि, चतुर्विंशत्युदये पञ्च, पञ्चविंशत्युदये सप्त, षड्विंशत्युदये सप्त, सप्तविंशत्युदये षट्, अष्टाविंशत्युदये षट्, एकोनत्रिंशदुदये षट्, त्रिंशदुदये षट्, एकत्रिंशदुदये चत्वारि, सर्वसंख्यया चतुष्पञ्चाशत्सत्तास्थानानि। तथा यथा तिर्यग्गतिप्रायोग्यामेकोनत्रिंशतं बध्नतामेकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजदेवनैरयिकाणामुदयसत्तास्थानानि भावितानि तथा त्रिंशतमप्युद्योतसहितां

तिर्यग्गतिप्रायोग्यां बध्नतामेकेन्द्रियादीनामुदयसत्तास्थानानि भावनीयानि। मनुष्यगतिप्रायोग्यां तीर्थंकरनामसहितां त्रिंशतं बध्नतां देवनैरयिकाणामुदयसत्तास्थानान्युच्यन्ते–तत्र देवस्य यथोक्तां त्रिंशतं बध्नत एकविंशत्युदये वर्त्तमानस्य द्वे सत्तास्थाने। तद्यथा–त्रिनवतिरेकोननवतिश्च। एकविंशत्युदये एव वर्त्तमानस्य नैरयिकस्यैकं सत्तास्थानमेकोननवतिः, त्रिनवतिरूपं सत्तास्थानं तस्य न भवति, तीर्थंकराहारकसत्कर्मणो नरकेषूत्पादाभावात्। उक्तं च सप्ततिकाचूर्णौ–'जस्स तित्थगराहारगाणि जुगवं संति सो नरएसु न उववज्जइ'त्ति। एवं पञ्चविंशतिसप्तविंशत्येकोनत्रिंशत्त्रिंशदुदयेष्वपि भावनीयम्, नवरं नैरयिकस्य त्रिंशदुदयो न विद्यते, त्रिंशदुदयो हि उद्योते सति प्राप्यते, न च नैरयिकस्योद्योतोदयो भवति। (देवप्रायोग्ये त्रिंशद्बन्धे त्रिंशदुदये द्विनवतिरूपमेकमेव सत्स्थानम्)। तदेवं सामान्येन त्रिंशद्बन्धकानामेकविंशत्युदये सप्त, चतुर्विंशत्युदये पञ्च, पञ्चविंशत्युदये सप्त, षड्विंशत्युदये पञ्च, सप्तविंशत्युदये षट्, अष्टाविंशत्युदये षट्, एकोनत्रिंशदुदये षट्, त्रिंशदुदये षट्, एकत्रिंशदुदये चत्वारि, सर्वसंख्यया द्विपञ्चाशत्। 'एक्केक्कमेगतीसे' इति–एकत्रिंशति बध्यमानायामेकमुदयस्थानं त्रिंशत्, यत एकत्रिंशतं देवगतिप्रायोग्यां तीर्थंकराहारकसहितां बध्नतोऽप्रमत्तसंयतस्यापूर्वकरणस्य वा प्राप्यते, न च ते वैक्रियमाहारकं वा कुर्वन्ति, ततः पञ्चविंशत्यादय उदया न प्राप्यन्ते, एकं सत्तास्थानं त्रिनवतिः, तीर्थंकराहारकचतुष्टययोरपि सत्तासंभवात्। 'एगे एगुदय अट्ठ संतंसा' इति–एकस्मिन् यशःकीर्तिरूपे कर्मणि बध्यमाने एकमुदयस्थानं त्रिंशत्, एकां हि यशःकीर्तिं बध्नन्त्यपूर्वकरणादयः, ते चातिविशुद्धत्वाद्वैक्रियमाहारकं वा नारभन्ते, ततः पञ्चविंशत्यादीन्युदयस्थानानीहापि न प्राप्यन्ते, अष्टौ सत्तांशाः–सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च। तत्राद्यानि चत्वारि सत्तास्थानानि उपशमश्रेण्यां, क्षपकश्रेण्यामपि यावदनिवृत्तिबादरगुणस्थाने गत्वा

॥२९१॥

त्रयोदश नामानि न क्षप्यन्ते, त्रयोदशसु च नामसु क्षीणेषु नानाजीवापेक्षयोपरितनानि चत्वारि लभ्यन्ते, तानि च तावल्लभ्यन्ते यावत्सूक्ष्मसंपरायगुणस्थानम्। 'उवरयबंधे दसदस' त्ति–उपरते बन्धे, बन्धाभावे इत्यर्थः, दश उदयस्थानानि, तद्यथा–विंशतिरेकविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत् त्रिंशत् एकत्रिंशत् नव अष्टौ चेति। तत्र विंशत्येकविंशती यथाक्रममतीर्थकरतीर्थकरयोः सयोगिकेवलिनोः कार्मणकाययोगे वर्तमानयोः, षड्विंशतिसप्तविंशती तयोरेवौदारिकमिश्रकाययोगे वर्तमानयोः, अतीर्थकरस्य स्वभावस्थस्य त्रिंशत्, तस्यैव स्वरे निरुद्धे एकोनत्रिंशत्, तस्यैवोच्छ्वासेऽपि निरुद्धे अष्टाविंशतिः, तीर्थकरस्य स्वभावस्थस्य एकत्रिंशत्, तस्यैव स्वरे निरुद्धे त्रिंशत्, उच्छ्वासेऽपि निरुद्धे एकोनत्रिंशत्, एवं च द्विधा त्रिंशदेकोनत्रिंशतौ प्राप्येते, अयोगिनस्तीर्थकरस्य नवोदयः, अतीर्थकरस्यायोगिनोऽष्टोदयः। दश सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिर्नव अष्टौ च, तत्र विंशत्युदये द्वे सत्तास्थाने–एकोनाशीतिः, पञ्चसप्ततिश्च, एवं षड्विंशत्युदये अष्टाविंशत्युदयेऽपि च द्रष्टव्यम्। एकविंशत्युदये इमे द्वे सत्तास्थाने, तद्यथा–अशीतिः षट्सप्ततिश्च, एवं सप्तविंशत्युदयेऽपि, एकोनत्रिंशति चत्वारि सत्तास्थानानि, तद्यथा–अशीतिः, षट्सप्ततिः, एकोनाशीतिः, पञ्चसप्ततिश्च। यत एकोनत्रिंशत् तीर्थकरस्यातीर्थकरस्य च भवति। तत्राद्ये द्वे तीर्थकरमधिकृत्य वेदितव्ये, अन्तिमे द्वे अतीर्थकरमधिकृत्य। त्रिंशदुदये अष्टौ सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च। तत्राद्यानि चत्वार्युपशान्तकषायस्य, अशीतिः क्षीणकषायस्य सयोगिकेवलिनो वा तीर्थकरस्याहारकसत्कर्मणः, तस्यैव क्षीणकषायस्य सयोगिकेवलिनो वाहारकसत्कर्मणोऽतीर्थकरस्यैकोनाशीतिः, आहारकचतुष्टयरहितस्यैव तीर्थकरस्य क्षीणकषायस्य सयोगिकेवलिनो वा षट्सप्ततिः, तस्यैवातीर्थकरस्य पञ्चसप्ततिः। एकत्रिंशदुदये द्वे सत्तास्थाने, तद्यथा–

अशीतिः षट्सप्ततिश्च, एते च तीर्थकरकेवलिनो वेदितव्ये। अतीर्थकरकेवलिन एकत्रिंशदुदयस्यैवाभावात्। नवोदये त्रीणि सत्तास्थानानि, तद्यथा—अशीतिः षट्सप्ततिर्नव च, तत्राद्ये द्वे यावत् द्विचरमसमयस्तावदयोगिकेवलिनस्तीर्थकरस्य वेदितव्ये, चरमसमये तु नव। अष्टोदये त्रीणि सत्तास्थानानि, तद्यथा—एकोनाशीतिः पञ्चसप्ततिरष्टौ च। तत्राद्ये द्वे अयोगिकेवलिनोऽतीर्थकरस्य द्विचरमसमयं यावद्वेदितव्ये, चरमसमये त्वष्टाविति। एवमबन्धकस्य दशाप्युदयस्थानान्यधिकृत्य त्रिंशत्सत्तास्थानानि भवन्ति ॥९९-१००॥

गुणस्थानेषु सदुदयबन्धसंवेधमाह—

**वंधोदयसंतेसुं पण पण पढमंतिमाण जा सुहुमो। संतोइयणाइं पुण उवसमखीणे परे नत्थि ॥१०१॥**

(स्वो०)—बन्धोदयसत्स्थानेषु पञ्च पञ्च प्रकृतयो ज्ञानावरणान्तराययोः सूक्ष्मसम्परायं यावद् भवन्ति, सत्ताग्रगता उदयगताश्च ज्ञानावरणान्तराययोः पञ्चापि भवन्त्यबन्धके उपशान्तकषाये क्षीणकषाये च तयोः परतोऽसम्भव इति गाथार्थः ॥१०१॥

(मलय०)—तदेवं सर्वेषामपि कर्मणां प्रत्येकं बन्धस्थानानि उदयस्थानानि सत्तास्थानानि च सामान्यतः परस्परं संवेधतश्च चिन्तितानि, संप्रति सर्वेषामपि कर्मणां प्रत्येकं संवेधतो बन्धोदयसत्ता गुणस्थानकेषु चिचिन्तयिषुः प्रथमतो ज्ञानावरणीये तत्तुल्यत्वाद-न्तराये च चिन्तयन्नाह—प्रथमान्तिमयोः—ज्ञानावरणांतरायरूपयोः कर्मणोर्मिथ्यादृष्टेरारभ्य यावत्सूक्ष्मसंपरायस्तावद्बन्धोदयसत्तासु प्रत्येकं पञ्चपञ्चप्रकृतयो लभ्यन्ते, किमुक्तं भवति ? मिथ्यादृष्ट्यादिषु सूक्ष्मसंपरायपर्यन्तेषु दशसु गुणस्थानकेषु ज्ञानावरणान्तराययोः प्रत्येकं पञ्चविधो बन्धः, पञ्चविध उदयः, पञ्चविधा सत्ता भवतीति। उपशान्तमोहे क्षीणमोहे च बन्धाभावे द्वयोरपि प्रत्येकं पञ्च प्रकृतयः सत्यः पञ्च उदीर्णा उदयप्राप्ता भवन्ति। 'परे नत्थि'त्ति—क्षीणमोहात्परतः पुनरुदये सत्तायां चैकापि प्रकृतिर्नास्ति, क्षीणमोह एव

धीमत्वात् ॥१०१॥

दर्शनावरणमाह—

मिच्छा सासयणेसु नवबंधुवलक्खिया उ दो भंगा। मीसाओ य नियट्टी जा छब्बंधेण दो दो उ ॥१०२॥

(स्वो०)—मिथ्यादृष्टौ सास्वादने च नवकबन्धोपलक्षितौ द्वौ भङ्गकौ भवतः, ९–५–९, ९–४–९। सम्यग्मिथ्यादृष्टेरारभ्यापूर्वकरणं यावत् षट्कबन्धोपलक्षितौ द्वौ द्वौ भङ्गकौ भवतः ६–५–९, ६–४–९। तुशब्दात् क्षपकस्योपशमकस्यापि, द्वितीयतुशब्दात् प्रतिपततोऽपीति गाथार्थः ॥१०२॥

(मलय०)—संप्रति दर्शनावरणस्य बन्धोदयसत्तास्थानानि संवेधतो गुणस्थानकेषु चिन्तयन्नाह—दर्शनावरणस्य मिथ्यादृष्टौ सासादने च नवबन्धोपलक्षितौ द्वौ भङ्गौ, तद्यथा—नवविधो बन्धः, चतुर्विध उदयः नवविधा सत्ता एष विकल्पो निद्रोदयाभावे, अथवा नवविधो बन्धः पञ्चविध उदयः नवविधा सत्ता एष विकल्पो निद्रोदयकाले। तथा 'मिश्रदृष्टेः' सम्यग्मिथ्यादृष्टेरारभ्यापूर्वकरणगुणस्थानकस्य प्रथमं भागं यावत् षड्बन्धेन प्रत्येकं द्वौ द्वौ भङ्गौ भवतः, तद्यथा—षड्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, अथवा षड्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता ॥१०२॥

चउबंधे नव संते दोण्णि अपुव्वाउ सुहुमरागो जा। अब्बंधे णव संते उवसंते हुंति दो भंगा ॥१०३॥

(स्वो०)—चतुष्कबन्धे नवसु सत्सु चतुष्पञ्चोदयाभ्यां द्वौ भङ्गौ अपूर्वकरणादुपशामकश्रेण्यां ४–५–९, ४–४–९। यावत् उपशान्ते

अबन्धके नवसु सत्सु चतुष्पञ्चोदयाभ्यां द्वौ भङ्गौ इति गाथार्थः ॥१०३॥

(मलय०)—अपूर्वकरणाद्धायाः सङ्ख्येयतमे भागे निद्राप्रचलयोर्बन्धव्यवच्छेदादूर्ध्वमारभ्योपशमश्रेण्यां सूक्ष्मसंपरायं यावच्चतुर्बन्धे नवकसत्तायां च द्वौ भङ्गौ भवतः, तद्यथा—चतुर्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, अथवा चतुर्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता। तथा 'अबंधे' बन्धाभावे, 'उपशान्ते' उपशान्तमोहगुणस्थानके नवकसत्तायां द्वौ भङ्गौ भवतः, तद्यथा—चतुर्विध उदयो नवविधा सत्ता, अथवा पञ्चविध उदयो नवविधा सत्ता ॥१०३॥

चउबंधे छस्संते बायरसुहुमाणमेगुक्खवयाणं। छसु चउसु व संतेसु दोण्णि अबंधंमि खीणस्स ॥१०४॥

(स्वो०)—चतुष्कबन्धे षट्सु सत्सु चतुष्कोदयेनैको भङ्गो भवति, स च बादरसूक्ष्मक्षपकयोः। ४-४-६। अबन्धकस्य क्षीणकषायस्य षट्सु सत्सु चतुष्कोदयेनैको भङ्गस्तस्यैवान्तसमये चतुर्षु सत्सु चतुष्कोदयेनैव द्वितीयो भङ्गो। ०-४-६, ०-४-४। दर्शनावरणस्य भवतीति गाथार्थः ॥१०४॥

(मलय०)—अनिवृत्तिबादरस्य सूक्ष्मसंपरायस्य क्षपकस्य चतुर्बन्धे षट्कसत्तायां चैको भङ्गो भवति, तद्यथा—चतुर्विधो बन्धः चतुर्विध उदयः षड्विधा सत्ता, क्षपकस्य ह्यत्यन्तविशुद्धत्वेन निद्रोदयाभावात्पञ्चविध उदयो न संभवतीत्येक एव भङ्गः। तथा 'क्षीणस्य' क्षीणमोहस्य, 'अबन्धे' बन्धाभावे, षट्सु चतसृषु च प्रकृतिषु सतीषु द्वौ भङ्गौ प्राप्येते, तद्यथा—चतुर्विध उदयः, षड्विधा सत्ता, एष विकल्पः क्षीणकषायस्य द्विचरमसमयं यावदवाप्यते, चरमसमये चतुर्विध उदयश्चतुर्विधा सत्ता ॥१०४॥

चत्तारि जा पमत्तो दोण्णि उ जा जोगि सायबंधेणं। सेलेसि अबंधे चउ इगि संते चरिमसमए दो ॥१०५॥

(स्वो०)—वेदनीयस्याद्याश्चत्वारो भङ्गा यावत्प्रमत्तस्तावद् भवन्ति । तेभ्य एव सातबन्धोपलक्षितौ यौ द्वौ भङ्गौ तौ सयोगिस्थानं यावद् भवतः । 'शैलेशे'—अयोगिनि, वेदनीयस्याबन्धके चत्वारो भङ्गाः, उभयसद्भावेऽन्यतरोदयेन द्वौ, तस्यैवान्त्यसमये सातासातयोरन्यतरेणोदये तेनैव सत्ता द्वौ भङ्गको भवत इति गाथार्थः ॥१०५॥

(मलय०)—तदेवं दर्शनावरणस्य गुणस्थानेषु बन्धोदयसत्तास्थानानां परस्परं संवेधश्चिन्तितः, संप्रति वेदनीयस्य चिन्त्यते—मिथ्यादृष्टेरारभ्य यावत्प्रमत्तसंयतस्तावत्प्रत्येकं चत्वारो भङ्गा वेदनीयस्य नानाजीवापेक्षया कालभेदेनैकजीवापेक्षया प्राप्यन्ते, तद्यथा—असातस्य बन्धः असातस्योदयः सातासाते सती, अथवाऽसातस्य बन्धः सातस्योदयः सातासाते सती, अथवा सातस्य बन्धः असातस्योदयः सातासाते सती, अथवा सातस्य बन्धः, सातस्योदयः सातासाते सती । तथाऽप्रमत्तसंयतादारभ्य यावत्सयोगिकेवली तावत्सातबन्धेनोपलक्षितौ प्रत्येकं द्वौ भङ्गौ प्राप्येते, तद्यथा—सातस्य बन्धोऽसातस्योदयः सातासाते सती, अथवा सातस्य बन्धः सातस्योदयः सातासाते सती । 'शैलेशे' अयोगिकेवलिनि, 'अबन्धे' बन्धाभावे, चत्वारो विकल्पाः, तत्र द्वाविमौ—असातस्योदयः सातासाते सती, अथवा सातस्योदयः सातासाते सती, एतौ च द्वौ विकल्पौ सातासातरूपोभयसद्भावेन द्विचरमसमयं यावद्वेदितव्यौ । चरमसमये त्वेकस्मिन्नन्यतरस्मिन् साते असाते वा सति द्वौ भङ्गौ, तद्यथा—असातस्योदयोऽसातस्य सत्ता, एष विकल्पो यस्य द्विचरमसमये सातं क्षीणं तस्य प्राप्यते, यस्य त्वसातं द्विचरमसमये क्षीणं तस्यायं विकल्पः—सातस्योदयः सातस्य सत्ता ॥१०५॥

अट्ठछलाहियवीसा सोलस वीसं च बारस छ दोसु । दो चउसु तीसु एक्कं मिच्छाइसु आउए भंगा ॥१०६॥
नरतिरिउदए नारयबन्धविहूणा उ सासणे छव्वीसा । बन्धसमऊण सोलस मीसे चउबन्धजुयसम्मे ॥१०७॥

देसविरयम्मि वारस तिरिमणुभंगा छवंधपरिहीणा। मणुभंगातिवंधूणा दुसु सेसा उभयसेढीसु ॥१०८॥

(स्वो०)—अष्टाभ्यधिकविंशतिरायुषो भङ्गानां मिथ्यादृष्टौ भवति। षड्विंशतिः सास्वादने, सम्यग्मिथ्यादृष्टौ षोडश, अविरते विंशतिः। देशविरते द्वादश, प्रमत्ताप्रमत्तयोः षड् भवन्ति। अपूर्वकरणबादरसूक्ष्मोपशान्तानां द्वौ भङ्गकौ भवतः। क्षीणकषायादिषु त्रिष्वेको भङ्ग इति गाथार्थः। एतानेव व्यक्तीकरोति–आयुर्भङ्गेभ्योऽष्टाविंशतिभ्यो द्वौ भङ्गौ नारकायुर्बन्धोपलक्षितौ न भवतः, नरयाउयं बंधइ तिरियाउयं वेयइ एतदुभयं संतं, णरयाउयं बंधइ मणुयाउयं वेयइ एतदुभयं सन्तम्। शेषाः सास्वादने षड्विंशतिर्भवन्ति। चतसृष्वपि गतिष्वायुर्बन्धोपलक्षिता द्वादश भङ्गा न भवन्ति, शेषाः सम्यग्मिथ्यादृष्टौ षोडश भवन्ति। अविरते त एव षोडश देवनारकायुरुदये मनुष्यायुर्बन्धोपलक्षितौ द्वौ, तिर्यग्मनुष्यायुरुदये देवायुर्बन्धोपलक्षितौ द्वौ चैवं विंशतिरिति। तुशब्दान्मिथ्यादृष्टौ सर्वेऽपीति गाथार्थः। देवनारकयोर्देशविरतस्यासम्भवात्तदुद्भवा दश भङ्गा न भवन्त्येव, तिर्यग्मनुष्यभङ्गेषु नारकतिर्यग्मनुष्यायुर्बन्धोपलक्षिताः षड् भङ्गा न भवन्ति, शेषास्तेभ्यो द्वादश भवन्तीति। मनुष्यभङ्गेषु नारकतिर्यग्मनुष्यायुर्बन्धोपलक्षितास्त्रयो भङ्गा न भवन्ति, शेषाः प्रमत्ताप्रमत्तयोः षड् भङ्गा भवन्ति। उपशामकोपशान्तानां द्वौ भवतः। बंधो नत्थि मणुयाउयं वेयइ तदेव संतं १ बंधोपरमे मणुस्याउयं वेयइ देवमणुयाउयं संतं २। क्षपकश्रेण्यामेको भङ्गः बन्धो नत्थि मणुयाउं वेयइ तदेव संतं इति गाथार्थः ॥१०६-७-१०८॥

(मलय०)—संगत्यायुषो गुणस्थानकेषु बन्धोदयसत्तास्थानानां परस्परं संवेधं चिन्तयति–मिथ्यादृष्ट्यादिषु गुणस्थानेष्वयोगिकेवलिगुणस्थानकपर्यवसानेषु क्रमेणैतेऽष्टाधिकविंशत्यादय आयुषि भङ्गा भवन्ति। तत्र मिथ्यादृष्टिगुणस्थानके अष्टाविंशतिरप्यायुषो भङ्गाः, मिथ्यादृष्टयो हि चतुर्गतिका भवन्ति। तत्र नैरयिकानधिकृत्य पञ्च, तिरश्चोऽधिकृत्य नव, मनुष्यानधिकृत्य नव, देवानधि-

कृत्य पञ्च । एते च प्रागेव सप्रपञ्चं भाविता इति न भूयो भाव्यन्ते । सासादनस्य षडधिका विंशतिरायुषो भङ्गाः, यतस्तिर्यञ्चो मनुष्या वा सासादनभावे वर्तमाना नरकायुर्न बध्नन्ति, ततः प्रत्येकं तिरश्चां मनुष्याणां परभवायुर्बन्धकाले एकैको भङ्गो न प्राप्यते, इति षड्विंशतिः । सम्यग्मिथ्यादृष्टेः षोडश, सम्यग्मिथ्यादृष्टयो हि नायुर्बन्धमारभन्ते, तत आयुर्बन्धकाले नारकाणां यौ द्वौ भङ्गौ, ये च तिरश्चां चत्वारो, ये च मनुष्याणामपि चत्वारो, यौ च देवानां द्वौ, तानेतान् द्वादश वर्जयित्वा शेषाः षोडश भवन्ति । अविरतसम्यग्दृष्टेर्विंशतिर्भङ्गाः, कथमिति चेद् ,उच्यते–तिर्यग्मनुष्याणां प्रत्येकमायुर्बन्धकाले नरकगतितिर्यग्गतिमनुष्यगतिविषयास्त्रयस्त्रयो भङ्गाः, यच्च देवनैरयिकाणां प्रत्येकमायुर्बन्धकाले तिर्यग्गतिविषय एकैको भङ्गस्ते अविरतसम्यग्दृष्टेर्न सम्भवन्ति, ततः शेषा विंशतिरेव भवति । एतदेवाह–नरायुषस्तिर्यगायुषश्च उदये प्रत्येकं सासादनस्यायुर्बन्धकाले नरकायुर्बन्धो न भवति, ततस्तद्द्विहीनाः शेषाः षड्विंशतिरेव सासादने भङ्गाः । तथा मिश्रे बन्धेन सह चतस्रो गतीरधिकृत्य ये द्वादश भङ्गा प्राप्यन्ते, ते न संभवन्तीति तदूनाः शेषाः षोडश भङ्गाः । तथा 'सम्मे' त्ति–अविरतसम्यग्दृष्टौ ये बन्धेन चत्वारो भङ्गा लभ्यन्ते, तद्यथा–देवानां नारकाणां च प्रत्येकं परभवायुर्बन्धकाले मनुष्यायुर्बन्धः, तिरश्चां मनुष्याणां च प्रत्येकं देवायुर्बन्धः, ते सम्यग्मिथ्यादृष्ट्यपेक्षया अधिका इति तैर्युता विंशतिर्भङ्गा भवन्ति । 'बारस' त्ति–देशविरतेर्द्वादश 'छन्दोसु' त्ति–द्वयोः प्रमत्ताप्रमत्तयोः प्रत्येकं षट्, तथा चाह–इह देशविरतिर्देवानां नारकाणां च न संभवति, ततस्तदाश्रिता दश भङ्गा देशविरतौ न प्राप्यन्ते । तिर्यग्मनुष्या अपि देशविरता देवायुरेव बध्नन्ति, न नरकतिर्यग्मनुष्यायूंषि, ततस्तिरश्चां मनुष्याणां च परभवायुर्बन्धकाले नरकतिर्यग्मनुष्यायुर्बन्धरूपास्त्रयस्त्रयो भङ्गा न प्राप्यन्ते, ततः पूर्वोक्तेषु दशस्वेतेषु च षट्सु अष्टाविंशतेरपनीतेषु शेषा द्वादश भङ्गा भवन्ति । ते चेमे–तिरश्चां मनुष्याणां च प्रत्येकं परभवायुर्बन्धकालात्पूर्वमेकैको भङ्गः, परभवायुर्बन्धकाले-

ऽपि चैकैकः, आयुर्बन्धोत्तरकाले च चत्वारश्चत्वारः, यतः केचित्तिर्यञ्चो मनुष्याश्च चतुर्णामेकमन्यतमदायुर्बध्वा देशविरतिं प्रतिपद्यन्ते, ततस्तदपेक्षया यथोक्ताश्चत्वारश्चत्वारो भङ्गाः प्राप्यन्ते। तथा ये मनुष्ये नव भङ्गाः प्रागुपदर्शितास्त एव परभवायुर्बन्धकाले ये नारकतिर्यग्मनुष्यायुर्बन्धरूपास्त्रयो भङ्गास्तैरूनाः शेषाः षट् भङ्गाः 'द्वयोः' प्रमत्ताप्रमत्तयोः, प्रत्येकं भवन्ति। प्रमत्ताप्रमत्ता हि देवायुरेवैकं बध्नन्ति न शेषमायुः, बन्धोत्तरकालं च प्रागुक्तदेशविरतियुक्त्यनुसारेण चत्वार इति। 'सेसा उभयसेढीसु'त्ति–शेषाः शेषगुणस्थानकभङ्गा उभयश्रेण्योर्यथायोगं द्रष्टव्याः, तेचैवं–'दो चउसु'त्ति–चतुर्षु अपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहेषु गुणस्थानकेषूपशमश्रेणिमधिकृत्य प्रत्येकं द्वौ भङ्गौ। तद्यथा–मनुष्यायुष उदयो मनुष्यायुषः सत्ता एष विकल्पः परभवायुर्बन्धकालात्पूर्वम्, अथवा मनुष्यायुष उदयो देवमनुष्यायुषी सती, एष पारभवायुर्बन्धोत्तरकालम्, एते ह्यतिविशुद्धत्वात्परभवायुर्न बध्नन्ति। पूर्वबद्धे वायुषि उपशमश्रेणिं प्रतिपद्यन्ते देवायुष्येव, नान्यायुषि, तदुक्तं कर्मप्रकृतौ–'तिसु आउगेसु बद्धेसु जेण सेढिं न आरुहइ' इति, तत उपशमश्रेणिमधिकृत्य एतेषु द्वौ द्वावेव भङ्गौ। पूर्वबद्धायुष्कास्तु क्षपकश्रेणिं न प्रतिपद्यन्ते, ततः क्षपकश्रेण्यामेतेषामेक एव भङ्गः, तद्यथा—मनुष्यायुष उदयो मनुष्यायुषः सत्ता। 'तीसु एक्कं'ति–त्रिषु क्षीणमोहसयोगिकेवल्ययोगिकेवलिरूपेषु, प्रत्येकमेको भङ्गः, तद्यथा–मनुष्यायुष उदयो मनुष्यायुषः सत्ता। 'मिच्छाइसु आउए भंगा' मिथ्यादृष्ट्यादिष्वयोगिकेवलिपर्यन्तेषु यथासंख्यमायुषि भङ्गा एवमुक्तप्रकारेण वेदितव्याः ॥१०६–१०७–१०८॥

गुणस्थानकेषुसदुदयबन्धसंवेधः

पंचादिमा उ मिच्छे आदिमहीणा उ सासणे चउरो। उच्चबंधेणं दोण्णि उ मीसाओ देसविरयं जा॥ ॥२०३॥

(स्वो०)–पञ्चाद्या गोत्रस्य भङ्गा मिथ्यादृष्टौ भवन्ति, बन्धसदुदयेषु नीचैर्गोत्रमनेनाद्येन वर्जितास्त एव चत्वारः सास्वादने भवन्ति,

उच्चैर्गोत्रबन्धोपलक्षितौ द्वौ भङ्गौ सम्यग्मिथ्यादृष्ट्यविरतविरतेषु भवत इति गाथार्थः ॥१०९॥

(मलय०)—संप्रति गोत्रस्य गुणस्थानकेषु भङ्गान्निरूपयन्नाह—मिथ्यादृष्टौ गोत्रस्यादिमाः पञ्च भङ्गा भवन्ति। तद्यथा—नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयः नीचैर्गोत्रं सत् स एष विकल्पस्तेजोवायुकायिकेषु लभ्यते, तद्भवादुद्वृत्तेषु वा शेषजीवेषु कियत्कालम्, नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती, अथवा नीचैर्गोत्रस्य बन्धः उच्चैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती, अथवा उच्चैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती, अथवा उच्चैर्गोत्रस्य बन्धः उच्चैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती। 'आइमहीणाउ सासणे चउरो'त्ति—एते चानन्तरोक्ताः पञ्च भङ्गा 'आदिमहीनाः' प्रथमवर्जाः शेषाश्चत्वारो भङ्गाः सासादने भवन्ति। प्रथमो हि भङ्गस्तेजोवायुकायिकेषु लभ्यते, तद्भवादुद्वृत्तेषु वा कियत्कालम्। न च तेजोवायुषु सासादनभावो लभ्यते, नापि तद्भवादुद्वृत्तेषु तदस्ति, ततोऽत्र प्रथमभङ्गप्रतिषेधः। तथा मिश्रादारभ्य देशविरतिं यावदुच्चैर्गोत्रबन्धेन प्रत्येकं द्वौ भङ्गौ भवतः, तद्यथा—उच्चैर्गोत्रस्य बन्धः, नीचैर्गोत्रस्योदयः, उच्चनीचैर्गोत्रे सती, अथवा उच्चैर्गोत्रस्य बन्धः, उच्चैर्गोत्रस्योदयः, उच्चनीचैर्गोत्रे सती ॥१०९॥

उच्चेण बधुदए जा सुहुमोऽबधि छट्ठओ भगो। उवसता जाऽजोगी दुचरिमचरिममि सत्तमओ ॥११०॥

(स्वो०)—उच्चैर्गोत्रबन्धोदयाभ्यां य उपलक्षितः स यावत्सूक्ष्मसम्परायस्थानं तावद् भवति। अबन्धोपलक्षितो यः षष्ठो भङ्गः स उपशान्ताद्ययोगिद्विचरमसमयं यावद् भवति। उच्चैर्गोत्रेण सदुदये सप्तमो भङ्गः स चायोग्यन्तसमये भवतीतिगाथार्थः ॥११०॥

(मलय०)—प्रमत्तसंयतादारभ्य यावत्सूक्ष्मसंपरायस्तावद्बन्धे उदये च उच्चैर्गोत्रेण प्रत्येकमेकको भङ्गो वक्तव्यः, तद्यथा—उच्चैर्गोत्रस्य बन्धः उच्चैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती। तथा अबन्धे बन्धाभावे उपशान्तमोहगुणस्थानकादारभ्य यावदयोगिकेवलिद्विचरमस

मयस्तावत्प्रत्येकं षष्ठो भङ्गो वेदितव्यः, स चायं-उच्चैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती, अयोगिकेवलिनश्चरमसमये सप्तमो भङ्गः, तद्यथा-उच्चैर्गोत्रस्योदयः उच्चैर्गोत्रं सत्, नीचैर्गोत्रं हि द्विचरमसमये एव क्षीणमिति न चरमसमये सत् प्राप्यते ॥११०॥

**ओहम्मि मोहणीए बंधोदयसंतयाणि भणियाणि । अहुणाऽव्वोग्गडगुणउदयपयसमूहं पवक्खामि ॥१११॥**

(स्वो०)—'औघिकभणने' सामान्यभणने, तत्रैव मोहनीयस्य बन्धोदयसत्स्थानानि गुणेष्वभिहितानि 'अधुना' साम्प्रतमव्यक्तोदयानां गुणस्थानोदयानां च 'पदसमूहं' एकैकस्मिन्नुदये पदानीति-प्रकृतयः तासां समूहः-सङ्घातः समुदायस्तं प्रवक्ष्यामीति गाथार्थः ॥

(मलय०)—संप्रति मोहनीयबन्धोदयसत्तास्थानप्ररूपणा कर्त्तव्या, तत्र च यद्वक्तव्यं तदाह-'ओघे औघिके भणिते मोहनीये मोहनीयस्य गुणस्थानकेष्वपि बन्धोदयसत्तास्थानानि भणितानि, ततो न भूयो भण्यन्ते, किन्त्वधुना-सांप्रतमव्याकृतोदयानामव्यक्तोदयानां गुणस्थानकव्यतिरेकेण सामान्योदयानामित्यर्थः, गुणस्थानकोदयानां च 'पदसमूहं' पदसमूहपरिमाणं प्रवक्ष्यामि ॥१११॥

**जा जम्मि चउव्वीसा गुणियाओ ताउ तेण उदएणं । मिलिया चउवीसगुणा इयरपएहिं च पयसंखा ॥११२॥**

(स्वो०)—दशकादिषूदयेषु यावत्यश्चतुर्विंशतयस्तास्तेनैवोदयेन गुणिताः " दसगाइसु चउवीसा " इत्यादि संस्थाप्य-१-६-११-१०-७-४-१। दशकादिकेषू यथासंख्येन गुणिता जाता-१०-५४-८८-७०-४२-२०-४, एकत्र पिण्डिताः शतद्वयं अष्टाशीतं भवति २८८, एतदपि चतुर्विंशत्या गुणितं एकोनसप्ततिशतानि द्वादशोत्तराणि भवन्ति ६९१२, द्वादश द्विकोदयास्तैश्चतुर्विंशतिपदानि, चत्वार एकोदया एवमष्टाविंशतिः, तत्प्रक्षेपात् पष्ट्यूनानि सप्त सहस्राणि भवन्ति ६९४०, अथवा पञ्चबन्धके चतुर्विंशति-

चतुष्कबन्धके चत्वारि, त्रिबन्धके त्रीणि, द्विबन्धके द्वौ, एकबन्धके एकः, अबन्धके चैकमेव पञ्चत्रिंशत्प्रक्षेपात् सप्तसहस्राणि त्रिपञ्चाश द्धीनानि भवन्ति ६९४७, अथवा एकोनत्रिंशद्धीनानि सप्त सहस्राणि ६९७१, चतुर्बन्धकस्य द्वादशद्विकोदयास्तैश्चतुर्विंशतिपदानि तत्प्रक्षेपादिति । बन्धकोदयभेदात् त्रयो विकल्पा इति गाथार्थः ॥११२॥

(मलय०)—प्रतिज्ञातमेवाह—यस्मिन् दशकोदयादौ याश्चतुर्विंशतयो यावत्संख्याकाश्चतुर्विंशतयो, यथा दशोदये एका, नवोदये षट्, तत्र तिस्रो मिथ्यादृष्टौ, एका सासादने, एका मिश्रे, एका अविरतसम्यग्दृष्टौ च। अष्टोदये एकादश, तत्र तिस्रो मिथ्यादृष्टौ, द्वे सासादने, द्वे मिश्रे, तिस्रोऽविरतसम्यग्दृष्टौ, एका देशविरते । सप्तोदये दश, तत्र मिथ्यादृष्टिसासादनमिश्रेषु प्रत्येकमेकैका, अविरतसम्यग्दृष्टौ तिस्रः, तिस्रो देशविरते, एका प्रमत्ताप्रमत्तयोः, उदयस्थानानि स्वरूपेण भेदाभावादेकरूपाण्येव विवक्ष्यन्ते तत उक्त प्रमत्ताप्रमत्तयो । षट्कोदये सप्त, तत्रैका अविरतसम्यग्दृष्टौ, देशविरते तिस्रः, तिस्रः प्रमत्ताप्रमत्तयोः, अपूर्वकरणगुणस्थानकसत्कानि षट्कादीन्युदयस्थानानि न प्रमत्ताप्रमत्तोदयस्थानेभ्यः स्वरूपेण व्यतिरिच्यन्ते किन्तु गुणस्थानमात्रेणैव, ततस्तानीह पृथग् न गण्यन्ते । पञ्चकोदये चतस्रः, तत्रैका देशविरते, तिस्रः प्रमत्ताप्रमत्तयोः । एका चतुष्कोदये, सा च प्रमत्ताप्रमत्तयोः, स्थापना–१–६–११–१०–७–४–१ । ता एताश्चतुर्विंशतयस्तेन तेनोदयेन दशकादिना गुण्यन्ते, तद्यथा–दशकोदये एका चतुर्विंशतिः सा दशकेन गुण्यते जाता दश, नवकोदये षट् चतुर्विंशतयः ततः षट् नवकेन गुण्यन्ते जाता चतुःपञ्चाशत्, अष्टकोदये एकादश चतुर्विंशतयः तत एकादश अष्टकेन गुण्यन्ते, जाता अष्टाशीतिः, सप्तोदये दश चतुर्विंशतयः ततो दश सप्तकेन गुण्यन्ते, जाता सप्ततिः, षट्कोदये सप्त चतुर्विंशतयः ततः सप्त षड्भिर्गुण्यन्ते, जाता द्विचत्वारिंशत्, पञ्चकोदये चतस्रश्चतुर्विंशतयः ततश्चत्वारः पञ्चकेन गुण्यन्ते, जाता

विंशतिः, चतुष्कोदये त्वेका चतुर्विंशतिः तत एककश्चतुष्केण गुण्यते, जाताश्चत्वारः, स्थापना-१०-५४-८८-७०-४२-२०-४। एवं गुणिताः सत्यश्चतुर्विंशतय एकत्र मील्यन्ते, जातं शतद्वयमष्टाशीतं (२८८), तत एतच्चतुर्विंशत्या गुण्यते, ततो जातानि द्वादशोत्तराण्येकोनसप्ततिशतानि, 'इयरपएहिं च पयसंखे'त्ति-इतरपदैर्द्विकोदयादिपदैः प्रक्षिप्तैः पदसंख्या भवति, परिपूर्णा पदसंख्योपजायते, तत्र द्विकोदयभङ्गा द्वादश, तेषां च पदानि सर्वसंख्यया चतुर्विंशतिः, एकोदयभङ्गाश्चत्वारः, तत्र च पदान्यपि चत्वार्येवेति सर्वसंख्यया अष्टाविंशतिपदानि, तानि च पूर्वोक्तराशौ प्रक्षिप्यन्ते, ततो जातानि षष्टिहीनानि सप्तसहस्राणि (६९४०)। अथवा पञ्चकबन्धे चतुर्विंशतिपदानि, चतुष्कबन्धे चत्वारि, त्रिकबन्धे त्रीणि, द्विकबन्धे द्वे, एककबन्धे एकम्, अबन्धेऽप्येकमिति बन्धकभेदेन सर्वसंख्यया पञ्चत्रिंशत्पदानि, तानि पूर्वोक्तराशौ प्रक्षिप्यन्ते ततो जातानि एकोनसप्ततिशतानि सप्तचत्वारिंशदधिकानि (६९४७)। अथवा मतान्तरेण चतुर्विधबन्धे द्वादश द्विकोदयभङ्गा लभ्यन्ते, तत्पदानि सर्वसंख्यया चतुर्विंशतिः, ततस्तत्प्रक्षेपादेकोनसप्ततिशतानि एकसप्तत्यधिकानि भवन्ति (६९७१) ॥११२॥

एतदेव संख्यात्रयं वक्तुकाम आह—

**सत्त सहस्सा सट्ठीए वज्जिया अहव ते तिवण्णाए। इगुतीसाए अहवा बंधगभेएण मोहणिए ॥११३॥**

(स्वो०)—सप्त सहस्राणि षष्ट्या वर्जितानि ६९४०, अथवा तान्येव त्रिपञ्चाशद्वर्जितानि ६९४७, बन्धकभेदेन भवन्ति। अथवा तानि सप्तसहस्राण्येकोनत्रिंशद् वर्जितानि ६९७१ बन्धकभेदेनैव चतुर्बन्धके द्विकोदयसम्भवादिति गाथार्थः ॥११३॥

(मलय०)—एतदेव संख्यात्रयमाह-व्याख्यातार्था, तदेवमुक्ता अव्यक्तोदयपदसंख्या ॥११३॥

भणितान्यष्टकोदयपदानि, गुणस्थानोदयपदानि वक्तुकाम आह—

अट्ठट्ठी बत्तीसा बत्तीसा सट्ठिमेव बावण्णा। चउयाला चउयाला वीसा मिच्छा उपयधुवगा ॥११४॥

तिण्णि सया बावण्णा मिलिया चउवीसताडिया एए। बायरउदयपएहिं सहिया उ गुणेसु पयसंखा ॥११५॥

(स्वो०)—अष्टषष्टिर्मिथ्यादृष्टौ, द्वात्रिंशत्सास्वादनसम्यग्मिथ्यादृष्ट्योः, अविरते षष्टिः, देशविरते द्वापञ्चाशत्, प्रमत्ताप्रमत्तयोश्चतुश्चत्वारिंशत्, विंशतिरपूर्वकरणे, मिथ्यादृष्टेरारभ्य यथासंख्येन गुणस्थानेष्वेवम्। चशब्दादुदयपदध्रुवका इति। कथं? मिथ्यादृष्टेः चत्वार उदया, दशकोदये एका चतुर्विंशतिः, एकस्मिन्नुदये दश पदानि, नवोदये तिस्रः चतुर्विंशतयः, त्रिषूदयेषु सप्तविंशतिपदानि, अष्टोदयेऽपि तिस्रः चतुर्विंशतयः, त्रिषूदयेषु चतुर्विंशतिपदानि, सप्तोदये एका चतुर्विंशतिरेकस्मिन्नुदये सप्त पदानि, एवं चतुर्ष्वप्युदयेष्वष्टषष्टिपदानि। एष मिथ्यादृष्टेः ध्रुवकः, एवं शेषगुणेष्वपि भावनेति गाथार्थः। त्रीणि शतानि द्वापञ्चाशदधिकानि मिलिताः—एकत्रीभूताः एते पूर्वोक्ताः पदध्रुवका भवन्ति चतुर्विंशतिगुणितास्तु ते सर्वे चतुरशीतिशतानि अष्टचत्वारिंशदधिकानि भवन्ति, बादराष्टाविंशतिपदानि तुशब्दात् सूक्ष्मबन्धकोदयपद चैतैः सह चतुरशीतिपदशतानि सप्तसप्ततानि ८४७७, अथवा पञ्चबन्धके चतुर्विंशतिः चतुस्त्र्येकबन्धकेषु चतुस्त्र्येकपदानि, एवं चतुस्त्रिंशद्बादरे सूक्ष्मबन्धके चैकं एवं पञ्चत्रिंशत्प्रक्षेपात् त्र्यशीत्यधिकानि चतुरशीतिशतानि भवन्ति ८४८३, चतुर्बन्धके चतुर्विंशतिद्विकोदयपदानि तैश्च योजितैर्बन्धकभेदात् पञ्चाशीतिशतानि सप्ताधिकानि भवन्ति, ८५०७। एवं गुणेषूदयपदसंख्येति गाथार्थः ॥११५॥

(मलय०)—संप्रति गुणस्थानोदयसंख्यामाह—मिथ्यादृष्टौ पदध्रुवकाश्चतुर्विंशतिगुणनयोग्यानि पदानि अष्टषष्टिः, तथाहि—दशोदये

एका चतुर्विंशतिः, तत एका दशकेन गुण्यते, जाता दश, नवोदये तिस्रश्चतुर्विंशतयः, त्रयो नवकेन गुण्यते, जाता सप्तविंशतिः, अष्टकोदये तिस्रश्चतुर्विंशतयस्ततस्त्रयोऽष्टभिर्गुण्यन्ते, जाता चतुर्विंशतिः, सप्तोदये एका चतुर्विंशतिः, तत एकः सप्तकेन गुण्यते, जातानि सप्त, सर्वसंख्यया मिथ्यादृष्टौ पदध्रुवका अष्टषष्टिः। एवं सासादने द्वात्रिंशत्, मिश्रे द्वात्रिंशत्, अविरतसम्यग्दृष्टौ षष्टिः, देशविरते द्विपंचाशत्, प्रमत्ते चतुश्चत्वारिंशत्, अप्रमत्तेऽपि चतुश्चत्वारिंशत्, अपूर्वकरणे विंशतिः। एवं मिथ्यादृष्टेरारभ्यापूर्वकरणं यावद्यथासंख्यं पदध्रुवका भवन्ति, सर्वसंख्यया त्रीणि शतानि द्विपञ्चाशदधिकानि। तत एते चतुर्विंशतया गुण्यन्ते, जातानि चतुरशीतिशतान्यष्टचत्वारिंशदधिकानि। ततो 'वायरउदयपएहिं'ति-अनिवृत्तिबादरोदयपदानि प्रागुक्तान्यष्टाविंशतिसंख्यानि प्रक्षिप्यन्ते। सूक्ष्मसंपरायगतं चैकमबन्धकपदम्, ततस्तेन सहिता परिपूर्णा पदसंख्या भवति, सा च त्रयोविंशत्यूनानि पञ्चाशीतिशतानि (८४७७)। अथवा पञ्चविधबन्धके चतुर्विंशतिपदानि, चतुष्कबन्धके चत्वारि, त्रिकबन्धके त्रीणि, द्विकबन्धके द्वे, एककबन्धके एकम्, अबन्धके च सूक्ष्मसंपराये एकम्, इत्येवं बन्धकभेदेन सर्वसंख्यया पञ्चत्रिंशत्पदानि, तानि पूर्वोक्तराशौ प्रक्षिप्यन्ते ततस्त्र्यशीत्यधिकानि चतुरशीतिशतानि पदानां भवन्ति (८४८३)। अथवा चतुर्विधबन्धकस्य मतान्तरेण द्वादश द्विकोदयभङ्गाः प्राप्यन्ते, तेषां च पदानि चतुर्विंशतिः, ततस्तान्यपि यदा प्रक्षिप्यन्ते, तदा सप्तोत्तराणि पञ्चाशीतिशतानि पदानां भवन्ति (८५०७) ॥११४-११५॥

एतामेव संख्यां सूत्रेण वक्तुकाम आह—

**तेवीसूणा सत्तरस वज्जिया अहव सत्तअहियाइं। पंचासीइसयाइं उदयपयाइं तु मोहस्स ॥११६॥**

(स्वो०)—त्रयोविंशत्यूनानि ८४७७, अथवा सप्तदशोनानि ८४८३, बन्धकभेदात् सप्ताभ्यधिकानि वा पञ्चाशीतिशतानि ८५०७

उदयपदानां मोहनीये । तुशब्दादनन्यकभेदाश्चेति गाथार्थः ॥११६॥

(मलय०)—एतदेव संख्यात्रय वक्तुकाम आह—व्याख्यातार्था ॥११६॥

एत्थ जोगुवओगा लेसाई भेयओ बहूभेया । जा जस्स जंमि उ गुणे संखा सा तंमि गुणगारो ॥११७॥

(स्वो०)—एवमनन्तरोक्तोदयानामुदयपदानां च योगोपयोगादिभेदतो बहवो भेदा भवन्ति । तदानयनप्रयोगमाह—या संख्या योगोपयोगलेश्यानां यस्मिन् गुणे सा संख्या तस्मिन् गुणे गुणकारो भवति, तुशब्दो वाशब्दार्थे उदयविवक्षायां पदविवक्षायां चेति (गाथार्थ.) ॥११७॥

योगान् बहु बहु वक्तव्यत्वात् तावद्विहाय उपयोगानाह "मिच्छाइ अप्पमत्तयाण" इत्यादि प्रतिगुण चतुर्विंशतयः स्थाप्यन्ते-८-४-४-८-८-८-८-४, "अपव्वसुदसण" इत्याद्युपयोगैर्गुणिता ४०–२०–२०–४८–४८–५६–५६–२८, एकत्र पिण्डिताः त्रीणि शतानि षोडशोत्तराणि ३१६, एतान्यपि चतुर्विंशतिभिरुदयैर्गुणितानि चतुरशीतानि पञ्चसप्ततिशतानि भवन्ति ७५८४। द्वादश द्विकोदयाश्चत्वार एकोदया एकोऽबन्धकोदयः सप्तदशैव तेऽपि सप्तोपयोगगुणा एकोनविंशत्यधिकं शतम्, अनयोरैक्ये सप्तसप्ततिशतानि त्र्यधिकान्युदयानां भवन्ति ७७०३ । पदसंख्यामाह—"अट्ठट्ठीबत्तीसा" इत्यादिगुणपदध्रुवकस्थापना ६८–३२–३२–६०–५२–४४–४४–२०, स्वोपयोगगुणाः ३४०–१६०–१६०–३६०–३१२–३०८–३०८–१४०, एकीकृतानि विंशतिशतान्यष्टाशीतानि भवन्ति २०८८, तान्यपि चतुर्विंशतिगुणितानि पञ्चाशत्सहस्राणि द्वादशोत्तरशताभ्यधिकानि भवन्ति ५०११२। बादरसूक्ष्मोदयपदान्येकोनत्रिंशचान्यपि सप्तोपयोगगुणानि त्र्युत्तरं शतद्वय भवति, अनयोर्योगे पदसङ्ख्या पञ्चाशत्सहस्राणि शतत्रय पञ्चदशोत्तरं चेति ५०३१५।

(मलय०)—एवमनन्तरोक्तानुसारेण उदयभङ्गानामुदयपदानां च योगोपयोगलेश्यादिभेदतो बहवो भेदा भवन्ति, तेषां च भेदाना-मानयनप्रयोगमाह–'जा जस्से'त्यादि–या संख्या यस्य योगोपयोगादेर्यस्मिन् गुणस्थानके प्राप्यते, सा सङ्ख्या तस्मिन् गुणस्थानके गुणकारः ॥११७॥

गुणेषु योगादिगुणितानि मोहस्योदयपदानि

एतामेव सङ्ख्यां सूत्रेणाह—

**उदयाणुवओगेसुं सगसयरिसया तिउत्तरा होंति। पण्णासपयसहस्सा तिण्ण सया चेव पण्णरसा ॥११८॥**

(स्वो०)—उदयानामुपयोगेषु सप्तसप्ततिशतानि त्र्युत्तराणि भवन्ति ७७०३। पञ्चाशत्पदसहस्राणि त्रीणि शतानि पञ्चदशोत्तराण्येव ५०३१५, इति गाथार्थः ॥११८॥

एवं भूयोऽपि मिथ्यादृष्ट्याद्यानां चतुर्विंशतयः ८–४–४–८–८–८–८–४, स्वलेश्यागुणाः ४८–२४–२४–४८–२४–२४–२४–४, सर्वभङ्ग्यासंयोगः शतद्वयं विंशत्यधिकं २२०, चतुर्विंशतिगुणं द्वापञ्चाशच्छतान्यशीतानि भवन्ति, ५२८०, बादरसूक्ष्मयोः सप्तदशोदयप्रक्षेपादुदयसङ्ख्या त्रिपञ्चाशच्छतानि त्रिन्यूनानि ५२९७, एवं गुणपदध्रुवकस्थापना ६८–३२–३२–६०–५२–४४–४४–२०, स्वलेश्यागुणा ४०८–१९२–१९२–३६०–१५६–१३२–१३२–२०, एकत्र पिण्डिताः पञ्चदश शतानि द्वानवतानि १५९२, एतानि चतुर्विंशतिगुणान्यष्टात्रिंशत्सहस्राण्यष्टोत्तरद्विशताभ्यधिकानि भवन्ति पदानां ३८२०८, बादरसूक्ष्मोदयपदान्येकोनत्रिंशत्प्रक्षेपात् पदसंख्या भवति, अष्टात्रिंशत्सहस्राणि शतद्वयं सप्तत्रिंशदधिकं ३८२३७।



(मलय०)—तत्र योगानां बहुवक्तव्यत्वात् तान् विहाय प्रथमत उपयोगभेदतो भेदानाह–इह मिथ्यादृष्टावष्टौ चतुर्विंशतयः,सासादने

चत्वारः, मिश्रे चत्वारः, अविरतसम्यग्दृष्टेरष्टौ, देशविरतस्याष्टौ, प्रमत्तसंयतस्याष्टौ, अप्रमत्तसंयतस्याष्टौ, अपूर्वकरणे चतस्रः। तथा मिथ्यादृष्टौ सासादने सम्यग्मिथ्यादृष्टौ च प्रत्येकं मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानचक्षुरचक्षुर्दर्शनरूपाः पञ्च उपयोगाः। अविरतसम्यग्दृष्टिदेशविरतयोर्मतिश्रुतावधिज्ञानचक्षुरचक्षुरवधिदर्शनरूपाः प्रत्येकं षट्। प्रमत्तादीनां सूक्ष्मसंपरायान्तानां त एव षट् मनःपर्यवज्ञानसहिताः सप्त सप्त। तत्र मिथ्यादृष्ट्यादिषु चतुर्विंशतिगता अष्टादय उदयस्थानविकल्पा यथायोगमुपयोगैर्गुण्यन्ते। तद्यथा–मिथ्यादृष्टेरष्टौ, सासादने चत्वारः, मिश्रे चत्वारः, मिलिताः षोडश। ते पञ्चभिरुपयोगैर्गुण्यन्ते, जाता अशीतिः (८०)। अविरतसम्यग्दृष्टेरष्टौ चतुर्विंशतयः, देशविरतस्याष्टौ मिलिताः षोडश, ताः षड्भिरुपयोगैर्गुण्यन्ते, जाताः षण्णवतिः (९६)। प्रमत्तस्याष्टौ चतुर्विंशतयः, अप्रमत्तस्याप्यष्टौ, अपूर्वकरणस्य चतस्रः, मिलिता विंशतिः, सा सप्तभिरुपयोगैर्गुण्यते, जातं चत्वारिंशं शतं (१४०)। सर्वसङ्ख्यया त्रीणि शतानि षोडशोत्तराणि (३१६) एतानि चतुर्विंशत्या गुण्यन्ते, ततो जातानि चतुरशीत्यधिकानि पञ्चसप्ततिशतानि (७५८४), ततो द्विकोदयभङ्गा द्वादश, एकोदयभङ्गाः पञ्च, सर्वे मिलिताः सप्तदश, ते सप्तभिरुपयोगैर्गुण्यन्ते जातमेकोनविंशं शतं (११९) तत्पूर्वराशौ प्रक्षिप्यते, ततो जातानि सप्तसप्ततिशतानि त्र्युत्तराणि उदयभङ्गानाम् (७७०३)। सम्प्रति पदसङ्ख्या समानीयते, तत्र मिथ्यादृष्टावष्टषष्टिः पदध्रुवकाः, सासादने द्वात्रिंशत्, मिश्रे द्वात्रिंशत्, अविरतसम्यग्दृष्टौ षष्टिः, देशविरते द्विपञ्चाशत्, प्रमत्ते चतुश्चत्वारिंशत्, अप्रमत्ते च चतुश्चत्वारिंशत्, अपूर्वकरणे विंशतिः, एते पदध्रुवका यथायोगमुपयोगैर्गुण्यन्ते। तद्यथा–मिथ्यादृष्टेरष्टषष्टिः, सासादने द्वात्रिंशत्, मिश्रे द्वात्रिंशत्, मिलिता द्वात्रिंशं शतम्। ततः पञ्चभिरुपयोगैर्गुण्यते, जातानि षट्शतानि षष्ट्यधिकानि (६६०)। तथा अविरतसम्यग्दृष्टेः षष्टिः, देशविरतस्य द्विपञ्चाशत्, मिलिता द्वादशोत्तरं शतम्, तत् षड्भिरुपयोगैर्गुण्यते, जातानि षट् शतानि द्विसप्तत्यधिकानि (६७२)। तथा

प्रमत्तस्य चतुश्चत्वारिंशत्, अप्रमत्तस्य चतुश्चत्वारिंशत्, अपूर्वकरणस्य विंशतिः, सर्वसंख्यया अष्टाधिकं शतं (१०८), एतत् सप्तभिरुपयोगैर्गुण्यते, जातानि सप्तशतानि षट्पञ्चाशदधिकानि (७५६), सर्वसंख्यया विंशतिशतानि अष्टाशीत्यधिकानि (२०८८), तत एतानि चतुर्विंशत्या गुण्यन्ते, ततः पञ्चाशत्सहस्राणि द्वादशोत्तरशताभ्यधिकानि भवन्ति (५०११२), ततो द्विकोदयपदानि चतुर्विंशतिरेकोदयपदानि पञ्च, सर्व मीलने एकोनत्रिंशत्, सा सप्तभिरुपयोगैर्गुण्यते, जाते त्र्युत्तरे द्वे शते (२०३) ते पूर्वराशौ प्रक्षिप्येते, ततो जातः पूर्वराशिः पञ्चाशत्सहस्राणि शतत्रयं पञ्चदशोत्तरं (५०३१५) एतावन्तुपयोगगुणितानि उदयपदानि।

गुणेपु योगादि गुणितानि मोहस्योदय पदानि

सम्प्रति लेश्यागुणिता उदयभङ्गा उदयपदानि च भाव्यन्ते–तत्र मिथ्यादृष्ट्यादिष्वविरतसम्यग्दृष्टिपर्यन्तेषु प्रत्येकं षट् लेश्याः, देशविरतप्रमत्ताप्रमत्तेषु तु तेजःपद्मशुक्लरूपास्तिस्रस्तिस्रः, कृष्णादिलेश्यासु देशविरत्यादिप्रतिपत्तेरभावात्। अपूर्वकरणादौ चैका शुक्ललेश्या। मिथ्यादृष्ट्यादिषु चाष्टचतुरादिकाश्चतुर्विंशतयो यथायोगं लेश्याभिर्गुण्यन्ते, तद्यथा–मिथ्यादृष्टेरष्टौ, सासादनस्य चतस्रः, सम्यग्मिथ्यादृष्टेश्चतस्रः, अविरतसम्यग्दृष्टेरष्टौ, मिलिताश्चतुर्विंशतिः, सा षड्भिर्लेश्याभिर्गुण्यते, जातं चतुश्चत्वारिंशंशतं (१४४), तथा देशविरतस्याष्टौ, प्रमत्तस्याष्टौ, अप्रमत्तस्याष्टौ सर्वसङ्ख्यया चतुर्विंशतिः, सा त्रिभिर्लेश्याभिर्गुण्यते, जाता द्विसप्ततिः, अपूर्वकरणे चतस्रश्चतुर्विंशतयः, अत्रैकैव लेश्या, एकेन च गुणितं तदेव भवतीति, सर्वमिलिता द्वे शते विंशत्यधिके (२२०), ते चतुर्विंशत्या गुण्यन्ते, जातान्यशीत्यधिकानि द्विपञ्चाशच्छतानि (५२८०), ततो द्विकोदया द्वादश, एकोदयाः पञ्च, मिलिताः सप्तदश, ते पूर्वराशौ प्रक्षिप्यन्ते, ततो जातानि सप्तनवत्यधिकानि द्विपञ्चाशच्छतानि (५२९७), एतावन्तः सर्वसङ्ख्यया लेश्यागुणिता उदयभङ्गाः। सम्प्रति पदसङ्ख्या लेश्यागुणिता समानीयते–मिथ्यादृष्टौ पदध्रुवका अष्टषष्टिः, सासादने द्वात्रिंशत्, मिश्रे द्वात्रिंशत्, अविरतसम्यग्दृष्टौ षष्टिः,

सर्वसङ्ख्यया द्विनवत्यधिकं शतम्, एते च षड्भिर्लेश्याभिर्गुण्यन्ते, ततो जातानि द्विपञ्चाशदधिकानि एकादश शतानि (११५२), तथा देशविरते द्विपञ्चाशत्, प्रमत्ते चतुश्चत्वारिंशत्, अप्रमत्ते चतुश्चत्वारिंशत्, सर्वसङ्ख्यया आद्य चत्वारिंशं शतं (१४०), तच्च तिसृभिर्लेश्याभिर्गुण्यन्ते, जातानि विंशतिः चत्वारि शतानि (४२०), अपूर्वकरणे विंशति, तत' सर्वसङ्ख्यया जातानि द्विनवत्यधिकानि पञ्च दशशतानि। एतानि चतुर्विंशतिगतानीति चतुर्विंशत्या गुण्यन्ते, ततो जातानि अष्टत्रिंशत्सहस्राणि द्वे शते अष्टाधिके (३८२०८), ततो द्विकोदयैकोदयपदान्येकोनत्रिंशत् प्रक्षिप्यन्ते, ततो जातानि अष्टत्रिंशत्सहस्राणि शतद्वय सप्तत्रिंशदधिकम् (३८२३७) ॥११८॥

एतामेव संख्यां गाथयाऽऽह—

तिगहीणा तेवण्णा सया उ उदयाण होंति लेसाण। अडतीस सहस्साइं पयाण सयदो य सगतीसा ॥११९॥

(स्वो०)—त्रिभिर्विहीनानि त्रिपञ्चाशच्छतानि ५२९७ उदयानां भवन्ति लेश्यासु। अष्टात्रिंशत्सहस्राणि शते द्वे च सप्तत्रिंशद धिके पदानामिति ३८२३७ (गाथार्थः) ॥११९॥

योगैरुदया अधुनाऽभिधीयन्ते—'मिच्छासु अप्पमत्तयाण" इत्यादि गुणेषु चतुर्विंशतीनां स्थापना ८-४-४-८-८-८-८-४, स्वकीययोगगुणा' १०४-५२-४०-१०४-८८-१०४-८८-३६, सर्वसंयोगः षट्शतानि षोडशोत्तराणि ६१६, एतानि चतुर्विंशतिगुणानि, बादरसूक्ष्मयोस्ते नवयोगगुणा', अनयोरैक्ये चतुर्दशसहस्राणि नवशतानि सप्तत्रिंशदधिकानि भवन्त्युदयानाम् १४९३७, गणितलाघवार्थं प्रथम चतुर्विंशतिसङ्ख्या उदयाश्च स्थाप्यन्ते, पश्चात्स्वयोगगुणा मिलिताश्चतुर्विंशत्या गुणिता उदययुक्ता उदया भवन्तीति। एतेभ्योऽसम्भविनो ह्युदया. पात्यन्ते; सप्तोदये एका, अष्टोदये द्वे, नवोदये एका चतुर्विंशतिरेव मिथ्यादृष्टेमतस्ताः चतुर्विंश-

तयोऽनन्तानुबन्ध्युदयं विना भवन्ति, तदुदयरहितस्य भवान्तरभाविनो न सम्भवन्ति त्रयो योगा औदारिकमिश्रवैक्रियमिश्रकार्मणाः। तैश्चतुर्गुणितास्ताः द्वादश भवन्ति, भूयश्चतुर्विंशत्युदयगुणाः शतद्वयमष्टाशीतं भवति, एते मिथ्यादृष्टावसम्भविनः। सास्वादने एता एव चतस्रः चतुर्विंशतयः, ताश्च वेदत्रयेण निष्पन्ना वैक्रियमिश्रशरीरिणो नपुंसकवेदोदयो न सम्भवति, अतः षण्णवत्युदयानां त्रिभागो द्वात्रिंशदुदयाः सास्वादने न सम्भवन्ति ३२। अप्रमत्तस्य चतुःषष्टिरुदया न सम्भवन्ति ६४, चतुर्विंशतीनां द्विगुणत्वात्। तस्यापि स्त्रीवेदोदयो नाहारकशरीरे सम्भवति। प्रमत्तस्याष्टाविंशत्यधिकं शतं न सम्भवति १२८, यतस्तस्याहारकाहारकमिश्रयोः स्त्रीवेदोदयो न सम्भवति। अविरतस्य कार्मणयोगिनः सर्वासु चतुर्विंशतिषु स्त्रीवेदोदयो नास्तीत्यतः सर्वोदयत्रिभागमात्राः चतुःषष्टिरुदया न भवन्ति ६४, एवं वैक्रियमिश्रयोगिनोऽपि अष्टाविंशत्यधिकं शतम् १२८, अन्यच्च स्त्रीनपुंसकवेदोदययोः षोडशोदया भवन्ति, ते चौदारिकमिश्रयोगिनो न सम्भवन्ति, अष्टासु चतुर्विंशतिषु तेऽप्यष्टाविंशत्यधिकं शतमेवमविरते शतद्वयं षट्पञ्चाशदधिकं न भवति २५६। एवं सर्वासम्भविनो ह्युदया एकीकृताः सप्तशतान्यष्टषष्ट्यधिकानि ७६८, पूर्वराशेरेभिः शुद्धैः शेषोदयानां चतुर्दशसहस्राणि शतमेकोनसप्ततं भवति, १४१६९, एते सर्वेषु गुणेषूदया योगसम्बन्धेन भवन्ति। पदध्रुवकानां गुणक्रमेण स्थापना ६८–३२–३२–६०–५२–४४–४४–२०, स्वयोगगुणाः ८८४–४१६–३२०–७८०–५७२–५७२–४८४–१८०, एकत्र पिण्डिताः द्विचत्वारिंशच्छतान्यष्टोत्तराणि ४२०८, एकैकमुदयं गृहीत्वा ध्रुवकाः कृता अतश्चतुर्विंशत्या गुणिता द्विनवतं नवशताभ्यधिकं लक्षं भवति १००९९२, द्विकोदयपदानि चतुर्विंशतिरेकोदयपदानि पञ्च एवमेकोनत्रिंशन्नवयोगगुणा एकषष्टिशतद्वयं भवति २६१, अनेन पूर्वराशिर्युक्तो लक्षं द्वादश शतानि त्रिपञ्चाशदधिकानि भवन्ति १०१२५३। अस्याः पदसङ्ख्यायाः शोध्यं पात्यते, यतः सर्वगुणेषु

योगादिगुणितानि मोहस्योदयपदानि

स्वचतुर्विंशत्येकोदयपदसमुदाया ध्रुवका भवन्त्यतः सास्वादनस्य चतुर्विंशतिषु नपुंसकवेदोदयेन येऽष्टौ भङ्गास्ते वैक्रियमिश्रयोगे न भवन्ति, अतोऽष्टगुणानि ध्रुवकपदानि न सम्भवन्ति २५६ । अथवा सास्वादनोदयपदेभ्यः ६१८, नपुंसकवेदस्य यः त्रिभाग' पदप ञ्चाशदधिकशतद्वयप्रमाणः स न भवति । एवमप्रमत्तेऽपि, किन्त्वत्र स्त्रीवेदोदयविभागः, द्विपञ्चाशदधिकत्रिशतप्रमाण' ३५२, आहारक-योगे स न सम्भवति । प्रमत्तस्य पदध्रुवकः षोडशगुणो न सम्भवति, यत आहारकेऽष्टौ तन्मिश्रे चाष्टौ स्त्रीवेदोदयकृता नोदयाः सम्भवन्ति, एव सप्तशतानि चतुरुत्तराणि पदानां न भवन्ति ७०४, अथवा तदुदयपदानां द्वौ त्रिभागौ न भवतः, तदुदयपदानि च ध्रुवके चतुर्विंशतिगुणे भवन्ति १०५६ । अविरते द्वात्रिंशद्गुणानि ध्रुवकपदानि न सम्भवन्ति, तानि चैकोनविंशतिशतानि विंशत्यु त्तराणि १९२०, यतस्तस्य चत्वारोऽष्टकाः कार्मणयोगेन स्त्रीवेदोदयेऽष्टौ वैक्रियमिश्रेऽप्येवं एवाष्टौ (औदारिकमिश्रकाययोगेन स्त्रीवेदो-दयेऽष्टौ एवं) नपुंसकवेदोदयाश्चाष्टौ न सम्भवन्ति । एवं सर्वसंयोगाः द्वात्रिंशत्शतानि द्वात्रिंशदधिकानि ३२३२ । मिथ्यादृष्ट्यादिसंभवि-सासु चतुर्विंशतिषु द्वात्रिंशत् पदानि सप्ताष्टाष्टनवेति ३२, एतानि गवान्तरभाविषु त्रिषु योगेषु गुणानि षण्णवतिः भवति, चतुर्विंशती नामैकैकोदयेनैवान्यतश्चतुर्विंशत्या गुणिते त्रयोविंशतिशतानि चतुरुत्तराणि भवन्ति २३०४ पदानाम्, सास्वादनाद्यसम्भवितपदयुक्तानि पञ्चपञ्चाशच्छतानि षड्विंशदुत्तराणि भवन्ति ५५३६, एतान्यसम्भवितपदानि पूर्वागतपदेभ्यः शोध्यानि, शेष पञ्चनवतिसहस्राणि सप्तशतानि सप्तदशोत्तराणि ९५७१७ ।

(मलय०)—तथा चाह—सुगमा ।

संप्रति योगगुणिता उदयाः पदानि च भाव्यन्ते—इह मिथ्यादृष्ट्यादष्टौ चतुर्विंशतयः, तत्र च प्रमयिन आहारकद्विकहीनाः

शेषास्त्रयोदश योगाः, तैरष्टौ गुण्यन्ते, जातं चतुरुत्तरं शतं (१०४), सासादने चतस्रश्चतुर्विंशतयः, ता अनन्तरोक्तैस्त्रयोदशभिर्योगैर्गुण्यन्ते, जाता द्विपञ्चाशत् (५२), मिश्रे चतस्रश्चतुर्विंशतयो, मिश्रश्च कालं न करोति, तदभावाच्च वैक्रियमिश्रौदारिकमिश्रकार्मणकाययोगा अपि न संभवन्ति, किन्तु शेषा दश, ततस्तैर्गुणिताश्चतस्रश्चत्वारिंशत् (४०), अविरतसम्यग्दृष्टावष्टौ चतुर्विंशतयः, अविरतसम्यग्दृष्टेश्च कालकरणसंभवात् पूर्वोक्तास्त्रयोऽपि योगाः संभवन्तीति त्रयोदशभिरष्टौ गुण्यन्ते, जातं चतुरुत्तरं शतं (१०४)। तथा देशविरतेऽष्टौ चतुर्विंशतयः, देशविरतस्य चौदारिकमिश्रकार्मणकाययोगौ न संभवतः आहारकद्विकं च, ततः शेषैरेकादशभिर्योगैरष्टौ गुण्यन्ते, जाता अष्टाशीतिः (८८), प्रमत्ते चाहारकद्विकं संभवतीति त्रयोदशयोगा अष्टौ चतुर्विंशतयः, ततस्त्रयोदशभिरष्टौ गुणिताः, जातं चतुरुत्तरं शतं (१०४), अप्रमत्ते चाहारकमिश्रवैक्रियमिश्रकाययोगौ च न भवतः, ततः शेषैरेकादशभिर्योगैरष्टौ गुण्यन्ते, जाता अष्टाशीतिः (८८), अपूर्वकरणे चतस्रश्चतुर्विंशतयः, वाग्योगचतुष्टयमनोयोगचतुष्टयौदारिकरूपाश्च नव योगाः, ततश्चतस्रो नवभिर्गुणिता जाताः षट्त्रिंशत् (३६)। सर्वसंख्यया षट्शतानि षोडशाधिकानि (६१६)। तानि चतुर्विंशत्या गुण्यन्ते, जातानि चतुर्दशसहस्राणि सप्तशतानि चतुरशीत्यधिकानि (१४७८४), द्विकोदयैकोदया भङ्गाश्च सप्तदश अनन्तरोक्तैर्नवभिर्योगैर्गुण्यन्ते, जातं त्रिपञ्चाशदधिकं शतं (१५३), एतत्पूर्वराशौ प्रक्षिप्यते, ततो जातः पूर्वराशिः चतुर्दशसहस्राणि नव शतानि सप्तत्रिंशदधिकानि (१४९३७)। एतेषां मध्ये ये असंभविन उदयभङ्गास्ते शोध्यन्ते, तत्र मिथ्यादृष्टेर्या अनन्तानुबन्ध्युदयरहिताश्चतस्रश्चतुर्विंशतयस्तद्यथा—सप्तोदये एका, अष्टोदये द्वे, नवोदये एकेति, ता वैक्रियमिश्रे औदारिकमिश्रे कार्मणकाययोगे च न संभवन्ति, किं कारणमिति चेद्,उच्यते—इह येन पूर्वं वेदकसम्यग्दृष्टिना सता अनन्तानुबन्धिनो विसंयोजिताः, विसंयोज्य च कालान्तरे परिणामपरावृत्त्या सम्यक्त्वात्प्रच्युत्य मिथ्यात्वं गतेन भूयो-

ऽप्यनन्तानुबन्धिनो बध्नुमारभ्यन्ते, तस्यैव मिथ्यादृष्टेर्बन्धावलिकामात्र कालं यावदनन्तानुबन्ध्युदयो न प्राप्यते, न शेषस्य, अनन्तानुबन्धिनश्च विसंयोज्य भूयोऽपि मिथ्यात्वं प्रतिपद्यते जघन्यतोऽप्यन्तर्मुहूर्तावशेषायुष्क एव, ततस्तस्मिन्नेव भवे वर्तमानो मिथ्यात्वप्रत्ययेन भूयोऽप्यनन्तानुबन्धिनो बध्नाति, बन्धावलिकातीताश्च ततः प्रवेदयते, ततोऽपान्तरालगतो वर्तमानस्य भवान्तरे वा प्रथमत उत्पन्नस्य मिथ्यादृष्टेः ततोऽनन्तानुबन्ध्युदयरहिता उदयविकल्पा न प्राप्यन्ते। अथ च कार्मणकाययोगोऽपान्तरालगतावौदारिकमिश्रकाययोगवैक्रियमिश्रकाययोगौ च भवान्तरे उत्पद्यमानस्य ततः कार्मणकाययोगादौ प्रत्येकं चतस्रश्चतुर्विंशतयोऽनन्तानुबन्ध्युदयरहिता न प्राप्यन्ते, सर्वसङ्ख्यया द्वादश। वैक्रियमिश्रकाययोगो भवान्तरे उत्पद्यमानस्येति यदुच्यते, तद्बाहुल्यापेक्षया, अन्यथा तिर्यग्मनुष्याणामपि वैक्रियकारिणां वैक्रियमिश्रमवाप्यते, परं तत्सप्ततिकाचूर्णिकारेण न विवक्षितमित्यस्माभिरपि न विवक्ष्यते, एवमन्यत्रापि सप्ततिकाचूर्णिकारमतानुसरणं परिभावनीयम्। द्वादश चतुर्विंशत्या गुणिताः शतद्वयमष्टाशीतं भवति (२८८), एते उदयभङ्गा मिथ्यादृष्टावसंभविनः। तथा सासादनस्य वैक्रियमिश्रकाययोगे वर्तमानस्य नपुंसकवेदोदयो न भवति, वैक्रियमिश्रकाययोगो हि देवेषु नारकेषु वा मध्ये प्रथमत उत्पद्यमानस्य प्राप्यते, सासादनश्च मृत्वा देवेष्वेव मध्ये उत्पद्यते, न नारकेषु, देवाश्च स्त्रीवेदाः पुंवेदा वा, न नपुंसकवेदाः, ततश्चतुर्विंशतिचतुष्टयस्य षण्णवतिरूपस्य त्रिभागो द्वात्रिंशद्रूपः (३२) सासादने न संभवति। तथा अविरतसम्यग्दृष्टेः कार्मणकाययोगिनो वैक्रियमिश्रकाययोगिनो वा स्त्रीवेदोदयो न संभवति वैक्रियकाययोगिषु स्त्रीवेदिषु मध्ये अविरतसम्यग्दृष्टेरुत्पादाभावात्। एतच्च प्रायोवृत्तिमधिकृत्योक्तम्, अन्यथा कदाचित्स्त्रीवेदिष्वपि मध्ये तदुत्पादो द्रष्टव्यः, उक्तं च सप्ततिकाचूर्णौ–"कयाइ होज्ज इत्थिवेयगेसु वि"त्ति। ततश्चतुर्विंशत्यष्टकस्य द्विनवत्यधिकशतप्रमाणस्य (१९२) त्रिभागश्चतुःषष्टिरूपः स्त्रीवेदोदयलभ्यः प्रत्येकं कार्मणका-

ययोगे च न संभवति, सर्वसंख्यया अष्टाविंशत्यधिकं शतं (१२८)। तथा अविरतसम्यग्दृष्टेरौदारिकमिश्रकाययोगे वर्त्तमानस्य पुंवेद एवैको भवति, न स्त्रीवेदनपुंसकवेदौ, तिर्यग्मनुष्येषु स्त्रीवेदनपुंसकवेदिषु मध्ये अविरतसम्यग्दृष्टेरुत्पादाभावात्। एतच्च प्राचुर्यमधिकृत्योक्तम्, तेन मल्लिस्वामिन्यादिभिर्न व्यभिचारः। ततश्चतुर्विंशत्यष्टकस्य द्विनवत्यधिकशतप्रमाणस्य द्वौ भागौ स्त्रीवेदनपुंसकवेदलभ्यौ अष्टाविंशत्यधिकशत (१२८) भङ्गप्रमाणावौदारिकमिश्रकाययोगे न संभवतः सर्वसंख्यया अविरतसम्यग्दृष्टेरसंभविनो भङ्गा द्वे शते षट्पञ्चाशदधिके (२५६)। तथा प्रमत्तसंयतस्य आहारके आहारकमिश्रे च स्त्रीवेदो न लभ्यते, आहारकं हि चतुर्दशपूर्वधरस्य संभवति, "आहारं चउद्दसपुव्विणो उ" इति वचनात् न च स्त्रीणां चतुर्दशपूर्वाधिगमसंभवः, सूत्रे प्रतिषेधात् तदुक्तं—"तुच्छा गारवबहुला चलिंदिया दुब्बला धिईए य। इय अइसेसज्झयणा भूयवादो य नो त्थीणं"॥ भूतवादो नाम दृष्टिवादः, ततः प्रमत्तसंयतस्याहारके आहारकमिश्रे चतुर्विंशत्यष्टकस्य द्विनवत्यधिकशतप्रमाणस्य (१९२) प्रत्येकं त्रिभागश्चतुःषष्टि (६४) भङ्गप्रमाणो न संभवति, सर्वसंख्यया अष्टाविंशत्यधिकं शतं (१२८)। तथा अप्रमत्तसंयतस्यापि पूर्वोक्तयुक्तेराहारककाययोगे स्त्रीवेदो न संभवतीति, तत्रापि चतुर्विंशत्यष्टकस्य त्रिभागश्चतुःषष्टिरूपोऽसंभवी। सर्वेऽप्यसंभविनो भङ्गा एकीकृताः सप्तशतानि अष्टषष्ट्यधिकानि (७६८), एते च पूर्वराशेश्चतुर्दशसहस्रेभ्यो नवशतेभ्यः सप्तत्रिंशदधिकेभ्यः शोध्यन्ते ततो जातानि चतुर्दश सहस्राणि शतमेकोनसप्तत्यधिकम् (१४१६९)।

संप्रति पदसंख्या योगगुणिता भाव्यते—तत्र मिथ्यादृष्टेरष्टषष्टिः पदध्रुवकाः, ते त्रयोदशभिर्योगैर्गुण्यन्ते, जातान्यष्टौ शतनि चतुरशीत्यधिकानि (८८४)। सासादने द्वात्रिंशत् पदध्रुवकाः, तेऽपि त्रयोदशभिर्योगैर्गुण्यन्ते, जातानि षोडशाधिकानि चत्वारि शतानि (४१६)। मिश्रेऽपि द्वात्रिंशत्पदध्रुवकाः, ते दशभिर्योगैर्गुण्यन्ते, जातानि विंशति त्रीणि शतानि (३२०)। अविरतसम्यग्दृष्टौ षष्टिः

पदध्रुवका, ते त्रयोदशभिर्योगैर्गुण्यन्ते, ततो जातानि सप्तशतानि अशीत्यधिकानि (७८०), देशविरतेर्द्विपञ्चाशत्पदध्रुवका, ते चैकादशभिर्योगैर्गुण्यन्ते, ततो भवन्ति पञ्च शतानि द्विसप्तत्यधिकानि (५७२)। तथा प्रमत्तसंयते चतुश्चत्वारिंशत्पदध्रुवकाः। ते त्रयोदशभिर्योगैर्गुण्यन्ते, जातानि पञ्चशतानि द्विसप्तत्यधिकानि (५७२)। अप्रमत्तसंयतेऽपि चतुश्चत्वारिंशत्पदध्रुवकाः, ते चैकादशभिर्योगैर्गुण्यन्ते, ततो जातानि चत्वारि शतानि चतुरशीत्यधिकानि (४८४)। अपूर्वकरणे विंशतिः पदध्रुवकाः, ते च नवभिर्योगैर्गुण्यन्ते, जातमशीत्यधिकं शतं (१८०)। सर्वसंख्यया द्विचत्वारिंशच्छतानि अष्टाधिकानि (४२०८) एतानि चतुर्विंशत्या गुण्यन्ते, ततो भवति द्विनवतिलक्षशतोत्तरं लक्ष (१००९९२)। तथा द्विकोदयपदानि चतुर्विंशतिः, एकोदयपदानि पञ्च, सर्वमीलने एकोनत्रिंशत् , तानि नवभिर्गुण्यन्ते, ततो जातमेकषष्ट्यधिकं शतद्वय (२६१), तच्च पूर्वराशौ प्रक्षिप्यते, ततो जातान्येकं लक्ष द्वादशशतानि त्रिपञ्चाशदधिकानि (१०१२५३)। अस्माच्च राशेरसंभवीनि पदानि शोध्यन्ते, तद्यथा—सप्तकोदयः एकोऽष्टोदयौ च द्वावनन्तानुबन्ध्युदयरहितौ, नवोदयोऽप्येकोऽनन्तानुबन्ध्युदयरहितः, सर्वसंख्यया पदध्रुवका द्वात्रिंशत् , प्रत्येकं वैक्रियमिश्रे औदारिकमिश्रे कार्मणकाययोगे च न संभवन्ति कारणं प्रागेवोक्तं, द्वात्रिंशच्च त्रिभिर्गुणिता जाता षण्णवतिः (९६), सा चतुर्विंशत्या गुण्यते, जातानि त्रयोविंशति शतानि चतुरुत्तराणि (२३०४) एतावन्ति पदानि मिथ्यादृष्टेरसंभवीनि। तथा सासादनस्य वैक्रियमिश्रकाययोगे वर्तमानस्य नपुंसकवेदोदयो न घटते, कारणमत्र प्रागेवोक्तम् , नपुंसकवेदेन चाष्टौ भङ्गा लभ्यन्ते, ततो द्वात्रिंशद्भिर्गुणिता जाते द्वे शते षट्पञ्चाशदधिके (२५६) एतावन्ति पदानि सासादने न संभवन्ति, तथा अविरतसम्यग्दृष्टेः कार्मणकाययोगिनो वैक्रियमिश्रकाययोगिनो वा स्त्रीवेदोदयो नोपपद्यते, अविरतसम्यग्दृष्टौ च षष्टिः पदध्रुवका', स्त्री वेदेन चाष्टौ भङ्गा लभ्यन्ते, ततः षष्टिरष्टभिर्गुणिता, जातानि चत्वारि शतान्यशीत्यधिकानि (४८०), एतानि

च प्रत्येकं कार्मणे वैक्रियमिश्रे च न संभवन्तीति, सर्वसंख्यया नव शतानि षष्ट्यधिकानि। (९६०)। तथा अविरतसम्यग्दृष्टेरौदारिकमिश्रकाययोगे वर्त्तमानस्य पुंवेद एवैको भवति, न स्त्रीवेदनपुंसकवेदौ, स्त्रीवेदनपुंसकवेदाभ्यां च षोडश भङ्गा लभ्यन्ते, ततः षष्टिः, षोडशभिर्गुणिता जातानि नवशतानि षष्ट्यधिकानि (९६०), सर्वसंख्यया अविरतसम्यग्दृष्टावसंभवीनि पदानि विंशत्यधिकान्येकोनविंशतिशतानि, (१९२०)। तथा प्रमत्तसंयतस्याहारके आहारकमिश्रे च स्त्रीवेदो न लभ्यते, एतच्च प्रागेवोक्तं प्रमत्तसंयते च पदध्रुवकाश्चतुश्चत्वारिंशत्, स्त्रीवेदेन चाष्टौ भङ्गा लभ्यन्ते, ततश्चतुश्चत्वारिंशदष्टगुणिता जातानि त्रीणि शतानि द्विपञ्चाशदधिकानि, (३५२) तानि चाहारके आहारकमिश्रे च प्रत्येकं न संभवन्तीति, सर्वसंख्यया प्रमत्तसंयतस्यासंभवीनि पदानि सप्तशतानि चतुरुत्तराणि (७०४)। अप्रमत्तसंयतस्याप्युक्तप्रकारेणाहारककाययोगे त्रीणि शतानि द्विपञ्चाशदधिकानि (३५२) पदानामसंभवीनि, सर्वसंख्ययाऽसंभवीनि पदानि पञ्चपञ्चाशच्छतानि षट्त्रिंशदुत्तराणि (५५३६), एतानि पूर्वराशौ शोध्यन्ते, ततो भवन्ति पञ्चनवतिसहस्राणि सप्तशतानि सप्तदशोत्तराणि (९५७१७) एतानि योगगुणितानि पदानि मोहनीयस्य सकलगुणस्थानकेषु भवन्ति ॥११९॥

एतद् गाथयाह—

**चोद्दस उ सहस्साइं सयं च गुणहत्तरं उदयमाणं। सत्तरसा सत्तसया पणनउइ सहस्स पयसंखा ॥१२०॥**

(स्वो०)—चतुर्दशसहस्राणि शतं चैकोनसप्ततिः उदयानां मानम् १४१६९, सप्तदशाधिकानि सप्तशतानि पञ्चनवति सहस्राणि पदानां सङ्ख्या ९५७१७, तुशब्दाद्योगेष्विति गाथार्थः ॥१२०॥

(मलय०)—तथा चाह—मोहनीयस्य गुणस्थानकेषु सर्वसंख्यया योगगुणितानामुदयभङ्गानां परिमाणं चतुर्दशसहस्राणि शतं

योगादिगुणितानि मोहस्योदयपदानि

चैकोनसप्तत्यधिक, तथा सर्वसंख्यया योगगुणितानां पदानां परिमाणं पञ्चनवतिसहस्राणि सप्तशतानि सप्तदशाधिकानि ॥१२०॥

तमेवासम्भव सूत्रेणाह—

मीसदुगे कम्मइए अणउदयविवज्जियाउ मिच्छस्स। चउवीसाउ ण चउरो तिगुणाओ तो रिणं ताओ ॥१२१॥

(स्वो०)—मिश्रद्विके कार्मणमित्यौदारिकवैक्रियमिश्रकार्मणेषु अनन्तानुबन्ध्युदयवर्जिता मिथ्यादृष्टेश्चतस्रश्चतुर्विंशतयो न सम्भवन्ति। सप्तोदये एका अष्टोदये द्वे नवोदये चैका योगत्रयगुणा द्वादश तासदयसङ्ख्याशतद्वयमष्टाशीत २८८, एतदुदयेषु न सम्भवति एतदष्टगुण त्रयोविंशतिशतानि चतुरुत्तराणि पदेषु न सम्भवन्ति २३०४, एक. सप्तोदयो नवोदयो द्वावपि युगावर्द्धीकृतावष्टौ भवन्तीति भावः परमार्थ इति गाथार्थः ॥१२१॥

(मलय०)—तत्रोदयभङ्गसंख्यायाः पदसंख्यायाश्चानयनोपायः प्रदर्शित एव। संख्यते च सूत्रकृता, केवलमिदानिमुदयभङ्गसंख्याया ये उदयभङ्गाः शोध्यास्तानुपदर्शयति–'मिश्रद्वये'। औदारिकमिश्रवैक्रियमिश्ररूपे कार्मणे च प्रत्येकमनन्तानुबन्ध्युदयवर्जिताः शेषाश्चतस्रश्चतुर्विंशतयो मिथ्यादृष्टेर्न सम्भवन्ति, कारणं प्रागेवोक्तम्। ततस्ताश्चतस्रश्चतुर्विंशतयस्त्रिगुणा द्वादशेत्यर्थः 'ऋणं' शोधनीयाः, द्वे शते अष्टाशीत्यधिके उदयभङ्गानां मिथ्यादृष्टेः शोधनीये इत्यर्थः। पदानि तु त्रयोविंशतिशतानि चतुरुत्तराणि शोधनीयानि ॥१२१॥

वेउव्वियमीसम्मी नपुंसवेओ न सासणे होइ। चउवीसचउक्काओ अओ तिभागा रिणं तस्स ॥१२२॥

(स्वो०)—वैक्रियमिश्रयोगे नपुंसकवेदोदयो न सास्वादने भवति, अतस्तस्य चतुर्विंशतिचतुष्कात्त्रिभागो नपुंसकोपलक्ष्यो न सम्भ-

वति, तत्त्रिभागे च द्वात्रिंशदुदयाः ३२, उदयेषु न सम्भवन्ति, तेऽप्यष्टगुणाः प्राग्वच्छतद्वयं षट्पञ्चाशदधिकपदेषु न सम्भवतीति गाथार्थः ॥१२२॥

(मलय०)—वैक्रियमिश्रकाययोगे नपुंसकवेदोदयः सासादनस्य न भवति, कारणं प्रागेवोक्तम्, अतश्चतुर्विंशतिचतुष्कात्त्रिभागस्तस्य सासादनस्य 'रुणं' शोध्यो, द्वात्रिंशदुदयभङ्गाः सासादनसत्काः शोधनीया इत्यर्थः। पदानि तु द्वे शते षट्पञ्चाशदधिके शोधनीये ॥१२२॥

**कम्मयविउव्विमीसे इत्थीवेओ न होइ सम्मस्स। अपुमित्थि उरलमीसे तच्चउवीसाण रिणमेय ॥१२३॥**

(स्वो०)—कार्मणवैक्रियमिश्रयोः स्त्रीवेदोदयो न सम्भवति, अतस्तच्चतुर्विंशतीनां द्वौ त्रिभागावष्टाविंशत्यधिकं शतमुदयानां न सम्भवति। औदारिकमिश्रयोगे तु स्त्रीनपुंसकवेदोदयौ न सम्भवतः, अत्रापि द्वौ त्रिभागौ तच्चतुर्विंशत्युदयानां न सम्भवतः। एवं हि द्वे शते षट्पञ्चाशदुत्तरे न सम्भवत उदयेष्वविरतस्य २५६, एत एवोदयाः षड्ध्रुवका उदयाष्टभागगुणा विंशत्युत्तराण्येकोनविंशतिशतानि १९२० पदेषु न सम्भवन्तीति गाथार्थः ॥१२३॥

(मलय०)—कार्मणे वैक्रियमिश्रे च वर्त्तमानस्याविरतसम्यग्दृष्टेः स्त्रीवेदोदयो न भवति, ततश्चतुर्विंशतीनामष्टानां कार्मणवैक्रियमिश्रे च प्रत्येकं त्रिभागरुणं शोधनीयम्, अष्टाविंशत्यधिकं शतमुदयभङ्गानां शोधनीयम्, पदसंख्यायां तु पदानां नवशतानि षष्ट्यधिकानीत्यर्थः। तथा ओदारिकमिश्रेऽविरतसम्यग्दृष्टेर्नपुंसकस्त्रीवेदौ न भवतः। युक्तिरत्र प्रागेवोक्ता। ततस्तच्चतुर्विंशतीनां रुणमेतद् द्वौ त्रिभागौ शोधनीयावित्यर्थः। इदमत्र तात्पर्य—अष्टाविंशत्यधिकं शतमुदयभङ्गानां शोधनीयम्, पदसंख्यायां तु नवशतानि

षट्पधिकानीति ॥१२३॥

**आहारगमीसेसु इत्थिवेओ न होइ उ पमत्ते। दोण्णि तिभागाउ रिणं अपमत्तजइस्स उ तिभागो ॥१२४॥**

(स्वो०)—आहारकमिश्रयोः स्त्रीवेदोदयो न सम्भवति प्रमत्तेऽतस्तदुदयानां द्वौ त्रिभागौ त्याज्यौ, तदुदयानां द्विनवतं शत १९२, त्रिभागद्वयेनाष्टाविंशत्यधिकं शत १२८, एतदुदयेषु न सम्भवति। अप्रमत्तयतेरेकत्रिभागे चतुःषष्टिरुदया यतस्तस्यैवास्मिन्नाहारके न स्त्रीवेदोदयो भवति ६४, उभयोरपि ध्रुवका अष्टयागगुणाः स्वोदयाः पदानि भवन्ति। प्रमत्ते सप्तशतानि चतुरुत्तराणि ७०४, अप्रमत्ते शतत्रय द्विपञ्चाशदधिकं ३५२, इति गाथार्थः ॥१२४॥

(मलय०)—'प्रमत्ते'-प्रमत्तसंयतस्याहारके आहारकमिश्रे च स्त्रीवेदो न भवति, ततः प्रमत्तसंयतचतुर्विंशतीनामाहारके आहारकमिश्रे च स्त्रीवेदो न भवति, ततः प्रमत्तसंयतचतुर्विंशतिनामाहारके आहारकमिश्रे च प्रत्येकं त्रिभागद्वयमिति द्वौ त्रिभागौ ऋणम्। इदमुक्तं भवति—अष्टाविंशत्यधिकं शतमुदयभङ्गानामुदयभङ्गसंख्यायां शोधनीयम्। पदसंख्यायां तु पदानां सप्तशतानि चतुरुत्तराणि। तथा अप्रमत्तसंयते आहारककाययोगे स्त्रीवेदो न भवतीति तच्चतुर्विंशतीनामपि त्रिभागः शोधनीयः, चतुःषष्टिरुदयभङ्गास्त्रीण्यपि च शतानि द्विपञ्चाशदधिकानि पदानां शोधनीयानीत्यर्थः ॥१२४॥

एतदेव स्पष्टयति—

**उदएसुं चउवीसा धुवगाउ पदेसु जोगमाईर्हि। गुणिया मिलिया चउवीस ताडिया इयरसजुत्ता ॥१२५॥**

(स्वो०)—उदयेषु साध्येषु स्वचतुर्विंशतयः योगोपयोगलेश्याभिर्गुणिताः सत्यः पदेषु साध्येषु ध्रुवका गुणिताः सन्तः भूयश्चतुर्विंशत्या गुणिता इतरोदयैः पदैर्वा तथाभूतैस्तद्गुणगुणितैर्युता गुणोदयाः गुणपदानि वा भान्तीति गाथार्थः ॥१२५॥

(मलय०)—संप्रति योगोपयोगलेश्यासु विषये सामान्येनोदयसंख्यानयनोपायमाह—उदयेषु उदयभङ्गसंख्यानयनविषये यत्र यावत्यश्चतुर्विंशतयः संभवन्ति तत्र तावत्यश्चतुर्विंशतयो योगादिभिर्गुण्यन्ते, यत्र यावन्तो लेश्योपयोगा उपपद्यन्ते तत्र तैस्तावद्भिर्गुण्यन्ते। तथा पदेषु पदसंख्यानयनविषये यत्र यावन्तो ध्रुवकाः संभवन्ति, तत्र तावन्तः पदध्रुवकाः संभवद्भिर्योगादिभिर्गुण्यन्ते, गुणिताः सन्त उदयाः पदध्रुवकाश्च स्वस्थाने एकत्र मील्यन्ते, मिलिताश्च सन्तो भूय उभयेऽपि चतुर्विंशत्या ताड्यन्ते, ताडिताश्च सन्त इतरसंयुक्ताः क्रियन्ते, उदयभङ्गा द्विकोदयैकोदयभङ्गैः सप्तदशसंख्यैः संयुक्ताः क्रियन्ते, पदानि तु द्विकोदयैकोदयपदैरेकोनत्रिंशत्संख्यैर्युक्तानि विधीयन्ते, ततो योगगुणिता उदयभङ्गाश्चतुर्दश सहस्राणि नव शतानि सप्तत्रिंशदधिकानि भवन्ति (१४९३७) पदानि त्वेकं लक्षं द्विनवत्यधिकानि च नवशतानि (१००९९२) ॥१२५॥

असम्भवितोदयसाधनोपायमाह—

**अपमत्तसासणेसुं अड सोल पमत्त सम्म बत्तीसा। मिच्छंसि य छण्णउई ठावेज्जा सोहणानिमित्तं ॥१२६॥**

(स्वो०)—अप्रमत्तसास्वादनयोरष्टावष्टौ, षोडश प्रमत्ते, सम्यग्दृष्टौ द्वात्रिंशत्, मिथ्यादृष्टौ षण्णवतिम्, स्थापयेत शोधननिमित्तमिति गाथार्थः ८-८-१६-३२-९६ ॥१२६॥



(मलय०)—संप्रत्यसंभविनामुदयभङ्गानामानयनोपायमाह—अप्रमत्तसासादनयोः प्रत्येकमष्टौ शोधननिमित्तं स्थापयेत्, षोडश

प्रमत्ते, अविरतसम्यग्दृष्टौ द्वात्रिंशत्, मिथ्यादृष्टौ षण्णवतिम्। तथाहि—अप्रमत्तयतेराहारककाययोगे स्त्रीवेदो न लभ्यते, स्त्रीवेदेन च प्रत्येकमेकैकस्यां चतुर्विंशतावष्टौ भङ्गा लभ्यन्ते, ततोऽप्रमत्ते ऽप्येवं भङ्गनिमित्तमष्टौ स्थाप्यन्ते। सासादनेऽपि वैक्रियमिश्रकाययोगे नपुंसकवेदो न लभ्यते, नपुंसकवेदेन च प्रत्येकमेकैकस्यां चतुर्विंशत्यामष्टौ भङ्गाः प्राप्यन्ते ततोऽत्राप्यष्टौ स्थाप्यन्ते। तथा प्रमत्तयतेराहारके आहारकमिश्रे च प्रत्येकं स्त्रीवेदो न लभ्यते, स्त्रीवेदेन चाहारके आहारकमिश्रे च प्रत्येकमेकैकस्यां चतुर्विंशतावष्टौ भङ्गा न प्राप्यन्ते, इति षोडश स्थाप्याः। तथा अविरतसम्यग्दृष्टेरौदारिकमिश्रकाययोगे स्त्रीवेदनपुंसकवेदौ न लभ्येते, स्त्रीवेदनपुंसकवेदाभ्यां च प्रत्येकमेकैकस्यां चतुर्विंशतौ षोडश भङ्गाः प्राप्यन्ते, इति षोडश, तथा वैक्रियमिश्रे कार्मणे च प्रत्येकं स्त्रीवेदो न लभ्यते, इति तत्रापि षोडश, सर्वसङ्ख्यया द्वात्रिंशत्स्थापनीयाः। मिथ्यादृष्टौ च चतस्रश्चतुर्विंशतयो वैक्रियमिश्रादौ न प्राप्यन्ते, चतस्रश्च चतुर्विंशतयः षण्णवतिरिति षण्णवतिं स्थाप्यते ॥१२६॥

**जोगतिगेण मिच्छे नियनियचउवीसगाहिं सेसाण। गुणिऊणं पिंडिज्जा सेसा उदयाण परिसखा ॥१२७॥**

(स्वो०)—योगत्रिकेण मिथ्यादृष्टौ षण्णवतिं गुणयित्वा आत्मीयचतुर्विंशतिभिः शेषाणां स्थापितान् राशीन् गुणयित्वा–६४–३२ १२८–२५६–२८८–सर्वेषां पिण्डः सप्तशतान्यष्टषष्टानि ७६८, एतानपनयेत्, शेषा उदयानां परिसंख्या भवति, तुशब्दाद्योगविषया इति गाथार्थः ॥१२७॥

(मलय०)—तदेवमपनयसाध्यानङ्कान् पदांश्चोपदर्श्य सांप्रतं यत्कर्तव्यं तदाह–मिथ्यादृष्टौ या षण्णवतिः प्रागुक्ता सा वैक्रियमिश्रे औदारिकमिश्रे कार्मणे च प्रत्येकं न प्राप्यते, इति त्रिभिर्योगैर्वैक्रियमिश्रादिभिर्गुण्यते, ततो जाते द्वे शते अष्टाशीत्यधिके। शेषाणां

चाप्रमत्तादीनामष्टादयो निजनिजचतुर्विंशतिभिर्गुण्यते, यस्य यावन्त्यश्चतुर्विंशतयः संभवन्ति तस्य सत्काः पूर्वोक्ताः स्थाप्या अङ्का-स्तावत्संख्या गुण्यन्ते इत्यर्थः। तत्राप्रमत्तस्याष्टौ चतुर्विंशतयः, ततोऽष्टावष्टभिर्गुण्यन्ते जाता चतुःषष्टिः, सासादने चतस्रश्चतुर्विंशतयः, ततस्तस्य सत्का अष्टौ चतुर्भिर्गुण्यन्ते जाता द्वात्रिंशत्। प्रमत्तेऽष्टौ चतुर्विंशतयः ततस्तस्य सत्काः षोडशाष्टभिर्गुण्यन्ते जातमष्टाविंशत्यधिकं शतम्। अविरतसम्यग्दृष्टावष्टौ चतुर्विंशतयः, ततस्तस्य सत्का द्वात्रिंशदष्टभिर्गुणिता, जाते द्वे शते षट्पञ्चाशदधिके। क्रमेणाङ्कस्थापना–२८८–६४–३२–१२८–२५६। सर्वसंख्यया सप्तशतानि अष्टषष्ट्यधिकानि। एतानि उदयभङ्गसत्कात्पूर्वोक्तेः स्फेटयेत्, ततः शेषा उदयानां उदयभङ्गानामर्थात् योगगुणितानां परिसंख्या भवति. सा च चतुर्दश सहस्राणि शतं चैकोनसप्तत्यधिम् ॥१२७॥

**चउवीसाइगुणेज्जा पयाणि अहिगिच्च मिच्छ छण्णउई। सेसाणं धुवगेहिं एगीकिच्चा तओ सोहे ॥१२८॥**

(स्वो०)––चतुर्विंशत्या गुणयेत् पदान्यधिकृत्य मिथ्यादृष्टेः षण्णवतिं २३०४, शेषाणां सास्वादनादीनां ध्रुवकैर्गुणयेत् अष्टाष्टषोडशद्वात्रिंशत्प्रागुक्तराशीन् ३५२–२५६–७०४–१९२०, एकीकृताः ५५३६, ततः पूर्वपदेभ्यः शोधयेदिति गाथार्थः ॥१२८॥

(मलय०)––संप्रति शोध्यानां पदानामानयनोपायमाह–पदानि अधिकृत्य मिथ्यादृष्टौ षण्णवतिं चतुर्विंशत्या गुणयेत्। अथ कस्मात् षण्णवतिश्चतुर्विंशत्या गुण्यते? उच्यते––इह मिथ्यादृष्टौ वैक्रियमिश्रे औदारिकमिश्रे कार्मणे प्रत्येकमनन्तानुबन्ध्युदयवर्जिताश्चतस्रश्चतुर्विंशतयो न प्राप्यन्ते, तद्यथा––सप्तोदये एका, अष्टोदये द्वे, नवोदये एका। तत्र सप्तोदये सप्त पदानि, अष्टोदये अष्टौ, तत्र च द्वे चतुर्विंशती प्राप्येते। इत्यष्टौ द्वाभ्यां गुण्यन्ते इति षोडश, नवोदये नव, सर्वसङ्ख्यया द्वात्रिंशद्। सा च वैक्रियमिश्रादिषु त्रिषु योगेषु प्रत्येकं न प्राप्यते इति त्रिभिर्गुण्यते इति षण्णवतिः, षण्णवतिश्चतुर्विंशतिगतेति चतुर्विंशत्या गुण्यते, चतुर्विंशतिगुणनेन जातानि

त्रयोविंशतिशतानि चतुरुत्तराणि। शेषाणां च सासादनादीनां पूर्वोक्तान् स्वाप्यान् अङ्कान् स्वकीयैः स्वकीयैः पदध्रुवकैर्गुणयेत्, तद्यथा—सासादनस्य सत्का पूर्वोक्ता अष्टौ अङ्का द्वात्रिंशता गुण्यन्ते, जाते द्वे शते षट्पञ्चाशदधिके। अविरतसम्यग्दृष्टेः सत्का द्वात्रिंशत् स्वकीयैः षष्टिसंख्यैः पदध्रुवकैर्गुण्यन्ते, ततो जायन्ते विंशत्यान्येकोनविंशतिशतानि। तथा प्रमत्तस्य सत्काः षोडश, ते स्वकीयैः पदध्रुवकैश्चतुश्चत्वारिंशत्संख्यैर्गुण्यन्ते, ततो भवन्ति सप्तशतानि चतुरुत्तराणि। तथा अप्रमत्तस्य सत्का अष्टौ, ते स्वकीयैश्चतुश्चत्वारिंशत्संख्यैः पदध्रुवकैर्गुण्यन्ते, ततो जायन्ते त्रीणि शतानि द्विपञ्चाशदधिकानि। एतानि सर्वाण्यप्येकीक्रियन्ते, ततो जातानि पञ्चपञ्चाशच्छतानि षट्त्रिंशदधिकानि ( ५५३६ )। तानि पूर्वपदेभ्यः शोधयेत्, तत्र पदानां परिसंख्या भवति, सा चेयम्—सप्तदशाधिकानि सप्तशतानि पञ्चनवतिसहस्राणि ( ९५७१७ ) ॥१२८॥

उक्त मोहनीयावक्षेपः। नाम्नोऽवक्षेपमाह—

बंधोदयसंताइं गुणेसु कहियाइं नामकम्मस्स। गइसु य अठ्ठगडंमी वोच्छामी इंदिएसु पुणो ॥१२९॥

(स्वो०)—बन्धोदयसत्स्थानानि गुणेषु कथितानि नामकर्मणः, गतिषु चात्यक्तमस्तावे वक्ष्ये—कथयामि इन्द्रियेषु पुनः। यद्यन्दारसामान्योक्तौ सर्वबन्धोदयभङ्गकप्राप्तौ विशेषोपादानाय विधियते—मिथ्यादृष्टौ ये स्थावरप्रायोग्यास्त्रयो बन्धास्तद्भङ्गाश्चत्वारो विंशतिः षोडश तस्यैव विकल्पाः स्युः ४०, विकलेन्द्रियप्रायोग्या ये त्रयो बन्धाः २५–२९–३०—तद्भङ्गाश्चैकपञ्चाशच्च तस्यैव भवन्ति ५१, पञ्चेन्द्रियतिर्यक्प्रायोग्या ये त्रयो बन्धाः २६–२९–३०—भङ्गकानां द्विनवतिशतानि सप्तदशोत्तराणि ९२१७, एते मिथ्यादृष्टेरेवाखिलाः। मनुष्यप्रायोग्यौ द्वौ बन्धौ २५–२९, अनयोः षट्चत्वारिंशच्छतानि नवोत्तराणि मिथ्यादृष्टौ भवन्ति, नरकप्रायोग्योऽ-

ष्टाविंशतिबन्धस्तद्भङ्गकश्च मिथ्यादृष्टावेव भवति, देवप्रायोग्योऽष्टाविंशतिबन्धः तदष्टौ भङ्गा मिथ्यादृष्टौ भवन्ति, एवमेकत्र त्रयोदश सहस्राणि नवशतानि पड् विंशत्यधिकानि भवन्ति १३९२६। षोडश तीर्थकरनाम्नो १६, द्वौ आहारकेण सह, एको यशोबन्धो न भवतीति मिथ्यादृष्टौ। सास्वादने देवप्रायोग्याऽष्टाविंशतिबन्धस्तद्भङ्गाश्चाष्टौ भवन्ति ८, पञ्चेन्द्रियतिर्यक्प्रायोग्य एकोनत्रिंशद्बन्धस्तद्भङ्गानां द्वात्रिंशच्छतानि ३२००, मनुष्यप्रायोग्यश्चैकोनत्रिंशद्बन्धस्तद्भङ्गानां द्वात्रिंशच्छतानि ३२००, पञ्चेन्द्रिय तिर्यक्प्रायोग्यत्रिंशद्बन्धस्तद्भङ्गानां द्वात्रिंशच्छतानि ३२००, सास्वादने भवन्ति। अस्य च पञ्चसंस्थानसंहननभेदत इयन्त एव भङ्गा भवन्ति। त्रिष्वपि स्कन्धेषु पण्णवतिशतान्यष्टोत्तराणीति ९६०८। देवप्रायोग्योऽष्टाविंशतिबन्धः, तद्भङ्गाश्चाष्टौ ८, मनुष्यप्रायोग्य एकोनत्रिंशद्बन्धस्तद्भङ्गाश्चाष्टौ स्थिरशुभयशोभिः निष्पन्ना भवन्ति, सर्वेऽपि सम्यग्मिथ्यादृष्टौ षोडशेति १६। अविरतस्याप्येते षोडशान्यो देवप्रायोग्य एकोनत्रिंशद्बन्धस्तद्भङ्गाश्चाष्टौ ८, मनुष्यप्रायोग्यस्त्रिंशद्बन्धस्तद्भङ्गाश्चाष्टौ एवमविरते द्वात्रिंशद्भङ्गा भवन्तीति ३२। देवप्रायोग्यावष्टाविंशत्येकोनत्रिंशद्बन्धौ तद्भङ्गाश्च षोडश देशविरते भवन्तीति १६। देवप्रायोग्यौ अष्टाविंशत्येकोनत्रिंशद्बन्धौ तद्भङ्गाश्च षोडश प्रमत्ते भवन्तीति १६। देवप्रायोग्या अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्बन्धास्तद्भङ्गाश्चाष्टादशाप्रमत्ते भवन्तीति। अपूर्वकरणेऽप्येत एव चत्वारो यशोबन्धभङ्गश्च पञ्चमः ५। बादरसूक्ष्मयोः यशोभङ्ग एव १, ततपरतो नाम्नो बन्धाभाव इति। सप्ताहारकप्रायोग्यानष्टौ तीर्थङ्करप्रायोग्यानुद्योतेनोत्तरवैक्रिये त्रीन् मनुष्यगतौ मुक्त्वा शेषाः सर्वेऽपि तिर्यङ्मनुष्यसामान्योत्तरवैक्रियोदया अखिलास्तद्भङ्गाश्च भवन्ति, देवप्रायोग्या नरकप्रायोग्याश्चोदयास्तद्भङ्गाश्च सर्वे भवन्ति। एवं हि एकविंशत्याद्युदयानां सप्तसप्ततिशतानि त्रिसप्तत्यधिकानि मिथ्यादृष्टौ भङ्गा भवन्ति, ७७७३, यतस्तस्य तीर्थङ्कराहारकरहिताः प्रकृतय उदयं गच्छन्ति। एकद्वित्रिचतुरिन्द्रियपर्याप्तकप्रायोग्यै-

कविंशत्युदयस्तत्र भङ्गाश्च द्वौ द्वौ यशोऽयशोभ्यां निष्पन्नौ सास्वादनेऽष्टावेव भवन्ति ८, यतस्तत्र न सूक्ष्मत्रिकोदयः। पञ्चेन्द्रियतिर्यग्मनुष्यपर्याप्तदेवयोग्यैकविंशत्युदयस्तद्भङ्गाश्चाष्टावष्टौ सुभगादिभिः निष्पन्नाः, नारकोदयश्चैव पञ्चविंशतिभङ्गाः। एवं भवान्तरोदये त्रयस्त्रिंशत् ३३। एकेन्द्रियपर्याप्तयोग्यश्चतुर्विंशत्युदयस्तद्भङ्गकौ च द्वौ भवतः। उत्तरवैक्रियमनुष्यतिर्यक्प्रायोग्यो देवयोग्यश्च पञ्चविंशत्युदयस्तद्भङ्गाश्चाष्टावष्टौ एको नारकप्रायोग्य एव शरीरपर्याप्तौ पञ्चविंशतिर्भङ्गा भवन्ति २५। पर्याप्तविकलेन्द्रियप्रायोग्यः षड्विंशत्युदयस्तद्भङ्गाश्च षट् भवन्ति, पर्याप्तपञ्चेन्द्रियतिर्यक्प्रायोग्यः षड्विंशत्युदयस्तद्भङ्गाश्चाष्टाशीतिद्विशतप्रमाणाः सास्वादने भवन्ति, मनुष्यप्रायोग्या अप्येवमेव, एवं षड्विंशत्युदये पञ्चशतानि द्व्यशीतानि ५८२। चतुः पञ्चषड्विंशत्युदयेषु शरीरपर्याप्तिकाले सास्वादनस्य षट्शतानि नवोत्तराणि भवन्ति ६०९, तदुत्तरकाले साम्यादनत्वमपसरति, अतः सप्ताष्टाविंशत्युदयौ न भवतः। भवस्थनारकसास्वादनस्यैकोनत्रिंशदुदयस्तद्भङ्गक एकः, एवं देवसास्वादनस्यैकोनत्रिंशत्त्रिंशदुदयौ तद्भङ्गाश्च स्वरादिभेदतः षोडश भवन्ति। एवं भवस्थमनुष्यस्य त्रिंशदुदयस्तद्भङ्गानामेकादश शतानि द्वापञ्चाशदधिकानि भवन्ति ११५२, एवं भवस्थतिर्यक्सास्वादनस्य त्रिंशदेकत्रिंशदुदयौ तद्भङ्गानां च त्रयोविंशतिशतानि चतुरुत्तराणि भवन्ति २३०४, अस्योद्योतेन साकल्पितेन ये भङ्गास्ते न भवन्ति, यतस्ते करणापर्याप्तका, न च तत्र सास्वादनत्वमस्ति, सर्वभङ्गानामेकचत्वारिंशच्छतानि पञ्चदशोत्तराणि ४११५। नारकसम्यग्मिथ्यादृष्टावेकोनत्रिंशदुदयो भङ्गश्चैकः, तिर्यक्सम्यग्मिथ्यादृष्टेः त्रिंशदुदयस्तद्भङ्गानामेकादश शतानि द्वापञ्चाशदधिकानि ११५२, एवं मनुष्येऽप्येकादश शतानि द्वापञ्चाशदधिकानि ११५२, देवस्य षोडश १६। तिर्यक्सम्यग्मिथ्यादृष्टेरेकत्रिंशदुदयस्तद्भङ्गानामेकादश शतानि द्वापञ्चाशदधिकानि ११५२, एवं सर्वेऽपि चतुस्त्रिंशच्छतानि त्रिसप्ततानि ३४७३। भवान्तरोदये सम्यग्दृष्टेस्तिसृषु गतिष्वष्टावष्टौ भङ्गा

एको नरकगतावेवं पञ्चविंशतिः २५, एवं पञ्चविंशत्युदयेऽपि पञ्चविंशतिभङ्गाः २५, किन्तु तिर्यग्मनुष्ययोरुत्तरवैक्रियकाले सम्भवन्ति। मनुष्याविरतस्य षड्विंशत्युदये द्वे शतेऽष्टाशीते भङ्गानां २८८, एवं तिरश्चोऽपि २८८, सप्तविंशति(त्युदये)भङ्गाश्चतुर्गतिकस्याविरतस्य २५, अष्टाविंशत्युदये देवस्य षोडश १६, उत्तरवैक्रियतिरश्चोऽपि षोडश १६, मनुष्यस्याष्टावेको नारकस्य चतुर्थपर्याप्तौ तिर्यग्मनुष्ययोरष्टाविंशत्युदये पञ्च २ शतानि षट्सप्ततानि ५७६–५७६। एवमेकादश शतानि त्रिनवतानि ११९३। एकोनत्रिंशदुदये देवाविरतस्य षोडश भङ्गाः १६, एको नारकस्य, उत्तरवैक्रियमनुष्यस्याष्टौ, तिरश्चः षोडश १६, चतुर्थपर्याप्तौ तिरश्च उच्छ्वासोद्योताभ्यामेकादश शतानि द्वापञ्चाशदधिकानि ११५२, मनुष्याविरतस्य पञ्चशतानि षट्सप्ततानि ५७६, एवमेकोनत्रिंशदुदये सप्तदशशतान्येकोनसप्ततानि १७६९, त्रिंशदुदये मनुष्याविरतस्य एकादश शतानि द्वापञ्चाशदधिकानि ११५२, तिरश्चः सप्तदश शतान्यष्टाविंशत्यधिकानि १७२८, देवस्याष्टौ, तिरश्चोऽप्युत्तरवैक्रिये ८, एवं त्रिंशदुदये अष्टाविंशतिशतानि षण्णवत्यधिकानि २८९६, एकत्रिंशदुदये तिरश्च एकादशशतानि द्वापञ्चाशदधिकानि ११५२, एवमविरतस्योदयानां षट्सप्ततिशतानि एकषष्टानीति ७६६१। उत्तरवैक्रियकारिणो मनुष्यस्य तिरश्चो वा देशविरतस्य पञ्चविंशतिसप्तविंशतित्रिंशदुदयेषु एकैकः, अष्टाविंशत्येकोनत्रिंशदुदययोः द्वौ द्वौ भङ्गावेवमुभयोश्चतुर्दश १४। आह–वैक्रियषट्कस्योदयोऽविरतादूर्ध्वं प्राक्प्रतिषिद्धः कस्मादस्योत्तरवैक्रियकरणे तदुदयो व्याख्यायते? अत्रोच्यते–तत्र भवप्रत्ययस्य निषेधः, न गुणप्रत्ययस्य, यतः प्रमत्ताप्रमत्तयोरपि तथा विविधक्रियाविशेषतो वैक्रियाहारकशरीरयोस्तद्भावे चोद्योतस्यापि उदयो भवति, स्थूलभद्रविष्णुकुमारादीनामिव न सर्वेषामिति न दोषः। भवस्थमनुष्यदेशविरतस्य त्रिंशदुदये चतुश्चत्वारिंशदधिकं शतं भङ्गानां भवति १४४, एवं तिरश्चो देशविरतस्यापि १४४, एकत्रिंशदुदयेऽप्येवमेव तिरश्चो देशविरतस्य १४४,

गुणेषु नाम्नो बन्धोदयसत्तास्थानानि भङ्गाश्च

एते च षट्संस्थानसंहननस्वरविहायोगतिभेदात् भवन्ति, एवमेकत्र चत्वारि शतानि षट्चत्वारिंशदधिकानि ४४६। एष प्रमत्तेऽप्युत्तर वैक्रियाहारकोदयेषु चतुर्दश भङ्गाः १४। मनुष्यप्रमत्तस्य त्रिंशदुदये चतुश्चत्वारिंशदधिकं शतं १४४, एकमेकत्राष्टपञ्चाशदधिक शत १५८। अप्रमत्तस्यैकोनत्रिंशदुदये निष्पन्नाहारकशरीरस्यैको भङ्गः, यतस्तत्काले दुःस्वरोदयोऽप्रतिषिद्धोऽपि न भवति। त्रिंशदुदयेऽप्येको भङ्गः, अत्रोद्योतोदयो भवति प्रतिषिद्धोऽपि तच्छरीरप्रभावात्। एवमुत्तरवैक्रियेऽपि द्वौ भङ्गौ मनुष्याप्रमत्तस्य, त्रिंशदुदये चतुश्चत्वारिंशदधिक शत भवति १४४, एकत्राष्टचत्वारिंशदधिक शत १४८। अपूर्वकरणबादरसूक्ष्मोपशान्तेषु प्रत्येक त्रिंशदुदयो भवति, द्वासप्ततिभङ्गाः, यतस्तेषु संहननत्रयस्यैवोदयः। क्षीणकषायस्यापि त्रिंशदुदयश्चतुर्विंशतिभङ्गाः, यतोऽस्याद्यस्यैवोदयः संहननस्य। सयोगिनो विंशत्येकविंशत्युदययोरेकैकः, षड्विंशत्युदये संस्थानभेदात् षड्भङ्गाः, सप्तविंशत्युदयेऽप्येकः तीर्थकरस्य, नास्ति संस्थानभेदः, अष्टाविंशत्युदये द्वादश भङ्गाः, संस्थानविहायोगतिभेदात्, एकोनत्रिंशदुदये एकस्तीर्थङ्करस्य, अतीर्थङ्करस्य द्वादश, त्रिंशदुदये एकस्तीर्थकरस्य, चतुर्विंशतिरतीर्थकरस्य स्वरभेदात्, एकत्रिंशदुदयेऽप्येकः, सर्वेऽप्येकत्र षष्टिः ६०। अयोगिन उभयोरप्येकैकः। एव भाष्यमिति गाथार्थः ॥१२९॥

(मलय०)—तदेवमुक्तो मोहनीयस्य प्रागनुक्तो विशेष। संप्रति नामकर्मणो विशेषमाह। नामकर्मणोऽप्याकृते—अव्यक्ते जीवस्थानगुणस्थानचिन्तारहिताव्यक्तबन्धोदयसत्तास्थानाभिधानप्रस्तावे गुणेषु गुणस्थानकेषु गतिषु च बन्धोदयसत्तास्थानानि सामान्यतः कथितानि। न च प्रपञ्चितज्ञाः सामान्यतः कथितान्यवगन्तु शक्नुवन्ति। ततस्तेषामेव बोधाय तानि प्रपञ्चत कथ्यन्ते—तत्र मिथ्यादृष्टौ नाम्नः षट् बन्धस्थानानि, तद्यथा—त्रयोविंशतिः, पञ्चविंशति, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, तत्रापर्याप्तके-

न्द्रियप्रायोग्यं बध्नतस्त्रयोविंशतिः, तस्यां च बध्यमानायां बादरसूक्ष्मप्रत्येकसाधारणैर्भङ्गाश्चत्वारः। पर्याप्तैकेन्द्रियप्रायोग्यमपर्याप्तद्वित्रिचतुःपञ्चेन्द्रियतिर्यग्मनुष्यप्रायोग्यं बध्नतः पञ्चविंशतिः, तत्र पर्याप्तैकेन्द्रियप्रायोग्यायां पञ्चविंशतौ बध्यमानायां भङ्गा विंशतिः, अपर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यायां बध्यमानायां प्रत्येकमेकैको भङ्ग इति सर्वसङ्ख्यया पञ्चविंशतिः। पर्याप्तैकेन्द्रियप्रायोग्यं बध्नतः षड्विंशतिः, तस्यां बध्यमानायां भङ्गाः षोडश। देवगतिप्रायोग्यं नरकगतिप्रायोग्यं वा बध्नतोऽष्टाविंशतिः, तत्र देवगतिप्रायोग्यायामष्टाविंशतौ अष्टौ भङ्गाः, नरकगतिप्रायोग्यायां चैक इति सर्वसङ्ख्यया नव। पर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यं बध्नत एकोनत्रिंशत्। तत्र पर्याप्तद्वित्रिचतुरिन्द्रियप्रायोग्यायामेकोनत्रिंशति बध्यमानायां प्रत्येकमष्टौ भङ्गाः, तिर्यक्पञ्चेन्द्रियप्रायोग्यायां षट्चत्वारिंशच्छतान्यष्टाधिकानि ४६०८, मनुष्यगतिप्रायोग्यायामपि तावन्त एव भङ्गाः ४६०८, सर्वसंख्यया चत्वारिंशदधिकानि द्विनवतिशतानि ९२४०। या तु देवगतिप्रायोग्या तीर्थकरनामसहिता एकोनत्रिंशत् सा मिथ्यादृष्टेर्न बन्धमायाति, तीर्थकरनाम्नः सम्यक्त्वप्रत्ययत्वात्, मिथ्यादृष्टेश्च तदभावात्। पर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यं बध्नतस्त्रिंशत्। तत्र पर्याप्तद्वित्रिचतुरिन्द्रियप्रायोग्यायां त्रिंशति बध्यमानायां प्रत्येकमष्टौ भङ्गाः, तिर्यक्पञ्चेन्द्रियप्रायोग्यायां त्वष्टाधिकानि षट्चत्वारिंशच्छतानि ४६०८, सर्वसंख्यया द्वात्रिंशदुत्तराणि षट्चत्वारिंशच्छतानि ४६३२। या च मनुष्यगतिप्रायोग्या तीर्थकरनामसहिता त्रिंशत्, या च देवगतिप्रायोग्या आहारकसहिता, ते उभे अपि मिथ्यादृष्टेर्न बन्धमायातः, तीर्थकरनाम्नः सम्यक्त्वप्रत्ययत्वात्, आहारकनाम्नस्तु संयमनिमित्तत्वात्। उक्तं च—"सम्मत्तगुणनिमित्तं तित्थयरं संजमेण आहारमिति॥" त्रयोविंशत्यादिषु यथासंख्यं भङ्गसंख्यानिरूपणार्थमियं शास्त्रान्तरप्रसिद्धा गाथा—"चउ पणवीसा सोलस नवचत्ताला सया य बाणउया। बत्तीसुत्तरछायाल-सया

मिच्छत्तस्स पंचभिदी ॥१॥ सुगमा।

तथा मिथ्यादृष्टेर्नव उदयस्थानानि, तद्यथा—एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। एतानि सर्वाण्यपि नानाजीवापेक्षया यथा प्राक् सप्रपञ्चमुक्तानि तथात्रापि वक्तव्यानि। केवलं आहारकसंयतानां वैक्रियसंयतानां केवलिनां च संबन्धीनि न वक्तव्यानि, तेषाममिथ्यादृष्टित्वात्। सर्वसंख्यया मिथ्यादृष्टावुदयस्थानभङ्गाः सप्तसहस्राणि सप्तशतानि त्रिसप्तत्यधिकानि ७७७३। तथाहि—एकविंशत्युदये एकचत्वारिंशत् ४१, तत्रैकेन्द्रियाणां पञ्च ५, विकलेन्द्रियाणां नव ९, तिर्यक्पञ्चेन्द्रियाणां नव ९, मनुष्याणां नव ९, देवानामष्टौ ८, नारकाणामेकं १, इति। तथा चतुर्विंशत्युदये एकादश ११, ते च एकेन्द्रियाणामेव, अन्यत्र चतुर्विंशत्युदयस्याभावात्। पञ्चविंशत्युदये द्वात्रिंशत् ३२, तत्रैकेन्द्रियाणां सप्त ७ वैक्रियतिर्यक्पञ्चेन्द्रियाणामष्टौ ८, वैक्रियमनुष्याणामष्टौ ८, देवानामष्टौ ८, नारकाणामेकः १। षड्विंशत्युदये षट् शतानि ६००, तत्रैकेन्द्रियाणां त्रयोदश १३, विकलेन्द्रियाणां नव ९, तिर्यक्पञ्चेन्द्रियाणां द्वे शते एकोननवत्यधिके २८९, मनुष्याणामपि द्वे शते एकोननवत्यधिके २८९। सप्तविंशत्युदये एकत्रिंशत् ३१, तत्रैकेन्द्रियाणां षट् ६, वैक्रियतिर्यक्पञ्चेन्द्रियाणामष्टौ ८, वैक्रियमनुष्याणामष्टौ ८, देवानामष्टौ ८, नारकाणामेकः १। अष्टाविंशत्युदये एकादशशतानि नवनवत्यधिकानि ११९९, तत्र विकलेन्द्रियाणां षट् ६, तिर्यक्पञ्चेन्द्रियाणां पञ्चशतानि षट्सप्तत्यधिकानि ५७६, वैक्रियतिर्यक्पञ्चेन्द्रियाणां षोडश १६, मनुष्याणां पञ्चशतानि षट्सप्तत्यधिकानि ५७६, वैक्रियमनुष्याणामष्टौ ८, देवानां षोडश १६, नारकाणामेकः १। एकोनत्रिंशदुदये सप्तदशशतान्येकाशीत्यधिकानि १७८१, तत्र विकलेन्द्रियाणां द्वादश १२, तिर्यक्पञ्चेन्द्रियाणामेकादशशतानि द्विपञ्चाशदधिकानि ११५२, वैक्रियतिर्यक्पञ्चेन्द्रियाणां

षोडश १६, मनुष्याणां पञ्चशतानि षट्सप्तत्यधिकानि ५७६, वैक्रियमनुष्याणामष्टौ ८, देवानां षोडश १६, नारकाणामेकः १। त्रिंशदुदये एकोनत्रिंशच्छतानि चतुर्दशाधिकानि २९१४, तत्र विकलेन्द्रियाणामष्टादश १८, तिर्यक्पञ्चेन्द्रियाणां सप्तदशशतान्यष्टाविंशत्यधिकानि १७२८, वैक्रियतिर्यक्पञ्चेन्द्रियाणामष्टौ ८, मनुष्याणामेकादशशतानि द्विपञ्चाशदधिकानि ११५२, देवानामष्टौ ८। एकत्रिंशदुदये एकादशशतानि चतुःषष्ट्यधिकानि ११६४, तत्र विकलेन्द्रियाणां द्वादश १२, तिर्यक्पञ्चेन्द्रियाणामेकादशशतानि द्विपञ्चाशदधिकानि ११५२, सर्वसंख्यया सप्तसहस्राणि सप्तशतानि त्रिसप्तत्यधिकानि।

तथा मिथ्यादृष्टेः षट् सत्तास्थानानि, तद्यथा—द्विनवतिः, एकोननवतिः, अष्टाशीतिः, षडशीतिः, अशीतिः, अष्टसप्ततिः, तत्र द्विनवतिश्चतुर्गतिकानामपि मिथ्यादृष्टीनामवसेया। यदा पुनर्नरकेषु बद्धायुष्को वेदकसम्यग्दृष्टिः सन् तीर्थंकरनाम बद्ध्वा परिणामपरावर्त्तनेन मिथ्यात्वं गतो नरकेषु च समुत्पद्यमानस्तदा तस्यैकोननवतिरन्तर्मुहूर्त्तं कालं यावल्लभ्यते, उत्पत्तेरूर्ध्वमन्तर्मुहूर्तानन्तरं तु सोऽपि सम्यक्त्वं प्रतिपद्यते। अष्टाशीतिश्चतुर्गतिकानामपि मिथ्यादृष्टीनाम्, षडशीतिरेकेन्द्रियेषु यथायोगं देवगतिप्रायोग्ये नरकगतिप्रायोग्ये च उद्वलिते सति लभ्यते, एकेन्द्रियभवादुद्वृत्य विकलेन्द्रियेषु तिर्यक्पञ्चेन्द्रियेषु च समुत्पन्नानां सर्वपर्याप्तिभावादूर्ध्वमप्यन्तर्मुहूर्त्तं कालं यावल्लभ्यते। अष्टसप्ततिस्तेजोवायूनां मनुष्यगतिमनुष्यानुपूर्व्योरुद्वलितयोरवसेया, तेजोवायुभवादुद्वृत्य विकलेन्द्रियेषु तिर्यक्पञ्चेन्द्रियेषु वा मध्ये समुत्पन्नानामन्तर्मुहूर्त्तं कालं यावत्परतो नियमान्न, मनुष्यगतिमनुष्यानुपूर्व्योर्बन्धसंभवात्। तदेवं सामान्येन मिथ्यादृष्टेर्बन्धोदयसत्तास्थानान्युक्तानि।

संप्रति संवेध उच्यते—तत्र मिथ्यादृष्टेस्त्रयोविंशतिं बध्नतः प्रागुक्तानि नवाप्युदयस्थानानि सप्रभेदानि वेदितव्यानि। केवलमेक-

गुणेषु नामोबन्धोदयसत्तास्थानानां संवेधः

विंशतिपञ्चविंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपेषु षट्सूदयस्थानेषु देवनैरयिकाननधिकृत्य ये भङ्गाः प्राप्यन्ते ते न संभवन्ति । सा च एकेन्द्रियापर्याप्तप्रायोग्या, न च देवा अपर्याप्तैकेन्द्रियप्रायोग्यं बध्नन्ति, तेषां तत्रोत्पादाभावात्, नापि नैरयिकाः, तेषां सामान्यतोऽप्येकेन्द्रियप्रायोग्यबन्धायोगादिति । सत्तास्थानानि पञ्च, तद्यथा—द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च । तत्रैकविंशतिचतुर्विंशतिषड्विंशत्युदयेषु पञ्च सत्तास्थानानि, नवरं पञ्चविंशत्युदये तेजोवायुकानधिकृत्याष्टसप्ततिः प्राप्यते, षड्विंशत्युदये तेजोवायुकायिकान् तेजोवायुभवादुद्वृत्त्य विकलेन्द्रियतिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पद्यमानांश्चाधिकृत्य । सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपेषु पञ्चसु अष्टसप्ततिवर्जानि शेषाणि प्रत्येकं चत्वारि सत्तास्थानानि, सर्वसंख्यया सर्वाण्युदयस्थानान्यधिकृत्य त्रयोविंशतिबन्धकस्य चत्वारिंशत्सत्तास्थानानि । एवं पञ्चविंशतिषड्विंशतिबन्धकानामपि वक्तव्यं, केवलमिह देवोऽप्यात्मीयेषु सर्वेष्वप्युदयस्थानेषु वर्तमानः पर्याप्तैकेन्द्रियप्रायोग्यां पञ्चविंशतिं षड्विंशतिं च बध्नातीत्येवमवसेयम् । नवरं पञ्चविंशतिबन्धे बादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभदुर्भगानादेययशःकीर्त्ययशःकीर्तिपदैरष्टौ भङ्गा अवसेयाः, न शेषाः, सूक्ष्मसाधारणापर्याप्तेषु मध्ये देवस्योत्पादाभावात् । सत्तास्थानभावना पञ्चविंशतिबन्धे षड्विंशतिबन्धे च प्रागिव कर्तव्या, सर्वसंख्यया चत्वारिंशत्प्रत्येकं सत्तास्थानानि । अष्टाविंशतिबन्धकस्य मिथ्यादृष्टेर्द्वे उदयस्थाने, तद्यथा—त्रिंशदेकत्रिंशत् । तत्र त्रिंशत्तिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य, एकत्रिंशत्तिर्यक्पञ्चेन्द्रियानेव । अष्टाविंशतिबन्धकस्य चत्वारि सत्तास्थानानि, तद्यथा—द्विनवतिः एकोननवतिः अष्टाशीतिः षडशीतिः । तत्र त्रिंशदुदये चत्वार्यपि, तत्राप्येकोननवतिर्यो नाम वेदकसम्यग्दृष्टिर्बद्धतीर्थकरनामा परिणामपरावर्तनेन मिथ्यात्वं गतो नरकाभिमुखो नरकगतिप्रायोग्यामष्टाविंशतिं बध्नाति, तमधिकृत्य वेदितव्या । शेषाणि पुनस्त्रीणि सत्तास्थानानि विशेषेण तिर्यग्मनुष्याणां वेदितव्यानि । एकत्रिंशदुदये एकोननवतिवर्जानि

सप्ततिका-संग्रहः ||३२०||

त्रीणि सत्तास्थानानि, एकोननवतिस्तु तीर्थकरनामसहिता, न च तीर्थकरनाम तिर्यक्षु संभवति । सर्वसंख्यया अष्टाविंशतिबन्धे सप्त सत्तास्थानानि । देवगतिप्रायोग्यवर्जां शेषामेकोनत्रिंशतं विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यगतिप्रायोग्यां च बध्नतो मिथ्यादृष्टेः सामान्येन नवापि प्राक्तनानि उदयस्थानानि षट् सत्तास्थानानि—तद्यथा, द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च । तत्रैकविंशत्युदये सर्वाण्यपि इमानि प्राप्यन्ते, तत्राप्येकोननवतिर्बद्धतीर्थकरनामानं मिथ्यात्वं गतं नैरयिकमधिकृत्यावसेया, द्विनवतिरष्टाशीतिश्च देवनैरयिकमनुजविकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य, षडशीतिरशीतिश्च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजैकेन्द्रियानधिकृत्य, अष्टसप्ततिरेकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियानपेक्ष्य । चतुर्विंशत्युदये एकोननवतिवर्जानि शेषाणि पञ्च सत्तास्थानानि, तानि च एकेन्द्रियानेवाधिकृत्य वेदितव्यानि, अन्यत्र चतुर्विंशत्युदयस्याभावात् । पञ्चविंशत्युदये षडपि सत्तास्थानानि, तानि यथैकविंशत्युदयेन भावितानि तथैव भावनीयानि । षड्विंशत्युदये एकोननवतिवर्जानि शेषाणि पञ्च सत्तास्थानानि, तानि च प्रागिव भावयितव्यानि । एकोननवतिः कस्मान्न लभ्यते ? इति चेदुच्यते—इह मिथ्यादृष्टेः सत एकोननवतिर्नरकेषूत्पद्यमानस्य नैरयिकस्य प्राप्यते, न शेषस्य, न च नैरयिकस्य षड्विंशत्युदयः संभवति । सप्तविंशत्युदये अष्टसप्ततिवर्जानि शेषाणि पञ्च सत्तास्थानानि, तत्रैकोननवतिः प्रागुक्तस्वरूपं नैरयिकमधिकृत्य, द्विनवतिरष्टाशीतिश्च देवनैरयिकमनुजविकलेन्द्रियतिर्यक्पञ्चेन्द्रियैकेन्द्रियानधिकृत्य, षडशीतिरशीतिश्च एकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य, अष्टसप्ततिस्तु न संभवति, यतः सप्तविंशत्युदयस्तेजोवायुवर्जानामातपोद्योतान्यतरसहितानां भवति, नारकादीनां वा, न च तेषामष्टसप्ततिः संभवति, तेषामवश्यं मनुष्यद्विकबन्धसंभवात् । एतान्येव पञ्च सत्तास्थानानि अष्टाविंशत्युदयेऽपि द्रष्टव्यानि । तत्रैकोननवतिर्द्विनवतिरष्टाशीतिश्च प्रागिव भावयितव्या । षडशीतिरशीतिश्च

नाम्नोबन्धोदयसत्तास्थानानां संवेधः

||३२०||

विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्यावसेया। एवमेकोनत्रिंशदुदयेऽपि एतान्येव पञ्च सत्तास्थानानि भावनीयानि। त्रिंशदुदये चत्वारि, तद्यथा—द्विनवतिरष्टाशीतिः षडशीतिरशीतिः। एतानि विकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य वेदितव्यानि। एकत्रिंशदुदयेऽप्येतान्येव चत्वारि, तानि च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य द्रष्टव्यानि। सर्वसंख्यया मिथ्यादृष्टेरेकोनत्रिंशतं बन्धतः पञ्चचत्वारिंशत्सत्तास्थानानि। या तु देवगतिप्रायोग्या एकोनत्रिंशत् सा मिथ्यादृष्टेर्न बन्धमायाति, कारणं प्रागेवोक्तम्। तथा मनुष्यगतिदेवगतिप्रायोग्यवर्जा शेषां त्रिंशतं विकलेन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यां बध्नतः सामान्येन प्रागुक्तानि नवोदयस्थानानि, एकोननवतिवर्जानि च पञ्च सत्तास्थानानि। एकोननवतिस्तु न संभवति, एकोननवतिसत्कर्मणस्तिर्यग्गतिप्रायोग्यबन्धारम्भासंभवात्। तानि च पञ्च सत्तास्थानानि एकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशत्युदये प्रागिव भावनीयानि, सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदुदयेषु पञ्चस्वुदयस्थानेष्वष्टसप्ततिवर्जानि शेषाणि चत्वारि चत्वारि सत्तास्थानानि, अष्टसप्ततिप्रतिषेधकारणं प्रागुक्तमनुसर्तव्यम्। सर्वसंख्यया मिथ्यादृष्टेस्त्रिंशतं बध्नतश्चत्वारिंशत्सत्तास्थानानि। मनुजगतिदेवगतिप्रायोग्या त्रिंशत् मिथ्यादृष्टेर्न बन्धमायाति यतो मनुजगतिप्रायोग्या त्रिंशत् तीर्थकरनामसहिता, देवगतिप्रायोग्या त्वाहारकद्विकसहिता, न च तीर्थकराहारकद्विके मिथ्यादृष्टेर्बन्धमायात इति। तदेवमुक्तो मिथ्यादृष्टेर्बन्धोदयसत्तास्थानानां संवेधः।

संप्रति सासादनस्य बन्धोदयसत्तास्थानान्युच्यन्ते। तत्र सासादनस्य त्रीणि बन्धस्थानानि, तद्यथा—अष्टाविंशतिरेकोनत्रिंशत् त्रिंशत्। तत्राष्टाविंशतिर्द्विधा—देवगतिप्रायोग्या नरकगतिप्रायोग्या च। तत्र नरकगतिप्रायोग्या सासादनस्य न बन्धमायाति। देवगतिप्रायोग्यायाश्च बन्धकास्तिर्यक्पञ्चेन्द्रिया मनुष्याश्च। तस्यां चाष्टाविंशतौ बध्यमानायामष्टौ भङ्गाः। तथा सासादना एकेन्द्रिया विकलेन्द्रियास्ति

र्यक्पञ्चेन्द्रिया मनुष्या देवा नैरयिकाश्च तिर्यक्पञ्चेन्द्रियप्रायोग्यां मनुष्यगतिप्रायोग्यां वा एकोनत्रिंशत बध्नन्ति, न शेषाम्, अत्र भङ्गाश्चतुःषष्ठिशतानि। तथाहि–सासादना यदि तिर्यक्पञ्चेन्द्रियप्रायोग्यामथवा मनुष्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नन्ति, तथापि न ते हुण्डसंस्थानं सेवार्त्तं च संहननं बध्नन्ति, मिथ्यात्वोदयाभावात्, ततस्तिर्यक्पञ्चेन्द्रियप्रायोग्यामेकोनत्रिंशतं बध्नतः पञ्चभिः संस्थानैः पञ्चभिः संहननैः प्रशस्ताप्रशस्तविहायोगतिभ्यां स्थिरास्थिराभ्यां शुभाशुभाभ्यां सुभगदुर्भगाभ्यां सुस्वरदुःस्वराभ्यामादेयानादेयाभ्यां यशःकीर्त्त्ययशःकीर्तिभ्यां च भङ्गा द्वात्रिंशत् शतानि (३२००), एवं मनुष्यगतिप्रायोग्यामपि बध्नतो द्वात्रिंशत् शतानि (३२००), ततः सर्वसंख्यया चतुःषष्टिः शतानि भवन्ति (६४००)। तथा सासादना एकेन्द्रिया विकलेन्द्रियास्तिर्यक्पञ्चेन्द्रिया मनुष्या देवा नैरयिका वा यदि त्रिंशतं बध्नन्ति तर्हि तिर्यक्पञ्चेन्द्रियप्रायोग्यामेवोद्योतसहितां, न शेषाम्, तां च बध्नतां प्रागिव भङ्गानां द्वात्रिंशत् शतानि (३२००)। सर्वबन्धस्थानभङ्गसंख्या अष्टाधिकानि षण्णवतिशतानि (९६०८)। तथा चोक्तमन्यत्र—"अट्ठ सया चोसट्ठिं बत्तीस सया य सासणे भेया। अट्ठावीसाईसु सव्वाणट्ठहिग छन्नउइ (सया) ॥" सुगमा।

सासादनस्योदयस्थानानि सप्त, तद्यथा–एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। तत्र एकविंशत्युदय एकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य वेदितव्यः। नरकेषु सासादनो नोत्पद्यते इति तद्विषय एकविंशत्युदयो न लभ्यते। तत्रैकेन्द्रियाणामेकविंशत्युदये बादरपर्याप्तेन सह यशःकीर्त्त्ययशःकीर्त्तिभ्यां यौ द्वौ भङ्गौ तावेव संभवतः, न शेषाः, सूक्ष्मेषु अपर्याप्तेषु च मध्ये सासादनस्योत्पादाभावात्, अत एव विकलेन्द्रियाणां तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च प्रत्येकमपर्याप्तकेन सह य एकैको भङ्गः स इह न संभवति किन्तु शेषा एव, ते च विकलेन्द्रियाणां द्वौ द्वावेवेति षट्, तिर्यक्पञ्चेन्द्रियाणामष्टौ, ॥३२१॥

मनुष्याणामष्टौ, देवानामष्टौ, *सर्वसंख्यया एकविंशत्युदये द्वात्रिंशत्* । चतुर्विंशत्युदय एकेन्द्रियेषु मध्ये उत्पन्नमात्रस्य, अत्रापि बादरपर्याप्तकेन सह यश कीर्त्ययशःकीर्तिभ्यां यौ द्वौ भङ्गौ तावेव संभवतः न शेषाः, सूक्ष्मेषु साधारणेषु तेजोवायुषु च मध्ये सासादनस्योत्पादाभावात् । पञ्चविंशत्युदयो देवेषु मध्ये उत्पन्नमात्रस्य, तत्राष्टौ भङ्गाः, ते च स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिभिर्देवसेयाः । षड्विंशत्युदयो विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्येषु मध्ये उत्पन्नमात्रस्य, अत्राप्यपर्याप्तकेन सह य एकैको भङ्गः स न संभवति, अपर्याप्तकमध्ये सासादनस्योत्पादाभावात्, शेषास्तु सर्वे संभविनः, ते च विकलेन्द्रियाणां प्रत्येकं द्वौ द्वाविति षट् । तिर्यक्पञ्चेन्द्रियाणां द्वे शते अष्टाशीत्यधिके (२८८), मनुष्याणामपि द्वे शते अष्टाशीत्यधिके (२८८), सर्वसंख्यया षड्विंशत्युदये पञ्चशतानि द्व्यशीत्यधिकानि (५८२)। सप्तविंशत्युदयाष्टाविंशत्युदयौ न संभवतः, तौ हि उत्पत्त्यनन्तरमन्तर्मुहूर्ते गते सति भवतः, सासादनभावश्चोत्पत्त्यनन्तरमुत्कर्षतः किञ्चिदूनषडावलिकामात्रं काले, ततो एतौ सासादनस्य न घटेते । एकोनत्रिंशदुदयो देवनैरयिकाणां स्वस्थानगतानां प्रथमसम्यक्त्वात्प्रच्यवमानानां प्राप्यते, तत्र देवस्यैकोनत्रिंशदुदये भङ्गा अष्टौ नैरयिकस्यैक इति सर्वसंख्या नव । त्रिंशदुदयस्तिर्यग्मनुष्याणां पर्याप्तानां, प्रथमसम्यक्त्वात्प्रच्यवमानानां देवानां वा उत्तरवैक्रिये वर्तमानानां सासादनानाम्, तत्र तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च त्रिंशदुदये प्रत्येकं द्विपञ्चाशदधिकानि एकादशशतानि (११५२), देवस्याष्टौ, सर्वसंख्यया त्रयोविंशतिशतानि द्वादशाधिकानि (२३१२), एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणां पर्याप्तानां प्रथमसम्यक्त्वात्प्रच्यवमानानाम्, अत्र भङ्गा एकादशशतानि द्विपञ्चाशदधिकानि (११५२)। तथा च उक्तरूपाया एव भङ्गसंख्याया निरूपणार्थमुक्तम्—बत्तीस दोन्नि अट्ठ य बासीय सया य पंच नव उदया । बारहिगा तेवीसा बावन्नेक्कारस सया य ॥१४॥" सर्वसंख्यया सप्तनवत्यधिकानि चत्वारिंशच्छतानि (४०९७)।

||३२२|| सासादनस्य द्वे सत्तास्थाने, तद्यथा-द्विनवतिरष्टाशीतिश्च । तत्र द्विनवतिर्य आहारकचतुष्टयं बद्ध्वा उपशमश्रेणीतः प्रतिपतन् सासादनभावमुपगच्छति तस्य लभ्यते, न शेषस्य । अष्टाशीतिश्चतुर्गतिकानामपि सासादनानाम् । नाम्नोबन्धोदयसत्तास्थानानां संवेधः

संप्रति संवेध उच्यते—तत्राष्टाविंशतिं बध्नतः सासादनस्य द्वे उदयस्थाने, तद्यथा-त्रिंशत् एकत्रिंशत्। अष्टाविंशतिर्हि सासादनस्य बन्धयोग्या भवति देवगतिप्रायोग्या, न च करणापर्याप्तः सासादनो देवगतिप्रायोग्यं बध्नाति, ततः शेषा उदया नोपपद्यन्ते, अत्र मनुष्यमधिकृत्य त्रिंशदुदये द्वे अपि सत्तास्थाने । तिर्यक्पञ्चेन्द्रियसासादनमधिकृत्याष्टाशीतिरेव यतो द्विनवतिरुपशमश्रेणितः प्रतिपततो लभ्यते, न च तिरश्चामुपशमश्रेणिसंभवः। एकत्रिंशदुदये त्वष्टाशीतिरेव, यत एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणाम्, न च तिरश्चामुक्तयुक्तेर्द्विनवतिः संभवति। एकोनत्रिंशतं तिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यां बध्नतः सप्ताप्युदयस्थानानि, तत्र एकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवनैरयिकाणां सासादनानां स्वीयस्वीयोदयस्थानेषु वर्त्तमानानामेकमेव सत्तास्थानमष्टाशीतिः, नवरं मनुष्यस्य त्रिंशदुदये वर्त्तमानस्योपशमश्रेणीतः प्रतिपततः सासादनस्य द्विनवतिः, एवं त्रिंशद्बन्धकस्यापि वक्तव्यम्, सर्वाण्यप्युदयस्थानान्यधिकृत्य सामान्येन सर्वसंख्यया सासादनस्याष्टौ सत्तास्थानानि ।

संप्रति सम्यग्मिथ्यादृष्टेर्बन्धोदयसत्तास्थानान्यभिधीयन्ते । तत्र सम्यग्मिथ्यादृष्टेर्द्वे बन्धस्थाने, तद्यथा-अष्टाविंशतिरेकोनत्रिंशत् । तत्र तिर्यग्मनुष्याणां सम्यग्मिथ्यादृष्टीनां देवगतिप्रायोग्यमेव बन्धमायाति, ततस्तेषामष्टाविंशतिः, तत्र भङ्गा अष्टौ । एकोनत्रिंशन्मनुष्यगतिप्रायोग्यं बध्नतां देवनैरयिकाणाम्, तत्राप्यष्टौ भङ्गाः। ते च उभयत्रापि स्थिरास्थिरशुभाशुभयशःकीर्त्त्ययशःकीर्त्तिपदैरवसेयाः । ||३२२||
शेषास्तु परावर्त्तमानाः प्रकृतयः शुभा एव सम्यग्मिथ्यादृष्टीनां बन्धमायान्ति, ततः शेषभङ्गा न प्राप्यन्ते । त्रीणि उदयस्थानानि,

तद्यथा-एकोनत्रिंशत् त्रिंशत् एकत्रिंशत्। तत्रैकोनत्रिंशति देवानधिकृत्याष्टौ भङ्गाः, नैरयिकानधिकृत्यैकः, सर्वसंख्यया नव। त्रिंशति तिर्यक्पञ्चेन्द्रियानधिकृत्य सर्वपर्याप्तिपर्याप्तयोग्यानि द्विपञ्चाशदधिकान्येकादशशतानि ११५२, मनुष्यानप्यधिकृत्य एकादश शतानि द्विपञ्चाशदधिकानि ११५२। सर्वसंख्यया त्रयोविंशतिशतानि चतुरुत्तराणि २३०४। एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियानधिकृत्य, तत्र भङ्गा द्विपञ्चाशदधिकान्येकादशशतानि ११५२। सर्वोदयस्थानभङ्गसंख्या चतुस्त्रिंशच्छतानि पञ्चषष्ट्यधिकानि ३४६५। द्वे सत्तास्थाने, तद्यथा-द्विनवतिरष्टाशीतिश्च।

संप्रति संवेध उच्यते-सम्यग्मिथ्यादृष्टेरष्टाविंशतिबन्धकस्य द्वे उदयस्थाने, तद्यथा-त्रिंशत् एकत्रिंशत्। एकैकस्मिन् उदयस्थाने द्वे द्वे सत्तास्थाने, तद्यथा-द्विनवतिरष्टाशीतिश्च। एकोनत्रिंशद्बन्धकस्य एकमुदयस्थानं एकोनत्रिंशत्, अत्रापि ते एव द्वे सत्तास्थाने, तदेवमेकैकस्मिन् उदयस्थाने द्वे द्वे सत्तास्थाने, इति सर्वसंख्यया षट्।

संप्रत्यविरतसम्यग्दृष्टेर्बन्धोदयसत्तास्थानानि वाच्यानि, तत्राविरतसम्यग्दृष्टेस्त्रीणि बन्धस्थानानि, तद्यथा- अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्र तिर्यग्मनुष्याणामविरतसम्यग्दृष्टीनां देवगतिप्रायोग्यं बध्नतामष्टाविंशतिः, अत्राष्टौ भङ्गाः, अविरतसम्यग्दृष्टयो हि न शेषगतिप्रायोग्यं बध्नन्ति, तेन नरकगतिप्रायोग्या अष्टाविंशतिर्न लभ्यते। मनुष्याणां देवगतिप्रायोग्यं तीर्थकरनामसहितं बध्नतामेकोनत्रिंशत्, अत्राप्यष्टौ भङ्गाः। देवनैरयिकाणां मनुष्यगतिप्रायोग्यं बध्नतामेकोनत्रिंशत्, अत्रापि त एवाष्टौ भङ्गाः। तेषामेव मनुष्यगतिप्रायोग्यं तीर्थकरनामसहितं बध्नतां त्रिंशत्, तत्रापि त एवाष्टौ भङ्गाः।

अष्टावुदयस्थानानि, तद्यथा-एकविंशतिः, पञ्चविंशतिः, षड्विंशतिः सप्तविंशतिः अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्,

एकत्रिंशत् । तत्रैकविंशत्युदयो नैरयिकतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य वेदितव्यः, क्षायिकसम्यग्दृष्टेः पूर्वबद्धायुष्कस्य एतेषु सर्वेष्वप्युत्पादसम्भवात्। अविरतसम्यग्दृष्टिरपर्याप्तकेषु मध्ये न समुत्पद्यते, ततोऽपर्याप्तकोदयवर्जाः शेषा भङ्गाः सर्वेऽपि वेदितव्याः। ते च पञ्चविंशतिः, तत्र तिर्यक्पञ्चेन्द्रियानधिकृत्याष्टौ, मनुष्यानधिकृत्याष्टौ, देवानधिकृत्याष्टौ, नैरयिकानधिकृत्यैकः। पञ्चविंशतिसप्तविंशत्युदयौ देवनैरयिकान् वैक्रियतिर्यङ्मनुष्यांश्चाधिकृत्यावसेयौ। तत्र नैरयिकः क्षायिकसम्यग्यदृष्टिर्वेदकसम्यग्दृष्टिर्वा, देवस्त्रिविधसम्यग्दृष्टिरपि। उक्तं च सप्ततिकाचूर्णौ–पणवीससत्तवीसोदया देवनेरइए वेउव्वियतिरियमणुए य पडुच्च, नेरइगो खइगवेयगसम्मदिट्ठी देवो तिविहसम्मदिट्ठीवित्ति" भङ्गा अत्र सर्वेप्यात्मीयात्मीया द्रष्टव्याः। षड्विंशत्युदयस्तिर्यङ्मनुष्याणां क्षायिकवेदकसम्यग्दृष्टीनाम्। औपशमिकसम्यग्दृष्टिश्च तिर्यङ्मनुष्येषु मध्ये नोत्पद्यते, इति त्रिविधसम्यग्दृष्टीनामिति नोक्तं, वेदकसम्यग्दृष्टिता च तिरश्चो द्वाविंशतिसत्कर्मणो वेदितव्या। अष्टाविंशत्येकोनत्रिंशदुदयौ नैरयिकतिर्यङ्मनुष्यदेवानाम्, त्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियमनुष्यदेवानाम् एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणाम्। भङ्गा आत्मीया आत्मीयाः सर्वेऽपि द्रष्टव्याः।

चत्वारिसत्तास्थानानि, तथा–त्रिनवतिः, द्विनवतिः, एकोननवतिः, अष्टाशीतिश्च। तत्र योऽप्रमत्तसंयतोऽपूर्वकरणो वा तीर्थकराहारकसहितामेकत्रिंशतं बद्ध्वा पश्चादविरतसम्यग्दृष्टिर्देवो वा जातः, तमधिकृत्य त्रिनवतिः, यस्त्वाहारकं बद्ध्वा परिणामपरावर्त्तनेन मिथ्यात्वमनुगम्य चतसृणां गतीनामन्यतमस्यां गतावुत्पन्नः, तस्य तत्र तत्र गतौ भूयोऽपि सम्यक्त्वं प्रतिपन्नस्य द्विनवतिः, देवमनुष्येषु मध्ये मिथ्यात्वमप्रतिपन्नस्यापि द्विनवतिः प्राप्यते, एकोननवतिर्देवनैरयिकमनुष्याणामविरतसम्यग्दृष्टीनाम्, ते हि त्रयोऽपि तीर्थकरनाम समर्जयन्ति, तिर्यक्षु तीर्थकरनामसत्कर्मा नोत्पद्यते, इति तिर्यग् न गृहीतः। अष्टाशीतिश्चतुर्गतिकानामविरतसम्यग्दृष्टीनाम्।

सम्प्रति सप्तवेध उच्यते–तत्राविरतसम्यग्दृष्टेरष्टाविंशतिबन्धकस्याष्टावप्युदयस्थानानि, तानि तिर्यग्मनुष्यानधिकृत्य, तत्रापि पञ्चविंशति-सप्तविंशत्युदयौ वैक्रियतिर्यग्मनुष्यानधिकृत्य। एकैकस्मिन् उदयस्थाने द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च। एकोनत्रिंशद् द्विधा, देवगतिप्रायोग्या नरगतिप्रायोग्या च। तत्र देवगतिप्रायोग्या तीर्थकरनामसहिता, तां च मनुष्या एव बध्नन्ति। तेषां च उदयस्थानानि सप्त। तद्यथा–एकविंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। मनुष्याणामेकत्रिंशच्च संभवति। एकैकस्मिन्नुदयस्थाने द्वे द्वे सत्तास्थाने। तद्यथा–त्रिनवतिरेकोननवतिश्च। मनुष्यगतिप्रायोग्यां चैकोनत्रिंशतं बध्नन्ति देवा नैरयिकाः। तत्र नैरयिकाणामुदयस्थानानि पञ्च, तद्यथा–एकविंशतिः पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्। देवानां पञ्च तावदेतान्येव, षष्ठं तु त्रिंशत्, सा च उद्योतवेदकानामवगन्तव्या। एकैककस्मिन् द्वे द्वे सत्तास्थाने, द्विनवतिरष्टाशीतिश्च। मनुष्यगतिप्रायोग्यां त्रिंशतमविरतसम्यग्दृष्टयो देवा नैरयिकाश्च बध्नन्ति। तत्र देवानामुदयस्थानानि षट्। तानि चानन्तरोक्तान्येव, तेषु प्रत्येकं द्वे सत्तास्थाने, तद्यथा–त्रिनवतिरेकोननवतिश्च। नैरयिकाणामुदयस्थानानि पञ्च, तेषु प्रत्येकं सत्तास्थानमेकोननवतिरेव। तीर्थकराहारकसत्कर्मणो नरकेषूत्पादाभावात्। तदेवं सामान्येन एकविंशत्यादिषु त्रिंशत्पर्यन्तेषूदयस्थानेषु सत्तास्थानानि प्रत्येकं चत्वारि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च। एकत्रिंशदुदये द्वे, द्विनवतिरष्टाशीतिश्च। सर्वसंख्यया त्रिंशत्।

सम्प्रति देशविरतस्य बन्धादिस्थानान्युच्यन्ते–देशविरतस्य द्वे बन्धस्थाने, तद्यथा–अष्टाविंशतिरेकोनत्रिंशत्। तत्राष्टाविंशतिर्मनुष्यस्य तिर्यक्पञ्चेन्द्रियस्य वा देशविरतस्य देवगतिप्रायोग्यं बध्नतो वेदितव्या। तत्राष्टौ भङ्गाः। सैव तीर्थकरनामसहिता एकोनत्रिंशत्, सा च मनुष्यस्यैव तिरश्चां तीर्थकरनामकर्मबन्धाभावात् अत्राप्यष्टौ भङ्गाः।

षट् उदयस्थानानि, तद्यथा—पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत् । तत्राद्यानि चत्वारि वैक्रियतिर्यङ्मनुष्याणां । अत्र एकैक एव भङ्गः, सर्वपदानां प्रशस्तत्वात् । त्रिंशत्, स्वभावस्थानामपि तिर्यङ्मनुष्याणाम्, अत्र भङ्गानां चतुश्चत्वारिंशं शतं १४४, तत्र षड्भिः संस्थानैः षड्भिः संहननैः सुस्वरदुःस्वराभ्यां प्रशस्ताप्रशस्तविहायोगतिभ्यां च जायते, दुर्भगानादेयायशःकीर्त्तिनामुदयो गुणप्रत्ययादेव न भवतीति तदाश्रिता विकल्पा न प्राप्यन्ते । एकत्रिंशत्तिरश्चाम्, तत्रापि त एव भङ्गाः ।

चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च । तत्र योऽप्रमत्तोऽपूर्वकरणो वा तीर्थकराहारकनाम्नी बद्ध्वा परिणामह्रासेन देशविरतो जातस्तस्य त्रिनवतिः, शेषाणां तु भावना अविरतसम्यग्दृष्टेरिव कर्त्तव्या ।

सम्प्रति संवेध उच्यते—तत्र मनुष्यस्य देशविरतस्याष्टाविंशतिबन्धकस्य पञ्च उदयस्थानानि, तद्यथा—पञ्चविंशतिः, सप्तविंशतिः अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत् । एतेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च, एवं तिरश्चोऽपि, नवरं तस्य एकत्रिंशदुदयोऽपि वक्तव्यः । तत्रापि चैते एव द्वे सत्तास्थाने । एकोनत्रिंशद्बन्धो मनुष्यस्य देशविरतस्य, तस्योदयस्थानान्यनन्तरोक्तान्येव पञ्च । तेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—त्रिनवतिरेकोननवतिश्च । तदेवं देशविरतस्य पञ्चविंशत्यादिषु त्रिंशत्पर्यन्तेषु चत्वारि चत्वारि सत्तास्थानानि, एकत्रिंशदुदये द्वे सत्तास्थाने, सर्वसंख्यया द्वाविंशतिः ।

सम्प्रति प्रमत्तसंयतस्य बन्धादिस्थानान्यभिधातव्यानि । तत्र प्रमत्तसंयतस्य द्वे बन्धस्थाने, तद्यथा—अष्टाविंशतिः, एकोनत्रिंशत् ।

१ अत्र मनुष्याणां एकैक एव भङ्गः, तिरश्चां चाद्ययोरेकैकोऽन्तिमयोस्तु द्वौ द्वौ, सर्वपदानां प्रशस्तत्वात्, इति षट्कर्मग्रन्थटीकायां श्रीमलयगिरिपादाः पत्र १८७। २ न केवलं वैक्रियतिर्यङ्मनुष्याणां, स्वभावस्थानामपि, इत्यपि शब्दार्थः

एते च देशविरतस्येव भावनीये।

पञ्च उदयस्थानान्यपि, तद्यथा–पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। एतानि सर्वाण्यपि आहारकसंयतस्य वैक्रियसंयतस्य वा वेदितव्यानि। त्रिंशत् स्वभावस्थसंयतस्यापि। तत्र वैक्रियसंयतानामाहारकसंयतानां च पञ्चविंशतिसप्तविंशत्युदययोः प्रत्येकमेकैको भङ्गः, अष्टाविंशतावेकोनत्रिंशति च द्वौ द्वौ, त्रिंशति चैकैकः, सर्वसंख्यया चतुर्दश। त्रिंशदुदयः स्वभावस्थस्यापि प्राप्यते। तत्र चतुश्चत्वारिंशं शतं भङ्गानां १४४, तच्च देशविरतस्येव भावनीयम्। सर्वसंख्यया अष्टपञ्चाशदधिकं शतं १५८।

चत्वारि सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च।

सम्प्रति संवेध उच्यते–अष्टाविंशतिबन्धकस्य पञ्चस्वपि उदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च। तत्राहारकसंयतस्य द्विनवतिरेव, आहारकसत्कर्मा हि आहारकशरीरं उत्पादयतीति, वैक्रियसंयतस्य पुनर्द्वे अपि, तीर्थकरनामसत्कर्मा चाष्टाविंशतिं न बध्नातीति त्रिनवतिरेकोननवतिश्च न प्राप्यते। एकोनत्रिंशद्बन्धकस्य पञ्चस्वपि उदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने, तद्यथा–त्रिनवतिरेकोननवतिश्च। तत्राहारकसंयतस्य त्रिनवतिरेव, तत्रैकोनत्रिंशद्बन्धकस्य नियमात्तीर्थकराहारकसद्भावात्, वैक्रियसंयतस्य पुनर्द्वे अपि। तदेवं प्रमत्तसंयतस्य सर्वेषूदयस्थानेषु प्रत्येकं चत्वारि सत्तास्थानानि प्राप्यन्ते, इति सर्वसंख्यया विंशतिः।

इदानीमप्रमत्तसंयतस्य बन्धादीन्युच्यन्ते–अप्रमत्तसंयतस्य चत्वारि बन्धस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। तत्राद्ये द्वे प्रमत्तसंयतस्येव भावनीये। सैवाष्टाविंशतिराहारकद्विकसहिता त्रिंशत्, तीर्थकराहारकद्विकसहिता त्वेकत्रिंशत्। एतेषु च चतुर्ष्वपि बन्धस्थानेषु भङ्ग एकैक एव वेदितव्यः, अस्थिराशुभायशःकीर्तिनामप्रमत्तसंयते बन्धाभावात्।

द्वे उदयस्थाने, एकोनत्रिंशत् त्रिंशत्। तत्रैकोनत्रिंशत् यो नाम पूर्वसंयतः सन् आहारकं वैक्रियं वा निर्वर्त्य पश्चादप्रमत्तभावं गच्छति तस्य प्राप्यते। अत्र द्वौ भङ्गौ, एको वैक्रियस्य, अपर आहारकस्य। त्रिंशदुदयेऽपि प्रागिव द्वौ भङ्गौ। तथा स्वभावस्थस्याप्यप्रमत्तसंयतस्य तदुदयो भवति। अत्र भङ्गाश्चतुश्चत्वारिंशशतं १४४। सर्वसंख्यया अष्टचत्वारिंशं शतं १४८।

सत्तास्थानानानि चत्वारि, तद्यथा–त्रिनवतिः, द्विनवतिः, एकोननवतिः, अष्टाशीतिश्च।

सम्प्रति संवेध उच्यते—अष्टाविंशतिबन्धकस्य द्वयोरप्युदयस्थानयोरेकैकं सत्कर्म अष्टाशीतिः। एकोनत्रिंशद्बन्धकस्यापि द्वयोरप्युदयस्थानयोरेकैकं सत्तास्थानं एकोननवतिः। त्रिंशद्बन्धकस्यापि द्वयोरप्युदयस्थानयोरेकैकं सत्तास्थानं द्विनवतिः। एकत्रिंशद्बन्धकस्यापि द्वयोरपि उदयस्थानयोरेकैकं सत्तास्थानं त्रिनवतिः। यस्य हि तीर्थकरनामाहारकं वा सत्, स नियमात्तद्बध्नातीति, तेन एकैकस्मिन् बन्धे एकैकमेव सत्तास्थानं, सर्वसंख्यया अष्टौ।

सम्प्रत्यपूर्वकरणस्य बन्धादीन्युच्यन्ते–अपूर्वकरणस्य पञ्च बन्धस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका च। तत्राद्यानि चत्वारि अप्रमत्तसंयतस्येव द्रष्टव्यानि, एका तु यशःकीर्त्तिः, सा च देवगतिप्रायोग्यबन्धव्यवच्छेदे सति वेदितव्या।

एकमुदयस्थानं त्रिंशत्, अत्र वज्रर्षभनाराचसंहननसंस्थानषट्कसुस्वरदुःस्वरप्रशस्ताप्रशस्तविहायोगतिभिर्भङ्गाश्चतुर्विंशतिः। अन्ये त्वाचार्या ब्रुवते–आद्यसंहननत्रयान्यतमसंहननयुक्ता अपि उपशमश्रेणिं प्रतिपद्यन्ते, तन्मतेन भङ्गा द्विसप्ततिः ७२। एवमनिवृत्तिबादरसूक्ष्मसम्परायोपशान्तमोहेष्वपि द्रष्टव्यम्।

चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च ।

सम्प्रति सवेध उच्यते—अष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशद्बन्धकानां त्रिंशदुदये सत्तास्थानानि यथाक्रममष्टाशीतिरेकोननवतिर्द्विनवतिस्त्रिनवतिश्च । एकविधबन्धकस्य त्रिंशदुदये चत्वार्यपि सत्तास्थानानि, कथम्? इति चेत्, उच्यते—इह अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्बन्धकाः प्रत्येकं देवगतिप्रायोग्यबन्धव्यवच्छेदे सत्येकविधबन्धका भवन्ति । अष्टाविंशत्यादिबन्धकानां च यथाक्रममष्टाशीत्यादीनि सत्तास्थानानि । तत एकविधबन्धे चत्वार्यपि प्राप्यन्ते ।

सम्प्रत्यनिवृत्तिबादरसम्परायस्य बन्धादिस्थानान्युच्यन्ते—अनिवृत्तिबादरसम्परायस्य एकं बन्धस्थानं यशःकीर्तिः, एकं उदयस्थानं त्रिंशत् । अष्टौ सत्तास्थानानि तद्यथा—त्रिनवतिः, द्विनवतिः, एकोननवतिः, अष्टाशीतिः, अशीतिः, एकोनाशीतिः, षट्सप्ततिः, पञ्चसप्ततिश्च । तत्राद्यानि चत्वार्युपशमश्रेण्यां क्षपकश्रेण्यां वा यावन्नामत्रयोदशकं न क्षयमुपयाति, क्षीणे च त्रिनवत्यादेर्नामत्रयोदशके उपरितनानि चत्वारि सत्तास्थानानि भवन्ति । बन्धोदयसत्तास्थानमेवाभावात् अत्र संवेधो न सम्भवतीति नाभिधीयते ।

सूक्ष्मसम्परायस्य एकं बन्धस्थानं यशःकीर्तिः, एकमुदयस्थानं त्रिंशत् । अष्टौ सत्तास्थानानि, तानि चानिवृत्तिबादरसम्परायस्येव वेदितव्यानि । तत्राद्यानि चत्वार्युपशमश्रेण्यामेव, उपरितनानि तु क्षपकश्रेण्याम् ।

अत ऊर्ध्वं बन्धो न भवतीत्युदयसत्तास्थानान्यभिधीयन्ते—तत्रोपशान्तमोहस्य एकमुदयस्थानं त्रिंशत्, चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च । क्षीणकषायस्य एकमुदयस्थानं त्रिंशत् । अत्र भङ्गाश्चतुर्विंशतिरेव, वज्रर्षभनाराचसंहननयुक्तस्यैव क्षपकश्रेण्यारम्भसम्भवात् । तत्रापि तीर्थकरसत्कर्मणः क्षीणमोहस्य सर्वं संस्थानादि प्रशस्तमेवेत्येक एव भङ्गः । चत्वारि

सत्तास्थानानि, तद्यथा—अशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च । एकोनाशीतिः पञ्चसप्ततिश्चातीर्थकरसत्कर्मणो वेदितव्ये । अशीतिः षट्सप्ततिश्च तीर्थकरसत्कर्मणः । सयोगिकेवलिनोऽष्टावुदयस्थानानि, तद्यथा—विंशतिरेकविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत् । एतानि सामान्यतो नाम्न उदयस्थानचिंतायां सप्रपञ्चं विवृतानीति न भूयो विविच्यन्ते । चत्वारि सत्तास्थानानि, तद्यथा—अशीतिः षट्सप्ततिः एकोनाशीतिः, पञ्चसप्ततिः । सम्प्रति संवेधो वक्तव्यः, स च प्रागिव वेदितव्यः ।

अयोगिकेवलिनो द्वे उदयस्थाने तद्यथा—नव अष्टौ च । तत्राष्टोदयोऽतीर्थकरायोगिकेवलिनो, नवोदयस्तीर्थकरायोगिकेवलिनः ।

षट् सत्तास्थानानि, तद्यथा—अशीतिः, एकोनाशीतिः, षट्सप्ततिः, पञ्चसप्ततिः, नव अष्टौ च । तत्राष्टोदये त्रीणि सत्तास्थानानि, तद्यथा—एकोनाशीतिः, पञ्चसप्ततिरष्टौ च । तत्राद्ये द्वे यावद् द्विचरमसमयस्तावल्लभ्यते, चरमसमयेऽष्टौ । नवोदये त्रीणि सत्तास्थानानि, तद्यथा—अशीतिः, षट्सप्ततिर्नव च । तत्राद्ये द्वे यावद् द्विचरमसमयः, चरमसमये नव । तदेवं गुणस्थानकेषु नाम्नो बन्धोदयसत्तास्थानानि प्रपञ्चितानि ।

नाम्नो गतिषु बन्धोदयसत्स्थानानि संवेधश्च

गतिषु प्रपञ्च्यन्ते—तत्र नैरयिकाणां द्वे बन्धस्थाने, तद्यथा—एकोनत्रिंशत् त्रिंशत् । तत्रैकोनत्रिंशन्मनुष्यगतिप्रायोग्या तिर्यग्गतिप्रायोग्या वा वेदितव्या । त्रिंशत्तिर्यक्पञ्चेन्द्रियप्रायोग्या उद्योतसहिता, मनुष्यगतिप्रायोग्या तु तीर्थकरनामसहिता । भङ्गाश्च प्रागुक्ताः सर्वेऽपि द्रष्टव्याः । पञ्च उदयस्थानानि, तद्यथा—एकविंशतिः पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत् । एतानि सप्रभेदानि प्रागिव वक्तव्यानि । त्रीणि सत्तास्थानानि, तद्यथा—द्विनवतिः, एकोननवतिः, अष्टाशीतिश्च । एकोननवतिर्बद्धतीर्थकरनाम्नो

मिथ्यात्वं गतस्य नरकेषूत्पद्यमानस्यावसेया, त्रिनवतिस्तु न सम्भवति, तीर्थकराहारकसत्कर्मणो नरकेषूत्पादाभावात् ।

संप्रति संवेध उच्यते—नैरयिकस्य तिर्यग्गतिप्रायोग्यामेकोनत्रिंशतं बध्नतः पञ्च उदयस्थानानि, तानि चानन्तरमेवोक्तानि। तेषु प्रत्येकं द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। तीर्थकरसत्कर्मणस्तिर्यग्गतिप्रायोग्यबन्धासंभवात् एकोननवतिर्न लभ्यते। मनुष्यगतिप्रायोग्यां त्वेकोनत्रिंशतं बध्नतः पञ्चस्वपि उदयस्थानेषु प्रत्येकं त्रीणि सत्तास्थानानि, तद्यथा—द्विनवतिरेकोननवतिरष्टाशीतिश्च तीर्थकरनामसत्कर्मा हि नरकेषूत्पन्नो यावन्मिथ्यादृष्टिस्तावदेकोनत्रिंशतं बध्नाति, सम्यक्त्वं तु प्रतिपन्नस्त्रिंशतम्। तीर्थकरनामकर्मणो ऽपि बन्धात्, तिर्यग्गतिप्रायोग्यामुद्योतसहितां त्रिंशतं बध्नतः पञ्चस्वपि उदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। एकोननवत्यभावभावना प्रागिव भावनीया। मनुष्यगतिप्रायोग्यां तीर्थकरनामसहितां त्रिंशतं बध्नतः पञ्चस्वपि उदयस्थानेषु प्रत्येकमेकं सत्तास्थानं एकोननवतिः, सर्वबन्धस्थानोदयस्थानापेक्षया सत्तास्थानानि त्रिंशत्।

संप्रति तिरश्चां बन्धोदयसत्तास्थानान्युच्यन्ते—तत्र तिरश्चां षड् बन्धस्थानानि, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत् त्रिंशत्। एतानि प्रागिव सप्रभेदानि वक्तव्यानि। केवलमेकोनत्रिंशत्त्रिंशच्च या तीर्थकराहारकद्विकसहिता सा न वक्तव्या, तिरश्चां तीर्थकराहारकबन्धासंभवात्। नव उदयस्थानानि, तद्यथा—एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत् एकत्रिंशत्। एतानि एकेन्द्रियविकलेन्द्रियसवैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य सप्रभेदानि प्रागिवाभिधातव्यानि। पञ्च सत्तास्थानानि, तद्यथा—द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च। तीर्थकरसंबन्धीनि क्षपकसंबन्धीनि च सत्तास्थानानि न संभवन्ति, तीर्थकरनाम्नः क्षपकश्रेण्याश्च तिर्यक्ष्वभावात्।

संप्रति संवेध उच्यते—त्रयोविंशतिबन्धकस्य तिरश्च एकविंशत्यादीनि नव उदयस्थानानि, तानि चानन्तरमेवोक्तानि। तत्राद्येषु चतुर्षु एकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशतिरूपेषु प्रत्येकं पञ्च सत्तास्थानानि, तद्यथा—द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिः, इहाष्टसप्ततिस्तेजोवायून् तेजोवायुभवादुद्धृतान् वा अधिकृत्य वेदितव्या। शेषेषु तु सप्तविंशत्यादिषु पञ्चस्वुदयस्थानेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि, सप्तविंशत्याद्युदयेषु हि नियमेन मनुष्यद्विकसंभवादष्टसप्ततिर्नावाप्यते। एवं पञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धकानामपि वक्तव्यम्। नवरमेकोनत्रिंशतं मनुष्यगतिप्रायोग्यां बध्नतः सर्वेष्वप्युदयस्थानेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि। अष्टाविंशतिबन्धकस्य अष्टावुदयस्थानानि, तद्यथा—एकविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। तत्रैकविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपाः पञ्च उदयाः क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा द्वाविंशतिसत्कर्मणां पूर्वबद्धायुषामवगन्तव्याः। एकैकस्मिंश्च द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियतिरश्चां वेदितव्यौ, तत्रापि ते एव द्वे द्वे सत्तास्थाने। त्रिंशदेकत्रिंशदुदयौ सर्वपर्याप्तिपर्याप्तानां सम्यग्दृष्टीनां मिथ्यादृष्टीनां वावसेयौ। एकैकस्मिंश्च त्रीणि त्रीणि सत्तास्थानानि, तद्यथा—द्विनवतिरष्टाशीतिः षडशीतिश्च। षडशीतिर्मिथ्यादृष्टीनामेव बोधव्या, सम्यग्दृष्टीनामसंभवात्, तेषामवश्यं देवद्विकादिबन्धसंभवात्। तदेवं सर्वबन्धस्थानसर्वोदयस्थानापेक्षया सत्तास्थानानां द्वे शते अष्टादशाधिके (२१८)। तथाहि—त्रयोविंशतिपञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धेषु चत्वारिंशत् चत्वारिंशत्सत्तास्थानानि, अष्टाविंशतिबन्धे चाष्टादश।

संप्रति मनुष्यगतौ बन्धोदयसत्तास्थानान्यभिधीयन्ते—मनुष्याणामष्टौ बन्धस्थानानि, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विं-

शतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका च। तानि सर्वाण्यपि प्रागिव सप्रभेदानि वक्तव्यानि, मनुष्याणां चतुर्गतिकप्रायोग्यबन्धसम्भवात्। एकादश उदयस्थानानि, तद्यथा–विंशतिः, एकविंशतिः, पञ्चविंशतिः, षड्विंशति सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, नव, अष्टौ च। एतानि च सामान्यमनुष्यवैक्रियमनुष्याहारकसंयततीर्थकरातीर्थकरसयोग्ययोगिकेवलिनोऽधिकृत्य प्राग्वद्भावनीयानि। एकादश सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिर्नव अष्टौ च। अष्टसप्ततिस्तु न सम्भवति, मनुष्याणामवश्यं मनुष्यद्विकसंभवात्।

संप्रति संवेध उच्यते–तत्र मनुष्यस्य त्रयोविंशतिबन्धकस्य सप्तोदयस्थानानि, तद्यथा–एकविंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। शेषाः केवल्युदया इति न घटन्ते, पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियकारिणो वेदितव्यौ। एकैकस्मिंश्च चत्वारि सत्तास्थानानि, तद्यथा–द्विनवतिः, अष्टाशीतिः, षडशीतिः, अशीतिश्च। नवरं पञ्चविंशत्युदये सप्तविंशत्युदये च द्वे द्वे सत्तास्थाने, तद्यथा द्विनवतिरष्टाशीतिश्च। शेषाणि तु सत्तास्थानानि तीर्थकरक्षपकश्रेणिकेवलिस्थावरगतिप्रायोग्याणीति न संभवन्ति, सर्वसङ्ख्यया चतुर्विंशतिः। एवं पञ्चविंशतिषड्विंशतिबन्धकानामपि वक्तव्यम्। मनुजगतिप्रायोग्यां तिर्यग्गतिप्रायोग्यां च एकोनत्रिंशतं त्रिंशतं च बध्नतामप्येवमेव। अष्टाविंशतिबन्धकानां सप्त उदयाः, तद्यथा–एकविंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्र एकविंशतिषड्विंशत्युदयौ अविरतसम्यग्दृष्टेः करणापर्याप्तस्य, पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियस्याहारकसंयतस्य च। अष्टाविंशत्येकोनत्रिंशतावविरतसम्यग्दृष्टीनां वैक्रियकारिणामाहारकसंयतानां च। त्रिंशत् सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा। एकैकस्मिन् द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च। आहारकसंयतस्य द्विनवतिरेव।

त्रिंशदुदये चत्वारि सत्तास्थानानि, तद्यथा–द्विनवतिः, एकोननवतिः, अष्टाशीतिः, षडशीतिश्च। तत्रैकोननवतिर्नरकगतिप्रायोग्यामष्टाविंशतिं बध्नतो मिथ्यादृष्टेरवसेया। सर्वसङ्ख्यया अष्टाविंशतिबन्धे षोडश सत्तास्थानानि। देवगतिप्रायोग्यां च एकोनत्रिंशतं तीर्थकरसहितां बध्नतः सप्त उदयस्थानानि, तानि चाष्टाविंशतिबन्धकानामिव वेदितव्यानि, नवरमिह त्रिंशदुदयः सम्यग्दृष्टीनामेव वक्तव्यः, सर्वेष्वपि च उदयस्थानेषु द्वे द्वे सत्तास्थाने, तद्यथा–त्रिनवतिरेकोननवतिश्च। तत्राहारकसंयतस्य त्रिनवतिरेव, सर्वसङ्ख्यया चतुर्दश। आहारकसहितां त्रिंशतं बध्नतो द्वे उदयस्थाने, तद्यथा–एकोनत्रिंशत्, त्रिंशत्। तत्र यो नामाहारकसंयतोऽन्तिमकाले अप्रमत्तस्तंप्रत्येकोनत्रिंशत्, आहारकबन्धहेतोर्विशिष्टसंयमस्याभावात्। द्वयोरप्युदयस्थानयोः प्रत्येकमेकं सत्तास्थानं द्विनवतिः। एकत्रिंशद्बन्धकस्य एकमुदयस्थानं त्रिंशत्। एकं सत्तास्थानं त्रिनवतिः। एकविधबन्धकस्य एकमुदयस्थानं त्रिंशत्। अष्टौ सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च। सर्वबन्धस्थानोदयस्थानापेक्षया सत्तास्थानानि शतमेकोनषष्ट्यधिकम्। बन्धाभावे उदयस्थानयोः परस्परं संवेधः सामान्यसंवेधचिन्तायामिव वेदितव्यः।

संप्रति देवानां बन्धोदयसत्तास्थानानि वक्तव्यानि। तत्र देवानां चत्वारि बन्धस्थानानि, तद्यथा–पञ्चविंशतिः, षड्विंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्र पञ्चविंशतिः, षड्विंशतिश्च पर्याप्तबादरप्रत्येकसहितमेकेन्द्रियप्रायोग्यं बध्नतो वेदितव्या। अत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैरष्टौ भङ्गाः। षड्विंशतिरातपोद्योतान्यतरसहिता भवति, ततोऽत्र भङ्गाः षोडश। एकोनत्रिंशन्मनुष्यगतिप्रायोग्या तिर्यग्गतिप्रायोग्या च सप्रभेदा प्रागिवावसेया। त्रिंशत्पुनस्तिर्यक्पञ्चेन्द्रियप्रायोग्या उद्योतसहिताऽष्टाधिकषट्चत्वारिंश-



१ अन्यत्रैकोनत्रिंशति आहारकबन्धहेतोर्विशिष्टसंयमस्याभावात्, इति षष्ठकर्मग्रंथटीकायां पत्र १९२

च्छतर्दसंख्यभेदोपेता प्रागिव वक्तव्या । या तु मनुष्यगतिप्रायोग्या तीर्थकरनामसहिता तत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिभिरष्टौ भङ्गाः । षड् उदयस्थानानि, तद्यथा—एकविंशतिः, पञ्चविंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत् , त्रिंशत् । एतानि प्रागेव सप्रपञ्चमुक्तानीति न भूय उच्यन्ते । चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिः, द्विनवतिः, एकोननवतिः, अष्टाशीतिः । शेषाणि तु न संभवन्ति । तानि हि कानिचिदेकेन्द्रियसंबन्धीनि, कानिचित्क्षपकसंबन्धीनि, ततो देवानां न भवन्ति ।

संप्रति संवेध उच्यते—देवानां पञ्चविंशतिबन्धकानां षट्स्वपि उदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च । एवं षड्विंशत्येकोनत्रिंशद्बन्धकानामपि वेदितव्यम् । उद्योतसहितां तिर्यक्पञ्चेन्द्रियप्रायोग्यां त्रिंशतमपि बध्नतामेवमेव । तीर्थकरसहितां पुनस्त्रिंशतमर्थान्मनुष्यगतिप्रायोग्यां बध्नतः षट्स्वपि उदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने, तद्यथा—त्रिनवतिरेकोननवतिश्च । सर्वसंख्यया सत्तास्थानानि षष्टिरिति ॥१२९॥

**इगि विगले पण बंधा अडवीसूणा उ अट्ठ इयरंमि । पंच छ एक्कारुदया पण पण बारस उ संताणि ॥१३०॥**

(स्वो०)—एकेन्द्रियेषु विकलेन्द्रियेषु पञ्च पञ्च बन्धा भवन्ति, जात्याख्यायामेकवचनम् , त्रयोविंशत्याद्या अष्टाविंशत्या हीनाः, किमुक्तं भवति ? त्रिपञ्चषड्विंशतिबन्धा एकेन्द्रियप्रायोग्याः, पञ्चविंशत्येकोनत्रिंशत्त्रिंशद्बन्धास्तिर्यङ्मनुष्यप्रायोग्या इति । 'इयरम्मि'-त्ति, पञ्चेन्द्रियेष्वष्टापि भवन्ति। पञ्चषडेकादशोदयाः यथासंख्येन, पञ्चैकेन्द्रियेष्वेकविंशत्याद्या उदयाः, षड् विकलेन्द्रियेषूदया एकविंशतिषड्विंशतिअष्टाविंशत्याद्याश्च, पञ्चेन्द्रियेष्वेकादशोदयाः, यतश्चतुर्विंशत्युदयः एकेन्द्रियेष्वेव। एकेन्द्रियविकलेन्द्रियेषु पञ्च सत्स्थानानि, द्विनवत्यष्टाशीति ऋजुत्रिक चेति । तुशब्दोऽपिशब्दार्थः पञ्चेन्द्रियेषु द्वादशापीति गाथार्थः ॥१३०॥

(मलय०)—'वोच्छामी इंदिएसु पुणो' इति, संप्रति पुनरिंद्रियेषु वक्ष्यामि, प्रतिज्ञातमेवाह—एकेन्द्रियविकलेन्द्रियेषु प्रत्येकं त्रयोविंशत्यादीनि अष्टाविंशतिहीनानि पञ्च पञ्च बन्धस्थानानि भवन्ति, तानि चामूनि—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्र देवगतिप्रायोग्यामेकोनत्रिंशतं त्रिंशतं च वर्जयित्वा शेषाणि सर्वाण्यपि सर्वगतिप्रायोग्यानि सप्रभेदानि प्रागिव वक्तव्यानि। 'अट्ठ इयरम्मि' त्ति—इतरस्मिन् पञ्चेन्द्रिये अष्टौ बन्धस्थानानि, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका च। एतानि सर्वाण्यपि सर्वगतिप्रायोग्यानि सप्रभेदानि प्रागिव वक्तव्यानि। 'पंचछइक्कारुदय' त्ति—एकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियाणां यथाक्रमं पञ्च षट् एकादश उदयस्थानानि। तत्रैकेन्द्रियाणाममूनि पञ्च उदयस्थानानि, तद्यथा—एकविंशतिः, चतुर्विंशतिः, पञ्चविंशति षड्विंशतिः, सप्तविंशतिश्च। एतानि सप्रभेदानि पूर्ववद्वक्तव्यानि। विकलेन्द्रियाणां षट् उदयस्थानानि, तद्यथा—एकविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्। एतान्यपि यथा उक्तानि तथैव वक्तव्यानि। पञ्चेन्द्रियाणाममून्येकादशोदयस्थानानि, तद्यथा—विंशतिः, एकविंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, नव, अष्टौ। एकेन्द्रियविकलेन्द्रियसत्कान्युदयस्थानानि वर्जयित्वा शेषाणि सर्वाण्यपि पञ्चेन्द्रियाणां सप्रभेदानि प्रागिव वक्तव्यानि। 'पण पण बारस उ संताणि' त्ति—एकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियाणां यथाक्रमं पञ्च पञ्च द्वादश सत्तास्थानानि। तत्रैकेन्द्रियाणां विकलेन्द्रियाणां पञ्चेमानि, तद्यथा—द्विनवतिः, अष्टाशीतिः, षडशीतिः, अशीतिः, अष्टसप्ततिश्च। पञ्चेन्द्रियाणां सर्वाण्यपि सत्तास्थानानि प्रागिव वक्तव्यानि ॥१३०॥

जीवस्थानेष्वाह—

नाणतरायदसण बन्धोदयसत भंग जे मिच्छे। ते तेरसठाणेसुं सण्णिंमि गुणासिया सव्वे ॥१३१॥

(स्वो०)—बन्धोदयसत्स्थानेषु पञ्च ज्ञानान्तराययोः, दर्शनावरणे नव सद्बन्धयोरुदये पञ्च, चत्वारो वा ९–४–५। एवमूता ये मिथ्यादृष्टौ भङ्गाः त्रिषु कर्मसु ते त्रयोदशसु जीवस्थानेषु भवन्ति। संज्ञिनि ये गुणस्थानोक्ताः सर्वेऽपि भङ्गा भवन्तीति गाथार्थः ॥

(मलय०)—संप्रति जीवस्थानेषु बन्धोदयसत्तास्थानानि प्रतिपिपादयिषुः प्रथमतो ज्ञानावरणदर्शनावरणान्तरायाणां प्रतिपादयति—ज्ञानावरणान्तरायदर्शनावरणानां बन्धोदयसत्तास्थानेषु ये भङ्गा मिथ्यादृष्टौ भवन्ति, त एव पर्याप्तसंज्ञिपञ्चेन्द्रियवर्जेषु शेषेषु त्रयोदशसु जीवस्थानेषु वेदितव्याः। तत्र ज्ञानावरणस्यान्तरायस्य च प्रत्येकं पञ्चविधो बन्धः पञ्चविध उदयः पञ्चविधा सत्ता, ज्ञानावरणान्तराययोर्ध्रुवबन्धोदयसत्ताकत्वात्। दर्शनावरणस्य नवविधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, अथवा नवविधो बन्धः पञ्चविध उदयो नवविधा सत्ता। संज्ञिनि पर्याप्ते पुनर्ये गुणाश्रिताः—गुणस्थानकोक्ता भङ्गास्ते सर्वे अन्यूनातिरिक्ता वेदितव्याः ॥१३१॥

तेरससु वेयणीयस्स आइमा होंति भंगया चउरो। निच्चुदय तिण्णि गोए सव्वे दोण्हंपि सण्णिस्स॥१३२॥

(स्वो०)—त्रयोदशसु जीवस्थानेषु वेदनीयस्याद्याश्चत्वारो भङ्गा भवन्ति, सातासातबन्धोपलक्षिताः। नीचैर्गोत्रोदये ये त्रयो भङ्गा व्यवस्थितास्ते त्रयोदशसु जीवस्थानेषु भवन्ति, संज्ञिनो द्वयोरपि कर्मणोरखिलाः सम्पूर्णा अपिशब्दात्करणापर्याप्तसंज्ञिदेवस्य चतुर्थोऽपि भवतीति गाथार्थः ॥१३२॥

(मलय०)—सम्प्रति वेदनीयगोत्रयोर्जीवस्थानेषु भङ्गानाह—त्रयोदशस्वाद्येषु जीवस्थानेषु वेदनीयस्यादिमाश्चत्वारो भङ्गा भवन्ति।

तद्यथा—असातस्य बन्धोऽसातस्योदयः सातासाते सती, असातस्य बन्धः सातस्योदयः सातासाते सती, अथवा सातस्य बन्धोऽसातस्योदयः सातासाते सती, अथवा सातस्य बन्धः सातस्योदयः सातासाते सती। तथा एतेष्वेव त्रयोदशसु जीवस्थानेषु गोत्रे गोत्रस्य नीचैर्गोत्रोदयेन त्रयो भङ्गा भवन्ति। तद्यथा—नीचैर्गोत्रस्य बन्धः, नीचैर्गोत्रस्योदयः, नीचैर्गोत्रं सत्, एष विकल्पस्तेजोवायुकायिकेषु लभ्यते, तेजोवायुभवादुध्धृतेषु वा शेषजीवेषु कियत्कालम्, अथवा नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती, अथवा उच्चैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती। शेषास्तु भङ्गा न संभवन्ति, तेषूच्चैर्गोत्रस्योदयाभावात्। संज्ञिनः पुनर्द्वयोरपि वेदनीयगोत्रयोः सर्वे भङ्गा भवन्ति, ते च यथाधस्तादुक्तास्तथा वेदितव्याः ॥१३२॥

**तिरिउदए नव भंगा जे ते सव्वे असण्णि पज्जत्ते। नारयसुरचउभंगाय रहिया इगिविगलदुविहाणं ॥१३३॥**

(स्वो०)—तिर्यगायुरुदये नव भङ्गास्ते सर्वेऽप्यसंज्ञिनि पर्याप्ते भवन्त्यायुषः। नारकसुरचतुर्भङ्गकरहितास्त एव नव पञ्च भवन्ति, (ते)एकेन्द्रियाणां (विकलेन्द्रियाणां) पर्याप्तापर्याप्तानां, देवनारकबन्धोपलक्षितौ तद्बन्धोपरमभङ्गौ च न भवत इति गाथार्थः १३३॥

(मलय०)-संप्रत्यायुषो जीवस्थानेषु भङ्गानाह—तिर्यगायुरुदये ये नव भङ्गाः प्रागुपदर्शिताः, ते सर्वे असंज्ञिपर्याप्ते वेदितव्याः, तेषां सर्वेषामपि तत्र संभवात्। तथा त एव नवभङ्गा नारकसुरापेक्षया ये चत्वारो भङ्गास्तद्रहिताः शेषाः पञ्चभङ्गा एकेन्द्रियाणां विकलेन्द्रियाणां च प्रत्येकं द्विविधानां पर्याप्तापर्याप्तरूपाणां वेदितव्याः, एकेन्द्रियाणां देवनारकायुर्बन्धो न भवतीति तदाश्रिता भङ्गा न प्राप्यन्ते ॥१३३॥

अस्सण्णि अपज्जत्ते तिरिउदए पच जह उ तह मणुए। मणपज्जत्ते सव्वे इयरे पुण दस उ पुव्वुत्ता ॥१३४॥

(स्वो०)—असंज्ञिन्यपर्याप्ते तिर्यगायुरुदये पञ्च भङ्गा यथा भवन्ति, तथा मनुष्यायुरुदयेनापि ये पञ्च भङ्गास्ते मनुष्यासंज्ञ्यपर्याप्तस्य भवन्ति। संज्ञिपर्याप्तस्य सर्वेऽपि अष्टाविंशतिसंख्या अपि भवन्ति। 'इयरे'त्ति मनसा अपर्याप्ते संज्ञिसामान्ये मनुष्ये पञ्च तिरश्च्यपि पञ्च प्रागुक्ता उभयोरपि दश, तुशब्दात् देवनारकयोः करणापर्याप्तयोः स्वापेक्षैकभङ्गो भवति, एवं द्वादश, लब्ध्यपर्याप्तके दशैव, असंज्ञिन्यपर्याप्तके सम्मूर्छिममनुष्यसम्भवाद्दशेति गाथार्थः ॥१३४॥

(मलय०)—असंज्ञिनि अपर्याप्ते तिर्यगायुरुदये यथा अनन्तरोक्ताः पञ्च भङ्गा लभ्यन्ते, तथा मनुष्येऽपि, किमुक्तं भवति? असंज्ञिनि अपर्याप्ते तिरश्चि मनुष्ये च य एव प्रागुक्ता एकेन्द्रियविकलेन्द्रियाणां पञ्च पञ्च भङ्गाः त एवान्यूनातिरिक्ता द्रष्टव्याः। तथा मनसा पर्याप्ते सर्वेऽपि अष्टाविंशतिरप्यायुषो भङ्गा वेदितव्याः। इतरस्मिंश्च मनसा अपर्याप्ते पुनर्दश पूर्वोक्ताः, तत्र मनसा अपर्याप्ते संज्ञिनि सामान्ये पञ्च मनुष्ये पञ्च तिरश्चि, सर्वसंख्यया दशैते लब्ध्यपर्याप्तके। तुशब्दाद्देवनारकाणां करणापर्याप्तानामेकैको भङ्गः, सर्वसंख्यया द्वादश ॥१३४॥

बंधोदयसंताइं पुण्णाइं सण्णिणो उ मोहस्स। बायरविगलासण्णिसु पज्जेसु उ आइमा बंधा ॥१३५॥

(स्वो०)—बन्धोदयसत्स्थानानि पूर्णानि-अविकलानि, पर्याप्तसंज्ञिनो मोहनीयस्य भवन्ति। बादरैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिषु पर्याप्तकनामकर्मोदयेषु तुशब्दादाहारपर्याप्तायेकविंशतिबन्धोऽपि स्यात्, लब्धिकरणापर्याप्तकेषु द्वाविंशतिबन्ध एव भवति, अतो द्वावाद्यौ

बन्धौ पञ्चसु भवत इति गाथार्थः ॥१३५॥

(मलय०)—तदेवं जीवस्थानेष्वायुषो बन्धादिस्थानान्युपदर्श्य सम्प्रति मोहनीयस्योपदर्शयति–'मोहस्स' मोहनीयस्य बन्धोदयसत्ता-स्थानानि संज्ञिनः पर्याप्तस्य पूर्णान्यविकलानि सप्रभेदानि यथाऽधस्तादुक्तानि तथैव द्रष्टव्यानि। बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियरूपविकलेन्द्रियासंज्ञिपञ्चेन्द्रियेषु पर्याप्तेष्वादिमौ द्वौ बन्धौ, तद्यथा–द्वाविंशतिरेकविंशतिश्च। इमौ च यथाधस्तादुक्तौ तथावगन्तव्यौ, नवरमेकविंशतिः करणापर्याप्तावस्थायां द्रष्टव्या ॥१३५॥

**अट्ठसु बावीसो च्चिय बंधो अट्ठाइ उदयतिण्णेव। सत्तगजुया उ पंचसु अडसत्त छवीस संतंमि ॥१३६॥**

(स्वो०)—अष्टसु जीवस्थानेषूक्तशेषेषु सूक्ष्मबादरविकलासंज्ञिसंज्ञ्यपर्याप्तेषु सूक्ष्मपर्याप्ते च द्वाविंशतिबन्ध एव भवति, तद्भणने भङ्गका अप्यविकला निर्दिष्टास्ते न पृथगुक्ताः। अष्टादयस्त्रय उदयाः–अष्ट नव दशेति अष्टसु पूर्वोक्तजीवस्थानेषु। सप्तकयुक्तास्त एवाष्टादयस्त्रय उदयाः सप्ताष्ट नवदशेति पञ्चसु पूर्वोक्तस्थानेषु भवन्ति। उभयोरपि पञ्चकाष्टकयोः, किमुक्तं भवति–त्रयोदशसु जीवस्थानेषु अष्टसप्तषड्विंशतयः त्रीणि सत्स्थानानि भवन्ति, भङ्गकास्तद्गता अविकला भवन्ति। तुशब्दात् पञ्चानां यदैकविंशतिबन्धस्तदा सप्तादय उदयाः, अष्टाविंशत्येव सत्स्थानम्, यदा तु द्वाविंशतिबन्धस्तदाऽष्टादयोऽभिहिता एवोदयाः। संज्ञिनः करणापर्याप्तस्य पूर्वोक्तं सर्वमपि स्यात्। द्वितीयैवकाराधिक्यात् यदा तस्य करणापर्याप्तस्य सप्तदश बन्धो भवति, तदा षडाद्याश्चत्वार उदया अष्टाविंशतिचतुर्विंशत्येकविंशति रूपाणि त्रीणि सत्स्थानानि सविकल्पानि भवन्तीति गाथार्थः ॥१३६॥



(मलय०)—अष्टसु पर्याप्तापर्याप्तसूक्ष्मैकेन्द्रियापर्याप्तबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिरूपेषु जीवस्थानेषु द्वाविंशति-

रेवैको बन्ध, स च सप्रभेद प्राग्वदुक्तस्वरूपः । एतेष्वेव चाष्टसु जीवस्थानेषु प्रत्येकमष्टादयः—अष्टनवदशरूपाणि त्रीणि त्रीणि उदयस्थानानि भवन्ति । यत्तु सप्तकमुदयस्थानमनन्तानुबन्ध्युदयरहितं तत्र प्राप्यते, तेषामवश्यमनन्तानुबन्ध्युदयसहितत्वात् । वेदश्च तेषामुदयप्राप्तो नपुंसकवेद एव, न स्त्रीवेदपुरुषवेदौ, ततोऽष्टोदयेऽष्टौ भङ्गाः, नवोदये षोडश, दशोदयेऽष्टौ, सर्वसंख्यया प्रत्येकं द्वात्रिंशद्भङ्गाः । एत एव च त्रयः सप्तकयुता' पञ्चसु पूर्वोक्तेषु जीवस्थानेषु पर्याप्तबादरैकेन्द्रियविकलेन्द्रियासंज्ञिरूपेषु भवन्ति । इदमुक्तं भवति—प्रत्येकमेतेषु पञ्चसु जीवस्थानेषु चत्वारि चत्वारि उदयस्थानानि, तद्यथा—सप्त अष्टौ नव दश । तत्र सासादने त्रीणि, तद्यथा—सप्त अष्टौ नव । मिथ्यादृष्टावष्टादीनि त्रीणि । वेदश्चैतेषामुदयप्राप्तो नपुंसकवेद एव । ततश्चतुर्विंशतिस्थाने भङ्गानामष्टकं वेदितव्यम् । तेन सासादने मिथ्यादृष्टौ च प्रत्येकं द्वात्रिंशद्भङ्गा इति । एतेषु च पञ्चकाष्टकरूपेषु त्रयोदशसु जीवस्थानेषु त्रीणि त्रीणि सत्तास्थानानि, तद्यथा-अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिश्च । तुशब्दाच्चिक्यारपञ्चसु जीवस्थानेषु बादरैकेन्द्रियादिषु सासादनभावे वर्तमानेषु अष्टाविंशतिरेकं सत्तास्थानम् । संज्ञिनि तु करणापर्याप्ते कस्मिंश्चित्सप्तदशबन्धेऽपि पञ्चादीनि च चत्वार्युदयस्थानानि, चतुर्विंशतिरूपाण्यपि च सत्तास्थानानि वेदितव्यानि ॥१३६॥

**सण्णिम्मि अट्ठसण्णिम्मि च्छाइमा तेऽट्ठवीसपरिहीणा । पज्जत्तविगलवायरसुहुमेसु तहा अपज्जाण ॥१३७॥**

(स्वो०)—संज्ञिनि पर्याप्ते अष्टावपि बन्धाः सभेदा भवन्ति । असंज्ञिनि पञ्चाद्या एकत्रिंशदेकबन्धौ वर्जयित्वा शेषा भवन्ति, त एव षड् अष्टाविंशतिविहीना' पञ्च बन्धा भवन्ति पर्याप्तविकलेन्द्रियबादरसूक्ष्मैकेन्द्रियेषु, तथा तेष्वेवापर्याप्तेषु । सप्तम्यर्थे षष्ठिकरणादपर्याप्तनामोदययोरसंज्ञिसंज्ञिनोरप्येत एव पञ्च बन्धा भवन्ति । अपर्याप्तानां तदुपलक्षिता भङ्गा, एवं सूक्ष्मबादरपर्याप्तोपलक्षितास्तद्विधानां इन्द्रि-

योपलक्षिताश्च स्वबुद्ध्या योजनीया इति गाथार्थः ॥१३७॥

(मलय०)—तदेवमुक्तानि मोहनीयस्य जीवस्थानेषु बन्धोदयसत्तास्थानानि, सम्प्रति नामकर्मण आह–संज्ञिनि पर्याप्ते अष्टावपि बन्धस्थानानि भवन्ति। तानि च यथा अधस्तात्प्रभेदान्युक्तानि, तथैव च वक्तव्यानि। असंज्ञिनि पर्याप्ते आदिमानि षड् बन्धस्थानानि भवन्ति। तद्यथा–त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्। असंज्ञिपञ्चेन्द्रिया हि पर्याप्ता नरकगतिदेवगतिप्रायोग्यमपि बध्नन्ति ततस्तेषामष्टाविंशतिरपि बन्धस्थानं लभ्यते। तान्येवादिमानि षड् बन्धस्थानानि अष्टाविंशतिपरिहीनानि शेषाणि पञ्च पर्याप्तविकलेन्द्रियबादरसूक्ष्मैकेन्द्रियेषु, तथा तेष्वेवापर्याप्तकेषु भवन्ति। असंज्ञिसंज्ञिनोरपि लब्ध्यपर्याप्तकयोरेतान्येव पञ्च पञ्च बन्धस्थानानि वेदितव्यानि। अपर्याप्ता हि सर्वेऽपि तिर्यङ्मनुष्यप्रायोग्यमेव बध्नन्ति न देवनारकप्रायोग्यम्। तत एतयोरपि लब्ध्यपर्याप्तकयोः पञ्चैव बन्धस्थानानि प्राप्यन्ते। तानि च तिर्यङ्मनुष्यप्रायोग्याणि यथाधस्तादुक्तानि तथैव भावनीयानि॥

**इगवीसाइ दो चउ पण उदया अपज्जसुहुमबाराणं। सण्णिस्स अचउवीसा इगि छडवीसाइ सेसाणं॥१३८॥**

(स्वो०)—एकविंशत्याद्यौ द्वावुदयौ लब्ध्याऽपर्याप्तकस्य सप्तप्रकारस्य भवतः। एकविंशतिचतुर्विंशत्युदयावेकेन्द्रियापर्याप्तस्य द्विविधस्यापि। एकविंशतिषड्विंशत्युदयौ त्रसापर्याप्तस्य पञ्चप्रकारस्य भवतः। एकविंशत्याद्याश्चत्वार उदयाः पर्याप्तसूक्ष्मस्यैकेन्द्रियप्रायोग्या एव भवन्ति। एकविंशत्याद्याः पञ्चोदयाः पर्याप्तबादरैकेन्द्रियप्रायोग्या भवन्ति। विकल्पाः स्वनामोदयाङ्काः सुज्ञाना एव। पर्याप्तसंज्ञिनश्चतुर्विंशत्युदयं वर्जयित्वा सर्वेऽप्युदया भवन्ति, पर्याप्तपञ्चेन्द्रियनामोदयाङ्का विकल्पाश्च। एकविंशतिषड्विंशत्युदयावष्टाविंशत्याद्याश्चत्वार उदयाः शेषाणां पर्याप्तनामोदयवतां द्वित्रिचतुरिन्द्रियाऽसंज्ञिनां भवन्तीति गाथार्थः ॥१३८॥ ॥३३२॥

(मलय०)—उदयस्थानप्रतिपादनार्थमाह—एकविंशत्यादिकौ द्वावुदयौ सर्वेषामपर्याप्तकानां, तत्र सूक्ष्मबादरैकेन्द्रिययोरपर्याप्तकयोरिमौ द्वावुदयौ, तद्यथा—एकविंशतिश्चतुर्विंशतिश्च। तत्र सूक्ष्मापर्याप्तस्यैकविंशतिरियं—तिर्यग्गतिस्तिर्यगानुपूर्वी तैजसं कार्मणं अगुरुलघु वर्णादिचतुष्टयं एकेन्द्रियजातिः स्थावरनाम सूक्ष्मनाम अपर्याप्तकनाम स्थिरास्थिरे शुभाशुभे दुर्भगमनादेयमयशःकीर्त्तिर्निर्माणमित्येषा चापान्तरालगतौ वर्त्तमानस्य प्राप्यते। अत्र च एक एव भङ्गः। अपर्याप्तस्य परावर्त्तमानशुभप्रकृतीनामुदयाभावात्। बादरापर्याप्तकस्याप्येषैवैकविंशतिरवसेया, नवरं सूक्ष्मनामस्थाने बादरनाम वक्तव्यम्, अत्राप्येक एव भङ्गः। उभयोरपि तस्यामेकविंशतौ औदारिकशरीरं हुण्डसंस्थानमुपघातनाम प्रत्येकसाधारणयोरेकतरमिति प्रकृतिचतुष्टयप्रक्षेपे तिर्यगानुपूर्व्यां चापनीतायां चतुर्विंशतिः। अत्र प्रत्येकसाधारणाभ्यां सूक्ष्मापर्याप्तस्य बादरापर्याप्तकस्य च प्रत्येकं द्वौ भङ्गौ। विकलेन्द्रियासंज्ञिसंज्ञिनां चापर्याप्तानामिमे द्वे द्वे उदयस्थाने, तद्यथा—एकविंशतिः षड्विंशतिश्च। तत्रैकविंशतिरपर्याप्तद्वीन्द्रियाणामियं—तैजसं कार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयं निर्माणं तिर्यग्गतिस्तिर्यगानुपूर्व्यौ द्वीन्द्रियजातिस्त्रसनाम बादरनाम अपर्याप्तकनाम दुर्भगमनादेयमयशःकीर्त्तिरिति। एषा चैकविंशतिरपान्तरालगतौ वर्त्तमानानामवसेया। अत्र सर्वाण्यपि पदानि अप्रशस्तान्येवेत्येक एव भङ्गः। ततः शरीरस्थस्यौदारिकमौदारिकाङ्गोपाङ्गं हुण्डसंस्थानं सेवार्त्तसंहननमुपघातं प्रत्येकमिति प्रकृतिषट्के प्रक्षिप्यते, तिर्यगानुपूर्वी चापनीयते। ततः षड्विंशतिर्भवति। अत्राप्येक एव भङ्गः। एवं त्रीन्द्रियादीनामप्यवगन्तव्यम्, नवरं त्रीन्द्रियजातिरित्युच्चारणीयम्। तदेवमपर्याप्तद्वीन्द्रियादीनां प्रत्येकं द्वे उदयस्थाने अधिकृत्य द्वौ द्वौ भङ्गौ वेदितव्यौ, केवलमपर्याप्तसंज्ञिनश्चत्वारः, यतो द्वौ भङ्गावपर्याप्तसंज्ञिनस्तिरश्चः प्राप्येते, द्वौ च मनुष्यस्येति। तथा पर्याप्तसूक्ष्मैकेन्द्रियाणां चत्वारि उदयस्थानानि, तद्यथा—एकविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशति-

श्च । तत्रैकविंशतिरियं-तैजसं कार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयं निर्माणं तिर्यग्गतितिर्यगानुपूर्व्यौ एकेन्द्रियजातिः स्थावरनाम सूक्ष्मनाम पर्याप्तकनाम दुर्भगनामानादेयमयशःकीर्तिरिति । एषा चैकविंशतिः सूक्ष्मपर्याप्तस्यापान्तरालगतौ वर्त्तमानस्य वेदितव्या । अत्रैको भङ्गः, प्रतिपक्षपदविकल्पस्यैकस्याप्यभावात् । अस्यामेवैकविंशतौ औदारिकशरीरं हुण्डसंस्थानं उपघातं प्रत्येकसाधारणयोरेकतरमिति प्रकृतिचतुष्टयं प्रक्षिप्यते, तिर्यगानुपूर्वी चापनीयते, ततश्चतुर्विंशतिर्भवति । सा च शरीरस्थस्य प्राप्यते । अत्र च प्रत्येकसाधारणाभ्यां द्वौ भङ्गौ । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, अत्रापि तावेव द्वौ भङ्गौ । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते षड्विंशतिः, अत्रापि तावेव द्वौ भङ्गौ । सर्वसंख्यया सूक्ष्मपर्याप्तस्य चत्वार्यप्युदयस्थानान्यधिकृत्य भङ्गाः सप्त । पर्याप्तबादरैकेन्द्रियाणामुदयस्थानान्येकविंशत्यादीनि पञ्च । तद्यथा-एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिश्च । तत्रैकविंशतिरियं-तैजसं कार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयं निर्माणं तिर्यग्गतितिर्यगानुपूर्व्यौ एकेन्द्रियजातिः स्थावरनाम बादरनाम पर्याप्तकनाम दुर्भगमनादेयं यशःकीर्त्ययशःकीर्त्योरेकतरेति । एषा चैकविंशतिरपांतरालगतौ वर्त्तमानस्य बादरपर्याप्तस्य वेदितव्या । अत्र यशःकीर्त्ययशःकीर्त्तिभ्यां द्वौ भङ्गौ । ततः शरीरस्थस्यौदारिकशरीरं हुण्डसंस्थानमुपघातं प्रत्येकसाधारणयोरेकतरमिति प्रकृतिचतुष्टयं प्रक्षिप्यते, तिर्यगानुपूर्वी चापनीयते ततश्चतुर्विंशतिर्भवति । अत्र प्रत्येकसाधारणयशःकीर्त्ययशःकीर्त्तिपदैश्चत्वारो भङ्गाः । वैक्रियं कुर्वतः पुनर्बादरवायुकायिकस्यैकः, यतस्तस्य साधारणयशःकीर्त्ती उदये नागच्छतः । अन्यच्च वैक्रियवायुकायिकचतुर्विंशतावौदारिकशरीरस्थाने वैक्रियशरीरमिति वक्तव्यम् . शेषं तथैव । सर्वसंख्यया चतुर्विंशतौ पञ्च भङ्गाः । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, अत्रापि तथैव पञ्च भङ्गाः । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते

षड्विंशति, अत्रापि तथैव षड् भङ्गाः, अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासे अनुदिते आतपोद्योतान्यतरस्मिंस्तूदिते षड्विंशतिः, अत्रातपेन प्रत्येकयशःकीर्त्ययशःकीर्तिपदैर्द्वौ भङ्गौ। साधारणस्यातपोदयाभावात् तदाश्रितौ विकल्पौ न भवतः, उद्योतेन प्रत्येकसाधारणयशःकीर्त्ययशःकीर्तिपदैश्चत्वारः, सर्वसंख्यया षड्विंशतावेकादश भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्य उच्छ्वाससहितायां षड्विंशतौ आतपोद्योतयोरन्यतरस्मिन् प्रक्षिप्ते सप्तविंशतिः, अत्राप्यातपेन द्वौ, उद्योतेन सह चत्वार इति सर्वसंख्यया सप्तविंशतौ षड् भङ्गाः, बादरपर्याप्तस्य सर्वे भङ्गा एकोनत्रिंशत्। तथा संज्ञिनः पर्याप्तस्य चतुर्विंशतिवर्जानि शेषाणि सर्वाण्युदयस्थानानि भवन्ति, चतुर्विंशत्युदयश्च एकेन्द्रियाणामेव भवति, न शेषाणामिति प्रतिषिध्यते। उदयस्थानभङ्गाश्च देवनारकतिर्यग्मनुष्यानधिकृत्य यथाधस्तादुक्तास्तथैवात्रापि परिभावनीयाः। 'इगछव्वीसाइ सेसाणं'ति–शेषाणां पर्याप्तानां द्वित्रिचतुरिन्द्रियासंज्ञिनामेकषड्विंशत्यादय एकविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपाः षड् उदया भवन्ति। तत्र द्वित्रिचतुरिन्द्रियाणां यथाधस्ताद्भङ्गास्तथात्रापि भावनीया। यथा च सामान्यतिर्यक्पञ्चेन्द्रियाणामधस्तादुक्तास्तथा अत्रासंज्ञिनामपि, नवरं सर्वेषामपि एकविंशतौ षड्विंशतौ च प्रत्येकमपर्याप्तपदापेक्षया य एकैको भङ्गः प्रागुक्तः स न वक्तव्यः, पर्याप्तानामेवेह चिन्त्यमानत्वात् ॥१३८॥

तेरससु पंच संता तिण्णधुवा अट्ठसीइ बाणउइ। सण्णिस्स होंति बारस गुणठाणकमेण नामस्स ॥१३९॥

(स्वो०)—त्रयोदशसु जीवस्थानेषु पञ्च सत्स्थानानि भवन्ति, द्वानवत्यष्टाशीत्यध्रुवकत्रिक चेति। संज्ञिनो द्वादशापि गुणस्थानक्रमेण। पञ्चेति सिद्धेऽप्यर्थेऽध्रुवानुवादात् ज्ञापयति–संज्ञिन्यपर्याप्तदेवेऽन्यदपि तीर्थकरोपलक्षित सत्स्थानद्वय नाम्नो भवतीति गाथार्थः॥

(मलय०)—संप्रति सत्तास्थानप्रतिपादनार्थमाह–आद्येषु त्रयोदशसु जीवस्थानेषु पञ्च पञ्च सत्तास्थानानि, तत्र त्रीण्यध्रुवसंज्ञानि,

पञ्चसंग्रहः

॥३३४॥

तद्यथा—षडशीतिरशीतिरष्टसप्ततिश्च, तथा द्विनवतिरष्टाशीतिश्च। तत्राष्टसप्ततिः सूक्ष्मबादरैकेन्द्रियेषु तेजोवायुष्वाद्येषु चतुर्षूदयेषु, तेजोवायुभवादुद्धृतेषु वा एकविंशतिचतुर्विंशत्युदययोः, द्वीन्द्रियादिषु पुनस्तेजोवायुभवादुद्धृतेष्वेवैकविंशतिषड्विंशत्युदययोः प्राप्यते, न शेषेषूदयेषु। संज्ञिनः पुनर्गुणस्थानकक्रमेण द्वादशापि सत्तास्थानानि नामकर्मणो भवन्ति, तानि च यथाधस्तादुक्तानि तथा भावनीयानि ॥१३९॥

उक्तं जीवस्थानेषु कर्म्मबन्धविधानम्। कर्म्मणो गत्यादिषु बन्धादिषु सत्प्ररूपणामाह—

गत्यादिषु बन्धोदयसत्तास्थानानां सत्पद प्ररूपणा

**बज्झंति सत्त अट्ठ च नारयतिरिसुरगईसु कम्माइं। उदीरणावि एवं संतोइण्णाइं अट्ठ तिसु ॥१४०॥**

(स्वो०)—नारकतिर्यक्सुरगतिषु सप्ताष्टौ वा कर्म्माणि बध्यन्ते, उदीरणाप्येवमेव। सदुदीरणानि अष्टौ तिसृष्वपि लभ्यन्ते इति गाथार्थः ॥१३५॥

(मलय०)—तदेवमुक्तानि नामकर्मणो जीवस्थानेषु बन्धोदयस्थानानि, सांप्रतं गत्यादिषु बन्धोदयसत्तास्थानविषयां सत्पद-प्ररूपणां करोति—नारकतिर्यक्सुरगतिषु कर्माणि बध्यन्ते सप्त अष्टौ वा। तत्रायुर्बन्धकाले अष्टौ, शेषकालं तु सप्त। तथा उदीरणाप्येवमेव, किमुक्तं भवति? उदीरणापि सप्तानामष्टानां वा, तत्र स्वस्वायुषः पर्यन्तावलिकायामुदीरणा न भवतीति सप्तानाम्, शेषकालं त्वष्टानामिति। तथा सन्ति उदीर्णानि च उदयप्राप्तानि तिसृषु गतिषु देवनारकतिर्यग्रूपास्वष्टैव, न तु कदाचनापि सप्त चत्वारि वा, तत्र क्षपकश्रेण्या-दिप्रतिपत्तेरभावात् ॥१४०॥

॥३३४॥

**गुणाभिहियं मणुएसुं सगलतसाणं च तिरिय पडिवक्खा। मणजोगी छउमाइ व कायवई जह सजोगीणं ॥**

(स्वो०)—गुणस्थानेषु यदभिहितं तदखिलं मनुष्येषु–मनुष्यगतौ भवति, इन्द्रियद्वारे 'सकलेषु' इति पञ्चेन्द्रियेषु, कायद्वारे त्रसेषु गुणस्थानाभिहितं सर्वत्र स्वनामोदयोपलक्षितं भवति। स्वनामाकृतितिर्यग्गतिवत्–तिर्यग्गतिप्रकारास्तद्विपक्षा एकेन्द्रियविकलेन्द्रियाः स्थावरकायिकाश्च वक्तव्याः। मनोयोगिनो जीवाः सम्मिछद्मस्था इव वक्तव्याः। ये क्षीणकषायावसानेषु कर्मणां प्रकारास्ते मनसि भवन्ति, न सयोगिकेवलिनः, मनसोऽव्याप्यापारादिति। काययोगिनो वाग्योगिनश्च सयोगिपर्यन्तगुणप्रकारा भवन्ति। णमिति वाक्यालङ्कारे इति गाथार्थः ॥१४१॥

(मलय०)—मनुष्येषु–मनुष्यगतौ, इन्द्रियद्वारे सकलानाम्–पञ्चेन्द्रियाणाम्, कायद्वारे त्रसानां गुणाभिहितम् गुणस्थानकेषु यदभिहितम्, तदखिलं द्रष्टव्यम्। तद्यथा–यावदप्रमत्तसंयतगुणस्थानकं मिश्रगुणस्थानकवर्जितं तावत्सप्तानामष्टानां वा बन्धः, तत्रायुर्बन्धकाले अष्टानां शेषकालं तु सप्तानामिति। मिश्रापूर्वकरणानिवृत्तिबादरगुणस्थानकेषु सप्तानामेव, एतेषामविविशुद्धत्वेनायुर्बन्धासंभवात्। सूक्ष्मसंपरायगुणस्थानके षण्णां बन्धः, तत्र मोहनीयस्यापि बन्धाभावात्, बादरकषायोदयाभावात्। उपशान्तमोहक्षीणमोहसयोगिकेवलिगुणस्थानकेष्वेकस्यैव वेदनीयस्य बन्धः, न शेषाणां कषायोदयाभावात्। तथा सूक्ष्मसंपरायगुणस्थानकं यावत् अष्टानामुदयसत्ते, उपशान्तमोहे सप्तानामुदयोऽष्टानां सत्ता, क्षीणमोहे सप्तानामेवोदयः सत्ता च। सयोग्ययोगिकेवलिगुणस्थानकयोश्चतुर्णामुदयसत्ते। तथा यावत्प्रमत्तसंयतगुणस्थानं तावत्सप्तानामष्टानां वा उदीरणा। तत्र यदायुः पर्यन्तावलिकाप्राप्तं भवति, तदा तस्योदीरणाया अभावात् सप्तानामुदीरणा, शेषकालं त्वष्टानाम्। मिश्रगुणस्थानके तु सर्वदाष्टानामेव, आयुःपर्यन्तावलिकायां वर्तमानस्य मिश्रगुणस्थानकासंभवात्। अप्रमत्तापूर्वकरणानिवृत्तिबादरेषु वेदनीयायुर्वर्जानां षण्णामुदीरणा, तेषु वेदनीयायुषोरुदीरणाया अभावात्, तद्योग्याध्यवसायस्थानाना-

मसंभवात् । सूक्ष्मसंपराये पण्णां पञ्चानां वा उदीरणा । तत्र प्रथमतः पण्णां, सा च तावत् यावदावलिका गुणस्थानकस्य शेषा न भवति, आवलिकायां तु शेषीभूतायां मोहनीयमप्यावलिकाप्रविष्टमिति तस्योदीरणाया अभावात् पञ्चानामुदीरणा । एतेषामेव पञ्चानामुपशान्तमोहे, क्षीणमोहेऽपि पञ्चानां तावदुदीरणा यावत्क्षीणमोहगुणस्थानकस्यावलिका शेषा न भवति. आवलिकायां तु शेषीभूतायां ज्ञानावरणदर्शनावरणान्तरायाण्यपि आवलिकाप्रविष्टानीति तेषामुदीरणाया अभावात् द्वयोर्नामगोत्रयोरुदीरणा । सयोगिकेवलिगुणस्थानकेऽपि तयोरेवोदीरणा । अयोगिकेवली तु भगवान् सकलसूक्ष्मबादरयोगरहितो मेरुरिव निष्प्रकम्पो, न किञ्चिदपि कर्मोदीरयति. उदीरणाया योगसव्यपेक्षत्वात् । उक्तं च—"चरिंतो उ अजोगी । न किंचि कम्मं उईरेइ" इति । 'तिरिय पडिवक्ख'त्ति-पञ्चेन्द्रियाणां त्रसकायानां च ये प्रतिपक्षा एकद्वित्रिचतुरिन्द्रियाः स्थावरकायाश्च तेषां सूत्रे विभक्तिलोप आर्षत्वात्, 'तिरिय'त्ति तिर्यग्गतिवद्भावनीयम् । एतदुक्तं भवति-एकद्वित्रिचतुरिन्द्रियाणां, कायद्वारे स्थावरकायानाम्, सप्तानामष्टानां वा बन्धः, सप्तानामष्टानां वा उदीरणा, अष्टानामुदयसत्ते ८ तथा मनोयोगिनश्छद्मस्था इव वीतरागछद्मस्थपर्यवसाना इव वेदितव्याः । एतदुक्तं भवति-यथा प्राक् मिथ्यादृष्टीनां क्षीणमोहान्तानां बन्धादिविषये सत्पदप्ररूपणा कृता, तथात्रापि कर्तव्या, मनोयोगिनां क्षीणमोहगुणस्थानकं यावत्संभवात् । एवमुत्तरत्रापि भावना कार्या । तथा काययोगिनां वाग्योगिनां च यथा प्राक् सयोगिनां सयोगिकेवलिपर्यन्तानामुक्तं तथा द्रष्टव्यम्, काययाग्योगयोः सयोगिकेवलिगुणस्थानकं यावत्संभवात् ॥२४१ ॥

वेई नवगुणतुल्ला तिकसाइवि लोभ दसगुणसमाणो। सेसाणि वि ठाणाइं एएण कमेण नेयाणि ॥२४२॥

(स्वो०)—वेदाः विद्यन्ते येषां ते वेदिनः ते स्त्रीनपुंसकवेदोदयिनः प्राणिनो बादरकषायावसाननवगुणैस्तुल्याः, ये तेषु कर्म्मणः

गत्यादिषु बन्धोदयसत्तास्थानानां सत्पद प्ररूपणा।

प्रकाराः ते त्रिष्वपि वेदोदयेषु भवन्ति। एवं क्रोधमानमायोदयेष्वपि, लोभे दशमगुणतुल्यमपि भवति। शेषाण्यपि स्थानानि लेश्यादीनि अनेनैव क्रमेण ज्ञातव्यानि। अप्रमत्ततुल्य पद्मासु लेश्यासु, योगितुल्य शुक्ललेश्यायाम्। प्रमत्ताद्येष्वयोगिपर्यवसानेषु ये कर्मणः प्रकारास्ते संयमे भवन्ति (देशसंयमे देशविरतमिव।) दर्शनज्ञानान्युपयोगास्ते यत्र गुणे यावन्तस्ते तद्गुणप्रकारा भवन्ति। भव्येषु चतुर्दशगुणतुल्यं भवति। संज्ञिषु द्वादशगुणतुल्यम्। असंज्ञि(षु मिथ्यादृष्टिसास्वादनयोरिव), अभव्येषु च प्रथमगुणतुल्य, अविरताद्येकादशगुणतुल्यं सम्यक्त्वे। मिथ्यादृष्टिसास्वादनाविरतसयोग्ययोगितुल्यमनाहारके। त्रयोदश गुणतुल्य त्वाहारके भवति। "कम्माणि" एतच्चातिदेश तोऽभिहितम्, अनया दिशा न्यूनाधिक सयुक्त्या भणनीयम्। प्रागुक्तावलोकनाद्वा इति गाथार्थः ॥१४२॥

(मलय०)—वेदद्वारे वेदिनः स्त्रीवेदिनः पुरुषवेदिनो नपुंसकवेदिनश्च, कषायद्वारे त्रिकषायिणोऽपि क्रोधिनो मानिनो मायिनश्च, नवगुणतुल्या मिथ्यादृष्टयाद्योऽनिवृत्तिबादरपर्यन्ता इव वेदितव्याः, वेदत्रयस्य कषायत्रयस्य चानिवृत्तिबादरसम्परायगुणस्थानकं याव त्संभवात्। लोभे लोभविषये दशगुणसमान वक्तव्यम्, यथा प्राक् दशगुणस्थानकेषूक्तम् तथा लोभेऽपि वक्तव्यम्, लोभस्य सूक्ष्म-सम्परायाभिधं दशमं गुणस्थानकं यावत्सम्भवात्। एवं शेषाण्यपि स्थानानि-मार्गणास्थानानि एतेन क्रमेण-उक्तेन प्रकारेण ज्ञेयानि। तद्यथा-ज्ञानद्वारे मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानेषु मिथ्यादृष्टयादिषु सम्यग्मिथ्यादृष्टिपर्यन्तेष्विव, मतिश्रुतावधिज्ञानेष्वविरतसम्यग्दृ-ष्टयादिषु क्षीणमोहपर्यन्तेष्विव, मनःपर्यवज्ञाने प्रमत्तसंयतादिषु क्षीणमोहपर्यन्तेष्विव, केवलज्ञाने सयोग्ययोगिकेवलिनोरिव। संयमद्वारे सामायिकच्छेदोपस्थापनयोः प्रमत्तसंयतादिष्वनिवृत्तिबादरपर्यन्तेष्विव, परिहारविशुद्धिके प्रमत्ताप्रमत्तयोरिव, सूक्ष्मसंपराये सूक्ष्मसंपराय-गुणस्थानक इव, यथाख्यातसंयमे उपशान्तमोहक्षीणमोहसयोग्ययोगिकेवलिनामिव, देशविरतौ देशविरतगुणस्थानक इव, असंयमे मि-

थ्यादृष्टिसासादनमिश्राविरतसम्यग्दृष्टीनामिव। दर्शनद्वारे चक्षुरचक्षुर्दर्शनयोर्मिथ्यादृष्ट्यादीनां क्षीणमोहान्तानामिव, अवधिदर्शने अविरतसम्यग्दृष्ट्यादीनां क्षीणमोहान्तानामिव, केवलदर्शने सयोग्ययोगिकेवलिनोरिव। लेश्याद्वारे आद्यासु पञ्चसु लेश्यासु मिथ्यादृष्ट्यादीनामप्रमत्तसंयतान्तानामिव, शुक्ललेश्यायां मिथ्यादृष्ट्यादीनां सयोगिकेवलिपर्यन्तानामिव। भव्यद्वारे भव्येषु चतुर्दशगुणस्थानकतुल्यम्, अभव्येषु मिथ्यादृष्टेरिव। सम्यक्त्वद्वारे क्षायोपशमिकसम्यक्त्वे अविरतसम्यग्दृष्ट्यादीनामप्रमत्तसंयतान्तानामिव, औपशमिकसम्यक्त्वे अविरतसम्यग्दृष्ट्यादीनामुपशान्तमोहान्तानामिव, क्षायिकसम्यक्त्वे अविरतसम्यग्दृष्ट्यादीनामयोगिकेवलिपर्यन्तानामिव, मिथ्यात्वे मिथ्यादृष्टेरिव, सासादनसम्यक्त्वे सासादनस्येव, मिश्रे मिश्रस्येव, संज्ञिषु मनुष्यगताविव, असंज्ञिषु मिथ्यादृष्टिसासादनयोरिव। आहारकद्वारे अनाहारके मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिसयोग्ययोगिकेवलिनामिव, आहारके मिथ्यादृष्ट्यादीनां सयोगिकेवलिपर्यन्तानामिव सत्पदप्ररूपणा कर्त्तव्या ॥१४२॥

गुणस्थानेषु 'जा अपमत्तो सत्तट्ठ बंधगा' इत्यादिना सत्पदप्ररूपणा कृतैव, द्रव्यप्रमाणमाह—

**सत्तरसुत्तरमेगुत्तरं तु चोहत्तरीउ सगसयरी। सत्तट्ठी तिगसट्ठी गुणसट्ठी अट्ठवण्णा य ॥१४३॥**

**निद्दादुगे छवण्णा छव्वीसा णामतीस विरमंमि। हासरईभयकुच्छा विरमे बावीस पुव्वंमि ॥१४४॥**

(स्वो०)—विंशत्युत्तरशतं बन्धमाश्रित्य प्रकृतीनामभिहितं तस्मादाहारकशरीराङ्गोपाङ्गतीर्थकरप्रकृतयो मिथ्यादृष्टौ न भवन्ति, शेषं

१ कर्मग्रन्थे आद्यासु तिसृषु लेश्यासु चत्वारि षड्वा गुणस्थानकान्युक्तानि, अत्राद्यासु पञ्चसु लेश्यासु अप्रमत्तान्तानि सप्त प्रतिपादितानि तत् मतान्तरं प्रतिभाति।

सप्तदशोत्तरं शतं बन्धं प्रति सम्भवति ११७। सासादने पूर्वोक्तास्तिस्रः मिथ्यात्वाद्याश्च षोडश मिथ्यात्वनपुंसकसूक्ष्मत्रिकविकलत्रिकनारकत्रिकैकेन्द्रियजातिस्थावरातपान्त्यसंहननसंस्थानानीति एकोनविंशतिः भवति, शेषमेकोत्तरं शतं भवति। तुशब्दो गुणस्थानख्यापकः। सम्यग्मिथ्यादृष्टौ पूर्वोक्ता एकोनविंशतिरुद्योताद्याश्च पञ्चविंशतिरुद्योतस्त्यानर्द्धित्रिदुर्भगदुःस्वरत्रिकाणि मध्यमसंस्थानसंहननानन्तानुबन्धिचतुष्काणि स्त्रीवेदाप्रशस्तविहायोगतिनीचैर्गोत्रमिति चतुश्चत्वारिंशदेवमनुष्यायुःसहिता न संभवन्ति, शेषा चतुःसप्ततिः बन्धं प्रति संभवति ७४। असावेव चतुःसप्ततिर्मनुष्यदेवायुस्तीर्थकरसहिता सप्तसप्ततिरविरते बन्धं प्रति भवति। द्वितीयतुशब्दस्त्वायुर्बन्धकालान्तर्गतोऽपि सम्यग्मिथ्यादृष्टिरायुषामबन्धक इति ख्यापयति। असावेव सप्तसप्ततिरप्रत्याख्यानावरणौदारिकद्विकमनुष्यत्रिकाद्यसंहननवर्जा सप्तषष्टिर्देशविरते बन्धं प्रति भवति ६७। असावेव सप्तषष्टिः प्रत्याख्यानावरणवर्जा त्रिषष्टिः प्रमत्ते भवति ६३। असावेव त्रिषष्टिरस्थिराशुभायशोऽरतिशोकासातवर्जाहारकद्विकयुक्ता एकोनषष्टिरप्रमत्ते भवति ५९। असावेव देवायुर्वर्जाष्टपञ्चाशदपूर्वकरणे बन्धं प्रति भवति, चशब्द' क्रमोपन्यासार्थ इति गाथार्थः। असावष्टापञ्चाशन्निद्राप्रचलाभ्यां वर्जिता षट्पञ्चाशत् तस्मिन्नेवापूर्वकरणे भवति, असावपि नामत्रिंशत्प्रकृतिवर्जिता षड्विंशतिस्तस्मिन्नेव भवति। सुराहारकवैक्रियद्विकानि ६ ध्रुवबन्धित्रसादिका नव नव १८ पराघातोच्छ्वासचतुरस्रतीर्थकरपञ्चेन्द्रियशुभविहायोगतय इति त्रिंशत्। हास्यरतिभयजुगुप्साविरमे तस्मिन्नेवापूर्वकरणे अतीते बादरकषायादौ द्वाविंशतिर्भवतीति गाथार्थ. ॥१४३–४४॥

(मलय०)—तदेवं कृता सत्पदप्ररूपणा, सम्प्रति बन्धमधिकृत्य द्रव्यप्रमाणमाह—इह बन्धे प्रकृतीनां विंशत्युत्तरं शतमधिक्रियते, एतच्च प्रागेवोक्तम्, तत्र मिथ्यादृष्टावाहारकशरीराहारकाङ्गोपाङ्गतीर्थकररूपास्तिस्रः प्रकृतयो न बन्धमायान्ति, तीर्थकराहारकद्विकयो

यथाक्रमं सम्यक्त्वसंयमनिमित्तत्वात् । तदुक्तं—"सम्मत्तगुणनिमित्तं तित्थयरं संजमेण आहारं । बज्झंति सेसियाओ मिच्छत्ताईहिं हेऊहिं ॥१॥" ततः शेषं सप्तदशोत्तरं शतं मिथ्यादृष्टौ बन्धमायाति (११७)। सासादने त्वेकोत्तरं शतम्, यतो मिथ्यात्वनपुंसकवेदनरकायुर्नरकगतिनरकानुपूर्व्येकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिहुंडसंस्थानसेवार्त्तसंहननस्थावरसूक्ष्मसाधारणापर्याप्तातपरूपाः षोडश प्रकृतयो मिथ्यादृष्टावेव बन्धमधिकृत्य व्यवच्छिन्नाः, तीर्थकराहारकद्विकरूपाश्च तिस्रः प्रकृतयः प्रागुक्तयुक्तेरत्रापि न बन्धमायान्ति । ततः एकोत्तरमेवशतं सासादने बन्धमायाति । सम्यग्मिथ्यादृष्टौ च चतुःसप्ततिः, यत एकोत्तरशतात्स्त्यानर्द्धित्रिकस्त्रीवेदानन्तानुबन्धिचतुष्टयतिर्यगायुस्तिर्यग्गतितिर्यगानुपूर्वीमध्यमचतुःसंस्थानमध्यमचतुःसंहननोद्योताप्रशस्तविहायोगतिदुर्भगानादेयदुःस्वरनीचैर्गोत्ररूपाः पञ्चविंशतिप्रकृतयः सासादन एव व्यवच्छिन्नाः, सम्यग्मिथ्यादृष्टिश्च स्वभावान्नायुर्बन्धमारभते, इति मनुष्यदेवायुषोरपि न बन्धो भवतीति चतुःसप्ततिः । अविरतसम्यग्दृष्टौ सप्तसप्ततिर्बन्धमायाति, तत्र चतुःसप्ततिः प्रागुक्तैव, अविरतसम्यग्दृष्टिश्च देवमनुष्यायुषी तीर्थकरनाम बध्नाति, ततो देवमनुष्यायुस्तीर्थकरनामप्रक्षेपात्सप्तसप्ततिः (७७)। असावेव सप्तसप्ततिरप्रत्याख्यानावरणकषायचतुष्टयौदारिकशरीरौदारिकाङ्गोपाङ्गमनुष्यगतिमनुष्यानुपूर्वीमनुष्यायुर्वज्रर्षभनाराचसंहननरहिता सप्तषष्टिर्भवति, सा च देशविरतस्य बन्धयोग्या, देशविरतस्य हि गुणप्रत्ययतोऽप्रत्याख्यानावरणकषायोदयाभावात् दशप्रकृतयो न बन्धमायान्ति, ततस्तस्य सप्तषष्टिरेव बन्धयोग्या । सैव सप्तषष्टिः प्रत्याख्यानावरणचतुष्टयरहिता त्रिषष्टिः, सा च प्रमत्तस्य बन्धयोग्या, तस्य गुणप्रत्ययतः प्रत्याख्यानावरणकषायाणां बन्धासम्भवात् । सैव त्रिषष्टिरस्थिराशुभायशःकीर्त्यरतिशोकासातवेदनीयवर्जा आहारकद्विकसहिता च एकोनषष्टिर्भवति, सा चाप्रमत्तस्य बन्धयोग्या, अप्रमत्तो हि विशुद्धसंयमित्वादस्थिरादिकं न बध्नाति, आहारकशरीराहारकाङ्गोपाङ्गनामनी बध्नाति, ततस्तस्यैकोनषष्टिरेव

बन्धयोग्या । सैव देवायुर्वर्जा अष्टपञ्चाशत्, सा चापूर्वकरणस्य योग्या, अपूर्वकरणादयो ह्यतिविशुद्धत्वादायुर्बन्धं नारभन्ते । सा चाष्टपञ्चाशत् अपूर्वकरणस्य तावद्बन्धयोग्या यावदपूर्वकरणाद्धायाः प्रथमः सप्तभागः, प्रथमसप्तभागचरमसमये च निद्राप्रचलयोर्बन्धव्यवच्छेदानन्तरसमये षट्पञ्चाशद्बन्धयोग्या भवति, तथा चाह–"निद्ददुगे छप्पन्ना" । निद्राद्विके बन्धमधिकृत्य व्यवच्छिन्ने षट्पञ्चाशद् भवति यावदपूर्वकरणाद्धायाः षष्ठसप्तभागः, षष्ठसप्तभागचरमसमये तु देवद्विकपञ्चेन्द्रियजातिवैक्रियाहारकतैजसकार्मणशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गाहारकाङ्गोपाङ्गवर्णगन्धरसस्पर्शागुरुलघूपघातपराघातोच्छ्वासत्रसबादरपर्याप्तप्रत्येकप्रशस्तविहायोगतिजिननामस्थिरशुभसुभगसुस्वरादेयनिर्माणरूपत्रिंशत्प्रकृतीनां बन्धव्यवच्छेदानन्तरसमये षड्विंशतिर्बन्धयोग्या भवति । तथा चाह–अपूर्वकरणाद्धायाः षष्ठसप्तभागचरमसमये त्रिंशत्प्रकृतिबन्धविरमेऽनन्तरसमये षड्विंशतिर्बन्धयोग्या भवति, सा च तावद्यावदपूर्वकरणाद्धायाश्चरमसमयः, तस्मिंश्च समये हास्यरतिभयजुगुप्सारूपाणां चतसृणां प्रकृतीनां व्यवच्छेदादनिवृत्तिबादरप्रथमसमये द्वाविंशतिर्बन्धयोग्या भवति । आह च–अपूर्वे अपूर्वकरणचरमसमये हास्यरतिभयकुत्साविरमे–हास्यरतिभयजुगुप्साबन्धव्यवच्छेदेऽनिवृत्तिबादरसम्परायप्रथमसमये द्वाविंशतिर्बन्धयोग्या भवति, सा च तावद्यावदनिवृत्तिबादरसंपरायाद्धायाः संख्येया भागा गता भवन्ति, एकोऽवतिष्ठते । ततः पुरुषवेदबन्धव्यवच्छेदादेकविंशतिर्बन्धयोग्या भवति, सापि तावद्यावत्तस्याः शेषीभूताया अद्धायाः संख्येया भागा गता भवन्ति, एकोऽवतिष्ठते । ततः सञ्ज्वलनक्रोधस्यापि बन्धव्यवच्छेदाद्विंशतिर्बन्धयोग्या भवति, सापि तावद्यावत्तस्याः शेषीभूतायाः संख्येया भागा गता भवन्ति, एकोऽवशिष्यते । ततः सञ्ज्वलनमानस्यापि बन्धव्यवच्छेदादेकोनविंशतिर्बन्धयोग्या भवति, सापि तावद्यावत्तस्याः शेषीभूताया अद्धायाः संख्येया भागा गता भवन्ति, एकोऽवशिष्यते । ततः संज्वलनमायाया अपि बन्धव्यवच्छेदादष्टादशप्रकृतयो बन्धयोग्या भवन्ति, ताश्च तावद्याव-

दनिवृत्तिबादरसंपरायाद्धायाश्चरमसमयः, तस्मिंश्च चरमसमये संज्वलनलोभस्यापि बन्धव्यवच्छेदात् , सूक्ष्मसम्परायगुणस्थानकप्रथमः समये सप्तदश बन्धयोग्याः ॥१४३-४४॥

पुंवेय कोहमाइसु अबज्झमाणेसु पंचठाणाणि। बारे सुहुमे सत्तरस पगतिओ सायमियरेसु ॥१४५॥

(स्वो०)—तस्मिन्नेव बादरे पुरुषवेदस्याबन्धके एकविंशतिः, एवं क्रोधस्याबन्धे विंशतिः, मानस्यैकोनविंशतिः, मायाया अष्टादश, लोभस्याबन्धके सप्तदश सूक्ष्मकषायादौ, ज्ञानावरणान्तरायदर्शनचतुष्कोच्चैर्गोत्रयशःकीर्तिरिति षोडशकाबन्धे उपशान्तक्षीणकषायसयोगिषु बन्धं प्रति सातमेव भवतीति गाथार्थः ॥१४५॥

(मलय०)—तथा चाह सूत्रकृत्–'बारे'त्ति अनिवृत्तिबादरे पुंवेदक्रोधादिषु पुरुषवेदसंज्वलनक्रोधादिषु, अबध्यमानेषु–बन्धमधिकृत्य व्यवच्छिद्यमानेषु, पञ्चस्थानानि–पञ्चबन्धस्थानानि भवन्ति, तद्यथा–प्रथमतो द्वाविंशतिः, ततः पुरुषवेदे व्यवच्छिन्ने एकविंशतिः, ततः संज्वलनक्रोधे व्यवच्छिन्ने विंशतिः, ततः संज्वलनमाने व्यवच्छिन्ने एकोनविंशतिः, ततः संज्वलनमायायां व्यवच्छिन्नायामष्टादशेति। ततोऽनिवृत्तिबादरसंपरायगुणस्थानकचरमसमये संज्वलनलोभस्य बन्धव्यवच्छेदात्सूक्ष्मसंपराये सप्तदश, ताश्च तावद्यावत्सूक्ष्मसंपरायाद्धायाश्चरमसमयः, तस्मिंश्च चरमसमये ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयोच्चैर्गोत्रयशःकीर्त्तिरूपाणां षोडशप्रकृतीनां बन्धमधिकृत्य व्यवच्छेदात् , इतरेषूपशान्तमोहक्षीणमोहसयोगिकेवलिषु सातवेदनीयमेवैकं बन्धमायाति, न शेषाः प्रकृतयः ॥१४५॥

गुणगतिसंबन्धतो बन्धमाह—

मिच्छो नरएसु सयं छण्णउई सासणो सयरि मीसो। बावत्तरिं तु सम्मो चउराइसु बंधति अतित्था ॥१४६॥

गोत्रमनुष्यायूरूपाणां षड्विंशतिप्रकृतीनां सम्यग्मिथ्यादृष्टौ बन्धासम्भवात् । अविरतसम्यग्दृष्टिनारकस्तु द्विसप्ततिप्रकृतीर्बध्नाति, तस्य मनुष्यायुस्तीर्थकरनाम्नोरपि बन्धसम्भवात् । तथा चतुरादिषु नरकेषु वर्त्तमानो नारकस्ता एव द्विसप्ततिप्रकृतीरतीर्थाः—तीर्थकरनामरहिता एकसप्ततिप्रकृतीर्बध्नाति । तीर्थकरनामकर्मणश्चतुरादिषु नरकेषु तथाभवस्वाभाव्यादेव बन्धासंभवात् ॥१४६॥

पूर्वोक्तापवादस्यापवादमाह—

**मणुयदुगुच्चागोयं भवपच्चइयं न होइ चरिमाए । गुणपच्चइयं तु बज्झइ मणुयाउ ण सव्वहा तत्थ ॥१४७॥**

(स्वो०)—मनुष्यद्विकं उच्चैर्गोत्रं न भवति बन्धं प्रति सप्तमनरकपृथिव्याम्, अतः पूर्वोक्ता संख्या अनेन प्रकृतित्रयेणोना मिथ्यादृष्टौ सास्वादने च । गुणप्रत्ययं त्वेतत्त्रिकम् भवत्येव सम्यग्मिथ्यादृष्ट्यविरतयोः । मनुष्यायुष्कं तु पुनः सर्वथा तद्गुणप्रत्ययं (भवप्रत्ययं न) भवतीति गाथार्थः ॥१४७॥

(मलय०)—चतुरादिष्वेव नरकेषु मध्ये सप्तमनरके विशेषमाह—चरमायां सप्तमनरकपृथिव्यां भवप्रत्ययतो मनुष्यद्विकमुच्चैर्गोत्रं च न बन्धयोग्यं भवति । ततोऽनेन प्रकृतित्रिकेण न्यूना सप्तमनरकपृथिव्यां मिथ्यादृष्टौ सासादने बन्धयोग्या वेदितव्या । सम्यग्मिथ्यादृष्टावविरतसम्यग्दृष्टौ च पुनर्गुणप्रत्ययमेतन्मनुष्यद्विकोच्चैर्गोत्ररूपं त्रिकं बन्धमायाति । ततस्तयोरेकसप्ततिरपि परिपूर्णा बन्धयोग्या द्रष्टव्या । मनुष्यायुः पुनस्तत्र सप्तमनरकपृथिव्यां सर्वथा भवप्रत्ययतो गुणप्रत्ययतो वा चतुर्ष्वपि गुणस्थानकेषु न बन्धमायाति ॥१४७॥

देवगतौ विशेषमाह—

सामण्णसुराजोग्गा आजोइसिया ण बंधति सतित्था । इगिथावरायवजुया सणंकुमारा ण बंधंति ॥१४८॥

(स्वो०)—सामान्येन या देवानामयोग्या बन्धं प्रति प्रागभिहितास्ताः षोडश 'वेउव्वाहारदुग' इत्यादिना ता एव तीर्थङ्करसहिताः सप्तदश भवनपतिव्यन्तरज्योतिष्का न बध्नन्ति, एकेन्द्रियस्थावरातपयुक्ता एव षोडश यथा सर्वनारकास्तथा सनत्कुमाराद्या नैकोनविंशतिप्रकृतीः बध्नन्ति इति गाथार्थः ॥१४८॥

(मलय०)—देवगतौ विशेषमाह—याः सामान्येन सुराणां—देवानामयोग्याः षोडशप्रकृतयः प्राग्बन्धविधिद्वारे उक्तास्तद्यथा—वैक्रियद्विकमाहारकद्विकं देवद्विकं नरकद्विकं देवनारकायुषी सूक्ष्मापर्याप्तसाधारणानि द्वित्रिचतुरिन्द्रियजातय इति, ता एव सतीर्थाः—तीर्थकरनामसहिताः सतीः सप्तदश आज्योतिष्का—ज्योतिष्कपर्यन्ता देवा भवनपतिव्यन्तरज्योतिष्का इत्यर्थः, भवप्रत्ययतो न बध्नन्ति । तथा ता एव षोडशप्रकृतीरेकेन्द्रियजातिस्थावरातपसहिताः सतीरेकोनविंशतिसंख्याः सनत्कुमारादयो देवा न बध्नन्ति ॥१४८॥

तिरितिगउज्जोवजुया आणयदेवा अणुत्तरसुरा उ । अणमिच्छणपुंवुभगथीणतिग अपुमथीवेय ॥१४९॥
संघयणा संठाणा पण पण अपसत्थविहगइ न तेसिं । पज्जत्ता बंधंति उ देवाउमसंखवासाऊ ॥१५०॥
तिरयायवउज्जोय नारयतिरिविगलतिगतिगेगेंदी । आहारथावरचऊ आऊ णासखपज्जत्ता ॥१५१॥

(स्वो०)—तिर्यक्त्रिकोद्योतयुक्ता सैवैकोनविंशतिस्त्रयोविंशतिर्भवति, तामानताद्या देवा न बध्नन्ति, गुणप्रत्ययात्ताः सपुस्या नेत-

ध्याः । अनुत्तराः–पञ्चानुत्तरविमानवासिनो देवा तेऽनन्तानुबन्धिमिथ्यात्वनीचैर्गोत्रदुर्भगानादेयायशःस्त्यानर्द्धित्रिकनपुंसकवेदस्त्रीवेदं तुशब्दाद् दुःस्वरं च पञ्चदश, उत्तरगाथया चान्या एकादशेत्येवमेकोनपञ्चाशत्(४९), प्रकृतीर्न बध्नन्ति शेषामेकसप्तति बध्नन्ति, यतस्ते सर्वेऽपि सम्यग्दृष्टय इति गाथार्थः । संहननानि संस्थानानि चाद्यवर्जितान्यशुभविहायोगतिश्च न तेषां पञ्चानुत्तरविमानवासिनां बन्धं प्रति भवन्ति एतद्व्याख्यातमेव । तिर्यग्गतिविशेषमाह–पर्याप्ता असंख्येयवर्षायुषस्तिर्यञ्चो देवायुषं बध्नन्त्येव, एतच्च गाथार्द्धमुत्तरगाथायामुत्तरत्र सम्बध्यत इति गाथार्थः । तीर्थङ्करातपोद्योतनामनारकतिर्यक्त्रिकं विकलेन्द्रियत्रिकं एकेन्द्रियजातिसाधारणसूक्ष्मस्थावरादिचतुष्कं मनुष्यदेवायुषी नरास्तिर्यञ्चोऽपर्याप्ता असंख्येयवर्षायुष एवमेकविंशतीनां प्रकृतीनामबन्धका इत्युत्तरगाथायां क्रियेति गाथार्थः ॥

(मलय०)—ता एवैकोनविंशतिप्रकृतीस्तिर्यक्त्रिकेण–तिर्यग्गतितिर्यगानुपूर्वीतिर्यगायूरूपेणोद्योतेन च युक्तास्त्रयोविंशतिसंख्या आनतदेवा–आनतप्रमुखा देवा भवप्रत्ययतो न बध्नन्ति । गुणप्रत्ययतस्तु याः प्रकृतयो न बन्धयोग्यास्ता गुणस्थानकक्रमेण स्वयमेव भावनीयाः । तथा अनुत्तरसुराः पञ्चानुत्तरविमानवासिनो देवा अनन्तानुबन्धिचतुष्कं मिथ्यात्वं नीचैर्गोत्रं, दुर्भगत्रिकं–दुर्भगानादेयायशःकीर्तिरूपं, स्त्यानर्द्धित्रिकं नपुंसकवेदं स्त्रीवेदं, तुशब्दाद् दुःस्वरं च न बध्नन्ति । तथा तेषामनुत्तरसुराणामन्तिमानि पञ्च संस्थानानि अन्तिमानि पञ्च संहननानि अप्रशस्तविहायोगतिश्च न बन्धयोग्याः, यतस्ते सम्यग्दृष्टयः सम्यग्दृष्टीनां चैता बन्धयोग्या न भवन्ति । तथा या त्रयोविंशतिः प्रागुक्ता सापि तेषां बन्धायोग्येवेति सर्वसंख्यया पञ्चानुत्तरविमानवासिनां देवानामेकोनपञ्चाशद्बन्धायोग्याः । संप्रति तिर्यग्गतौ विशेषमाह–पर्याप्ता असंख्येयवर्षायुषो मनुष्यास्तिर्यञ्चो वा देवायुर्बध्नन्ति, न शेषायूंषि । तथा–असंख्येयवर्षायुषोऽपर्याप्ता अपर्याप्तावस्थायां वर्त्तमानास्तिर्यञ्चो मनुष्या वा तीर्थकरमातपमुद्योतं नरकत्रिकं नरकगतिनरकानुपूर्वीनरकायूरूपम् , तिर्यक्-

त्रिकं–तिर्यग्गतितिर्यगानुपूर्वीतिर्यगायूरूपम् , विकलत्रिकं–द्वित्रिचतुरिन्द्रियजातिरूप, एकेन्द्रियजातिमाहारकद्विक स्थावरचतुष्कं–स्थावरसूक्ष्मसाधारणापर्याप्तरूप देवमनुष्यायुषी सर्वसंख्यया एकविंशतिप्रकृतीर्न बध्नन्ति ॥१४९–५०–५१॥

पज्जत्तिगया दुभगतिगणीयमपसत्थविहनपुसाणं। सघयणउरलमणुदुगपणसठाणाण अबंधा ॥१५२॥

किण्हाइतिगे अस्संजमे य वेउव्विजुगे न आहार। बंधइ न उरलमीसे नरयतिगं छट्ठममराउ ॥१५३॥

कम्मजोगि अणाहारगो य सहिया दुगाउ णेयाओ। सगवण्णा तेवट्ठी बधाति आहारसुमपसु ॥१५४॥

तेउलेसाईया बधाति न निरयविगलसुहुमतिग। सेर्गिदियावरायवतिरियतिगुज्जोय नव बार ॥१५५॥

(स्वो०)—अत एव पर्याप्ता दुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतिनपुंसकवेदानां संहननपट्कौदारिकद्विकमनुष्यद्विकपञ्चसंस्थानप्रकृतीनामबन्धकास्ताभिः युक्तानां प्राक्तनानामपि एवं द्विचत्वारिंशतो देवायुषं प्राग्गाथार्द्धप्रतिपादित पर्याप्ता बध्नन्ति, नैकचत्वारिंशदिति गाथार्थः। कृष्णादिलेश्यात्रिकोदये असंयमोदये च वैक्रिययुग्मे इति–वैक्रियशरीरे वैक्रियमिश्रे च नाहारकद्विक जीवो बध्नाति। न चौदारिकमिश्रयोगे सति नरकत्रिकं देवायुषं च बध्नाति, तदितरायुषोऽप्रतिषेधाद्बन्धो भवतीति गाथार्थः। कार्मणयोगी जीवोऽनाहारकश्च मनुष्यतिर्यगायु'सहिताः पूर्वोक्ताः षट् प्रकृतीर्न बध्नाति, त्रिषष्टिमाहारकमिश्रयोगे बध्नाति, सप्तपञ्चाशदाहारकयोगे बध्नाति। या च न बध्नाति ता उच्यन्ते–द्वादशाद्याः कषाया मिथ्यात्व तिर्यग्मनुष्यदुःस्वरस्त्यानर्द्धिविकलेन्द्रियसूक्ष्मनरकत्रिकाणि संहननषट्कं

संस्थानपञ्चकं औदारिकाहारकद्विकं स्थावरैकेन्द्रियातपस्त्रीनपुंसकोद्योतनीचैर्गोत्राऽशुभविहायोगतयः. शेषास्त्रिषष्टि(६२)स्तां प्रमत्त आहारकमिश्रे च बध्नाति । ६३ अस्थिरोऽशुभायशोऽरतिशोकासातवर्जिता त्रिषष्टिः सप्तपञ्चाशद् भवति तां प्रमत्तोऽप्रमत्तो वा आहारकशरीरी तदनुभावादेव बध्नाति, न शेषां त्रिषष्टिमिति गाथार्थः । तेजोमया लेश्या तेजोलेश्या तस्या आदिः-प्रथमो विभागः तमतीता द्वितीयविभागावस्थिता जीवाः नरकत्रिकं विकलेन्द्रियत्रिकं सूक्ष्मत्रिकं नव न बध्नन्ति, यतस्तेजोलेश्यामनुष्यतिर्यञ्चो देवेष्वेवोपपद्यन्ते, देवा अपि न तद्विधप्राणिषु । ता एव नवैकेन्द्रियस्थावरातपसहिता द्वादश शुद्धा पद्मलेश्याजीवा बध्नन्ति, यतस्तद्विधाः तिर्यग्मनुष्या देवेष्वेवोपपद्यन्ते, देवा न तद्विधेषु । ता एव द्वादश तिर्यक्त्रिकोद्योतसहिताः षोडश प्रधानशुक्ललेश्या न बध्नन्ति, यतः शुक्ललेश्याः तिर्यग्मनुष्या देवेष्वेवोत्पद्यन्ते, देवास्तु मनुष्येष्वेव, नारकेषु शुभलेश्यात्रयं न सम्भवतीति गाथार्थः ॥१५२-५३-५४-५५॥

(मलय०)—पर्याप्तिगताः सकलपर्याप्तिपरिसमाप्तिमुपगतास्त एवासंख्येयवर्षायुषस्तियञ्चो मनुष्या वा दुर्भगत्रिकस्य-दुर्भगानादेयायशःकीर्त्तिरूपस्य नीचैर्गोत्रस्याप्रशस्तविहायोगतेर्नपुंसकवेदस्य षण्णां संहननानामौदारिकद्विकस्य-औदारिकशरीरौदारिकाङ्गोपाङ्गरूपस्य, मनुष्यद्विकस्य-मनुष्यगतिमनुष्यानुपूर्वीरूपस्य, समचतुरस्रवर्जानां शेषाणां पञ्चानां संस्थानानाम् , सर्वसंख्यया एकविंशतिप्रकृतीनां, बहुवचनस्येष्टव्याप्त्यर्थत्वात् , प्रागुक्तानां च देवायुर्वर्जशेषविंशतिप्रकृतीनां सर्वसंख्यया एकचत्वारिंशत्प्रकृतीनामबन्धकाः । इन्द्रियकायद्वारविषये च--'नरयतिगं देवतिगं इगिविगलाणं' इत्यनेन ग्रन्थेन प्रागेव द्रव्यप्रमाणमुक्तम् , शेषेषु द्वारेषु पुनर्मनुष्यवदवसेयम् । यत्र तु यो विशेषस्तत्र तमाह-लेश्याद्वारे कृष्णादिलेश्यात्रिके कृष्णादिषु तिसृषु लेश्यासु, संयमद्वारे असंयमे, योगद्वारे वैक्रिययुगले-वैक्रियवैक्रियमिश्ररूपे वर्त्तमानो जीवो नाहारं-आहारकद्विकमाहारकाहारकाङ्गोपाङ्गरूपं न बध्नाति ।आहारकद्विकं हि विशिष्टसंयमप्रत्ययमेव,

एतेषु स्थानेषु विशिष्टः संयमो न लभ्यते । तथा औदारिकमिश्रे आहारकद्विकं नरकत्रिकं षट्ठमसुरायुश्च न बध्नाति । इयमत्र भावना—औदारिकमिश्रकाययोगे वर्त्तमानो जीव आहारकमाहारकाङ्गोपाङ्गं नरकगतिनरकानुपूर्वीनरकायूरूप नरकत्रिकम् देवायुश्चेति षड् प्रकृतीर्न बध्नाति । औदारिकमिश्रं ह्यपर्याप्तावस्थायाम् , तदानीं च मनसाऽपर्याप्तत्वाश्च देवायुर्योग्यो नापि नरकत्रिकयोग्योऽध्यवसायः सम्भवति नापि विशिष्टसंयमावाप्तिरिति षडपि प्रकृतयो नौदारिकमिश्रकाययोगिनो बन्धयोग्याः, यत्तु तिर्यगायुर्मनुष्यायुस्तद्ध्यवसाययोग्यमिति तस्यामप्यवस्थायां तयोर्बन्धसम्भवः । तथा योगद्वारे कार्मणकाययोगे, आहारकद्वारे अनाहारके वा एवानन्तरोक्ताः षड् प्रकृतयो द्विकायु:सहिता बन्धायोग्या ज्ञेयाः, किमुक्तं भवति ? कार्मणकाययोगी अनाहारकश्च आहारकद्विकनरकद्विकायुश्चतुष्टयरूपा अष्टौ प्रकृतीर्न बध्नातीति । तथा आहारकोभयमाहारकमाहारकमिश्रं च, तत्र वर्त्तमानो यथाक्रम सप्तत्र्यशतं त्रिषष्टिं च प्रकृतीर्बध्नाति, न शेषास्त्रिषष्टिसंख्याः सप्तपञ्चाशत्संख्याश्च । इयमत्र भावना—आहारकमिश्रकाययोगे वर्त्तमान आद्या द्वादश कषायाः, मिथ्यात्वम् , तिर्यग्द्विकम् , मनुष्यद्विकम् , तिर्यग्मनुष्यायुषी, दुर्भगदुःस्वरानादेयानि, स्त्यानर्द्धित्रिकम् , विकलेन्द्रियत्रिकम् , सूक्ष्मसाधारणापर्याप्तानि, नरकत्रिकम् , संहननषट्कम् , प्रथमवर्जं संस्थानपञ्चकम् , औदारिकद्विकम् , आहारकद्विकम् , स्थावरैकेन्द्रियातपस्त्रीवेदनपुंसकवेदोद्योतनीचैर्गोत्राशुभविहायोगतयः, इत्येवरूपाः सप्तपञ्चाशत्प्रकृतीर्न बध्नाति । आहारकशरीरे वर्त्तमानः प्रमत्तोऽप्रमत्तो वा ता एव सप्तपञ्चाशत्प्रकृतीरस्थिराशुभायशःकीर्त्यरतिशोकासातवेदनीयसहिताः सतीस्त्रिषष्टिसंख्या न बध्नाति । 'तेउलेसाईया' इत्यादि, इह तेजोलेश्यायास्त्रयो विभागाः, तद्यथा—प्रथमो द्वितीयस्तृतीयश्च । तत्र तेजोलेश्यागतं प्रथम भागमतीता अतिक्रान्ता द्वितीयतृतीयतेजोलेश्याविभागावस्थिता इत्यर्थः जीवा नरकत्रिकं विकलेन्द्रियत्रिकं सूक्ष्मत्रिकं च सूक्ष्मसाधारणापर्याप्तरूपं, सर्वसंख्यया नवप्रकृतीर्न बध्नन्ति,

तेजोलेश्योपेता हि मनुष्यास्तिर्यञ्चो वा नैतेषु मध्ये समुत्पद्यन्ते, देवा अपि नैतेषु प्राणिषु मध्ये गच्छन्ति, ततस्तेजोलेश्यावतामेतासां प्रकृतीनां बन्धं प्रति प्रतिषेधः। 'सेगिंदीत्यादि' ता एव नव प्रकृतीः सैकेन्द्रियस्थावरातपा एकेन्द्रियजातिस्थावरातपसहिता द्वादशप्रकृतीः शुद्धपद्मलेश्याका न बध्नन्ति, पद्मलेश्यामुपपन्ना हि जीवास्तिर्यञ्चो मनुष्या वा नियमतः सुरेषु मध्ये समुत्पद्यन्ते, नैकेन्द्रियादिषु स्थानेषु, येऽपि च देवाः पद्मलेश्योपगूढास्ते नैतेषु स्थानेपूत्पत्तिमासादयन्ति। ततः शुद्धपद्मलेश्याकानामुक्तरूपद्वादशप्रकृतीनां बन्धमधिकृत्य प्रतिषेधः। तथा ता एव द्वादशप्रकृतीस्तिर्यक्त्रिकेण तिर्यग्गतितिर्यगानुपूर्वीतिर्यगायूरूपेणोद्योतेन च सहिताः षोडश शुद्धशुक्ललेश्या न बध्नन्ति. परमविशुद्धशुक्ललेश्यानां तिर्यग्मनुष्याणां देवानां चैतेषु स्थानेपूत्पादाभावात्। तदेवमुक्तं समस्तं प्रसक्तानुप्रसक्तम्। तदभिधानाच्चाभिहितं सप्रपञ्चं पञ्चमं बन्धविधिद्वारम् ॥१५२-५३-५४-५५॥

सुयदेविपसायाओ पगरणमेयं समासओ भणियं। समयाओ चंदरिसिणा समईविभवाणुसारेण ॥१५६॥

॥ इइ पञ्चसंगहस्स पंचमं दारं सम्मत्तं ॥

(स्वो०)—श्रुतदेवीप्रसादतः प्रसादेन प्रकरणमेतत् पञ्चसंग्रहाख्यम्, समासतः-संक्षेपेण, भणितम्-उक्तम्। समयात् आगमाच्चन्द्रर्षिणा- चन्द्रर्ष्यभिधानेन साधुना स्वमति (निभवानुसारेण-स्व) शक्तितः इत्यवसानमङ्गलम्, अतो भगवतीप्रसादतो भगवच्छासनानुरक्तानामेतच्छास्त्रं सूत्रतोऽर्थतश्चाविकलं भवतु इति गाथार्थः ॥१५६॥

विवरणमप्यकृत यन्त्रकृता यदत्र कुर्वता पुण्यम् । यदवाप्तं शिवसुखभाग् भवतु च तेनेह भव्यजनः ॥१॥
यत्सिद्धान्तविरुद्धं मयोदितं सर्वशास्त्रबाधेन । मन्ये तदूषणो वा क्षमन्तु तत्सर्वशास्त्रज्ञाः ॥२॥
भवतोयनिधिपोतस्य दुष्षमायामिनीविधोः । भव्याम्भोजाकरेनस्य कर्मकन्दद्रुविर्भुजः ॥३॥
आगमामृतरत्नादिसद्भावक्षीरमहोदधेः । सम्यक्त्वज्ञानचारित्रगुणशीलद्युसद्मनः ॥४॥
माधुर्यस्थैर्ययुक्तस्य दारिद्र्याद्रिमहास्वरोः । पार्श्वर्षेः पादसेवातः कृतं शास्त्रमिदं मया ॥५॥
छन्दोलक्षणसिद्धान्ताद्विरुद्धं यदकारि च । मयात्राज्ञत्वदोषेण तत्क्षमन्तु मनीषिणः ॥६॥
यदक्षरपरिभ्रष्टं मात्राबिन्दुविवर्जितम् । साम्र वा तत्क्षमन्त्वत्र स्थिरं स्यात्कस्य मानसम् ? ॥७॥
सद्भावविषयपण्यवदनं मिथ्यात्वतमोविनाशदिननाथम् । प्रकटितसकलपदार्थं जैनं वरशासनं जयति ॥८॥

॥ इति स्वोपज्ञा श्रीपञ्चसंग्रहवृत्तिः समाप्ता ॥

(मलय०)—संप्रति यथेदं प्रकरणं समाप्तिमुपगतं तथोपदर्शयन्नाह—श्रुतं द्वादशाङ्गं तद्रूपा देवी श्रुतदेवी, तस्याः प्रसादतस्तद्विषयभक्तिबहुमानवशसमुच्छलितविशिष्टकर्मक्षयोपशमभावत एतत् पञ्चसंग्रहाख्यं प्रकरणम्, मया चन्द्रर्षिनाम्ना साधुना समयात्सिद्धान्तात्, तत्र यद्यपि सिद्धान्तेऽनेकेऽर्थाः प्रपञ्चतः प्ररूपितास्तथापि न ते अस्मादृशा साकल्येनोद्धर्तुं शक्यन्ते, इत्यावेदनार्थमाह—स्वमतिविभवानुसारेण समासतः संक्षेपतः संक्षिप्तरुचिजनानुकम्पया भणिताः ॥१५६॥

जयति सकलकर्मक्लेशसंपर्कमुक्त-स्फुरितविततविमलज्ञानसंभारलक्ष्मीः ।
प्रतिनिहतकुतीर्थाशेषमार्गप्रवादः, शिवपदमधिरूढो वर्द्धमानो जिनेन्द्रः ॥१॥
गणधरदृब्धं जिनभाषितार्थमखिलगमभङ्गनयकलितं । परतीर्थानुमतमारुतिमभिगन्तुं शासनं जैनं ॥२॥
बह्वर्थमल्पशब्दं प्रकरणमेतद्विवृण्वतामखिलं । यदवापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः ॥३॥
अर्हन्तो मंगलं सिद्धा मङ्गलं मम साधवः । मङ्गलं मङ्गलं धर्मस्तन्मङ्गलमशिश्रियम् ॥४॥

॥ इति श्रीमलयगिरिविरचितायां श्रीपञ्चसंग्रहटीकायां सप्तमं बन्धविधिद्वारं समाप्तं, तत्समाप्तौ च श्रीपञ्चसंग्रहटीका समाप्ता ॥ (ग्रन्थाग्रं-१८८५०) श्रीरस्तु ॥



॥३४३॥

टीकाद्वयोपेतः पञ्चसंग्रहः समाप्तः ॥

